महर्षिकपिलप्रणीतम्

# सांख्यदर्शनम्

व्याख्याचतुष्टयोपेतं

सम्पादकः

जनार्दनशास्त्री पाण्डेयः

महर्षिकपिलप्रणीतं

# सांख्यदर्शनम्

अनिरुद्धकृता 'वृत्तिः', वेदान्तिमहादेवकृतो 'वृत्तिसारः',
विज्ञानभिक्षुकृतं 'भाष्यम्', नागेशभट्टकृतो 'भाष्यसार'श्चेति
व्याख्याचतुष्टयोपेतं
देवतीर्थस्वामिकृतेन सांख्यतरङ्गेण, सर्वोपकारिणीसहितेन
तत्त्वसमाससूत्रेण, विविधपरिशिष्टैश्च
समुपबृंहितम्

सम्पादकः
जनार्दनशास्त्री पाण्डेयः

प्रकाशक
मो ती ला ल ब ना र सी दा स
दिल्ली वाराणसी पटना मद्रास बंगलौर

# आमुखम्

## दर्शनशास्त्राणि

### दर्शनस्य प्रयोजनं निरुक्तिश्च

त्रिगुणात्मिकायाः प्रकृतेर्यदा जगदुत्पद्यते तदैव तेषां गुणानां धर्माः सुखदुःखमोहाख्या अप्युत्पद्यन्ते। अतो निसर्गत एव प्राणिमात्रं काङ्क्षते यत् सुखं मे स्याद् दुःखं च मे निवर्तेत, इति। तस्य च दुःखस्यैकान्तिकी, आत्यन्तिकी च निवृत्तिरात्मदर्शनेनैव भवतीत्येतदर्थमेव श्रुतिर्निर्दिशति—"आत्मा वा अरे द्रष्टव्यः"[1] इति। स च कथं द्रष्टव्य इति जिज्ञासां समादधद्भिस्तत्त्वदर्शिमहर्षिभिः स्वानुभूतीराश्रित्य लोकोपकाराय यानि शास्त्राण्यनुशिष्टानि तान्येव दर्शनशास्त्राणीति प्रथितानि। अत एव च दृश्यतेऽनेनेति विग्रहे प्रेक्षणार्थाद् "दृशिर्" धातोः करणे ल्युटि व्युत्पन्नो दर्शनशब्दो दर्शनशास्त्रमित्यर्थे रूढितामभजत्। यतो हि महर्षीणामेतेषां ताः वैयक्तिक्योऽनुभूतय आसन्, अतो व्यक्तीनां भिन्नत्वात्तासु वैविध्यं स्वाभाविकमापतति। किन्तु आत्मसाक्षात्कार एव सर्वासां चरमं लक्ष्यमिति न कस्यापि विप्रतिपत्तिः। यथाह पुष्पदन्ताचार्यः—

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥[2] इति।

### दर्शनानां परस्परसापेक्षत्वम्

एकलक्ष्यकतयैव दर्शनशास्त्रेषु (आर्षेष्वनार्षेषु वा) परस्परं सापेक्षत्वमवलोक्यते। यतो ह्यात्मानमुपैतुमेतानि सोपानश्रेणीव भवन्ति। यथा निम्नस्थसोपानमनारुह्योपरिगतमारोढुं न शक्यते, सर्वाणि च सोपानानि क्रमशोऽनतीत्य शिखरस्थं पदं न लभ्यते। अत्र चैषां सोपानानामनिवार्ये स्वतन्त्रेऽप्यस्तित्वे परस्परसापेक्षत्वं वर्तत एव, तथैव दर्शनेष्वपि आत्मसाक्षात्कारकृते परां परां भूमिकामवगमयितुं पूर्व-पूर्वभूमिकायाः परिचयोऽपेक्षते। अतः प्रत्येकं दर्शनमितरेण नितरां भिन्नमपि न ततो निरपेक्षं भवति। एतत्त्वग्रे साङ्ख्यदर्शनस्य पृष्ठभूमिविचारणायां विवेचयिष्यामः।

### कियन्ति दर्शनशास्त्राणि

कियन्ति तावद्दर्शनानीति विचारणायां यद्यपि पञ्चशिखाचार्येण "एकमेव दर्शनं ख्यातिरेव दर्शनम्"[3] इत्युक्तम्, तथापि साम्प्रतमेतेषां संख्या षट्त्रिंशद् यावद् प्रापिता

---

१. बृहदा० २।४।५।३।  २. शिवमहिम्नि ७।

३. द्र० योगभाष्य १।४ स्थं पञ्चशिखोक्तं सूत्रम्।

विद्वद्भिः। वस्तुतस्तु इयत्तया दर्शनानां परिगणनं न कदाप्यासीन्न च भवितुं शक्नोति। मन्ये यस्य विपश्चितः पुरतो यावन्त्यो विचारधाराः समापतितास्तेन तावतामेवोल्लेखः स्वीयग्रन्थे कृतः। किञ्चिदत्र निदर्श्यंते—

शिवमहिम्नस्तोत्रे पुष्पदन्ताचार्येण—साङ्ख्यं, योगः, पाशुपतं मतं, वैष्णवञ्चेति चत्वारि,

अर्थशास्त्रे कौटिल्येन—सांख्यं, योगः, लोकायतं चेति त्रीणि,

हयशीर्षपाञ्चरात्रे, गुरुगीतायां च—गौतम-कणाद-कपिल-पतञ्जलि-व्यास-जैमिनी-यानीति (न्याय, वैशेषिक, सांख्य, योग, वेदान्त, मीमांसाख्यानि) षट्,

सर्वसिद्धान्तसंग्रहे शंकराचार्येण—लोकायतं, बौद्धं (वैभाषिक, सौत्रान्तिक, योगाचार, माध्यमिकेतिचतुर्धा विभक्तं) वैशेषिक-न्याय-मीमांसा (भाट्ट-प्रभाकरेति द्विधा विभक्ता), सांख्ययोगौ वेदान्तश्चेति नव,

जयन्तभट्टेन—मीमांसा-न्याय-वैशेषिक-सांख्यार्हत-बौद्ध-चार्वाकेति सप्त,

षड्दर्शनसमुच्चये हरिभद्रसूरिणा—बौद्ध-न्याय-साङ्ख्य-जैन-वैशेषिक-मीमांसा (पूर्वोत्तरभेदेन द्विधा) इति षट्,

अपरे च षड्दर्शनसमुच्चये जिनभद्रसूरिणा—जैन-मीमांसा-बौद्ध-सांख्य-शैव-नास्तिकेति षट्,

राजशेखरेण—जैन-सांख्य-जैमिनि-योग-वैशेषिक-सौगतेति षट्,

मल्लिनाथसूनुना—पाणिनि-जैमिनि-व्यास-कपिलाक्षपाद-कणादेति षट्,

सर्वमतसंग्रहकारेण—मीमांसा-सांख्य-तर्क-बौद्ध-आर्हत-लोकायतेति षट्,

सर्वदर्शनसंग्रहे माधवाचार्येण—चार्वाकबौद्धजैनरामानुजपूर्णप्रज्ञनकुलीशपाशुपतशैव-रसेश्वरौलूक्याक्षपादजैमिनिपाणिनिसांख्यपातञ्जलशाङ्करेति षोडश—

प्रस्थानभेदे मधुसूदनसरस्वतीभिः—न्याय-वैशेषिक-कर्म-शारीरकमीमांसे पातञ्जल-पाञ्चरात्र-पाशुपत-बौद्ध-दिगम्बर-चार्वाक-सांख्यौपनिषद इति द्वादश—

दर्शनानि नामोल्लेखपूर्वकं विवेचितानि।

## षड् दर्शनानि

षड्दर्शनशब्दो लोके प्रायेण प्रसिद्धः। कानि तानि षड्दर्शनानीति विचिकित्सायां नास्ति मतैक्यं विपश्चिताम्। कैश्चिदुच्यते षट् (न्यायवैशेषिकसांख्ययोगमीमांसावेदान्तेति) आस्तिकदर्शनानि, षट् च (चार्वाक-जैन-सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिकेति) नास्तिक-दर्शनानीति, उभयोरेव षट्प्रकारकत्वादेव षड्दर्शनमिति प्रथितम्। कैश्चिच्चैतेषु षट्संख्यया परिगणितत्वादेव षड्दर्शनानीति।

अन्ये च वदन्ति षट्प्रकारकं दर्शनशास्त्रम्, ते च प्रकाराः—नास्तिक-प्राकृतिक-प्रपन्ना-चार्योपासक—साम्प्रदायिक-तार्किकेति। एतेष्वपि प्रत्येकस्य षट् षट् प्रकारा भवन्तीति।[1] एवमिमां षट्संख्यामादायैव षड्दर्शनशब्दो लोके प्रसिद्धिमभजत् इति।

१. द्रष्टव्यम् "प्रमेयपारिजाते" २४ पृष्ठे—म०म० गिरिधरशर्मा चतुर्वेदी,

## साङ्ख्यदर्शनम्

**निरुक्तिः**

संख्यासंबन्धेन सांख्यमित्युच्यते, किन्तु संख्याशब्दस्यार्थे विवादोऽस्ति विदुषाम्। केचन वदन्ति "पञ्चविंशतितत्त्वात्मिका संख्या यत्र विविच्यते तदेव सांख्यमिति"।[1] एकस्तावदाधुनिकोऽपि विचारः संख्या(गणना)संबन्धमेव पुष्णाति यत् सांख्यं यं पुरुषं प्रतिपादयति सोऽक्षरः पुरुषः तस्य च पूर्वार्द्धोत्तरार्द्धयोः प्रत्येकं ४३२०००००० बीजपुरुषाः सन्ति एवं मिलित्वा ८६४०००००० संख्यात्मकानां पुरुषाणां प्रतिपादकं शास्त्रं सांख्यमिति।[2] केचन वदन्ति—सङ्ख इति पुरुषस्य संज्ञा तत्प्रतिपादकतयेदं दर्शनं सांख्यमित्युच्यते इति।[3]

अन्ये चाहुः—समुपसर्गपूर्वकाद्दर्शनार्थकाच्चक्षिङ् धातोः ल्युटि चक्षिङः ख्याञादेशे "सम्यक् ख्यानम्" इति विग्रहात्मकः सांख्यशब्दः। अस्यायमभिप्रायः—जीवोऽनाद्यविद्यया-ऽऽच्छन्नो भवति, तदेव तस्य बन्धनमुच्यते, येन स्वरूपज्ञानं तस्य न भवति। तज्ज्ञानं विना दुःखनिवृत्तिरप्यसंभाविनी। अतः "त्रिगुणात्मिकेयं प्रकृतिः पुरुषाद्भिन्नैव" इत्यात्मन उद्भाव्यमानं ज्ञानमेव संख्या। या विवेकख्यातिर्वा प्रकृतिपुरुषविवेको वा निगद्यते। यथाह महाभारते—

---

१. पञ्चविंशतितत्त्वानां विचारः सांख्यं तमधिकृत्य कृतो ग्रन्थः साङ्ख्यमुच्यते—
—रामतीर्थभट्टाचार्यः

एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात्।
प्रसङ्ख्यानाय तत्त्वानां संमतायात्मदर्शने॥ —भाग० ३।१४।३६

कपिलस्तत्त्वसंख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥ —भाग० ३।२५।१

तत्त्वाम्नायं यत्प्रवदन्ति सांख्यं प्रोवाच वै भक्तिवितानयोगम्।—भाग० ३।२५।३०

सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते —मत्स्यपु० ४।२९

संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते—अहिर्बुध्न्यसंहिता

सांख्यैः सङ्ख्यातसङ्ख्येयैः—चरकसंहिता

२. द्र० "साङ्ख्ययोग का जीर्णोद्धार" पृष्ठ १३—श्री हरिशंकरजोशी।

३. सङ्खमिति पुरुषनिमित्तेयं संज्ञा सङ्खस्य इमे साङ्ख्याः—हरिभद्रसूरिकृतषड्दर्शनसमुच्चयस्य टीकायाम्।

दोषाणां च गुणानां च प्रमाणं प्रविभागतः।
कञ्चिदर्थमभिप्रेत्य सा संख्येत्यभिधार्यताम् ॥[1] इति।

अयमेव भावः शङ्करभगवत्पादैरपि समर्थितः "इमे सत्त्वरजस्तमांसि गुणा मया दृश्याः अहं च तेभ्योऽन्यः, तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनम्। एष सांख्यः"[2] इति। श्रीदेवतीर्थ( काष्ठजिह्व )स्वामिभिरप्युच्यते—"कस्मात्सांख्यमित्युच्यते? सम्यक् क्रमपूर्वं ख्यानं यस्यां सा संख्या क्रमपूर्वा विचारणा यत्तामधिकृत्य कृतं तस्मात्सांख्यमित्युच्यते"[3] इति। "चर्चा संख्या विचारणा" इति "संख्यावान् पण्डितः कविः" इति चोक्तवता कोशकारेणामरसिंहेनापि समर्थितोऽयमर्थः।

## साङ्ख्यदर्शनस्य पृष्ठभूमिः

प्रागुक्तेषु दर्शनेषु साम्प्रतिके पारिप्रेक्ष्ये सांख्यस्य का पृष्ठभूमिरिति विचार्यते, यत्—चार्वाकैरात्मनोऽस्तित्वं तु स्वीकृतं किन्तु भूतभौतिकात्तं पृथक्कर्तुं न ते पारयन्ति, आर्हतं च दर्शनमात्मनो पृथगस्तित्वं तदुपयोगितां च मन्वानोऽपि सावयवत्वात् देहपरिमाणादेश्च तं मोचयितुं नाशकत्। बौद्धैस्तु चित्तसन्ततिमिवात्मानं मन्यमानैस्तस्य पृथगस्तित्वमेव न स्वीक्रियते। नैयायिकवैशेषिकयोरात्मा नित्यं द्रव्यं सोऽपि जड एव, मोक्षावस्थायामप्यात्ममनसोः संबन्धो वर्वर्ति। अनयोरात्मनि स्वरूपयोग्यतामात्रमस्ति नाद्वैतस्य किमपि क्वापि स्थानम्। मीमांसकैरप्यात्मनो विभुत्वं नित्यत्वं च विहाय न किमपि सूक्ष्मं विवेचितं यतो हि तत्र ज्ञानस्यापि नित्यत्वं स्वप्रकाशत्वं च स्वीक्रियते। इदमत्राकूतं यदेतैः सर्वैरेव प्रायः पृथगस्तित्वं मन्यमानैरप्यात्मनो द्रव्यत्वं न निवारितम्। अतः परं सूक्ष्मं विवेचयितुं सांख्यं प्रवर्तते। वाक्यान्तरैरिदं वक्तुं शक्यते यद् यत्र नैयायिकी भूसीमा समाप्यते ततः सांख्यभूः प्रारभ्यते इति।

## सांख्यस्य व्यापकता प्रत्नता च

इदमत्र विशेषेणावधातव्यं यद्दर्शनानामयं क्रमो नितरां वैचारिक एव न त्वैतिहासिकः। ऐतिहासिकक्रमेण तु सांख्यदर्शनं सर्वेभ्यः प्राचीनमिति निर्विवादम्। यतो हि प्रागुक्ते दर्शनानां गणनाविषयके विदुषां वैमत्ये सांख्यमादाय न कस्यापि विप्रतिपत्तिः। तस्य दर्शनशास्त्रत्वं सर्वैरेवैकमत्येनोरीक्रियते। संहितासु, उपनिषत्सु, पुराणेषु, रामायणमहाभारतयोरायुर्वेदेऽपरत्र च वाङ्मये सर्वत्रैव प्रचुरतया सांख्यसिद्धान्तानामुपलब्धिरेतत्प्रमाणयति।

---

१. महा० शान्ति० ३०८।१८२।

२. द्र० गीताशाङ्करभाष्यम् १३।२४।

३. द्र० सांख्यतरङ्गे ( प्रस्तुतग्रन्थस्य ६५४ पृष्ठे )।

एतत्प्रवर्तकश्च भगवान् कपिल एव "आदिविद्वान्" पदेनाभिधीयते। सांख्यमिव व्यापकं न शास्त्रान्तरं किमपीति स्फुटमेव विविधशास्त्राण्यधीयमानैरवबुध्यते। भगवता द्वैपायनेन स्पष्टमेवोक्तं महाभारते शान्तिपर्वणि "जगति निखिलमपि यच्छास्त्रजातं दरीदृश्यते तत्सर्वं सांख्यादेव विनिःसृतमिति"।[१]

भारतीये जनमानसे कियानस्य प्रभाव इति तु एतेनैव विचारयितुं शक्यते यत् प्रत्यहं क्रियमाणे देवर्षिमनुष्यपितृतर्पणे सांख्याचार्येभ्योऽपि जलं दीयते।[२]

## सांख्यप्रतिपाद्यम्

### पञ्चविंशतितत्त्वानि

सांख्यदर्शने यानि तत्त्वानि विवेच्यन्ते तानीमानि वर्तन्ते—प्रकृतिः, महान्, अहङ्कारः, पञ्चतन्मात्राणि (शब्द–स्पर्श–रूप-रस–गन्धाख्यानि), एकादशेन्द्रियाणि (श्रोत्रं, त्वक्, चक्षुः, जिह्वा, घ्राणमिति ५ ज्ञानेन्द्रियाणि, वाक् पाणिपादपायूपस्थेति ५ कर्मेन्द्रियाणि, उभयात्मकमेकं मनः), पञ्चमहाभूतानि (पृथिव्यप्तेजोवाय्वाकाशाख्यानि) एवं चतुर्विंशतिः, पञ्चविंशश्च पुरुष इति।[3]

### त्रीणि प्रमाणानि

प्रमेयसिद्धिः प्रमाणाधीना भवति, सांख्याः त्रीणि प्रमाणानि मन्वते[४] प्रत्यक्षमनुमानमाप्तवचनं च। यद्विज्ञानं (=बुद्धिवृत्तिः) सम्बद्धवस्त्वाकारधारि भवति तत्प्रत्यक्षम्।[५] व्याप्तिदर्शनाद्व्यापकज्ञानमनुमानम्[६]; आप्तोपदेशश्च शब्द[७] इति तल्लक्षणम्। सामान्यतः प्रत्यक्षादेव प्रतीतिर्भवति, अतीन्द्रियाणामनुमानेन, ततोऽपि यत्परोक्षं तदाप्तोपदेशाद् सिद्धयति।[८]

---

१. ज्ञानं महद्यद्धि महत्सु राजन् वेदेषु सांख्येषु तथैव योगे।
यच्चापि दृष्टं विविधं पुराणे सांख्यागतं तन्निखिलं नरेन्द्र॥ इति॥
"अमूर्तेस्तस्य कौन्तेय सांख्यं मूर्तिरिति श्रुतिः" इति च।

२. द्र० नित्यतर्पणविधौ—"कपिलस्तृप्यताम्, आसुरिस्तृप्यताम्, वोढुस्तृप्यताम्, पञ्चशिखस्तृप्यताम्" इति।

३. सां० सू० १।६१। ४. सां० सू० १।८७।
५. सां० सू० १।८९। ६. सां० सू० १।१००।
७. सां० सू० १।१०१। ८. सां० सू० १।६०, १।१०३, १।१०६।

### कार्यकारणभावः

प्रकृतिः कारणं महदादीनि च कार्याणि। यद्यपि प्रकृतिः सूक्ष्मत्वादिन्द्रियगोचरतां नाप्नोति, तथापि महदादिरूपतत्कार्यदर्शनात् तत्सत्ताऽपरिहार्येणानुमातव्या।[1]

### परिणामवादः

कार्यकारणयोरभेदः, अर्थात् कारणस्यैवावस्थाविशेषः कार्यमिति। जगतः सर्वमपि वस्तु परिणामि भवति। यच्च चिरमेकाकारं दृश्यते तत्रापि परिणामो भवत्येव किन्तु यावदेकरूपं दृश्यते तावत्सदृशपरिणामो भवति यदा चाकारे परिवर्तनं लक्ष्यते तदा विसदृश-परिणाम इत्येवान्तरं वर्तते। यथा यावद्दुग्धं तावत्सदृशपरिणामः, दध्याकारेण परिणते तु विसदृशपरिणाम इति। परन्तु दुग्धस्यैवावस्थाविशेषो दधीति तु निर्विवादम्।

### सत्कार्यवादः

कारणस्यैवावस्थाविशेषः कार्यमिति पूर्वमुक्तम्, अर्थात् कार्यं पूर्वत एव स्वकारणे विद्यमानं वर्तते। इदमेवान्तरं यत् कारणावस्थायां तदव्यक्तं कार्यावस्थायां च व्यक्तं भवति, यथा तिलेषु तैलम्। यतो हि कारणं सत्, अतः कार्यमपि सदेव। प्रसिद्धोऽयं सांख्य-सिद्धान्तः—"नासत आत्मलाभो न सत आत्महानिः" इति। सत्कार्यवादस्थापनायाः पञ्च हेतवो मूले द्रष्टव्याः।[2]

### गुणाः

सत्त्वं रजस्तमश्चेति गुणाः क्रमशः प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्ति-नियमार्थाः परस्परं वैधर्म्यवन्तोऽपि मिलित्वा पुरुषस्योपकारका भवन्ति। यथा तूलं तैलं वह्निश्चेति त्रयोऽपि पदार्थाः परस्परं विरुद्धधर्मवन्तः सन्ति, किन्तु व्यवस्थितानामेषां दीपस्थानां लोकोपकारिणी प्रवृत्तिर्दृश्यत एव, एवमेव सत्त्वादीनामपि लघुत्वादिधर्मैः साधर्म्यं वैधर्म्यं च भवति, किन्तु एकत्रस्थैस्तैः पुरुष उपक्रियत एव।[3]

### प्रकृतिः

प्रागुक्तानां गुणानां साम्यावस्थैव प्रकृतिः। एषु गुणेषु चेतनसंयोगेन यदा वैषम्यं प्रारभ्यते तदा सृष्टेः पूर्वमिदं निखिलं कार्यरूपं जगदस्यामेव प्रकृतावव्यक्तरूपेण तिष्ठति, अतएवेयमव्यक्तमप्युच्यते। सर्गोऽस्या एव प्रारभ्यतेऽतः प्रधानं मूलप्रकृतिर्वा इयमेवोच्यते। यद्यपि जडेयं तथापि पुरुषस्य भोगायापवर्गाय वा विना स्वार्थं प्रवर्तते।

---

१. सां० सू० १।१०९-११५।
२. सां० सू० १।११४-१२१।
३. सां० सू० १।१२७-१२८।

## पुरुषः

अथ स्वास्तृता शय्या जडपदार्थरूपा, स्वस्यै तस्या न कोऽप्युपयोगः, किन्तु तां दृष्ट्वानुमीयते यत् कोऽप्यस्या उपभोक्तावश्यं स्यादिति। एवमेव प्रकृतिरपि जडरूपा स्वस्यै तस्या न कोऽप्युपयोगः, अतोऽस्या ( गुणसमुदायरूपायाः ) उपभोक्ता कोऽपि चेतनोऽवश्यं भवेदिति पुरुषकल्पना आवश्यिकी।

अयं च पुरुषः चेतनः, द्रष्टा ( साक्षी ), भोक्ता, एकरसः, अपरिणामी, असंहतश्चास्ति, गुणास्तु अचेतनाः, दृश्याः, भोग्याः, परिणामिनः, संहताश्च सन्ति।

एते च पुरुषाः बहवः ( प्रतिसूक्ष्मशरीरमेकः पुरुषो भोक्ता इति ) सन्ति।[१]

## महत्

प्रकृतेः सात्त्विकांशाद्यत्तत्त्वं प्रथममुत्पद्यते तदेव महत्, बुद्धितत्त्वं वा निगद्यते। सत्त्वप्रधानत्वादत्र लघुत्वं प्रकाशश्च विद्येते। अध्यवसायात्मकमिदं कार्याकार्यनिर्णयात्मकमिति यावत्। पुरुषस्य भोगापवर्गयोः मुख्यं साधनमेतदेव। प्रकृतिपुरुषयोः सूक्ष्मभेदाभिव्यक्तिरप्यनेनैव भवति। सात्त्विकं तामसं चेति द्विविधमस्य कार्यम्, तत्र धर्मज्ञानविरागैश्वर्याणि सात्त्विकानि, तद्विपरीतानि चाधर्माज्ञानाविरागानैश्वर्याणि तामसानि। तेष्वष्टसु सप्तभिः पुरुषो बध्यते एकेन च ज्ञानेन मुच्यते।[२]

## अहङ्कारः

प्रतिक्षणं परिणामितया महति स्थिताद्रजोगुणादहङ्कार उत्पद्यते। अहंममाभिमान एवाहङ्कारः। अयं च त्रिविधः १. वैकृतः—सात्त्विकांशबहुलो यस्मादेकादशेन्द्रियाण्युत्पद्यन्ते। २. भूतादिः—तमोंऽशबहुलो यस्मात्पञ्चतन्मात्राण्युत्पद्यन्ते। ३. तैजसः—रजोंशबहुलो यः वैकृतभूताद्योः कार्येषु साहाय्यं करोति।[3]

## तन्मात्राणीन्द्रियाणि च

अहङ्कारपरिणामेन तामसादंशात् पञ्चतन्मात्राण्युत्पद्यते, तानि च शब्द-स्पर्श-रूप-रस-गन्धाख्यानि। सात्त्विकाच्चांशादेकादशेन्द्रियाण्युत्पद्यन्ते। एषु च श्रोत्रं त्वक् चक्षुः जिह्वा घ्राणं चेति पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि, ज्ञानकर्मोभयात्मकं च मन इति।[४]

## पञ्चमहाभूतानि

पञ्चतन्मात्रेषु परिणामितया पञ्चमहाभूतान्युत्पद्यन्ते। शब्दस्पर्शरूपरसगन्धेभ्यः क्रमश

---

१. सां० सू० १।६६, १।१४९, १।१५२, अत्र विशेषेणद्रष्टव्यम् "भारतीय दर्शन"
—म० म० डा० उमेशमिश्र, पृ० ३०४।

२. सां० सू० २।१३–१५। ३. सां० सू० २।१६–१७। ४. सां० सू० २।१८,१९,२६।

आकाशो वायुस्तेजो जलं पृथ्वी च उत्पन्ना भवन्ति । यद्यपि प्रतिमहाभूतं पञ्चानामेव तन्मात्राणामंशा विद्यन्ते किन्तु अंशाधिक्यं यस्य यस्मिन् भवति ततस्तत एव उत्पन्नं संभाव्यते ।

## करणम्

पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनोबुद्धिरहङ्कारश्चेति त्रयोदशविधं करणम् । अत्रापि मनो बुद्धिरहङ्कारश्चेति त्रिविधमन्तःकरणं प्रधानम्, अवशिष्टं दशेन्द्रियात्मकं दशधा बाह्यकरणमप्रधानमुच्यते । अन्तःकरणेष्वपि बुद्धेः प्राधान्यं यतो बाह्यकरणानि विषयानालोड्य मनसेऽर्पयन्ति मनश्च सङ्कल्पेन सहैतान् अहङ्काराय, अहङ्कारोऽपि बुद्धये, बुद्धिश्च तान् निश्चित्य पुरुषसमक्षमुपस्थापयति । इयमेव बुद्धिः प्रकृतिपुरुषयोः पृथक्त्वां विवेचयति, पुरुषस्य भोगापवर्गयोः साधनं च भवति ।[1]

## सूक्ष्मशरीरम्

त्रिविधमन्तःकरणं दशधा बाह्यकरणं पञ्च तन्मात्राणि चेत्यष्टादशानाम्[2] समुदायः सूक्ष्मशरीरं लिङ्गशरीरं वा उच्यते । सांख्याः मन्वते यत् सर्गादौ प्रतिपुरुषमेकं सूक्ष्मशरीरं भवति, तच्च स्थूलशरीरमाश्रित्य तिष्ठति । किंतु स्थूलशरीरस्य नाशे सति तन्न विनश्यति प्रत्युत तत्स्थूलशरीरवासनाभिर्वासितं सत् स्थूलशरीरान्तरं प्राप्नोति । एवं च प्रलयपर्यन्तं तिष्ठति । प्रलयेऽपि प्रकृतौ लीनं सन्नवीनसर्गे नवेन रूपेणोत्पद्यते[3] ।

## संयोगात् सृष्टिः

प्रकृतिपुरुषयोः संयोगात् सृष्टिर्भवति । प्रकृतौ क्रियाशक्तिर्वर्तते किन्तु चेतनत्वं नास्ति, पुरुषे च चेतनत्वं वर्तते क्रियाशक्तिर्नास्ति । पङ्ग्वन्धवदुभयोः संयोगात् सर्गः प्रभवति । इदमत्राकूतं यत् पुरुषस्य चेतनत्वं प्रधानस्य क्रियावत्त्वं च परस्परमपेक्षेते । पुरुषः प्रकृतिं द्रष्टुं प्रकृतिश्च तं विमोचयितुमिच्छति, तेनैव तयोः संयोगः, संयोगाच्च सर्गो भवति ।[4]

## द्विविधः सर्गः

बुद्धेः परिणामरूपा धर्माधर्मादयः पूर्वोक्ता भावा यदा विपर्ययाशक्तितुष्टिसिद्धिरूपेण परिणमन्ते स एव भावसर्गः प्रत्ययसर्गो बौद्धिकः सर्गो वा निगद्यते । अस्य च भावसर्गस्य स्थितिः सूक्ष्म-स्थूलशरीरसाध्या भवति, अतः स तत्तद्देहमयो लिङ्गसर्गः सूक्ष्मसर्गस्तत्मात्रसर्गो भौतिको वा सर्गः कथ्यते । अयमेव चतुर्दशसु भुवनेषु व्याप्तस्तिष्ठति ।[5]

---

१. सां० सू० २।३६–४७ ।

२. अत्र विज्ञानभिक्षुणा अहङ्कारं बुद्धावन्तर्भाव्य सप्तदशावयवमेव लिङ्गशरीरमुक्तम्, द्रष्टव्यम् ३।९ सूत्रे भिक्षुवचनम्–"एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश, अहङ्कारस्य बुद्धावेवान्तर्भावः । एतान्येव सप्तदश लिङ्गं मन्तव्यम्" इति ।

३. सां०सू० ३।९-१२ । ४. सां०सू० २।१, २।७-९ । ५. सां०सू० ३।४५-५० ।

पञ्च विपर्ययाः, अष्टाविंशत्यशक्तयः, नव तुष्टयोऽष्टसिद्धयश्चेति योगेन पञ्चाशत्प्रकारकः प्रत्ययसर्गः ।[1] भौतिकस्तु विस्तरेण विवेक्तव्यो दिङ्मात्रमत्र निदर्श्यते—मध्ये भूलोकस्ततः ऊर्ध्वं भुवः स्वः महः जनः तपः सत्यमिति षट् लोकाः, यत्र सात्त्विकानां स्थितिः। एष्वन्तिमं लोकत्रयं ब्रह्मलोक इत्युच्यते तत्र ब्रह्मयोनयो निवसन्ति, ते चेत्थम्—सत्यलोके अच्युत-शुद्धनिवास-सत्याभ-संज्ञासंज्ञिसंज्ञकाश्चतुर्विधाः, तपोलोके अभास्वर-महाभास्वर-सत्यमहाभास्वरेति त्रिविधाः, जनलोके च ब्रह्मपुरोहित-ब्रह्मकायिक-ब्रह्ममहाकायिकामरेति चतुर्विधाः ।

महर्लोकश्च प्राजापत्यसंज्ञकस्तत्र कुमुद-ऋभु-प्रतर्दनाजनाभ-प्रचिताभेति पञ्चविधानां वासः । स्वर्लोके ऐन्द्रः सर्गः, तत्र त्रिदशाग्निष्वात्त-तुषित-याम्य-परिनिर्मितवशवर्त्यपरिनिर्मित-वशवर्तीति चतुर्विधानां वासः । सौम्यादयः पितरोऽप्यत्रैव निवसन्ति ।

स्वर्लोकादधो भूलोकाच्चोपरि मध्ये भुवर्लोकस्तिष्ठति, स एव नक्षत्रलोको द्युलोक इति वा निगद्यते। तत्र सूर्यचन्द्रादीनि नक्षत्राणि सन्ति । उन्नतेश्चरमां काष्ठामधिगतं साम्प्रतिकविज्ञान-मेतेष्वेव भुवर्लोकस्थेषु भूलोकान्निकटतमेषु ग्रहेष्वारोढुमनिशं प्रयतते । प्राचीने तु भारते भुवर्लो-कादूर्ध्वं स्वर्लोकं यावदनायासेन गमनागमनमासीत् । बहवो राजानः स्वर्लोके युद्धेष्विन्द्रस्य साहाय्यमकुर्वन्, योगिनस्तु ततोऽप्यूर्ध्वं सत्यलोकं यावदनेनैव देहेन गच्छन्ति स्म । अलमत्रा-प्रासङ्गिकेन ।

भूर्लोके च पञ्चविधास्तिर्यग्योनयः पशुमृगपक्षिसरीसृपस्थावरा इति, एकविधश्च मानुषः सर्गः, स च सर्वो रजोबहुलः ।

भूर्लोकादधस्तु अतल-वितल-सुतल-तलातल-महातल-रसातल-पातालेति सप्तलोकाः सन्ति, येषु राक्षस-पिशाचादयो देवयोनय एव निवसन्ति किन्तु तमोबहुलाः ।

एवमष्टविधो दैवः पञ्चविधस्तैर्यग्योन एकविधश्च मानुष इति चतुर्दशविधो भौतिकः सर्गः ।[2]

## विवेकख्यातिः

बुद्धिर्जडा पुरुषश्च चेतनः, किन्तु स यदा स्वं बुद्धेः पृथङ् न भावयति, तस्यां शान्तायां घोरायां मूढायां च स्वमपि शान्तं घोरं मूढं च मनुते, स एव तस्याविवेकः । इयमेव चिदचिद्ग्रन्थिः या पुरुषकृते दुःखस्य संसरणस्य वा हेतुर्भवति, बुद्धेः पृथक्त्वभावनमेव विवेको येन दुःखनिवृत्तिर्जन्ममरणराहित्यं वा लभ्यते । तदानीं बुद्धौ तस्यात्मभावना न भवति, तद्गतैः सन्तापैः स न सन्तप्तो भवति, इयमेव विवेकख्यातिः सदसत्ख्यातिर्वा उच्यते ।[3]

## मुक्तिः

तत्त्वसाक्षात्कारे विवेकख्यातौ वा सत्यां पुरुषः त्रिगुणात्मिकायाः प्रकृतेर्बन्धनान्मुक्तो भवति, स तदानीं रङ्गमञ्चस्थदर्शक इव तां प्रेक्षते, सापि अस्मै करणीयं स्वं कार्यं न करोति ।

---

१. सां०सू० ३।३७-४२ । २. सां०सू० ३।४६-५० । ३. सां०सू० ३।६३ ।

यद्यपि मुक्तौ सत्यामप्यनयोः संयोगो भवति किन्तु सर्गोत्पत्तिर्न संभाव्यते, भृष्टबीजेभ्योऽङ्कुरानुत्पत्तिरिव। पुरुषो मयेयं दृष्टेति प्रकृतिरप्यनेन त्वहं दृष्टेति परस्परमुपेक्षेते, न तयोः सर्गस्य प्रयोजनं भवति। इयमेव स्थितिर्मुक्तिरित्युच्यते साङ्ख्यैः।[1]

मोक्षः कैवल्यं वा

तत्त्वज्ञाने सति धर्माधर्मादयोऽकारणा भवन्ति, न तेषां किमपि फलं भवति, किन्तु कर्मसंस्कारवशात् कुलालचक्रभ्रमिवत् शरीरं दधाति, यदा सोऽपि संस्कारः समाप्यते तदा शरीरमपि न भवति। तदानीं च प्रकृतिः कृतार्था भूत्वा एकान्तिकेनात्यन्तिकेन च भावेन ततो निवर्तते, पुरुषश्चाविनाश्यमवश्यंभावि च कैवल्यं प्राप्नोति।[2]

ईश्वरः

"ईश्वरासिद्धेः"[3] इति "नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः" इत्यारभ्य "सम्बन्धाभावान्नानुमानम्" इत्यन्तं[4] च सूत्रजातं विलोक्य कैश्चित् ( मन्ये बौद्धैः ) प्रवर्तितोऽयं प्रवादः यद् निरीश्वराः साङ्ख्या इति। परमर्षिणा कपिलेन प्रणीतं साङ्ख्यदर्शनं तु नास्ति निरीश्वरम्, अन्यथा अधिष्ठातेति[5] सर्वकर्तेति[6] सर्वविदिति[7] ईश्वर[8] इति च पदैः परमात्मानं स कथं निर्दिशेत्। वस्तुतस्तु साङ्ख्यदर्शनं जडप्रकृतिमेव जडस्य जगत उपादानं मनुते न तु चेतनं पुरुषम्। किन्तु तस्य जगतोऽधिष्ठाता नियन्ता वा ईश्वरस्तेन स्वीक्रियत एव ( अत्र भागवतोक्तः कपिलदेवहूतिसंवादो विशेषेण द्रष्टव्यः ), जडस्य जगत उपादानं ये चेतनं स्वीकुर्वन्ति तैरपि तत्साधयितुं चेतनातिरिक्तमनिर्वचनीयं मायाख्यं तत्त्वान्तरं पृथक् कल्प्यत एव। अतः कोऽपराधः सांख्यानां यदि तैरुपादानत्वेन ईश्वरो नाङ्गीक्रियेत। संक्षेपेणेदमेव साङ्ख्यदर्शनस्य वर्ण्यं विषयवस्तु।

## सांख्याचार्याः

सांख्यशास्त्रस्य प्रवर्तकेन परमर्षिणा कपिलेनेदं ज्ञानं सर्वतः प्रथमं स्वमात्रे देवहूत्यै प्रदत्तम्, इति भागवतादिभिरुच्यते। ततश्च सूत्ररूपेण स्वशिष्यायासुरये, तेन च पञ्चशिखाय, ततः परम्परया ईश्वरकृष्णेन लब्धमिति सांख्यकारिकातोऽवगम्यते।

कपिलः

अयं परमर्षिर्विष्णोरवतारभूतः प्रजापतेः कर्दमाद् देवहूत्यां सत्ययुगान्ते प्रादुर्बभूवेति कथा भागवतस्य तृतीयस्कन्धे २४–३३ अध्यायेषु विस्तरशो दृश्यते। अयं च कपिलः भारतीयवाङ्मये पुराणेषु सांख्यप्रवर्तकतया विष्णोरन्यतमावतारतया सगरसुतानां

---

१. सां०सू० ३.६४-७४। २. सां०सू० ३।६८, ३।७७-८४ ३. सां०सू० १।९२।
४. सां०सू० ५।२-११। ५. सां०सू० १।९६। ६. ८. सां०सू० ३।५६।
७. सां०सू० ५।२।

विनाशकतया च प्रथितो बहुशः । बाल्मीकीयरामायणे महाभारतेऽप्यस्य महत्त्वं वर्णितमेव । "सिद्धानां कपिलो मुनिः" इति भगवद्वाक्यं स्पष्टमेव, । अथ च कोलब्रुकादिभिः पाश्चात्यैः कैश्चिल्लेखकैः तदन्धपरम्परानुयायिभिर्भारतीयैरपि कैश्चिद्यदुक्तं कपिलो नाम काल्पनिकः कोऽपि न तु वास्तविक इति, तत्तु प्रलापस्तेषां भारतीयवाङ्मयं प्रति भावनामालिन्यं सूचयति । कपिलः हिरण्यगर्भाख्यया योगस्यापि प्रवक्तेत्यपि निर्विवादम्, यतो हि सांख्यं योगश्च एकस्यैव दर्शनस्य द्वौ पक्षौ, सांख्यं सिद्धान्तपक्षः योगश्च प्रायोगिक इति । अत एव

कपिलं प्राहुराचार्याः सांख्या निश्चितनिश्चयाः ।
हिरण्यगर्भो द्युतिमानेष यश्छन्दसि ष्टुतः ॥

तथा—सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥

इति च महाभारतीयशान्तिपर्वस्थो वृत्तान्तोऽत्र विचारणीयो भवति । सांख्यषडध्यायी केन कपिलेन प्रणीता, तत्त्वसमासश्च केन, इति न वयं विवदामहे । भारतीयपद्धत्या इदमेव निश्चीयते यत् कापिलं सांख्यमतमत्र प्रतिपाद्यते न चान्यस्य कस्यचिदेतत्प्रणेतुर्नामाप्युपलभ्यते परम्परा चेयं कपिलप्रणीतेति, वयं स्वीकुर्महे ।

कालविषयिणी चर्चा

भारतीयैर्मनीषिभिः शास्त्रकारैर्ग्रन्थकारैः कविभिर्वा सर्वदा जीवनस्य महत्त्वं स्वीकृतं नतु जीवन्याः । पाश्चात्यलेखकैरियं परम्परा चालिता यत् कः कदा प्रादुरभूत् इति । अस्य च कारणमासीद् भारतीयां सनातनीं संस्कृतिं ईशवीयवत्सरैरुत्तोल्य तस्या अर्वाचीनत्वप्रतिपादनम् । सृष्टिः कदा प्रादुरभवत् ? वर्तमानकल्पस्य प्रारम्भः कदाऽभवत्, कलेः कियन्ति वर्षाणि व्यतीतानि, इत्यादयो बहवः प्रश्नाः सन्ति येषां समाधानाय वयं भारतीया न कस्यापि मुखं प्रेक्षामहे । प्रतिवर्षं क्रियमाणासु पञ्चाङ्गगणनासु, प्रत्यहमनुष्ठीयमाननित्याह्निकेषु च क्रियमाणे संकल्पे सृष्टिसंवत् कलिसंवत् विक्रमसंवदादीनुच्चारयन्तो वयं जानीमोऽस्मन्मनीषिभिः कृतामसन्दिग्धां गणनाम्, तत्र किमप्युत्खननादिजन्यं पाषाणप्रमाणं न वयं मन्यामहे । बहुवक्तव्येऽस्मिन्विषये विस्तरभयाद्विरम्य प्रकृतमनुसरामः ।

सांख्यशास्त्रप्रवर्तकः कपिलः कदा जनिं लेभे, कदा च तेन सांख्यसूत्राणि विरचितानि इति प्रश्ने वयमित्येव वक्ष्यामो यत् सत्ययुगान्ते महर्षेः कर्दमाद् देवहूत्यां भगवदवतारभूतः कपिलः प्रादुर्भूय स्वमात्रे सर्वप्रथमं सांख्यशास्त्रमुपदिदेश । तच्च तेन कदापि जगति प्रवर्तनाय सूत्ररूपेण कृतं स्यात् । यतो हि वेदान्ते ब्रह्मसूत्राणि, मीमांसायां जैमिनिसूत्राणि, न्याये गौतमसूत्राणि, वैशेषिके कणादसूत्राणि, योगे च पातञ्जलसूत्राणि यथा प्रसिद्धानि तथैव सांख्ये कापिलानि सूत्राण्यपि प्रवर्तितानि स्युः । यदि वयं भारतीयशास्त्राणि प्रमाणीकुर्मस्तदा सिद्धानां न किमप्यायुः परिगणनीयं भवति । ते सर्वदा स्वेच्छाजीविनो भवन्ति, नास्मदिवाल्पा-

युषः । रामायणस्य बालकाण्डे वाल्मीकिना लिखितं—यदा ब्रह्मणा वसिष्ठः प्रोक्तस्त्वमिक्ष्वाकोः पौरोहित्यं कुरु, तदा वसिष्ठेनोक्तं निन्दितमिदं कर्म न मया कार्यम्, तदा ब्रह्माऽवोचत्—अस्मिन्कुले साक्षाद् भगवान् रामरूपेणावतरिष्यति तद्दर्शनेन त्वं कृतार्थो भविष्यसीति, तदा तेन सहर्षं तत्स्वीकृतम् । इक्ष्वाकुतः रामं यावत् चत्वारिंशत् राजानोऽभवन्, तावद् वसिष्ठस्तत्र वंशे पौरोहित्यं चकार । एवमेवान्येऽपि महर्षयोऽभवन् ।

इक्ष्वाकोः विंशतितमो युवावंश्यः सगरोऽभवत् । तस्य पुत्रसहस्रमस्यैव सिद्धस्य कपिलस्य शापेन दग्धमिति पुराणेतिहासेषु प्रसिद्धम् । एतेनाप्यायाति यदयं कपिलोऽतिपुरातन इति । कपिलनामानोऽन्येऽपि मुनयो विद्वांसो वा भवितुं शक्नुवन्ति, परन्तु सांख्यशास्त्रप्रवर्तकोऽयमेव कपिल इति निश्चप्रचम्, यस्य सिद्धान्तानामुपनिषत्सु, पुराणेषु, रामायणे, महाभारते, व्यासादीनां दर्शनकाराणां सूत्रेषु च प्रतिपादनं दृश्यते ।

न वयमाधुनिकपाश्चात्यविद्वद्भिः प्रवर्तितां तथाकथितक्रमिककालपरम्परामनुसरामः ।

**कपिलः कपिलवस्तुनगरं च**

कपिलः काल्पनिको न त्वैतिहासिक इतिवदतां मुद्राभिलेखादिस्थूलप्रमाणमेव प्रमाणत्वेन स्वीकुर्वतां प्रस्तरप्रमाणधियामाधुनिकविचारकाणां तोषायापि किंचित्प्रस्तूयते—

भगवतो गौतमबुद्धस्य जन्मस्थानतया बौद्धग्रन्थेषु प्रसिद्धा शाक्यवंशीयराज्ञां राजधानी 'कपिलवस्तु' सांख्यप्रवर्तकस्य महर्षेः कपिलस्य जन्मभूर्वा वासभूर्वाऽऽसीदिति जनरलकनिंघम-रिचर्डगार्वेमहोदययोर्मतम् । भगवतो कपिलस्य जन्म बिन्दुसरसस्तटे महर्षेः कर्दमस्याश्रमेऽभवदिति भागवतादिप्रमाणेन पूर्वं निश्चितम् । परन्तु कपिलवस्तुनगरेणापि तस्य कश्चन संबन्ध आसीदिति बौद्धशास्त्रीयग्रन्थेषूल्लेखः प्राप्यते ।

इक्ष्वाकुवंशोद्भवैरनन्तरं च शाक्यनाम्ना विश्रुतैः क्षत्रपैर्यदा तत्र राजधानी निर्मिता तदानीं तत्र कश्चन कपिलो नाम महर्षिस्तपोरत आसीत् । तन्निर्देशेनैव तैस्तत्र तन्नाम्ना नगरं निर्मापितम् । सैव तेषां राजधानी विश्रुतेति "परमत्थजोतिका नाम सुत्तनिपाताट्ठकथायाम्" इत्थं वर्ण्यते—

"तत्थ नगरमापनोकासं परियेसमाना । हिमवति कपिलोनाम घोरतपो तापसो पटिवसति । पोक्खरिणीतीरे महासाकसंडे तस्स वसनोकासं गता । सो ते दिस्वा पुच्छित्वा सब्बं पवित्तिं सुत्वा तेसु अनुकंपं अकासि ।.................................................अयं भूमिप्पदेसो पुथु विअग्गन्ति तस्सि पदेसे अस्समं मापेसि । ततो सो राजकुमारे आह स चे मम नामेन नअरं करोथ देमि वो इमं ओकासं ति । ते तथा पटिजानिंसु । तापसो "इमस्सि आकासे ठत्वा चण्डालपुत्तो वि चक्कवत्ति बलेन अतिसेतीति" वत्वा अस्समे घरं मामेत्वा नगरं मापेथा ति तं ओकासं दत्वा सयं अविदूरे पब्बतपादे अस्समं कत्वा वसि । ततो कुमारा तत्थ नगरं मापेत्वा कपिलस्स वुत्थोकासे कतत्ता कपिलवत्थुत्ति नाम आरोपेत्वा तत्थ निवासं कप्पेसुं ।"

( सु० नि० अट्ठ० १।३५३ )

बौद्धविदुषां मूर्धन्यभूतो महाकविरश्वघोषः सौन्दरनन्दे लिखति—

कपिलस्य च तस्यर्षेस्तस्मिन्नाश्रमवास्तुनि ।
यस्मात्ते तत्पुरं चक्रुस्तस्मात्कपिलवास्तु तत् ।।

सौन्दरनन्द १।५७

यद्यपि परवर्तिभिर्बौद्धग्रन्थकारैः 'कपिलवस्तु' इत्येव नाम गृहीतम्, परन्तु अश्वघोषेण स्वीकृतं 'कपिलवास्तु' इत्येव नाम शुद्धं समीचीनं सार्थकं च प्रतिभाति ।

इदमपि निश्चप्रचं यदयं कपिलः सांख्याचार्य एवासीत् । यतो हि तस्य प्रभावेण तस्मिन् क्षेत्रे सांख्यदर्शनस्य भूरिशः प्रचार आसीत् । गौतमबुद्धस्य कालयसगोत्रीयः अराडनामा गुरुरासीत् । गौतमो गृहादभिनिष्क्रम्य प्रथमं धर्मलाभार्थं तस्यैव गृहं गतः, तत्र गत्वा दुःखप्रहाणोपायमप्राक्षीत् । यथाहाश्वघोषः—

दिदृक्षुरिव हि ज्योतिर्यियासुरिव दैशिकम् ।
त्वद्दर्शनमहं मन्ये तितीर्षुरिव च प्लवम् ।।

तस्मादर्हसि तद्वक्तुं वक्तव्यं यदि मन्यसे ।
जरामरणरोगेभ्यो यथायं परिमुच्यते ।।

इत्यराडः कुमारस्य माहात्म्यादेव चोदितः ।
संक्षिप्तं कथयाञ्चक्रे स्वस्य शास्त्रस्य निश्चयम् ।।इति।।

( बुद्धचरिते ११–१३ )

अयं च अराडः सांख्यशास्त्रस्यैव महानाचार्य आसीत्, अस्योपदेशेषु सांख्यसिद्धान्तानां प्रतिपादनं बहुश उपलभ्यते, इति सौन्दरनन्दे बहुभिरुदाहरणैरश्वघोषेण निदर्शितम् । अन्येष्वपि स्थलेषु दृश्यमानैर्वचनैरिदं निश्चीयते यत् कपिलवास्तुना कपिलस्य कश्चन सम्बन्धोऽवश्यमासीत् । इति ।

## आसुरिः

अयं कपिलस्य प्रथमः शिष्यः । एतत्संवादरूपेण सांख्यीयसिद्धान्ताः महाभारते दृश्यन्ते । स्याद्वादमञ्जर्यां चैतन्नाम्ना श्लोकमेकमुद्धृतं वर्तते । न कोपि ग्रन्थोऽस्य समुपलभ्यते सांप्रतम् ।

## पञ्चशिखः

आसुरेः शिष्यः । बहुचर्चितोऽयं सांख्यदर्शनप्रतिष्ठापकेषु सादरं सर्वैः स्वीक्रियते । षष्टितन्त्रस्याप्ययमेव निर्माता इति "तेन च बहुधा कृतं तन्त्रम्" इतीश्वरकृष्णोक्त्या, षष्टिसहस्रश्लोकात्मकमयं रचयितेति चीनदेशीयग्रन्थसाक्षिणा चानुभूयते । पञ्चशिखसिद्धान्तानां परिचयो महाभारते शान्तिपर्वणि ३०२—३०८ अध्यायेषु प्राप्यते । केचनेयं षडध्यायी पञ्चशिखप्रणीतैवेत्यपि वदन्ति, यद्यपि संप्रति न कोऽपि ग्रन्थः पञ्चशिखप्रणीत उपलभ्यते तथापीदं निश्चितमनेन सांख्यसिद्धान्तानां बहुधा प्रतिपादनं कृतम् । योगसूत्रभाष्ये, वाचस्पतिमिश्र-

कृतभामत्याम्, महाभारते, युक्तिदीपिकायां चास्य ग्रन्थेभ्यो यानि सूत्राण्युद्धृतानि तैरस्य व्यापकं पाण्डित्यमनुभूयते। इतस्ततः उपलब्धानां एतद्वचनानां संग्रहः प्रस्तुत ग्रन्थस्य ३६६—३६७ पृष्ठेषु द्रष्टव्यः।

अतः परमपि प्राचीनसांख्याचार्याणां नामान्युपलभ्यन्ते। यथा—

माठरवृत्तौ—भार्गवोलूक-वाल्मीकि-हारीत-देवलानाम्।

युक्तिदीपिकायां—वाद्धलि-कैरात-पौरिक-ऋषभेश्वर-धर्मध्वज-पञ्चाधिकरण-पतञ्जलि-वार्षगण्य-कौण्डिन्य-मूकानाम्।

जयमङ्गलायां—गर्ग-गौतमयोरपि। तत्त्वार्थराजवार्तिके—व्याघ्रभूतिगार्ग्ययोरिति।

अन्येषां च सनक-सनन्दन-सनातन-वोढु-जैगीषव्य-हारीतप्रभृतीनां नामानि सांख्याचार्यत्वेन ग्रन्थान्तरेषु प्राप्यन्ते। अनन्तरं च ईश्वरकृष्णो विश्रुतस्तद्विषयेऽस्मत्कृता सांख्यकारिका-भूमिका द्रष्टव्या। आचार्यविन्ध्यवास्यपि प्रसिद्धः।

## सांख्यसाहित्यम्

यद्यपि संहितासु ब्राह्मणारण्यकेषूपनिषत्सु पुराणेतिहासगीतादिषु च विषयान्तरेण सहैव सांख्यसिद्धान्तप्रतिपादनं विवेचनं च बहुश उपलभ्यते, तथापि केवलमस्यैव निरूपणायाधोलिखितं साहित्यमुपलभ्यते—

१. सांख्यषडध्यायी—कपिलप्रणीता, तद्व्याख्यानानि च
२. पञ्चशिखसूत्राणि
३. तत्त्वसमासः—तद्व्याख्याश्च
४. सांख्यकारिका—ईश्वरकृष्णकृता, तद्व्याख्याश्च
५. सांख्यसारः—विज्ञानभिक्षुकृतः
६. सांख्यपरिभाषा
७. सांख्यतत्त्वप्रदीपिका—केशवकृता
८. सांख्यतत्त्वप्रदीपः
९. तत्त्वमीमांसा—आचार्यकृष्णमिश्रप्रणीता

एतेषु ६–९ संख्यका लघुप्रबन्धरूपा ग्रन्थाः चौखम्बासंस्कृतग्रन्थमालायां प्रकाशिते सांख्यसंग्रहे मुद्रिता नात्र विवेच्यन्ते।

**सांख्यसारः**—पूर्वार्धोत्तरार्धयोर्दशपरिच्छेदात्मकः सांख्यशास्त्रप्रविविक्षूणां कृते विश्रुतविपश्चितो विज्ञानभिक्षोरुत्कृष्टतमा रचना, अयमपि सटीकोऽटीकश्च बहुषु संस्करणेषु मुद्रित उपलभ्यत एव।

**सांख्यकारिकाः**—ईश्वरकृष्णाभिधस्य परमविदुषोऽस्याः कृतेः सर्वत्र साम्राज्यं वर्तते। सप्ततिकारिकामयोऽयं ग्रन्थः सांख्यसप्ततिः, हिरण्यसप्ततिः, कणकसत्तरीत्याद्यभिधाभिर्बहुश्रुतो

विविधटीकाविलसितः सांख्यशास्त्रस्य प्रतिनिधिभूतः प्राचीनतरश्चेत्येतद्विषयकं समग्रं विवरणजातमस्मत्कृतगौडपादभाष्यानुवादसहितसांख्यकारिकाभूमिकातोऽवगन्तव्यम् ।

**तत्त्वसमासः**——२२ तः २५ सूत्रात्मकोऽयं ग्रन्थ एव मूलतः सांख्यशास्त्रस्य बीजभूतः आदिविदुषा कपिलेन प्रणीत इति केचन मन्यन्ते, अस्माकं तु नैतत्समीचीनं प्रतिभाति, यतो हि नास्य ग्रन्थस्य कापि प्राचीनतमा व्याख्या उपलभ्यते, न च केनापि प्राचीन-ग्रन्थकृतास्योद्धरणानि गृहीतानि । इदमप्यत्र विचारार्हं यदि महर्षिकपिलेनैतानि सूत्राणि प्रणीतानि भवेयुस्तर्हि स तदनुक्रमेण तेषां व्याख्यानभूतं ग्रन्थं विदध्यान्नतु सूत्रात्मिकां षडध्यायीम् । मन्ये सांख्यदर्शनमधीत्य केनापि तत्रत्यं वर्ण्यं विषयवस्त्वत्र संक्षिप्य संकलितम्, यच्च "तत्त्वसमास" इति नाम्नैव प्रतीयते । केनापि कृतः स्यात् प्रयासोऽयं स्तवनीय एव, यत् सर्वमपि सांख्यप्रतिपाद्यं सम्यक्तया वर्गीकृत्यात्र संनिवेशितं वर्तते ।

अस्य पञ्च व्याख्यानानि समुपलभ्यन्ते——

श्री षिमानन्द( क्षेमानन्द )कृतं——सांख्यतत्त्वविवेचनम् । भावागणेशप्रणीतं——सांख्यतत्त्वयाथार्थ्यदीपनम् । अज्ञातकर्तृका——सर्वोपकारिणीवृत्तिः । साङ्ख्यसूत्रविवरणम् । क्रमदीपिकाख्या तत्त्वसमाससूत्रवृत्तिश्चेति । एतत्पञ्चकमपि सांख्यसंग्रहे मुद्रितचरम् ।

## सांख्यषडध्यायी

इयमेव आदिविदुषा परमर्षिणा कपिलेन प्रणीता षडध्यायी सांख्यसर्वस्वमिति नात्र सन्देहलेशोऽपि । अत्र चतुःषष्ट्युत्तरशत १६४ सूत्रात्मके प्रथमाध्याये सांख्यशास्त्रस्य विषयो विस्तरेण निरूपितः । हेयं हानं हेयहेतुः हानोपायश्चेति चतुर्ष्वपि मोक्षशास्त्र-प्रतिपाद्येषु व्यूहेषु प्रथमयोर्द्वयोः, फलत्वेनाभ्यर्हितस्य हानस्य तत्प्रतियोगिविधया च हेयस्य सम्यक् प्रतिपादनं वर्तते ।

सप्तचत्वारिंशत् ४७ सूत्रात्मके द्वितीयाध्याये पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिप्रक्रियाऽभिहिता, पुरुषस्यातिस्फुटविवेकाय प्रधानकार्याणां स्वरूपं चोक्तम् ।

चतुरशीति ८४ सूत्रात्मके तृतीयाध्याये प्रधानस्य स्थूलकार्यं महाभूतानि, स्थूल-सूक्ष्मात्मकं शरीरद्वयं चाभिधाय परवैराग्यार्थमखिलानि ज्ञानसाधनानि विवेचितानि ।

द्वात्रिंशत् ३२ सूत्रात्मके चतुर्थाध्याये पूर्वाध्यायत्रयोक्तं सर्वं शिष्यप्रबोधायाख्यायिका-भिर्द्रढिम्न्तितम् ।

त्रिंशदुत्तरशत १३० सूत्रात्मके च पञ्चमाध्याये स्वशास्त्रविषये आपतिता परेषा-माक्षेपा अपाकृताः ।

एकसप्तति ७१ सूत्रात्मके षष्ठाध्याये शिष्याणामसन्दिग्धाविपर्यस्तो दृढतरो बोध उत्पद्येत इति पूर्वोक्तमेव पुनर्द्रढयित्वोपसंहारः कृतः ।

## सांख्यकारिका सूत्रषडध्यायी च

केचन विद्वांस आक्षिपन्ति यत् सांख्यषडध्यायीत ईश्वरकृष्णस्य सांख्यकारिका प्राचीना, यतो हि सायणादिभिः शंकरभगवत्पादैश्च स्वग्रन्थेषु न क्वापि सूत्राण्युद्धृतानि कारिका एव उद्धृता इति, नैतत्समीचीनम्, ईश्वरकृष्णः स्वयमेव ब्रवीति—

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ( सां० का० ७२ )

प्रत्यक्षमेतत् यत् १–२० कारिकाः षडध्याय्याः प्रथमाध्यायस्य, २१–३७ कारिका द्वितीयाध्यायस्य, ३८–६८ कारिकाश्च तृतीयाध्यायस्य सारांशरूपाः सन्ति । चतुर्थाध्यायः आख्यायिकारूपः, पञ्चमश्च परवादनिराकरणरूपः । एतदध्यायद्वयमीश्वरकृष्णेन विवर्जितम्, यतो हि तत्र केवलं पूर्वप्रतिपादितसिद्धान्तानां दृढीकरणमेवोद्देश्यम् । षष्ठश्चाध्यायः शिष्यबुद्धिवैशद्याय पूर्वोक्तस्यैवोपसंहार रूप इति ।

सांख्यसूत्राणामुद्धरणविषये सुप्रसिद्धविचारकेण विदुषा श्रीमदुदयवीरशास्त्रिणा स्वकीये सांख्यदर्शनस्येतिहासे सम्यग् विवेचितमस्ति । ईश्वरकृष्णात्पूर्ववर्तिभिर्ग्रन्थकारैर्गृहीतान्युद्धरणान्यपि तेन तत्र संकलितानि[1], ततःपरं न किमप्यधिकं वक्तव्यमस्ति । केवलमिदमेवोच्यते यत् सांख्यसूत्राणि सांख्यकारिकातोऽतीव प्राचीनतमानीति ।

## षष्टितन्त्रम्

सांख्यशास्त्रचर्चायां षष्टितन्त्रस्य नाम सर्वत्र दरीदृश्यते । प्राचीनतरैष्वपि भारतीयैर्वैदेशिकैश्च प्रणीतेषु ग्रन्थान्तरेषु सांख्यशास्त्रस्य षष्टितन्त्रत्वं सांख्याचार्याणां च षष्टितन्त्रज्ञत्वं बहुश उपलभ्यते किन्तु नाद्यावधि निर्णयो जातः किमिदं षष्टितन्त्रमिति । त्रिपथिचद्वरेण षड्दर्शनव्याख्याकृता श्रीवाचस्पतिमिश्रेण तत्त्वकौमुद्यां राजवार्तिकमुद्धृत्य षष्टिपदार्थानां गणना कृता । अहिर्बुध्न्यसंहितायामुक्तमस्मिन् षष्टिप्रकरणान्यासन्, तेषां गणनापि तत्र कृता वर्तते,[2] चीनदेशीयग्रन्थकारैरुक्तं षष्टिसहस्रश्लोकात्मकस्य यस्य ग्रन्थस्य रचना पञ्चशिखेन कृता तदेव षष्टितन्त्रमिति, ईश्वरकृष्णस्य "आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्"[3] इयं कारिकार्धमप्येतदेव सूचयति ।

यद्यपि श्रीमदुदयवीरशास्त्रिणा प्रभावपूर्णया रीत्येदं सिषाधयिषितं यत् बहुचर्चितं षष्टितन्त्रमियमेव षडध्यायीति[4] । ईश्वरकृष्णस्य—

सप्तत्यां किल येऽर्थास्तेऽर्था कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥[5]

---

१. द्रष्टव्यः 'सांख्यदर्शन का इतिहास'—उदयवीर शास्त्री (प्रथमं संस्करणं पृ० १७४–२२२)।
२. द्र०अ०बु०सं० १२।१८–३० ।
३. सांख्यकारिका ७० ।
४. द्र० 'सांख्यशास्त्र का इतिहास' द्वितीयं प्रकरणम् ।
५. सांख्यकारिका ७२ ।

इमां कारिकामुद्धृत्य तेनेदमपि सुष्ठु साधितं यत् कस्य सूत्रस्य भावमादाय का कारिका तेन निर्मितेति, चतुर्थ आख्यायिकाध्यायः पञ्चमश्च परपक्षनिर्जयाध्याय ईश्वरकृष्णेन वर्जितः संक्षेप्तुमिदमपि साधु प्रतिभाति, तथापि नेयं वार्ता गलादधोऽवरति यदियमेव षडध्यायी षष्टितन्त्रमिति। यतो हि यावता व्यापकेन रूपेण षष्टितन्त्रशब्दस्य प्रयोगो दृश्यते न तावतास्याः षडध्याय्याः। षष्टिसंख्यायाश्च न कथमपि सामञ्जस्यमत्र वयं कर्तुं पारयामः। तत्त्वानां संख्या पञ्चविंशत्येव, अत्र वर्णिताः पदार्थाः षष्टितोऽधिकाः भवन्ति, सूत्राणि ५२८ सन्ति, न कुत्रापि ग्रन्थकृता षष्टितन्त्रत्वमस्याः सूचितम्, अतो नैतत्समीचीनं प्रतिभाति षडध्याय्याः षष्टितन्त्रत्वम्।

## षडध्याय्या व्याख्यातारः

अस्याश्चत्वार्येव व्याख्यानान्यद्यावधि दृष्टिपथमुपेतानि। १. अनिरुद्धकृता वृत्तिः, २. महादेववेदान्तिकृतो वृत्तिसारः, ३. विज्ञानभिक्षुकृतं सांख्यप्रवचनभाष्यम्, ४. नागेशभट्टकृतो भाष्यसारो लघुसांख्यवृत्तिर्वा। एतेषु अनिरुद्धकृता वृत्तिः सर्वतः प्राचीनेति निर्विवादं सर्वे स्वीकुर्वन्ति।

### अनिरुद्धः

अनेन विरचिता वृत्तिर्यद्यपि स्वल्पाक्षरा सूत्रार्थमात्रबोधिनी वर्तते कतिपयेष्वेव स्थलेषु शङ्कानिरासपूर्वकं स्वाभिप्रायप्रकटनमनेन विहितं तथापीयमतीव महत्त्वपूर्णा, यतो हि वेदान्तिमहादेवेनैनामाधृत्यैव स्वव्याख्यानं विहितम्। विपश्चिद्वरेण्यो विज्ञानभिक्षुरप्यनया वृत्त्या परिचित एव प्रतीयते, बहुत्र तेन स्वीये भाष्ये वृत्तिकारमतमालोच्यते। अनेन महाभागेन विरचितं ग्रन्थान्तरं किमपि न दृष्टं श्रुतं वास्माभिः, श्रीमदुदयवीरशास्त्रिभि-र्निर्धारितोऽस्य स्थितिकालः ( खीस्तैकादशतकस्य मध्यवर्ती ) उचित एव प्रतिभाति।

### विज्ञानभिक्षुः

सकलदर्शनशास्त्रपारावारीणोऽप्ययं निसर्गतोऽद्वैतवेदान्ती मौलिकरूपेण दार्शनिकः। बहुश्रुतमस्य विद्वत्त्वम्, परपक्षखण्डने यथास्य पटुत्वं स्वपक्षस्थापनेऽपि तथैव। अस्य नाम्ना प्रतीयतेऽयं बौद्धो वा कश्चन संन्यासी वेति, परन्त्वेतत्प्रतिपादितसिद्धान्तैरिदं निश्चीयते नायं बौद्धः सर्वत्राद्वैतप्रतिपादकत्वात्, न च संन्यासी शङ्कराचार्यस्यापि तत्र तत्र स्फुटमालोचकत्वात्। स्वतन्त्रविचारकोऽयं स्वसिद्धान्तोपस्थापने न कस्मादपि बिभेति। एतत्प्रणीता ग्रन्थास्तु—

ईश, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तिरीय, श्वेताश्वतर, कैवल्य, मैत्रेयेति नवसूपनिषत्सु आलोकाख्यं व्याख्यानम्, वेदान्तसूत्रेषु—विज्ञानामृतभाष्यम्, योगसूत्रभाष्ये—योगवार्तिकम्, सांख्यसूत्रेषु—सांख्यप्रवचनभाष्यम्, भगवद्गीताटीका, सांख्यसारविवेकः, योगसारसंग्रहः, आदेशरत्नमाला, ब्रह्मादर्शः, वेदान्तालोकश्चेत्येकोनविंशति। अयं च विक्रमस्य चतुर्दशशतके प्रादुर्बभूवेतीतिहासकारैर्विवेचितम्।

**वेदान्तिमहादेवः**

श्रीस्वयंप्रकाशतीर्थवर्यशिष्योऽयं दाक्षिणात्यः। अनेन यद्यपि अनिरुद्धवृत्तेः सारं मया गृह्यते इति स्पष्टमुक्तं किन्तु वस्तुस्थितिस्त्वेवादृशी यदनेन अनिरुद्धनिर्दिष्टानां संक्षिप्तपदानां स्फुटं विवेचना कृता स्ववृत्तिसारे। एतत्प्रणीता ग्रन्थास्तु—

तत्त्वचन्द्रिका, तत्त्वानुसन्धानम्, सांख्यसूत्रवृत्तिः, सांख्यप्रवचनवृत्तिसारः, विष्णु-सहस्रनामटीका, निजविनोदाख्या उणादिसूत्रवृत्तिश्चेति।

श्रीउदयवीरशास्त्रिभिर्विज्ञानभिक्षोरयं पूर्ववर्तीति साधितम्। यद्यपि एतत्प्रणीत-विष्णुसहस्रनामटीकाया अन्ते—

"ख वाण मुनि भू (१७५०) माने वत्सरे श्रीमुखाभिधे।
मार्गासिततृतीयायां नगरे ताप्यलङ्कृते॥

उल्लिखितेनानेन श्लोकेनास्य स्थितिकालः विक्रमस्याष्टादशशताब्दिमध्ये आयाति, आश्चर्यमेतत् यद् भिक्षोस्त्रिशतकानन्तरवर्तिनाप्यनेन अनिरुद्धवृत्तेः सारं गृहीतम्, निर्भीक-विचारकेण भिक्षुणा तत्र तत्र वृत्तिकृदुपरि कृता आक्षेपा नोत्तरिताः, अस्य केषाञ्चन स्वतन्त्रसिद्धान्तानामप्यालोचनं न विहितम्। इयति कालभेदे भिक्षुग्रन्थो न तस्य दृष्टिपथमायातः स्यादिति स्वीकर्तुं चेतो न प्रभवति। अतो मन्ये कस्यचित्प्रतिलिपिकर्तुरयं श्लोकः स्यात्, यतोहि नान्यत्र तदीयग्रन्थेषु क्वापि कथंचित् कालनिर्देशो दृश्यते।

अथ चानेन सांख्यसूत्रेषु वृत्तिरपि रचितेति श्रूयते, सा च वृत्तिसाराद्भिन्ना किन्तु नान्या कापि वृत्तिरद्यावधि दृष्टचरा। अत्रापि श्रीशास्त्रिमहोदयस्यायं विचारो विवेचनामर्हति किं तत्त्वसमाससूत्रेषु कृता सर्वोपकारिणी वृत्तिरस्यैव वेदान्तिनः ?[1] इति—यतो ह्यत्र भिक्षोरयमाक्षेपः "यत् तत्र वेदान्तिब्रुवः कश्चिदाह—सांख्यप्रणेता कपिलो न विष्णुः किन्त्वग्न्यवतारः कपिलान्तरम्, तल्लोकव्यामोहनमात्रम् इति" कंचन वेदान्तिसंज्ञा-वन्तमेव संकेतयति न तु वेदान्तशास्त्रज्ञम्, वाक्यं चैतत् सर्वोपकारिण्यामेव दृश्यते नान्यत्र, विद्वद्भिरूहनीयमेतत्। एतेनास्यविज्ञानभिक्षोः पूर्ववर्तित्वं निश्चयेन प्राप्नोति।

**नागेशभट्टः**

शिवभट्टसुतः सतीगर्भजोऽयं सकलशास्त्रवेत्ता वैयाकरणमूर्धन्यः सुप्रसिद्धविदुषो भट्टोजिदीक्षितपौत्रस्य हरिदीक्षितस्य शिष्य आसीत्। संस्कृतवाङ्मयस्य सर्वास्वपि शाखास्वनेन ग्रन्थरचनां कृत्वा स्वकीया पाण्डित्यप्रौढिः प्रकटिता। व्याकरणशास्त्रे–लघु-बृहच्छब्देन्दुशेखरे द्वे, परमलघु-लघु-बृहन्मञ्जूषात्रयं, परिभाषेन्दुशेखरं, महाभाष्यप्रदीपोद्योतश्चेति, साहित्ये—काव्यप्रदीपोद्योतः, रसगङ्गाधरगुरुमर्मप्रकाशः, योगे—योगसूत्रवृत्तिः, सांख्ये—लघुसांख्यवृत्तिः सांख्यकारिकाटीका च, धर्मशास्त्रे च बहवो ग्रन्था इति कृत्वा प्रायः ४६ ग्रन्थानामयं निर्माता। संस्कृतवाङ्मये बहुचर्चितस्यास्य विषये किमन्यद्वक्तव्यमिति कृत्वा विरम्यते।

१. द्र० "सांख्यशास्त्र का इतिहास" पृष्ठ ३२८।

## प्रस्तुतं संस्करणम्

संस्कृतवाङ्मयस्य सर्वतोमुखीनप्रकाशने बद्धपरिकरस्य, प्राचीनार्वाचीनसहस्रशो ग्रन्थानां सुलभीकरणेन लब्धयशसः मोतीलाल-बनारसीदासप्रतिष्ठानस्य संस्थापकसदस्यानां स्व० श्रीसुन्दरलालजैनमहाभागानामिच्छाऽऽसीत् यत् प्रत्येकस्य दर्शनस्य मूलसूत्रग्रन्थः मूलमाधृत्य कृताभिस्सर्वाभिर्व्याख्याभिः सह प्रकाश्येत, ताश्च व्याख्याः प्रतिदर्शनं मूलसूत्रैः सह एकत्रैव स्युः, येन तद्विषयमधीतवतां विदुषामनुसन्धित्सूनां च कृते व्याख्यात्रभिप्राया एकत्र सुलभा भवेरन्, इति। तदीयामिमां भावनामनुसृत्यैव प्रतिष्ठानस्य वर्तमानेनांशिना श्रीजैनेन्द्रकुमारजैनमहाभागेन प्रेरितोऽहं प्राचीनतमस्य सांख्यदर्शनस्य उपलब्धेन व्याख्याचतुष्टयेन सह प्रस्तुतं संस्करणं विदुषां पुरत उपस्थापयन् भृशं मोमुदीमि।

अत्र अनिरुद्धवृत्तिः भिक्षोर्भाष्यं च पृथक् पृथक् बहुत्र प्रकाशमागतम्, वेदान्तिकृतो वृत्तिसारः नागेशभट्टकृतो भाष्यसारश्च मयैव पूर्वं सम्पाद्य प्रकाशितौ। अत्र विद्वद्भिरस्मत्पूर्वजैः स्वहस्तोट्टङ्किताः पाण्डुलिपयो मया आदर्शत्वेन गृहीताः। मुद्रितग्रन्थानामपि यत्र कुत्रोपयोगः कृतः। काष्ठजिह्वेत्यभिख्यया विश्रुतैर्देवतीर्थस्वामिपादैर्विरचितः सांख्य-षडध्यायीसारभूतः सांख्यतरङ्गोऽतीवोपयोगार्ह इतिकृत्वाऽत्र प्रदत्तः। तत्त्वसमाससूत्राणां सर्वोपकारिणी टीका, पञ्चशिखाचार्यस्येतस्ततो विकीर्णानि सांख्यसूत्राणि च संकलय्यात्र स्थापितानि, अन्ते च परिशिष्टेषु सूत्रानुक्रमणी, ग्रन्थकार-मत-मतान्तराणां सूची, उद्धरणसूची, व्याख्यातृभिर्गृहीतानां सूत्राणां पाठभेदाश्च प्रदत्ताः। एवं यथाशक्यं सांख्याध्ययनवतां कृतेऽतीवोपयोगि संस्करणं प्रस्तोतुं प्रयतितम्।

अस्य ग्रन्थस्य सम्पादने विविधविषयकग्रन्थनिर्माणपटुभिः सम्पूर्णानन्द सं० वि० वि० योगतन्त्रविभागस्य अध्यक्षचरैः विश्रुतदार्शनिकप्रवरैः श्री पण्डित व्रजवल्लभद्विवेदमहाभागैर्यत् साहाय्यमाचरितं तत्कृते प्रणतिपुरस्सरं केवलं कृतज्ञताज्ञापनमन्तरा किमपि कथनं मम धाष्ट्र्यमेव स्यात्।

तद् यथामति सम्पादिते संशोधिते चास्मिन् संस्करणे मानवसुलभचापल्येन बहुकार्यव्यापृतत्वेन अस्वास्थ्यजनिताव्यवस्थया मुद्रणादिदोषेण च ये केचन दोषाः स्युस्तान् मदीयानवधानतेति मत्वा मर्षयन्त्विति साञ्जलिबन्धं भूयोभूयः प्रार्थये कृपाधनान् विपश्चितः। ममानेन श्रमेण सांख्याध्येतॄणां काप्युपकृतिः स्याच्चेत् कृतार्थमात्मनं मन्ये, इति निवेदयति—

पञ्चगङ्गा, वाराणसी

आषाढ़ शुक्ल ( रथयात्रा ) द्वितीया, जनार्दनशास्त्री पाण्डेयः

२०४६ वि०

# विषय-सूची

महर्षिकपिलप्रणीतं

# सांख्यदर्शनम्

अनिरुद्धकृता 'सांख्यप्रवचनवृत्तिः'

वेदान्तिमहादेवकृतो 'वृत्तिसारः'

विज्ञानभिक्षुकृतं 'सांख्यप्रवचनभाष्यम्'

नागेशभट्टकृतो 'भाष्यसारः' (लघुसांख्यवृत्तिर्वा)

# प्रथमोऽध्यायः

## अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥ १ ॥

### * अनिरुद्धकृता सांख्यप्रवचनवृत्तिः *

विनायकं नमस्कृत्य विष्णुं सूर्यं सरस्वतीम् ।
लक्ष्मीं गङ्गां महेशानं वृत्तिं कर्तुं समारभे ॥

पुरुषः खलु वैराग्यान्मोक्षशास्त्रे प्रवर्तते । वैराग्यञ्च द्वेधा स्यात्—भोगादि- द्वारेण प्रवृत्तिपरिक्षयात्, जन्मान्तरीयदुरितक्षयाद्वा । तथा च श्रुतिः—"यदहरेव विरजेत् तदहरेव प्रव्रजेत्" ( जाबाल उप० ४ ) इति । शास्त्रे प्रवृत्तश्च परवैराग्यान्मुच्यते । तथा चाह पतञ्जलिः—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्", "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" ( यो० सू० १।१५-१६ ) इति । एतदेव परं वैराग्यं वक्तुमतिकारुणिको महामुनिर्जगदुद्दिधीर्षुः कपिलो मोक्षशास्त्रमारभमाणः प्रथमं सूत्रं चकार—अथेति ।

अथेत्ययं मङ्गलार्थः, न तु कर्मानन्तर्यार्थः, यदहरेवेत्यादिश्रुतेरानन्तर्यस्य अप्रयोजनत्वात् । कर्मारम्भे च मङ्गलकरणं न्याय्यम् । अथ-शब्दश्च मङ्गलवाचको दृश्यते—

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" ॥ (ना. पु. १।५।१०) इति ।

त्रिविधदुःखेति—शारीरमानसिकयोराध्यात्मिकत्वेन संग्रहणादेकत्वम् । आधिभौतिकं पशुपक्ष्यादिजनितम्, आधिदैविकं ग्रहभूतादिजनितम् । नन्वेवं तेषां निवृत्तिः स्वत एव भविष्यति, सुख-दुःखानां द्वित्रक्षणावस्थायित्वात् । अत आह–अत्यन्तेति । न हि दुःखविशेषाणां निवृत्तिरभिमता, किन्तु दुःखजातीयानाम् । भविष्यतामपि दुःखजातीयानां निवृत्तिरत्यन्तशब्दार्थः । धर्मार्थकाममोक्षाणां पुरुषार्थत्वम्, न तु त्रयाणामत्यन्तत्वम्, क्षयित्वाद् विषयजसुखत्वाद्वा । मोक्षस्य तु न तथा; नित्यत्वात् प्रकाशरूपत्वाच्च । अत उक्तमत्यन्तपुरुषार्थ इति ॥ १ ॥

### * वेदान्तिमहादेवकृतो वृत्तिसारः *

दृष्ट्वाऽनिरुद्धवृत्तिं बुद्ध्वा सांख्यीयसिद्धान्तम् ।
विरचयति वृत्तिसारं वेदान्त्यादिर्महादेवः ॥

अथ जगदुद्दिधीर्षुर्महामुनिः कपिलः फलसौन्दर्यज्ञानस्य फलेच्छाद्वारा साधनप्रवृत्तौ कारणत्वं पश्यन् फलसौन्दर्यमाह—अथेति ।

अथशब्दो मङ्गलार्थः। त्रिविधस्य दुःखस्याध्यात्मिकाधिभौतिकाधिदैविकरूपस्यात्यन्त-निवृत्तिः पुनर्दुःखजातीयानुत्पत्तिविशिष्टा निवृत्तिरत्यन्तपुरुषार्थः। धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु मध्ये श्रेष्ठः पुरुषार्थ इत्यर्थः। त्रयाणां क्षयित्वान्मोक्षस्योक्तनिवृत्तिरूपस्याक्षयित्वादिति भावः। तत्राध्यात्मिकं दुःखं शारीरं मानसञ्च। शारीरं वातपित्तश्लेष्मवैषम्यनिमित्तम्। मानसं कामक्रोधलोभमोहेर्ष्यादिजनितम्। उभयोरप्यान्तरोपायसाध्यत्वादाध्यात्मिकत्वमत एवान्तरतम-मिदमित्याचक्षते। आधिभौतिकं पशुपक्षिस्थावरादिनिमित्तम्। आधिदैविकं ग्रहादिनिमित्तम्। द्विविधमिदं बाह्यमित्याचक्षते ॥ १ ॥

* विज्ञानभिक्षुकृतं सांख्यप्रवचनभाष्यम् *

एकोऽद्वितीय इति वेदवचांसि पुंसि
सर्वाभिमानविनिवर्तनतोऽस्य मुक्त्यै।
वैधर्म्यलक्षणभिदा विरहं वदन्ति
नाखण्डतां ख इव धर्मशताविरोधात् ॥ १ ॥

तस्य श्रुतस्य मननार्थमथोपदेष्टुं
सद्युक्तिजालमिह सांख्यकृदाविरासीत्।
नारायणः कपिलमूर्तिरशेषदुःख-
हानाय जीवनिवहस्य नमोऽस्तु तस्मै ॥ २ ॥

नानोपाधिषु यन्नाना रूपं भात्यनलार्कवत्।
तत् मं सर्वभूतेषु चित्सामान्यमुपास्महे ॥ ३ ॥
ईश्वरानीश्वरत्वादि चिदेकरसवस्तुनि।
विमूढा यत्र पश्यन्ति तदस्मि परमं महः ॥ ४ ॥
कालार्कभक्षितं सांख्यशास्त्रं ज्ञानसुधाकरम्।
कलावशिष्टं भूयोऽपि पूरयिष्ये वचोऽमृतैः ॥ ५ ॥
चिदचिद्ग्रन्थिभेदेन मोचयिष्ये चितोऽपि च।
सांख्यभाष्यमिषेणास्मात् प्रीयतां मोक्षदो हरिः ॥ ६ ॥
तत् त्वमेव त्वमेवैतदेवं श्रुतिशतोदितम्।
सर्वात्मनामवैधर्म्यं शास्त्रस्यास्यैव गोचरः ॥ ७ ॥

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृ० उ० २।४।५ ) इत्यादिश्रुतिषु परमपुरुषार्थसाधनस्यात्मसाक्षात्कारस्य हेतुतया श्रवणादित्रयं विहितम्। तत्र श्रवणादावुपायाकाङ्क्षायां स्मर्यते—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः ॥ (बृ० भा० वा० १०८०)

इति। ध्येयो योगशास्त्रप्रकारेणेति शेषः। तत्र श्रुतिभ्यः श्रुतेषु पुरुषार्थतद्धेतु-

ज्ञान-तद्विषयात्मस्वरूपादिषु श्रुत्यविरोधिनीरुपपत्तीः षडध्यायीरूपेण विवेकशास्त्रेण कपिलमूर्तिर्भगवानुपदिदेश ।

ननु न्यायवैशेषिकाभ्यामप्येतेष्वर्थेषु न्यायः प्रदर्शित इति ताभ्यामस्य गतार्थत्वम्, सगुणनिर्गुणत्वादिविरुद्धरूपैरात्मसाधकतया तद्युक्तिभिरत्रत्ययुक्तीनां विरोधेनोभयोरपि दुर्घटं च प्रामाण्यमिति । मैवम्, व्यावहारिकपारमार्थिकरूपविषयभेदेन गतार्थत्वविरोधयोरभावात् । न्यायवैशेषिकाभ्यां हि सुखिदुःख्याद्यनुवादतो देहादिमात्रविवेकेनात्मा प्रथमभूमिकायामनुमापितः, एकदा परसूक्ष्मे प्रवेशासम्भवात् । तदीयं च ज्ञानं देहाद्यात्मतानिरसनेन व्यावहारिकं तत्त्वज्ञानं भवत्येव । यथा पुरुषे स्थाणुभ्रमनिरासकतया करचरणादिमत्त्वज्ञानं व्यवहारतस्तत्त्वज्ञानं तद्वत् । अत एव—

प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ ( गी० ३।२९ )

इति गीतायां कर्तृत्वाभिमानिनस्तार्किकस्याकृत्स्नवित्त्वमेव कृत्स्नवित्सांख्यापेक्षयोक्तम्, न तु सर्वथैवाज्ञत्वमिति । तथा तदीयमपि ज्ञानमपरवैराग्यद्वारा परम्परया मोक्षसाधनं भवत्येवेति तज्ज्ञानापेक्षयापि च सांख्यज्ञानमेव पारमार्थिकं परवैराग्यद्वारा साक्षान्मोक्षसाधनं च भवति, उक्तगीतावाक्येनात्माकर्तृत्ववित्त्वस्यैव कृत्स्नवित्त्वसिद्धेः । "तीर्णो हि तदा भवति हृदयस्य शोकान् कामादिकं मन एव मन्यमानः" ( बृ० उ० ४।३।२२) "सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव", ( बृ० उ० ४।३।७ ) "स यदत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति" ( बृ० उ० ४।३।१६ ) इत्यादितात्त्विकश्रुतिशतैः,

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ ( गी० ३।२७ )
निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः ॥ (वि. पु. ६।७।२२)

इत्यादितात्त्विकस्मृतिशतैश्च न्यायवैशेषिकोक्तज्ञानस्य परमार्थभूमौ बाधितत्वाच्च । न चैतावता न्यायाद्यप्रामाण्यम्, विवक्षितार्थे देहाद्यतिरेकांशे बाधाभावात्, "यत्परः शब्दः स शब्दार्थः" ( लौ० साहस्री ७८४ ) इति न्यायात् । आत्मनि सुखादिमत्त्वस्य लोकसिद्धतया तत्र प्रमाणान्तरानपेक्षणेन तदंशस्यानु वादत्वान्न शास्त्रतात्पर्यविषयत्वमिति ।

स्यादेतत् । न्यायवैशेषिकाभ्यामत्राविरोधो भवतु । ब्रह्ममीमांसा-योगाभ्यां तु विरोधोऽस्त्येव; ताभ्यां नित्येश्वरसाधनात्, अत्र चेश्वरस्य प्रतिषिध्यमानत्वात् । न चात्रापि व्यावहारिकपारमार्थिकभेदेन सेश्वर-निरीश्वरवादयोरविरोधोऽस्तु, सेश्वरवा-

दस्योपासनापरत्वसम्भवादिति वाच्यम्; विनिगमकाभावात्। ईश्वरो हि दुर्ज्ञेय इति निरीश्वरत्वमपि लोकव्यवहारसिद्धमैश्वर्यवैराग्यायानुवदितुं शक्यते, आत्मनः सगुणत्वमिव, न तु क्वापि श्रुत्यादावीश्वरः स्फुटं प्रतिषिध्यते, येन सेश्वरवादस्यैव व्यावहारिकत्वमवधार्येतेति। अत्रोच्यते—अत्रापि व्यावहारिकपारमार्थिकभावो भवति,

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। ( गी० १६।८ )

इत्यादिशास्त्रैर्निरीश्वरवादस्य निन्दितत्वात्। अस्मिन्नेव शास्त्रे व्यावहारिकस्यैवेश्वरप्रतिषेधस्यैश्वर्यवैराग्याद्यर्थमनुवादत्वौचित्यात्। यदि हि लौकायतिकमतानुसारेण नित्यैश्वर्यं न प्रतिषिध्येत तदा परिपूर्णनित्यनिर्दोषैश्वर्यदर्शनेन तत्र चित्तावेशतो विवेकाभ्यासप्रतिबन्धः स्यादिति सांख्याचार्याणामाशयः। सेश्वरवादस्य न क्वापि निन्दादिकमस्ति, येनोपासनादिपरतया तच्छास्त्रं सङ्कोच्येत। यत् तु—

नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम्। ( म० शा० प० ३१६।२ )

अत्र वः संशयो मा भूद् ज्ञानं सांख्यं परं मतम्॥ ( „ „ ३०१।१०१ )

इत्यादि वाक्यम्, तद् विवेकांश एव सांख्यज्ञानस्य दर्शनान्तरेभ्य उत्कर्षं प्रतिपादयति, न त्वीश्वरप्रतिषेधांशोऽपि। तथा पराशराद्यखिलशिष्टसंवादादपि सेश्वरवादस्यैव पारमार्थिकत्वमवधार्यते। अपि च—

अक्षपादप्रणीते च काणादे सांख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ॥

इति पराशरोपपुराणादिभ्योऽपि ब्रह्ममीमांसाया ईश्वरांशे बलवत्त्वम्। तथा—

न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः।
हेत्वागमसदाचारैर्यद्युक्तं तदुपास्यताम्॥ (म० शा० प० २१०।२२)

इति मोक्षधर्मवाक्यादपि पराशराद्यखिलशिष्टव्यवहारेण ब्रह्ममीमांसान्यायवैशेषिकाद्युक्त ईश्वरसाधकन्याय एव ग्राह्यो बलवत्त्वात्। तथा—

यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम्।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज॥

इत्यादिकौर्मादिवाक्यैः साङ्ख्यानामीश्वराज्ञानस्यैव नारायणादिना प्रोक्तत्वाच्च।

किञ्च ब्रह्ममीमांसाया ईश्वर एव मुख्यो विषय उपक्रमादिभिरवधृतः। तत्रांशे तस्य बाधे शास्त्रस्यैवाप्रामाण्यं स्याद् "यत्परः शब्दः स शब्दार्थः" (लौ. साहस्री ७८४) इति न्यायात्। सांख्यशास्त्रस्य तु पुरुषार्थ-तत्साधनप्रकृतिपुरुषविवेकावेवमुख्यो विषय

इतीश्वरप्रतिषेधांशबाधेऽपि नाप्रामाण्यं "यत्परः शब्दः स शब्दार्थः" इति न्यायात्। अतः सावकाशतया सांख्यमेवेश्वरप्रतिषेधांशे दुर्बलमिति। न च ब्रह्ममीमांसायामपीश्वर एव मुख्यो विषयो न तु नित्यैश्वर्यमिति वक्तुं शक्यते, स्मृत्यनवकाशदोषप्रसङ्गरूप-पूर्वपक्षस्यानुपपत्त्या नित्यैश्वर्यविशिष्टत्वेनैव ब्रह्ममीमांसाविषयत्वावधारणात्। ब्रह्म-शब्दस्य परब्रह्मण्येव मुख्यतया तु 'अथातः परब्रह्मजिज्ञासा' इति न सूत्रितमिति।

एतेन सांख्यविरोधाद् ब्रह्मयोगदर्शनयोः कार्येश्वरपरत्वमपिन शङ्कनीयम्, प्रकृतिस्वातन्त्र्यापत्त्या "रचनानुपपत्तेश्च नानुमानम्" (ब्र०सू०२।२।१) इत्यादिब्रह्म-सूत्रपरम्परानुपपत्तेश्च। तथा "स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" (यो० सू० १।२६) इतियोगसूत्रतदीयव्यासभाष्याभ्यां स्फुटमीशनित्यतावगमाच्चेति। तस्मादभ्युपगमवाद-प्रौढिवादादिनैव सांख्यस्य व्यावहारिकेश्वरप्रतिषेधपरतया ब्रह्ममीमांसायोगाभ्यां सह न विरोधः। अभ्युपगमवादश्च शास्त्रे दृष्टः। यथा विष्णपुराणे—

एते भिन्नदृशां दैत्य! विकल्पाः कथिता मया।
कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम॥ (१।१७।८३)

इति। अस्तु वा पापिनां ज्ञानप्रतिबन्धार्थमास्तिकदर्शनेष्वप्यंशतः श्रुतिविरुद्धार्थ-व्यवस्थापनम्, तेषु तेष्वंशेष्वप्रामाण्यं च। श्रुतिस्मृत्यविरुद्धेषु तु मुख्यविषयेषु प्रामाण्य-मस्त्येव। अत एव पद्मपुराणे ब्रह्मयोगदर्शनातिरिक्तानां दर्शनानां निन्दाप्युपपद्यते। यथा तत्र पार्वतीं प्रतीश्वरवाक्यम् —

श्रृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम्॥
कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।
गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै॥
द्विजन्मना जैमिनिना पूर्वं वेदमथार्थतः।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम्।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा॥
बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम्।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च॥
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा।
अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम्॥

कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते।
सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते॥
परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते।
ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया॥
सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे।
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्॥
मयैव कथितं देवि जगतां नाशकारणात्।

( प० पु० ६।२६३।६६-७५ )

इति। अधिकं तु ब्रह्ममीमांसाभाष्ये प्रपञ्चितमस्माभिरिति।

तस्मादास्तिकशास्त्रस्य न कस्याप्यप्रामाण्यं विरोधो वा। स्वस्वविषयेषु सर्वेषामबाधात्, अविरोधाच्चेति।

नन्वेवं पुरुषबहुत्वांशेऽप्यस्य शास्त्रस्याभ्युपगमवादत्वं स्यात्। न स्यात्; अविरोधात्। ब्रह्ममीमांसायामपि "अंशो नानाव्यपदेशात्" ( ब्र० सू० २।३।४३ ) इत्यादिसूत्रजातैर्जीवात्मबहुत्वस्यैव निर्णयात्। सांख्यसिद्धपुरुषाणामात्मत्वं तु ब्रह्ममीमांसया बाध्यत एव। "आत्मेति तूपगच्छन्ति" ( ब्र० सू० ४।१।३ ) इति तत्सूत्रेण परमात्मन एव परमार्थभूमावात्मत्वावधारणात्। तथापि च सांख्यस्य नाप्रामाण्यम्, व्यावहारिकात्मनो जीवस्येतरविवेकज्ञानस्य मोक्षसाधनत्वे विवक्षितार्थे बाधाभावात्। एतेन श्रुतिस्मृतिप्रसिद्धयोर्नानात्मैकात्मत्वयोर्व्यावहारिकपारमार्थिकभेदेनाविरोध इति ब्रह्ममीमांसायां प्रपञ्चितमस्माभिरिति दिक्।

नन्वेवमपि तत्त्वसमासाख्यसूत्रैः सहास्याः षडध्याय्याः पौनरुक्त्यमिति चेत्? मैवम्, संक्षेपविस्तररूपेणोभयोरप्यपौनरुक्त्यात्। अत एवास्याः षडध्याय्या योगदर्शनस्येव साङ्ख्यप्रवचनसंज्ञा युक्ता। तत्त्वसमासाख्यं हि यत् संक्षिप्तं साङ्ख्यदर्शनं तस्यैव प्रकर्षेणास्यां निर्वचनमिति। विशेषस्त्वयं यत् षडध्याय्यां तत्त्वसमासाख्योक्तार्थविस्तरमात्रम्। योगदर्शने त्वाभ्यामभ्युपगमवादप्रतिषिद्धस्यैवेश्वरस्य निरूपणेन न्यूनतापरिहारोऽपीति। अस्य च साङ्ख्यसंज्ञा सान्वया—

सङ्ख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् तेन साङ्ख्याः प्रकीर्तिताः॥

( म० शा० प० ३०८।४२-४३ )

इत्यादिभ्यो भारतादिवाक्येभ्यः। सङ्ख्या सम्यग्विवेकेनात्मकथनमित्यर्थः। अतः साङ्ख्यशब्दस्य योगरूढतया "तत्कारणं साङ्ख्ययोगाधिगम्यम्" (श्वे० उ० ६।१३) इत्यादिश्रुतिषु, "एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु" ( गी० २।३९ )

इत्यादिस्मृतिषु च साङ्ख्यशब्देन साङ्ख्यशास्त्रमेव ग्राह्यम्, न पुनरर्थान्तरं कल्पनीयमिति।

तदिदं मोक्षशास्त्रं चिकित्साशास्त्रवच्चतुर्व्यूहम्। यथा हि रोग आरोग्यं रोगनिदानं भैषज्यमिति चत्वारो व्यूहाः समूहाश्चिकित्साशास्त्रस्य प्रतिपाद्याः तथैव हेयं हानं हेयहेतुर्हानोपायश्चेति चत्वारो व्यूहा मोक्षशास्त्रस्य प्रतिपाद्या भवन्ति, मुमुक्षुभिर्जिज्ञासितत्वात्। तत्र त्रिविधं दुःखं हेयम्, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः, विवेकख्यातिस्तु हानोपाय इति। व्यूहशब्देन चैषामुपकरणसंग्रहः। तत्र चादौ फलत्वेनाभ्यर्हितं हानं तत्प्रतियोगिविधयैव च हेयं प्रतिपादयिष्यन् शास्त्रकारः शिष्यावधानाय शास्त्रारम्भं प्रतिजानीते—अथेति।

अथशब्दोऽयमुच्चारणमात्रेण मङ्गलरूपः। अत एव "मङ्गलाचरणं शिष्टाचाराद्" (सां० सू० ५।१) इति स्वयमेव पञ्चमाध्याये वक्ष्यति। अर्थस्त्वत्राथ शब्दस्याधिकार एव, प्रश्नानन्तर्यादीनां पुरुषार्थेन सहान्वयासम्भवात्, ज्ञानाद्यानन्तर्यस्य च सूत्रैरेव वक्ष्यमाणतया तत्प्रतिपादनवैयर्थ्यात्, अधिकारभिन्नार्थत्वे शास्त्रारम्भप्रतिज्ञाद्यलाभप्रसङ्गाच्च। तस्मात्पुरुषार्थस्योपक्रमोपसंहारदर्शनादधिकारार्थत्वमेवोचितम्। "तदुच्छित्तिः पुरुषार्थः" (सां० सू० ६।७०) इत्युपसंहारो भविष्यतीति। अधिकारश्चाधिक्येन प्राधान्येनारम्भणम्। आरम्भश्च यद्यपि साक्षाच्छास्त्रस्यैव, तथापि तद्द्वारा शास्त्रार्थतद्विचारयोरपीति। तथा च साधनाद्युपकरणसहितो यथोक्तपुरुषार्थोऽधिकृतः प्राधान्येन निरूपयितुमस्माभिः प्रारब्ध इति सूत्रवाक्यार्थः।

त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकं च दुःखम्। तत्रात्मानं स्वसङ्घातमधिकृत्य प्रवृत्तमित्याध्यात्मिकम्—शारीरं मानसं च। तत्र शारीरं व्याध्याद्युत्थम्। तथा भूतानि प्राणिनोऽधिकृत्य प्रवृत्तमित्याधिभौतिकम्—व्याघ्रचोराद्युत्थम्। देवानग्निवाय्वादीनधिकृत्य प्रवृत्तमित्याधिदैविकम्—दाहशीताद्युत्थमिति भावः। यद्यपि सर्वमेव दुःखं मानसम्, तथापि मनोमात्रजन्यत्वाजन्यत्वाभ्यां मानसत्वामानसत्वविशेषः। एषां त्रिविधदुःखानां याऽत्यन्तनिवृत्तिः स्थूलसूक्ष्मसाधारण्येन निःशेषतो निवृत्तिः, सोऽत्यन्तः परमः पुरुषार्थः पुरुषाणां बुद्धेरिष्ट इत्यवान्तरवाक्यार्थः।

तत्र स्थूलं दुःखं वर्तमानावस्थम्। तच्च द्वितीयक्षणादुपरि स्वयमेव नङ्क्ष्यति, अतो न तत्र ज्ञानापेक्षा। अतीतं तु प्रागेव नष्टमिति न तत्र साधनापेक्षेति परिशेषादनागतावस्थ-सूक्ष्मदुःखनिवृत्तिरेव पुरुषार्थतया प्रकृते पर्यवस्यति। तथा च योगसूत्रम्—"हेयं दुःखमनागतम्" (२।१६) इति। निवृत्तिश्च न नाशः, अपित्वतीतावस्था, ध्वंसप्रागभावयोरतीतानागतावस्थास्वरूपत्वात्, सत्कार्यवादिभिरभावानङ्गीकरात्। ननु कदाचिदप्यवर्तमानमनागतं दुःखमप्रामाणिकम्। अतः खपुष्पनिवृत्तिवत् तन्निवृत्तेर्न पुरुषार्थत्वं युक्तमिति। मैवम्, सर्वत्र हि स्वस्वकार्यजननशक्तिर्यावद्द्रव्यस्थायिनीति

पातञ्जले सिद्धम्, दाहादिशक्तिशून्यस्याग्न्यादेः क्वाप्यदर्शनात् । सा च शक्तिरनागतावस्थतत्तत्कार्यरूपा । इयमेव चोपादानकारणस्वरूपयोग्यतेत्यपि गीयते। अतो यावच्चित्तसत्ता तावदेवानागतदुःखसत्ताऽनुमीयते, तन्निवृत्तिश्च पुरुषार्थ इति । जीवन्मुक्तिदशायां च प्रारब्धकर्मफलातिरिक्तानां दुःखानामनागतावस्थानां बीजाख्यानां दाहः, विदेहकैवल्ये तु चित्तेन सह विनाश इत्यवान्तरविशेषः । बीजदाहश्चाविद्यासहकार्युच्छेदमात्रम्, ज्ञानस्याविद्यामात्रोच्छेदकत्वस्य लोके सिद्धत्वात् । अत एव चित्तेन सहैव दुःखस्य नाशः, ज्ञानस्य साक्षाद्दुःखादिनाशकत्वे प्रमाणाभावादिति ।

ननु तथापि दुःखनिवृत्तिर्न पुरुषार्थः संभवति, दुःखस्य चित्तधर्मत्वेन पुरुषे तन्निवृत्त्यसम्भवात्, दुःखनिवृत्तिशब्दस्य दुःखानुत्पादार्थकत्वेऽपि पुरुषे तस्य नित्यसिद्धत्वात् । यत् तु कण्ठचामीकरवत् सिद्धेऽप्यसिद्धत्वभ्रमात् पुरुषार्थता स्यादिति, तन्न; एवमपि पुमान्निर्दुःख इति श्रवणमननोत्तरं दुःखहानार्थं निदिध्यासनादौ प्रवृत्त्यनुपपत्तेः । बह्वायाससाध्ये ह्युपाये फलनिश्चयादेव प्रवृत्तिर्भवति, प्रकृते तु श्रवणमननाभ्यां सिद्धत्वज्ञानान्नाप्रामाण्यज्ञानानास्कन्दितः फलस्यासिद्धत्वनिश्चयोऽस्तीति । किञ्च, भवतु कदाचिद् भ्रमादिना पुरुषेच्छाविषयत्वं दुःखाभावस्य, श्रुतिस्तु मोहनाशिनी कथं सिद्धस्य फलत्वं प्रतिपादयेत्—"तरति शोकमात्मवित्" (छा०उ० ७।१।३), "विद्वान् हर्षशोकौ जहाति" (का० १।२।१२) इत्यादिरिति ।

अत्रोच्यते—"न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते" (सां० सू० १।१९) इति हेयहेत्ववधारकसूत्रेणैवायं पूर्वपक्षः समाधास्यते । तथाहि-प्रतिबिम्बरूपेण पुरुषेऽपि सुखदुःखे स्तः, अन्यथा तयोर्भोग्यत्वानुपपत्तेः । सुखादिग्रहणं हि भोगः । ग्रहणं च तदाकारता । सा च कूटस्थचितौ बुद्धेरर्थाकारवत् परिणामो न सम्भवतीत्यगत्या प्रतिबिम्बस्वरूपतायामेव पर्यवस्यति । अयमेव बुद्धिवृत्तिप्रतिबिम्बो "वृत्तिसारूप्यमितरत्र" (यो० सू० १।४) इति योगसूत्रेणोक्तः, "सत्त्वे तु तप्यमाने तदाकारानुरोधात् पुरुषोऽप्यनुतप्यत इव दृश्यते" (२।१७) इति योगभाष्ये च तदाकारानुरोधशब्देन विशिष्यैव तापादिदुःखस्य प्रतिबिम्ब उक्तः । अत एव च पुरुषस्य बुद्धिवृत्त्युपरागे स्फटिकं दृष्टान्तं सूत्रकारो वक्ष्यति—"कुसुमवच्च मणिः" (सां० सू० २।३५) इति । वेदान्तिभिरपि चेतनेऽध्यस्ततयैव दृश्यमानमुच्यते; स चाध्यासः प्रतिबिम्बं विना न घटेत, ज्ञानमात्रस्याध्यासत्वे आत्माश्रयात् । अध्यासाज्ज्ञानं ज्ञानमेव चाध्यास इति । तदेवत् स्मर्यतेऽपि—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ इति ।

( अन्न० उ० ४।७१ )

अत्र हि दृष्टिशब्दो बुद्धिवृत्तिसामान्यपरो युक्तिसाम्यात् । प्रतिबिम्बश्च तत्तदुपाधिषु बिम्बाकारश्चित्तपरिणाम इति । तस्मात् प्रतिबिम्बरूपेण पुरुषे दुःखसम्बन्धो भोगाख्योऽ-

स्ति। अतस्तेनैव रूपेण तन्निवृत्तेः पुरुषार्थत्वं युक्तम्। अत एव दुःखंमा भुञ्जीयेति प्रार्थनाप्यापामरं दृश्यते। तच्च दुःखभोगनिवृत्तेः पुरुषार्थत्वमन्यशेषतया न सम्भवतीति सैव स्वतः पुरुषार्थः। दुःखनिवृत्तिस्तु कण्टकादिनिवृत्तिवत् तादर्थ्येन न स्वतः पुरुषार्थः। एवं सुखमपि न स्वतः पुरुषार्थः। किन्तु तद्भोग एव स्वतः पुरुषार्थत्वं यातीति। तदिदं दुःखभोगनिवृत्तेः पुरुषार्थत्वं योगभाष्ये व्यासदेवैरुक्तम् -"तस्मिन् निवृत्ते पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते" ( यो० भा० ३।५० ) इति। अतः श्रुतावपि दुःखनिवृत्तेः पुरुषार्थत्वं विषयतासम्बन्धेनैव। तदेतद्योगवार्त्तिके प्रपञ्चितमस्माभिरिति दिक्। तदेवमनेन सूत्रेण व्यूहद्वयं संक्षेपेणोद्दिष्टं विस्तरस्त्वनयोः पश्चाद्भवितेति ॥ १ ॥

* नागेशभट्टकृता सांख्यसूत्रवृत्तिः ( भाष्यसारो वा ) *

नत्वा साम्बं शिवं सांख्यसूत्रवृत्तिं लिखाम्यहम्।
यथामति विचार्यार्यैरात्मानात्मविवेचिनीम् ॥

यद्यपि पद्मपुराणे पार्वतीश्वरसंवादे—

श्रृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥
कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत्।
गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥
द्विजन्मना जैमिनिना पूर्वं वेदप्रकाशकम्[1]।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम्।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥
( प० पु० ६।२६३।६६–७० )

इत्युक्तम्, तथापि आस्तिकदर्शनेष्वप्यंशतः श्रुतिविरुद्धार्थव्यवस्थापनसत्त्वेन तेष्वंशेष्वप्रामाण्यसत्त्वेन तदभिप्रायकत्वेन निन्दोपपत्तिर्बोध्या। यथा न्यायवैशेषिकाभ्यां सुखदुःखादिहेतुभिर्देहादिमात्रविवेकेनात्मानुमापितः, प्रथममेव परमसूक्ष्मे प्रवेशासम्भवात्। तज्जन्यज्ञानमपि देहाद्यात्मतानिरासेन व्यावहारिकं तत्त्वज्ञानमेव, देहादिवैराग्यद्वारा परम्परया मोक्षसाधनं च। आत्मनि सुखादिमत्त्वं च श्रुतिशिरोविरुद्धं तत्रोक्तम्। तत इदमन्तरङ्गम्,

निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः ॥ ( वि० पु० ६।७।२२ )

---

१. "वेदमथार्थतः" इति मुद्रिते पाठः, भिक्षुणापि गृहीतः।

इत्याद्युक्तेः ।

अत्र शास्त्रे चेश्वरप्रतिषेधांशे निन्द्यत्वं विवेकांशे तु प्रामाण्यमनिन्द्यत्वं च, व्यावहारिकजीवे इतरविवेकज्ञानस्याप्यल्पपरम्परया मोक्षसाधनत्वात् । नानापुरुषकथनमप्यत्र व्यावहारिकपुरुषाभिप्रायेणैव । तत्त्वं तु ब्रह्ममीमांसोक्तमेव । सांख्यत्वं चास्य—

संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ।
तत्त्वानि च चतुर्विंशत्तेन सांख्याः प्रकीर्तिताः ॥
( म० शा० प० ३०६।४१ )

इत्यादिना भारते उक्तम् । संख्यां सम्यग्विवेकेनात्मकथनमित्यर्थः । तदिदं शास्त्रं चतुर्व्यूहम्—१ हेयम्, २ हानम्, ३ हेयहेतुः, ४ हानोपायश्चेति, मुमुक्षुजिज्ञासितत्वात् । तत्र त्रिविधं दुःखं हेयम् । तदत्यन्तनिवृत्तिर्हानम् । निवृत्तावात्यन्तिकत्वं च पुनर्दुःखजातीयानुत्पत्तिवैशिष्ट्यम् । प्रकृतिपुरुषयोरविवेको हेयहेतुः । विवेकस्तु हानोपायः । दुःखशब्देनात्र सुखमपि । तत्र फलत्वेन हानं तत्प्रतियोगिविधया हेयं च प्रतिपादयन् कपिलमुनिः शिष्यावधानाय प्रतिजानीते—अथेति ।

अथशब्दः स्वरूपेण मङ्गलम् । अर्थश्चास्याधिकारः, स चारम्भ एव । यतः सोऽत्यन्तपुरुषार्थो धर्मार्थकाममोक्षेषु श्रेष्ठोऽतस्तदुपायस्तदधिकृतश्च निरूप्यत इति शेषेण सूत्रार्थः । परमपुरुषार्थस्य स्वत एवेष्टत्वेन तद्धेतावश्यजिज्ञासोदपादीति भावः ।

त्रिविधं दुःखम्—आध्यात्मिकमाधिदैविकमाधिभौतिकञ्च । तत्राद्यं द्वेधा—शारीरं मानसं च । शारीरं व्याध्याद्युत्थम्, मानसं कामक्रोधलोभमोहेर्ष्यादिनिवन्धनम् । सर्वं चेदमान्तरोपायसाध्यत्वादाध्यात्मिकमुच्यते । तथा देवान् वाय्वग्न्यादीनधिकृत्य प्रवृत्तं शीतदाहाद्युत्थं यक्षराक्षसविनायकग्रहाद्यावेशनिवन्धनं चाधिदैविकम् । भूतानि प्राणिनोऽधिकृत्य प्रवृत्तं व्याघ्रचौराद्युत्थमाधिभौतिकम् । यद्यपि सर्वमेव दुःखं मानसम्, तथापि मनोमात्रजन्यत्वाजन्यत्वाभ्यां पृथगुक्तिः । दुःखपदेन प्रत्यात्मप्रतिकूलवेदनीयतया जिहास्यत्वमुक्तम् । एषां त्रिविधदुःखानां स्थूलसूक्ष्मसाधारण्येन निःशेषतो निवृत्तिः, सोऽत्यन्तः परमः पुरुषार्थः पुरुषीयबुद्धेरित्यर्थः ।

यद्यपि वर्तमानं स्थूलं दुःखं द्वितीयक्षणे स्वयमेव नङ्क्ष्यति, अतीतं तु नष्टमेव, तथाप्यनागतसूक्ष्मदुःखनिवृत्तिः परमपुरुषार्थ इति तात्पर्यम् ।

यद्यपि सत्कार्यवादेन ध्वंसप्रागभावरूपाभावाङ्गीकारस्यापि निवृत्तिरत्र सूक्ष्मरूपस्यातीतावस्थमेव, स्थूलरूपाप्राप्तियोग्यत्वं वा । न चानागते मानाभावः, कार्यजननशक्तेरनागतावस्थतत्तत्कार्यरूपाया उपादानकारणस्वरूपयोग्यतापदवाच्याया यावद्द्रव्यस्थायित्वस्य योगशास्त्रे उक्तत्वेन यावच्चित्तसत्त्वमनागतदुःखसत्तानुमानात् ।

तत्र जीवन्मुक्तौ प्रारब्धकर्मफलातिरिक्तानां दुःखानामनागतावस्थानां बीजाख्यानां दाहो विदेहकैवल्ये तु चित्तेन सह दाह इति विशेषः । बीजदाहश्चाविद्यासहकार्युच्छेदः, ज्ञानस्याविद्योच्छेदकतायाः सर्वसिद्धत्वात् ।

यद्यपि दुःखं चित्तधर्मं इति तन्निवृत्तेः पुरुषेऽसंभवान्न पुरुषार्थत्वम्, तथापि प्रतिविम्बरूपेण पुरुषेऽपि सुखदुःखसत्त्वादक्षतिः। अन्यथा तयोर्भोग्यत्वानुपपत्तिः। भोगो हि तद्ग्रहणम्। ग्रहणं च तदाकारता। अत्र दुःखशब्देनैतद्भोगः, दुःखनिवृत्तेः कण्टकादिनिवृत्तिवत्तादर्थ्येन स्वतः पुरुषार्थत्वाभावात्। एवं दुःखशब्देन सुखमपि बोध्यम्।

अत्रेदं तत्त्वम्—आत्मानात्मसाक्षात्काराकर्तृत्वाद्यखिलाभिमाननिवृत्त्या तत्कार्यरागद्वेषधर्माधर्माद्यनुत्पादात् पूर्वोत्पन्नकर्मणां चाविद्यारागादिसहकार्युच्छेदरूपदाहेन विपाकानारम्भकत्वात् प्रारब्धसमाप्त्यनन्तरं पुनर्जन्माभावेन त्रिविधदुःखात्यन्तनिवृत्तिरूपो मोक्षो भवति।

ननु रागाभावेऽपि कर्मणा नरकप्राप्तेर्न तस्य कर्मकारितेति चेत्, न; निषिद्धस्त्र्यादिरागादेव तप्तलोहमयनारीसमालिङ्गनादिनरकोत्पत्तेः।

यद्यप्यविद्याऽस्मितारागद्वेषभयाख्यं क्लेशपञ्चकमेव जन्मादिविपाकारम्भे सहकारीत्युक्तं योगे, तथाप्यविद्याऽस्मितासत्त्वे रागस्यावश्यकत्वाद् द्वेषभययोश्च रागमूलकत्वाद्राग एव मुख्यः। न च ज्ञानस्य प्राचीनकर्मनाशकत्वं युक्तम्, "क्षीयन्ते चास्य कर्माणि" ( मु० उ० २।२।८ ) इति श्रुतेरिति वाच्यम्; "ज्ञानाग्निदग्धकर्माणम्" ( गी० ४।१९ ) इति दाहस्यापि श्रवणेन दाहकत्वमेव युक्तं न तु नाशकत्वम्; गौरवात्। कर्मणां दाहश्च क्लेशाख्यसहकार्युच्छेदेन नैष्फल्यं कर्मनाशश्च, प्रारब्धभोगान्ते चित्तनाशादेवेत्याद्यग्रे स्फुटीभविष्यतीति दिक्॥ १॥

न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात्॥ २॥

[ वृत्तिः ] भवतु दुःखनिवृत्तिः पुरुषार्थः, तथापि दृष्टादेव सुकरोपायात्तत्सिद्धेः शास्त्रसाध्ये दुष्करोपायेऽनेकजन्मपरम्परायाससम्पाद्ये चित्तनिरोधादौ कः स्वस्थात्मा प्रवर्तेत ? तथा च—

अर्के[1] चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥

तथाहि—शारीरदुःखनिवृत्तये औषधादयः सन्ति, मानसदुःखनिवृत्तये प्रवरस्त्रीमिष्टान्नादयः सन्ति, आधिभौतिकदुःखनिवृत्तये च नीतिशास्त्रार्थवादिभिः प्रोक्ता नाना प्रकाराः सन्ति, आधिदैविकदुःखनिवृत्तये च शान्तिमणिमन्त्रादयः सन्ति, इत्यत्रोत्तर सूत्रम्—न दृष्टादिति।

न वयं निवृत्तिमात्रं पुरुषार्थं इति ब्रूमः, किन्तूत्पत्तिनिवृत्तिः। औषधादिना च नावश्यं दुःखं निवर्तते, यदि वा कथञ्चित् निवर्तेत, पुनरन्येन न भवितव्यमिति नास्ति नियमः॥ २॥

---

१. 'अक्के' इति पाठं प्रकल्प्य 'गृहकोणे' इति तदर्थं केचिदाहुः। मीमांसाभाष्ये शबरस्वामिना 'अर्के' इत्येव स्वीकृतत्वादयमेव पाठः समीचीन. प्रतिभाति।

[ वृ०सा० ] नन्वस्तूक्तनिवृत्तिरत्यन्तपुरुषार्थस्तथापि सत्त्वपुरुषान्यथाख्यातिरूपतत्त्वज्ञान-हेतुशास्त्रप्रवृत्तौ को हेतुः? शारीरदुःखनिवर्तकानामौषधादीनां मानसदुःखनिवर्तकानां वरस्त्री-मिष्टान्नादीनामाधिभौतिकदुःखनिवर्तकानां नीतिशास्त्रोपदिष्टनिरत्ययस्थानाध्यासनादीनामाधि-दैविकदुःखनिवर्त्तकानां मणिमन्त्रमहौषधादीनां च सुकराणां सत्त्वेऽनेकजन्मपरम्परायाससाध्य-तत्त्वज्ञानेऽतिदुष्करे प्रवृत्तेर्दुर्लभत्वेन शास्त्रप्रवृत्तेर्दुर्लभतरत्वादत आह—न दृष्टात्० ।

दृष्टादुक्तौषधादिरूपात्तत्सिद्धिः दुःखात्यन्तनिवृत्तिसिद्धिर्न भवति । कुतः ? निवृत्ते. दुःखनिवृत्तेरनन्तरमिति शेषः, अनुवृत्तिदर्शनादपि दुःखजातीयोत्पत्तिदर्शनादपि । अयं भावः—नोक्तैरुपायैर्दुःखानुत्पत्तिविशिष्टा दुःखनिवृत्तिर्भवति, तत्तदुपायैस्तत्तद्दुःखेषु नष्टेष्वपि दुःखान्त-रोत्पत्तिदर्शनात् । तस्मादसुकरत्वेऽपि तत्त्वज्ञानमेषितव्यमिति ॥ २ ॥

[ भा० ] अतः परं वक्ष्यमाणस्य हानोपायव्यूहस्याकाङ्क्षार्थं तदितरेषां हानोपायत्वं प्रत्याचष्टे सूत्रजातेन—न दृष्टात्० ।

लौकिकादुपायाद्धनादेरत्यन्तदुःखनिवृत्तिसिद्धिर्नास्ति । कुतः ? धनादिना दुःखे निवृत्ते पश्चाद्धनादिक्षये पुनरपिऽदुःखानिवृत्तिदर्शनादित्यर्थः। तथा च श्रुतिः—"अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" (बृ० उ० ४।५।३) इत्यादि ॥ २ ॥

[ भा० सा० ] वक्ष्यमाणतन्निवृत्त्युपायादुपायान्तरं प्रत्याचष्टे—नेति ।

दृष्टाव=लौकिकादुपायात्, न तत्सिद्धिः=त्रिविधदुःखात्यन्तनिवृत्तिः । तत्र शारीर-दुःखनिवृत्त्युपाया धनद्वारा रसायनादिसेवनम् । मानसस्य मनोज्ञस्त्रीपानभोजनादयः, आधि-भौतिकस्य नीतिशास्त्राभ्यासनिरत्ययस्थानसेवनादिः । आधिदैविकस्य मणिमन्त्रौषधादिः । निवृत्तेः पश्चादपि दुःखानुवृत्तिदर्शनान्न स उपाय इत्यर्थः । इदमुपलक्षणम्, तत्तदौषधादि-सेवनेऽपि दुःखनिवृत्तेरदर्शनाच्चेत्यपि वोध्यम् ॥ २ ॥

**प्रात्यहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥ ३ ॥**

[ वृत्तिः ] भवतु दुःखनिवृत्तिस्तथापि न पुरुषार्थः, पुनस्तथाविधप्रतीकारकरणात्, इत्यत आह—प्रात्यहिक० ।

यथा प्रत्यहं क्षुत्प्रतीकाराय वरान्नभक्षणादिना तृप्तस्य पुरुषार्थता, तथा दुःख-निवृत्तये औषधादिना पुनः पुनः प्रतीकारात् पुरुषार्थतेति ॥ ३ ॥

[ वृ०सा० ] ननु मा भूदौषधादिभिः पूर्वैर्भाविदुःखनिवृत्तिस्तथापि पुनः पुनः प्रती-कारकरणे तु भाविदुःखनिवृत्तिरपि स्यादिति शङ्कते—प्रात्यहिक० ।

यदा दुःखमुत्पत्स्यते तदा तत्प्रतिकर्तव्यम्, तथा च दुःखनिवृत्तिः पुरुषार्थः । यथा यदा क्षुत्तदा भोक्तव्यम्, भुञ्जानस्य क्षुन्निवृत्तिः पुरुषार्थ इति ॥ ३ ॥

[ भा० ] नन्वेवं धनाद्यर्जनस्य कुञ्जरशौचवद् दुःखानिवर्तकत्वे कथं तत्र प्रवृत्तिस्तत्राह—प्रात्यहिक० ।

दृष्टसाधनजन्यायां दुःखनिवृत्तावत्यन्तपुरुषार्थत्वमेव नास्ति। यथाकथञ्चित् पुरुषार्थत्वं त्वस्त्येव। कुतः, प्रात्यहिकस्य क्षुद्दुःखस्य निराकरणवदेव तेन धनादिना दुःखनिराकरणस्य चेष्टनादन्वेषणादित्यर्थः। अतो धनाद्यर्जने प्रवृत्तिरुपपद्यत इति भावः। कुञ्जरशौचादिकमप्यापातदुःखनिवर्तकतया मन्दपुरुषार्थो भवत्येवेति ॥ ३ ॥

[ भा० सा० ] ननु तेषामुपायानामेवंभूतत्वे कथं तत्र प्रवृत्तिरत आह—प्रात्यहिकेति। दृष्टसाधनजन्यदुःखनिवृत्तावात्यन्तिकपुरुषार्थत्वमेव नास्ति, यथाकथञ्चित्तत्त्वं त्वस्त्येव। कुतः, प्रात्यहिकक्षुद्दुःखनिराकरणवदेतैरुपायैर्दुःखनिराकरणस्य चेष्टनादन्वेषणादित्यर्थः ॥३॥

**सर्वासम्भवात् सम्भवेऽपि [1]सत्त्वासम्भवाद् हेयः प्रमाणकुशलैः ॥ ४ ॥**

[ वृ० ] सिद्धान्तमाह—सर्वा०।

न हि सर्वदेशे सर्वकाले वा वैद्यादयः सम्भवन्ति, सम्भवेऽपि नात्यन्तत्रिविधदुःखनिवृत्तिः स्यात्। अवश्यं हि देहनिबन्धनाद् रागादीनां सम्भवः, देही सुखीति न दृष्टमिति। तस्मादेष पुरुषार्थः प्रामाणिकैर्हेयः शास्त्रगम्यश्चोपादेयः ॥४॥

[ वृ० सा० ] सिद्धान्तयति—सर्वेति। न हि सर्वस्मिन् देशे सर्वस्मिन् काले वैद्यादयः सन्ति। सम्भवेऽपि सत्त्वेऽपि वैद्यादीनां सत्तासम्भवाद् दुःखसत्तासम्भव इति न सर्वथा दुःखाद्विमोकः। तस्मात् प्रमाणकुशलैरीदृग्विधः पुरुषार्थो हेयः ॥ ४ ॥

[ भा० ] स च दृष्टसाधनजो मन्दपुरुषार्थो विज्ञैर्हेय इत्याह—सर्वा०।

स च दृष्टसाधनजो दुःखप्रतीकारो दुःखादुःखविवेकशास्त्राभिज्ञैर्हेयो दुःखपक्षे निक्षेपणीयः। कुतः, सर्वासम्भवात्। सर्वदुःखेषु दृष्टसाधनैः प्रतीकारासम्भवात्। यत्रापि सम्भवस्तत्रापि प्रतिग्रहपापाद्युत्थदुःखावश्यकत्वमाह—सम्भवेऽपीति। सम्भवेऽपि दृष्टोपायनान्तरीयकादिदुःखसम्पर्कावश्यम्भावादित्यर्थः। तथा च योगसूत्रम्—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वमेव दुःखं विवेकिनः" ( २।१५ ) इति ॥ ४ ॥

[ भा० सा० ] एवं दृष्टसाधनजो मन्दपुरुषार्थो विज्ञैर्हेय इत्याह—सर्वेति।

स दृष्टसाधनजो दुःखप्रतीकारो दुःखादुःखविवेकशास्त्राभिज्ञैर्हेयो दुःखपक्षे निक्षेप्यः। कुतः ? सर्वासंभवात्। दुःखेषु दृष्टसाधनैः प्रतीकारासंभवात्। संभवेऽपि पुनरुत्पत्तिदर्शनात्। दृष्टोपायनान्तरीयकदुःखावश्यम्भावाच्चेत्यर्थः ॥ ४ ॥

**उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥**

[ वृ० ] युक्त्यन्तरमाह—उत्कर्षा०।

अथवा दुःखत्रयनिवृत्तेरन्योऽन्यमुत्कर्षो दृष्टः, मोक्षस्तु सर्वोत्कृष्टः, नित्यत्वादेकत्वात् सर्वदुःखोच्छेदरूपत्वाच्च ॥ ५ ॥

---

१. 'सत्ता' इति वेदान्तिसम्मतः पाठः, 'अत्यन्ता' इति मुद्रित पु०।

[ वृ० सा० ] युक्त्यन्तरमाह —उत्कर्षादिति। न तैस्तैरुपायैस्तत्तद्दुःखोच्छेदे यतितव्यम्, मोक्षस्य नित्यत्वेन सर्वदुःखोच्छेदरूपत्वेनोत्कर्षात्, "आत्मलाभान्न परं विद्यते" इति सर्वोत्कर्षश्रुतेरपि तत्साधने तत्त्वज्ञान एव वा यतितव्यम् ॥ ५ ॥

[ भा० ] ननु दृष्टसाधनजन्ये सर्वस्मिन्नेव दुःखप्रतीकारे दुःखसम्भेदनियमोऽप्रयोजकः। तथा च स्मर्यते—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥

( म० भा० टीका, सभा प० ११।४ )

इति। तत्राह—

दृष्टसाधनासाध्यस्य मोक्षस्य दृष्टसाधनसाध्यराज्यादिभ्य उत्कर्षात् तेषु दुःखसत्तावधार्यते। अपिशब्दात् त्रिगुणात्मकत्वादेरपि। मोक्षस्योत्कर्षे प्रमाणम् सर्वोत्कर्षश्रुतेरिति। "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" ( छा० उ० ८।१२।१ ) इत्यादिना विदेहकैवल्यस्योत्कर्षश्रुतेरित्यर्थः ॥ ५ ॥

[ भा० सा० ] हेत्वन्तरमाह—उत्कर्षादिति। दृष्टसाधनासाध्यमोक्षस्य दृष्टसाधनसाध्यराज्यादिभ्य उत्कर्षात् तेषु दुःखसत्ताऽनुमीयते। अपिना त्रिगुणात्मकत्वं तस्योत्कर्ष एव। कुत इत्यत आह—सर्वेति। "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" ( छा० उ० ८।१२।१ ) इत्यादिभिः श्रुतिभिर्विदेहकैवल्यस्योत्कर्षश्रुतेरित्यर्थः ॥ ५ ॥

## अविशेषश्चोभयोः ॥ ६ ॥

[ वृ० ] ननु नास्त्येव तद्दर्शनं यत्र मोक्षो न पुरुषार्थः, न चौषधादिना दुःखनिवृत्तिमात्रं मोक्षः। तस्माद् यस्तव सिद्धान्तः सोऽस्माकं भविष्यति, इत्यत आह—अवि०।

स्वपक्षसिद्धया परपक्ष उपालभ्यते, न त्वन्यथा। उक्तञ्च—

यत्रोभयोः समो दोषः परिहारोऽपि तादृशः।
नैकः पर्यनुयोज्यः स्यात् तादृगर्थविचारणे ॥ ६ ॥

[ वृ० सा० ] ननु मोक्ष इत्युक्ते बन्धादिति प्रतीयते, स च बन्धः किं स्वाभाविक उतागन्तुकः ? आद्ये नाशायोगः, अन्त्ये स्वत एव नङ्क्ष्यति किं तत्त्वज्ञानेनेत्यत आह—अविशेष इति।

बन्धस्य स्वाभाविकागन्तुकत्वयोर्मोक्षस्योपादेयत्वेऽविशेषः, यथा बन्धस्योपपत्तिर्यथा च मोक्षस्य तथा वयं वक्तुं शक्नुम इत्यर्थः ॥ ६ ॥

[ भा० ] ननु मा भवतु दृष्टसाधनादत्यन्तदुःखनिवृत्तिः, अदृष्टसाधनात् तु वैदिककर्मणः स्यात् –"अपाम सोममममृता अभूम" ( ऋ० ८।४८।३ ) इत्यादिश्रुतेरिति, तत्राह—अविशेष० ।

उभयोरेव दृष्टादृष्टयोरत्यन्तदुःखनिवृत्त्यसाधकत्वे यथोक्तत‌द्धेतुत्वे चाविशेष एव मन्तव्य इत्यर्थः । एतदेव कारिकायामुक्तम् —

'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः"। ( सां० का० २ ) इति । गुरोरनुश्रूयत इत्यनुश्रवो वेदः । तद्विहितयागादिरानुश्रविकः । स दृष्टोपायवदेवाशुद्धचा हिंसादिपापेन विनाशिसातिशयफलकत्वेन च युक्त इत्यर्थः ।

ननु वैधहिंसायाः पापजनकत्वे बलवदनिष्टानुबन्धीष्टसाधनत्वरूपस्य विध्यर्थस्यानुपपत्तिरिति चेन्न, वैधहिंसाजन्यानिष्टस्येष्टोत्पत्तिनान्तरीयकत्वेनेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वरूपस्य बलवदनिष्टाननुबन्धित्वस्य विध्यंशस्याक्षतेः । यत् तु वैधहिंसातिरिक्तहिंसाया एव पापजनकत्वमिति, तदसत्, सङ्कोचे प्रमाणाभावात्, युधिष्ठिरादीनां स्वधर्मेऽपि युद्धादौ ज्ञातिवधादिप्रत्यवायपरिहाराय प्रायश्चित्तश्रवणाच्च,

तस्माद्यास्याम्यहं तात दृष्ट्वेमं दुःखसन्निधिम् ।
त्रयीधर्ममधर्माढ्यं किम्पाकफलसन्निभम् ॥

( मा० पु० १०।३१ )

इति मार्कण्डेयवचनाच्च । "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" ( छा० उ० ८।१५।१ ) इति श्रुतिस्तु वैधातिरिक्तहिंसानिवृत्तेरिष्टसाधनत्वमेव वक्ति, न तु वैधहिंसाया अनिष्टसाधनत्वाभावमपीत्यादिकं योगवार्त्तिके ( २।३४ ) द्रष्टव्यमिति दिक् । "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" ( तै० आ० १०।१० ) इति, "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( श्वे० उ० ३।८ ) इत्यादिश्रुतिविरोधेन तु सोमपानादिभिरमृतत्वं गौणमेव मन्तव्यम्, "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" ( २।८।९० ) इति विष्णुपुराणात् ॥ ६ ॥

[ भा० सा० ] न चैवमप्यदृष्टसाधनवैदिककर्मभ्य एव तर्हि स स्यात्तत्राह—अविशेष इति । उभयोर्दृष्टादृष्टयोरत्यन्तदुःखनिवृत्त्यसाधनत्वेऽविशेषः । साम्यमेवेत्यर्थः । अयं भावः—यद्यपि "स्वर्गकामो यजेत" ( ता० ब्रा० १६।३।३ ) इति श्रुतिः । स्वर्गश्च दुःखासंभिन्नसुखविशेषः । स च स्वसत्तया समूलदुःखापहो न क्षयी, "अपाम सोममममृता अभूम" ( ऋ० ८।४८।३ ) इति श्रुतेः । क्षयित्वे हि कथममृतत्वं स्यात्, अनेकजन्म-साध्यविवेकज्ञानात् सुकरश्च, तथापि यागादिः पशुहिंसादिजन्यपापयोगाद् दुःखमिश्र एव क्षययुक्तश्चेत्युपेक्ष्यः । एवं फलतारतम्यादप्युपेक्ष्यः परसम्पदुत्कर्षेण हीनसंपदो दुःखदर्शनात् । उदाहृतश्रुतिस्तु चिरस्थैर्योपलक्षिका,—स्वर्गादेर्दुःखासम्भिन्नत्वमपि सुखसमदुःखासम्भिन्नत्वेनेति ।

यत्तु वैधहिंसातिरिक्तहिंसैव पापजनिकेति, तन्न; संकोचे प्रमाणाभावात्, युधिष्ठिरादीनां स्वधर्मेऽपि युद्धे ज्ञातिवधादिप्रायश्चित्तश्रवणात् ।

तस्माद्यास्याम्यहं तात दृष्ट्वेमं दुःखसंनिधिम् ।
त्रयीधर्ममधर्माढ्यं किंपाकफलसन्निभम् ।। ( मा० पु० १०।३१ )

इति मार्कण्डेयोक्तेश्च । किंपाको निम्बः । "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" (छा० उ० ८।१५।१ ) इति श्रुतिस्तु वैधातिरिक्तहिंसानिवृत्तेरिष्टसाधनत्वपरा, न तु वैध्या अनिष्टसाधनत्वाभावपरा, उक्तवचनात् । तस्माद्विवेकज्ञानमेव तदुपायः ।। ६ ।।

## न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ।। ७ ।।

[ वृ० ] किं स्वभावतो बद्धस्य मोक्षसाधनोपदेशः, अन्यथा वेत्यत्राह—न स्वभावतो० ।

स्वभावनाशात् स्वरूपनाशप्रसङ्गात् । उक्तञ्च—

[1]वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता ।
विकल्पघटितावेतावुभावपि न किञ्चन ।। ७ ।।

[ वृ० सा० ] अथ वन्धमोक्षयोरुपपत्त्यर्थमादौ तावत् स्वाभाविकत्वे बन्धस्य दूषणान्याह—न स्वभावेति । दुःखात्यन्तनिवृत्तेर्मोक्षत्वस्योक्तत्वाद् बन्धो दुःखयोगः । स च पुरुषे न स्वाभाविकः, तथा सति मोक्षाय साधनोपदेशस्य श्रौतस्य स्मार्तस्य च विधेरनुष्ठानं न घटत इति शेषः । न ह्यग्नेः स्वाभाविकादौष्ण्यान्मोक्षः संभवति, स्वाभाविकस्य यावद्द्रव्यभावित्वादिति भावः । उक्तं चेश्वरगीतायाम्—

यद्यात्माऽमलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ।। ( २।१२ ) ।। ७ ।।

[ भा० ] तदेवं दृष्टादृष्टोपाययोः साक्षात्परमपुरुषार्थासाधनत्वे साधिते तदुपायाकाङ्क्षायां विवेकज्ञानमुपायो वक्तव्यः । तत्र विवेकज्ञानमविवेकाख्य-दुःखहेतूच्छेद-द्वारैव हानोपाय इत्याशयेनादावपि विवेकमेवेतरप्रतिषेधेन हेयहेतुतया परिशेषयति प्रघट्टकेन—न स्वभावतो० ।

दुःखात्यन्तनिवृत्तेर्मोक्षत्वस्योक्ततया बन्धोऽत्र दुःखयोग एव । तस्य बन्धस्य पुरुषे न स्वाभाविकत्वं वक्ष्यमाणलक्षणमस्ति, यतो न स्वभावतो बद्धस्य मोक्षाय साधनोपदेशस्य श्रौतस्य विधेरनुष्ठानं नियोज्यानां घटते । न ह्यग्नेः स्वाभाविकाद् औष्ण्यान्मोक्षः सम्भवति, स्वाभाविकस्य यावद्द्रव्यभावित्वादित्यर्थः । तदुक्तमीश्वरगीतायाम्—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ।।
( ई० गी० २।१२ )

---

१ स्पन्दप्रदीपिकायाम् 'आत्मसप्ततौ' इत्युक्त्वोद्धृतोऽयं श्लोकः ।

इति। यस्मिन् सति कारणविलम्बाद् विलम्बो यस्योत्पत्तौ न भवति तत्तस्य स्वाभाविकमिति स्वाभाविकत्वलक्षणम्।

ननु सर्वदोपलम्भापत्तेर्दुःखस्य स्वाभाविकत्वशङ्कैव नास्तीति चेन्न; त्रिगुणात्मकत्वेन चित्तस्य दुःखस्वभावत्वेऽपि सत्त्वाधिक्येनाभिभवात् सदा दुःखानुपलब्धिवदात्मनोऽपि तदनुपलब्धिसम्भवात्, दुःखस्वाभाविकत्ववादिभिर्बौद्धैश्चित्तस्यैवात्मताऽभ्युपगमाच्च। अथैवमात्मनाशादेव मोक्षोऽस्त्विति चेन्न, अहं बद्धो विमुक्तः स्यामिति बन्धसामानाधिकरण्येनैव मोक्षस्य पुरुषार्थत्वादिति ॥ ७ ॥

[ भा०सा० ] न च विवेकाख्यदुःखहेतूच्छेदद्वारैवेत्यविवेक एव हेयहेतुतया परिशेषयति–नेति। दुःखात्यन्तनिवृत्तिर्मोक्षः, दुःखयोगश्च बन्धः। बन्धश्च पुरुषे न स्वाभाविकः। तथा सति मोक्षसाधनोपदेशस्य श्रौतस्य विधिरनुष्ठानं न स्यात्। स्वाभाविकस्य यावद्द्रव्यभावित्वेन ततो मोक्षासम्भवः, अग्नेरिव स्वाभाविकौष्ण्यादिति भावः। तदुक्तम्—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः।
नहि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥ इति।
( ई० गी० २।१२ )

दुःखस्वाभाविकत्ववादिनां बौद्धानां चित्तमेवात्मा, तस्य दुःखस्वभावत्वेऽपि सत्त्वाधिक्येनाभिभवात्। सदा तदनुपलब्धिरुपपत्तिः। न च आत्मनाशादेव मोक्षोऽस्तु, अहं बद्धो विमुक्त इति बन्धसामानाधिकरण्येनैव मोक्षस्य पुरुषार्थत्वात् ॥ ७ ॥

**स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥**

[वृ०] एतदेव द्रढयति—स्वभाव०।

नित्यस्वभावस्य बन्धस्य अप्रच्यवात्तन्नाशार्थमनुष्ठानमशक्यमिति ॥ ८ ॥

[वृ० सा०] भवत्वननुष्ठानं किमेतावतेत्यत आह—स्वभावस्येति। अननुष्ठानलक्षणमप्रामाण्यं दोषायैवेति भावः ॥ ८ ॥

[भा०] भवत्वननुष्ठानम्, तेन किमित्यत आह—स्वभावस्या०।

स्वभावस्य यावद्द्रव्यभावित्वान्मोक्षासम्भवेन तत्साधनोपदेशश्रुतेरननुष्ठानलक्षणमप्रामाण्यं स्यादित्यर्थः ॥ ८ ॥

[भा० सा०] एवमतिरिक्तात्मवादेऽपि भवत्वननुष्ठानम्, तत्राह—स्वभावेति। तत्साधनोपदेष्टृश्रुतेरिति शेषः ॥ ८ ॥

**नाशक्यापदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥ ९ ॥**

[वृ०] कश्चिद्विप्रलम्भायाऽशक्यमप्युपदिशति, यथा–"अङ्गुल्यग्रे करियूथशतम्" इति, अत आह—नाशक्यो०। अशक्यकार्याय उपदेशो न सम्भवति, उपदिष्टेऽपि नोपदेशः, निष्फलीभवतीत्यर्थः ॥ ९ ॥

[वृ० सा०] ननु श्रुतिबलादेवानुष्ठानं किन्न स्यात्तत्राह—नाशक्येति। अशक्याय फलाय

उपदेशस्यानुष्ठानं न सम्भवति, यत उपदिष्टेऽपि विहितेऽप्यशक्योपाये सः अनुपदेश एव, बाधितमर्थं वेदोऽपि न बोधयतीति न्यायात्, तस्मान्न स्वभावतो बद्धः ॥ ९ ॥

[भा०] ननु श्रुतिबलादेवानुष्ठानं स्यात्, तत्राह —नाशक्यो० ।

नाशक्याय फलायोपदेशस्यानुष्ठानं सम्भवति। यत उपदिष्टेऽपि विहितेऽप्यशक्यस्योपाये स उपदेशो न भवति, किन्तूपदेशाभास एव; बाधितमर्थं वेदोऽपि न बोधयतीति न्यायादित्यर्थः ॥ ९ ॥

[भा० सा०] ननु श्रुतिबलादेवानुष्ठानं स्यादत आह—नाशक्येति । अशक्याय फलायोपदिष्टस्य नानुष्ठानं संभवति । उपदिष्टेऽपि विहितेऽप्यशक्यस्योपाये स उपदेशोऽनुपदेश एवेत्यर्थः । बाधितार्थस्य वेदेनाप्यबोधनादिति भावः ॥ ९ ॥

**शुक्लपटवद् बीजवच्चेत् ॥ १० ॥**

[वृ०] अत्र शङ्कते—शुक्ल० । स्वभावस्यापि नाशो दृश्यते, यथा पटे शुक्लत्वस्य रागादिभिः, बीजस्य चाङ्कुरजननात् ॥ १० ॥

[वृ० सा०] अत्र शङ्कते—शुक्लेति । स्वाभाविकस्याप्यपायो दृश्यते । यथा शुक्लपटस्य स्वाभाविकं शौक्ल्यं रागद्रव्येणापनीयते, यथा वा बीजस्य स्वाभाविक्यप्यङ्कुरजननशक्तिरग्निनेति चेत् ॥ १० ॥

[भा०] अत्र शङ्कते शुक्ल० । ननु स्वाभाविकस्याप्यपायो दृश्यते । यथा शुक्लपटस्य स्वाभाविकं शौक्ल्यं रागेणापनीयते। यथा च बीजस्य स्वाभाविक्यप्यङ्कुरशक्तिरग्निनाऽपनीयते । अतः शुक्लपटवद् बीजवच्च स्वाभाविकस्य बन्धस्याप्यपायः पुरुषे सम्भवतीति, तद्वदेव तत्साधनोपदेशः स्यादिति चेदित्यर्थः ॥ १० ॥

[भा० सा०] शङ्कते—शुक्लेति । यथा शुक्लपटस्य स्वाभाविकं शौक्ल्यं रागेणापनीयते, यथा बीजस्य स्वाभाविकी अङ्कुरजननशक्तिरग्निनापनीयते तद्वत्स्वाभाविकबन्धस्यापायः पुरुषे संभवतीति चेत्, इत्यर्थः ॥ १० ॥

**शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥ ११ ॥**

[वृ०] सिद्धान्तमाह—शक्त्युद्भवा० ।

सत्कार्यसिद्धेर्न पटस्य शौक्ल्यं नष्टम्, किन्तु रागादिनाऽभिभूतम्, क्षालनात् पुनरुद्भूतम्; अङ्कुराजननादपि न बीजं नष्टम्, किन्त्वभिभूतम्, तस्य च पुनरुद्भवो दृश्यते, वस्तुवैचित्र्यात्; अथवा योगिसङ्कल्पादिभिस्तच्छक्त्याविर्भावात् ॥ ११ ॥

[वृ० सा०] समाधत्ते —शक्तीति । उक्तदृष्टान्तयोरपि अशक्याय स्वाभाविकापायायोपदेशो लोकानां न भवति, कुतः शक्त्युद्भवानुद्भवाभ्यां दृष्टान्तद्वये शुक्लत्वादेराविर्भावतिरोभावावेव न तु शौक्ल्यस्याङ्कुरशक्तेश्चापायः, रजकादिव्यापारैर्योगिसङ्कल्पादिना च रक्तपटभृष्टबीजयोः पुनः शौक्ल्याद्यङ्कुरशक्तेश्चाविर्भावादिति भावः । न चैवं पुरुषेऽपि दुःखशक्तितिरोभाव एव मोक्षोऽस्त्विति सुवचम्; दुखात्यन्तनिवृत्तेरेव मोक्षरूपपुरुषार्थत्वोक्तेः ॥ ११ ॥

[भा०] समाधत्ते—शक्त्युद्भवा० ।

उक्तदृष्टान्तयोरपि नाशक्याय स्वाभाविकापायायोपदेशो लोकानां भवति । कुतः ? शक्त्युद्भवानुद्भवाभ्याम् । दृष्टान्तद्वये हि शौक्ल्यादेराविर्भावतिरोभावावेव भवतः, न तु शौक्ल्याङ्कुरशक्त्योरभावो भवति । रजकादिव्यापारैर्योगिसङ्कल्पादिभिश्च रक्तपटभृष्टबीजयोः पुनः शौक्ल्याङ्कुरशक्त्याविर्भावादित्यर्थः ।

नन्वेवं पुरुषेऽपि दुःखशक्तितिरोभाव एव मोक्षोऽस्त्विति चेन्न; दुःखात्यन्तनिवृत्तेरेव लोके पुरुषार्थत्वानुभवात्, श्रुतिस्मृत्योः पुरुषार्थत्वसिद्धेश्च । न तु दृष्टान्तयोरिव तिरोभावमात्रस्येति । किञ्च, दुःखशक्तितिरोभावमात्रस्य मोक्षत्वे कदाचिद्योगीश्वरसङ्कल्पादिना शक्त्युद्भवस्य भृष्टबीजेष्विव मुक्तेष्वपि सम्भवेनानिर्मोक्षापत्तिरिति ॥ ११ ॥

[भा० सा०] समाधत्ते—शक्तीति । दृष्टान्तयोर्नाशक्याय स्वाभाविकापायाय लोकानामुपदेशोऽस्ति, रागेण शौक्ल्यतिरोभावरक्ताविर्भावयोरेव भवनात् । न तु शौक्ल्याङ्कुरशक्त्योरपायः, रजकादिव्यापारेण योगिसङ्कल्पादिभिश्च पटभृष्टबीजयोः पुनः शौक्ल्याङ्कुरशक्त्याविर्भावादित्यर्थः ।

न च पुरुषेऽपि दुःखशक्तितिरोभाव एव मोक्षोऽस्तु ? योगीश्वरसङ्कल्पादिना शक्त्युद्भवस्य भृष्टबीजेष्विव मुक्तेष्वपि संभवेनानिर्मोक्षापत्तेः, दुःखात्यन्तनिवृत्तेरेव लोके पुरुषार्थत्वाङ्गीकाराच्च ॥ ११ ॥

## न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥

[वृ०] ननु आत्मा स्वभावतो न बद्धः, किन्तु कालवशाद् बद्धो भविष्यतीत्यत्राह—न काल० । भवत्वयम्, यदि तस्य कदापि कालयोगः स्यात्, न स्याद्वा; नित्यस्य व्यापिनः सर्वकालसम्बन्धोपाधित्वात् । नित्यस्येत्यनेन सर्वकालसम्बन्धे प्राप्ते 'व्यापिनः' इत्युत्तरसूत्रपर्य्यालोचनया सम्यगायातम् ॥ १२ ॥

[वृ० सा०] एवं बन्धस्य स्वाभाविकत्वं निराकृत्य नैमित्तिकत्वमपि निराकरिष्यन् निमित्तानि कालादीनि निराकरोति—नेति ।

न कालसम्बन्धनिमित्तकः पुरुषस्य बन्धः, व्यापिनो नित्यस्य कालस्य सर्वैः पुरुषैः सर्वकालावच्छेदेन सम्बन्धान्मुक्तामुक्तव्यवस्थानुपपत्तेः । ननु कालस्य निमित्तत्वेऽपि सहकार्यन्तरसमवधानाऽसमवधानाभ्यां व्यवस्था स्यादिति चेत्; एवं मन्यते यत्संयोगे सत्यवश्यं बन्धस्तत्रैव सहकारिणि लाघवाद् बन्धो युक्तः । पुरुषे बन्धव्यवहारस्यौपाधिकत्वेनाप्युपपत्तेरिति, कथं कालनिमित्तकत्वमिति ॥ १२ ॥

[भा०] स्वभावतो बन्धं निराकृत्य निमित्तेभ्योऽपि बन्धनमपाकरोति सूत्रजातेन (१२-५५) पुरुषे दुःखस्य नैमित्तिकत्वेऽपि ज्ञानाद्युपायोच्छेद्यत्वं न घटते । अनागतावस्थसूक्ष्मदुःखस्य यावद्द्रव्यभावित्वादित्याशयेन नैमित्तिकत्वं निराक्रियते—न काल० ।

नापि कालसम्बन्धनिमित्तकः पुरुषस्य बन्धः, कुतः, व्यापिनो नित्यस्य कालस्य सर्वावच्छेदेन सर्वदा मुक्तामुक्तसकलपुरुषसम्बन्धात्, सर्वावच्छेदेन सदा सकलपुरुषाणां बन्धापत्तेरित्यर्थः।

अत्र च प्रकरणे कालदेशकर्मादीनां निमित्तत्वसामान्यं नापलप्यते, श्रुतिस्मृतियुक्तिभिः सिद्धत्वात्। किन्तु यन्नैमित्तिकत्वं पाकजरूपादिवन्निमित्तजन्यत्वं तदेव बन्धे प्रतिषिध्यते, पुरुषे बन्धस्यौपाधिकत्वाभ्युपगमात्। ननु कालादिनिमित्तकत्वेऽपि सहकार्यन्तरसम्भवासम्भवाभ्यां व्यवस्था स्यादिति चेत्; एवं सति यत्संयोगे सत्यवश्यं बन्धस्तत्रैव सहकारिणि लाघवाद् बन्धो युक्तः; पुरुषे बन्धव्यवहारस्यौपाधिकत्वेनाप्युपपत्तेरिति कृतं नैमित्तिकत्वेनेति ॥ १२ ॥

[भा० सा०] अथ बन्धस्य नैमित्तिकत्वं निराकरोति—न कालेति। न कालयोगतो बन्धः, व्यापिनो नित्यस्य आत्मनः सर्वस्य सर्वदा सर्वसंबन्धात्। सर्वपुरुषाणां सदा बन्धापत्तेरित्यर्थः। अत्र पाकजरूपादौ निमित्तजत्वं यथा तथा नैमित्तिकत्वं बन्धे प्रतिषिध्यते, पुरुषे बन्धस्यौपाधिकत्वाभ्युपगमात्। औपाधिकस्य कालनिमित्तजत्वे तु साक्षादौपाधिकत्वमेव तस्य युक्तम्, तत्कालसंबन्धस्यापि मुक्तसाधारणत्वाच्चेति भावः ॥ १२ ॥

## न देशयोगतोऽप्यस्मात् ॥ १३ ॥

[वृ०] देशवशाद् बद्धो भविष्यतीत्यत्राह—न देश०। व्यापिनो नित्यस्य सर्वदेशसम्बन्धादिति ॥ १३ ॥

[वृ० सा०] न देशेति। अस्मात् पूर्वसूत्रोक्तात् कालस्येव देशस्यापि सर्वपुरुषसर्वकालसाधारण्यमिति भावः ॥ १३ ॥

[भा०] न देश०। देशयोगतोऽपि न बन्धः। कुतः, अस्मात् पूर्वसूत्रोक्तान्मुक्तामुक्तसर्वपुरुषसम्बन्धात्, मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥ १३ ॥

[भा० सा०] न देशेति। देशयोगजोऽपि न बन्धः। अस्मात् मुक्तामुक्तसर्वपुरुषसंबन्धादित्यर्थः। व्यापकस्य सर्वदेशसंबन्धादिति तात्पर्यम् ॥ १३ ॥

## नावस्थातो देहधर्मत्वात् तस्याः ॥ १४ ॥

[वृ०] अथावस्थातो बद्धो भविष्यतीत्यत आह—नावस्थातो०।
तस्या अवस्थाया देहधर्मत्वादित्युपलक्षणम्, अपरिणामित्वादिति परमार्थः ॥१४॥

[वृ० सा०] नावस्थेति। अवस्था संघातविशेषरूपताख्या, ततो न बन्धः, तस्या देहधर्मत्वादचेतनधर्मत्वादन्यधर्मस्यान्यबन्धकत्वे मुक्तस्यापि बन्धापत्तेः ॥ १४ ॥

[भा०] नावस्थातो०। सङ्घातविशेषरूपताख्या देहरूपा याऽवस्था न तन्निमित्ततोऽपि पुरुषस्य बन्धः। कुतः, तस्या अवस्थाया देहधर्मत्वात्। अचेतनधर्मत्वादित्यर्थः। अन्यधर्मस्य साक्षादन्यबन्धकत्वेऽतिप्रसङ्गात्, मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥ १४ ॥

[भा० सा०] नावस्थेति । संघातविशेषरूपतारूपा या देहरूपावस्था तन्निमित्तकोऽपि न बन्धः, तस्या अवस्थाया देहधर्मत्वादित्यर्थः । अन्यधर्मस्य अन्यबन्धकत्वे मुक्तस्यापि बन्धापत्तिरिति भावः ॥ १४ ॥

असङ्गोऽयं पुरुष इति ॥ १५ ॥

[वृ०] आत्मनोऽप्यवस्था भविष्यतीत्यत्राह—असङ्गो० । "असङ्गो ह्ययं पुरुषः" ( बृ० उ० ४।३।१६ ) इति श्रुतिरस्ति, सा बाधिता स्यात् ॥ १५ ॥

[वृ० सा०] ननु पुरुस्यैवावस्थास्तु तत्राह—असङ्ग इति । इति हेतोः पुरुषस्यासङ्गत्वादित्यर्थः ॥१५॥

[भा०] ननु पुरुषस्याप्यवस्थायां किं बाधकम् ? तत्राह—असङ्गो० ।

इतिशब्दो हेत्वर्थे । पुरुषस्यासङ्गत्वादवस्थाया देहमात्रधर्मत्वमिति पूर्वसूत्रेणान्वयः । पुरुषस्यावस्थारूपविकारस्वीकारे विकारहेतुसंयोगाख्यः सङ्गः प्रसज्येतेति भावः । असङ्गत्वे च श्रुतिः—"स यदत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः" (बृ० उ० ४।३।१६ ) इति । सङ्गश्च संयोगमात्रं न भवति, काल-देश-सम्बन्धस्य पूर्वमुक्तत्वात् । श्रुतिस्मृतिषु पद्मपत्रस्थजलेनेव पद्मपत्रस्यासङ्गतायाः पुरुषसङ्गतायां दृष्टान्तताश्रवणाच्च ॥ १५ ॥

[भा० सा०] ननु पुरुषस्याप्यवस्थायां किं बाधकमत आह—असङ्गेति । इति श्रुतिर्बाधिता स्यादित्यर्थः । पुरुषस्यावस्थारूपविकारस्वीकारे तद्धेतुः सङ्गः प्रसज्येतेति भावः ॥१५॥

न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥

[वृ०] कर्मवशाद् बद्धो भविष्यतीत्येतद् दूषयति—न कर्मणा० ।

निर्गुणत्वादात्मनः कर्मणो नात्मधर्मत्वम् । ननु अन्यधर्मेणापि कर्मणा बद्धो भविष्यतीति. तदयुक्तम्; नह्यन्यधर्मेणान्यत्र किञ्चिदाधीयते; विश्वस्य वचित्र्यानुपपत्तेः, अतिप्रसक्तेश्चेति । मुक्तानामपि पुनर्बन्धप्रसङ्गः, अन्यत्वाविशेषादिति ॥१६॥

[वृ० सा०] न कर्मणेति । न विहितनिषिद्धकर्मणाऽपि पुरुषस्य बन्ध , कर्मणोऽन्यधर्मत्वात्, चित्तधर्मत्वात् । अन्यधर्मणान्यस्य कार्यस्वोकारे मुक्तस्य बन्धापत्तिप्रसङ्गात् ॥१६॥

[भा०] न कर्मणा० । नहि विहितनिषिद्धकर्मणापि पुरुषस्य बन्धः, कर्मणामनात्मधर्मत्वात् । अन्यधर्मेण साक्षादन्यस्य बन्धे च मुक्तस्यापि बन्धापत्तेः । ननु स्वस्वोपाधिकर्मणा बन्धाङ्गीकारे नायं दोष इत्याशयेन हेत्वन्तरमाह - अतिप्रसक्तेश्चेति । प्रलयादावपि दुःखयोगरूपबन्धापत्तेश्चेत्यर्थः । सहकार्यन्तरविलम्बतो विलम्बकल्पनं च प्रागेव निराकृतं 'न कालयोग ' (१२) इत्यादिसूत्र इति ॥ १६ ॥

[ भा० सा० ] असङ्गता च जलेन पद्मपत्रस्येव कर्मणाऽपि न बन्ध इत्याह—न कर्मणेति । विहितनिषिद्धकर्मणाऽपि न बन्धः । पुरुषस्य निर्गुणत्वेन न तेषां तद्धर्मत्वम् । अन्यधर्मेणान्यत्र फलाधाने विश्ववैचित्र्यानुपपत्तिः । अतिप्रसक्तेश्चेति । अन्यधर्मेणान्यस्य संबन्धे

मुक्तस्यापि बन्धापत्तिरित्यर्थः। ननु स्वोपाधिकर्मणा बन्धाङ्गीकारे नायं दोष इति चेत्; तर्हि तदौपाधिकत्वमेवास्त्विति भावः ॥ १६ ॥

विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥१७॥

[वृ०] दूषणान्तरमाह—विचित्र०। दृश्यन्ते केचित् सुखिनः केचिद् दुःखिनः। न चानादौ संसारे केनापि सुखहेतु कर्म दुःखहेतु कर्म वा न कृतम्; अन्यधर्मेणान्यत्र कार्यजनने सर्वे दुःखिनो वा स्युः ॥ १७ ॥

[वृ० सा०] ननु दुःखयोगरूपबन्धस्य कर्मसामानाधिकरण्यानुरोधाच्चित्तस्थत्वमेवास्तु, किमिति पुरुषेऽपि बन्धः कल्प्यत इत्याशङ्क्याह—विचित्रेति।

दुःखयोगरूपबन्धस्य पुरुषेऽभावे कश्चिदेव दुःखभोक्ता कश्चिन्नेति विचित्रभोगानुपपत्तिरतः पुरुषेऽपि दुःखयोगः स्वीकार्यः। स च दुःखप्रतिबिम्बरूप एव। प्रतिबिम्बश्च स्वोपाधेरेव भवतीति नातिप्रसङ्गः। चित्तस्यैव बन्ध इति तु चित्तस्य दुःखरूपं बन्धमादाय बोध्यम् ॥ १७ ॥

[भा०] नन्वेवं दुःखयोगरूपोऽपि बन्धः कर्मसामानाधिकरण्यानुरोधेन चित्तस्यैवास्तु, दुःखस्य चित्तधर्मतायाः सिद्धत्वात्। किमर्थं पुरुषस्यापि कल्प्यते बन्ध इत्याशङ्कायामाह—विचित्र०।

दुःखयोगरूपबन्धस्य चित्तमात्रधर्मत्वे विचित्रभोगानुपपत्तिः। पुरुषस्य हि दुःखयोगं विनापि दुःखसाक्षात्काराख्यभोगस्वीकारे सर्वपुरुषदुःखादीनां सर्वपुरुषभोग्यता स्यान्नियामकाभावात्। ततश्चायं दुःखभोक्ताऽयं च सुखभोक्तेत्यादिरूपभोगवैचित्र्यं नोपपद्येतेत्यर्थः। अतो भोगवैचित्र्योपपत्तये भोगनियामकतया दुःखादियोगरूपो बन्धः पुरुषेऽपि स्वीकार्यः। स च पुरुषे दुःखयोगः प्रतिबिम्बरूप एवेति प्रागेवोक्तम्। प्रतिबिम्बश्च स्वोपाधिवृत्तेरेव भवतीति न सर्वपुंसां सर्वदुःखभोग इति भावः। "चित्तवृत्तिबोधे पुरुषस्यानादिः स्वस्वामिभावः सम्बन्धो हेतुः"(१।४)इति योगभाष्याद् अयं सिद्धान्तः सिद्धः। चित्ते च पुरुषस्य स्वत्वं स्वभुक्तवृत्तिवासनावत्त्वमिति। यत् तु 'चित्तस्यैव बन्धमोक्षौ न पुरुषस्य' इति श्रुतिस्मृतिषु गीयते, तद् बिम्बरूपदुःखयोगरूपं पारमार्थिकं बन्धमादाय बोध्यम् ॥ १७ ॥

[ भा० सा० ] ननु बन्धोऽपि चित्तस्यैव कल्प्यताम्, किमथ पुरुषस्यापि बन्ध इत्यत आह—विचित्रेति। दुःखयोगरूपबन्धस्य चित्तमात्रधर्मत्वे विचित्रभोगानुपपत्तिः। पुरुषस्य हि दुःखयोगं विनापि दुःखसाक्षात्काराख्यभोगस्वीकारे सर्वदुःखादीनां सर्वपुरुषभोग्यता स्याद्, नियामकाभावात्। एवं च भोगवैचित्र्यं नोपपद्येतेत्यर्थः। अतस्तद्वैचित्र्याय भोगनियामकतया दुःखादियोगरूपो बन्धः पुरुषेऽपि स्वीकार्यः। स च पुरुषे दुःखयोगः प्रतिबिम्बरूप एवेति प्रागुक्तम्। प्रतिबिम्बश्च स्वोपाधिवृत्तेरेवेति न सर्वपुंसां सर्वदुःखभोग इति भावः। चित्ते पुरुषस्य स्वत्वं च स्वभुक्तवृत्तिवासनावत्त्वम्। वृत्तितत्संस्कारप्रवाहश्चानादिः, मोक्षसामानाधिकरण्यानुपपत्तिश्चेत्यपि बोध्यम्। बिम्बरूपदुःखयोगरूपपारमार्थिकबन्धस्तु चित्तस्यैवेति बोध्यम् ॥ १७ ॥

## प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम् ॥१८॥

[वृ०] अन्यधर्मेणान्यत्र कार्यंजनने प्रकृतिरेव नियामिका भविष्यति, यं पुरुषं प्रति सा प्रवर्तते तस्य बन्धो भविष्यतीत्यत्राह—प्रकृति० ।

प्रकृतेरपि व्यापित्वात् सर्वपुरुषसम्बन्धाविशेषात् कर्मणा विना न नियम इति तस्या अपि कर्मपारतन्त्र्यम्, तत्र चोक्तो दोषः ॥ १८ ॥

[वृ० सा०] साक्षात् प्रकृतिनिमित्तकत्वं बन्धस्यापाकरोति—प्रकृतीति । प्रकृतिनिमित्ताद् बन्धो भवत्विति चेत्, न ; यतस्तस्या अपि प्रकृतेरपि उत्तरसूत्रे वक्ष्यमाणसंयोगपारतन्त्र्यम्, तेन विनापि बन्धकत्वे प्रलयादौ बन्धप्रसङ्गात् । निबन्धना चेदिति पाठे प्रकृतिनिबन्धना बद्धता चेदिति योज्यम् ॥ १८ ॥

[भा०] साक्षात् प्रकृतिनिमित्तकत्वमपि बन्धस्यापाकरोति—प्रकृति० ।

ननु प्रकृतिनिमित्ताद् बन्धो भवत्विति चेन्न; यतस्तस्या अपि बन्धकत्वे संयोगपारतन्त्र्यमुत्तरत्र (१।१९) वक्ष्यमाणमस्ति । संयोगविशेषं विनापि बन्धकत्वे प्रलयादावपि दुःखबन्धप्रसङ्गादित्यर्थः । प्रकृतिनिबन्धना चेदिति पाठे तु प्रकृतिनिबन्धना चेद् बन्धनेत्यर्थः ॥ १८ ॥

[ भा० सा० ] साक्षात्प्रकृतिनिमित्तकत्वं बन्धस्यापाकरोति— प्रकृतीति । प्रकृतिरूपाद् निबन्धनाद् निमित्ताद् बन्ध इति चेत्, यतस्तस्या अपि न बन्धकत्वे संयोगविशेषपारतन्त्र्यम् । अन्यथा प्रलयादावपि दुःखबन्धप्रसङ्ग इति भावः । वस्तुतो नैमित्तिकत्वे दुःखस्य ज्ञानाद्युपायोच्छेद्यत्वं न घटेत; अनागतावस्थसूक्ष्मदुःखस्य यावद्द्रव्यभावित्वादिति बोध्यम् ॥ १८ ॥

## न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥१९॥

[वृ०] यदि प्रकृत्यादिनिबन्धन आत्मनो बन्धो नास्ति, स्वभावेनापि नास्ति, तर्हि मोक्षशास्त्रोपदेशो व्यर्थः स्यादित्यत आह—न नित्य० ।

शुद्धेति गुणासङ्गी । बुद्धेति स्वच्छः । तद्योगः बन्धयोगः । तद्योगादृते प्रकृतियोगादृते । अविवेकं विना नात्मनः कदापि बन्धः, किन्तु अविवेकाद् बन्ध इत्यभिप्रायः । स च शास्त्रोपदेशान्नाम वेदितव्यः ॥ १९ ॥

[वृ० सा०] अथ यत्परतन्त्रा प्रकृतिर्बन्धकारणम् तस्मादेव संयोगविशेषादौपाधिको बन्धोऽग्निसंयोगाज्जलौष्ण्यवदिति सिद्धान्तं प्रसङ्गेनान्तराल एवावधारयति —न नित्येति । तद्योगादृते प्रकृतिसंयोगं विना, तद्योगः बन्धसम्पर्को न पुरुषस्येति शेषः । बन्धस्यौपाधिकत्वलाभाय वक्रोक्तिः । यदि बन्धः प्रकृतिसंयोगजन्यः स्यात्तर्हि पाकजरूपमग्निसंयोगवियोग इव प्रकृतिवियोगेऽप्यनुवर्तेत । अतश्च प्रकृतिवियोगे बन्धाभावादौपाधिक एव बन्धो न तु स्वाभाविको नैमित्तिको वेति सिद्धान्तरहस्यम् । एवञ्च संयोगनिवृत्तिरेव मोक्षाद् बन्धहानोपाय इत्यप्युक्तं भवति । स्मृतिश्च—

यथा ज्वलद्गृहाश्लिष्टं गृहं विच्छिद्य रक्ष्यते ।
तथा सदोषप्रकृतिविच्छिन्नोऽयं न शोचति ॥ इति ।

वैशेषिकाणामिव पारमार्थिको दुःखयोगो मा भूदिति वक्तुं पुरुषविशेषणम्—नित्येत्यादि । यथा स्वभावशुद्धस्य स्फटिकस्य रागयोगो न जपायोगं विना घटते, तथैव नित्यशुद्धादिस्वभावस्य पुरुषस्योपाधिसंयोगं विना दुःखसम्बन्धो न घटते, स्वतो दुःखाद्यसम्भवात् । अत एवोक्तम्—

यथा हि केवलो रक्तः स्फटिको लक्ष्यते जनैः ।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः ॥ (कू० पु० २।२।२८) इति ।

तत्र नित्यशुद्धत्वं सदा पापपुण्यशून्यत्वम्, नित्यबुद्धत्वमलुप्तचिद्रूपत्वम् नित्यमुक्तत्वं सदा पारमार्थिकदुःखायुक्तत्वम् । प्रतिविम्बरूपदुःखयोगस्त्वपारमार्थिको वन्ध इति भावः । आत्मन उक्तरूपत्वं श्रुतिस्मृत्यादिप्रसिद्धमेव । अथमेवार्थः पतञ्जलिनाप्युक्तः—"द्रष्टृदृश्ययोः संयोगो हेयहेतुः" (यो० सू० २।१७) इति । नन्वेवं कालादिवत्प्रकृतिसंयोगस्यापि मुक्तामुक्तपुरुषसाधारणतया कथं बन्धहेतुत्वमिति चेन्न; जन्मापरनाम्नः स्वस्वबुद्धिभावापन्नप्रकृतिसंयोगविशेषस्यैवात्र संयोगशब्दार्थत्वात्, योगभाष्ये व्यासदेवेनैव व्याख्यातत्वात्, बुद्धिवृत्त्युपाधिनैव पुरुषे दुःखयोगाच्च । वैशेषिकादीनामिव भोगजनकतावच्छेदकत्वेनान्तःकरणसंयोगे वैजात्यं चास्माकमपीष्टम्, तेन न सुषुप्त्यादौ वन्धप्रसङ्गः । स्वत्वञ्च स्वभुक्तिवृत्तिवासनावत्त्वम् । वृत्तितत्संस्कारप्रवाहोऽप्यनादिस्तेन स्वस्वाम्यभावव्यवस्थेति दिक् । कश्चित्तु प्रकृतिपुरुषयोः संयोगाङ्गीकारे पुरुषस्य परिणामसङ्गौ प्रसज्येयातामतोऽत्राविवेक एव योगशब्दार्थो न तु संयोग इत्याह, तन्न; तद्योगोऽप्यविवेकादिति सूत्रेणाविवेकस्य योगहेतुतायां एव सूत्रकारेण वक्ष्यमाणत्वात् । किञ्च, विवेकाभावरूपस्याविवेकस्य संयोगत्वे प्रलयादावपि प्रकृतिपुरुषसंयोगत्वेन भोगाद्यापत्तिः । मिथ्याज्ञानरूपस्याविवेकस्य संयोगत्वे च आत्माश्रयः, पुंप्रकृतिसंयोगस्य ज्ञानादिहेतुत्वादिति । तस्मादविवेकातिरिक्तो योगो वक्तव्यः, स च संयोग एवान्यस्याप्रामाणिकत्वात् । संयोगश्च न परिणामः, सामान्यगुणातिरिक्तधर्मोत्पत्त्यैव परिणामित्वव्यवहारात् । अन्यथा कूटस्थस्य सर्वगतत्वरूपविभुत्वानुपपत्तेः । नापि संयोगमात्रं सङ्गः, परिणामहेतुसंयोगस्यैव सङ्गशब्दार्थत्वात् । पद्मपत्रस्थजलेन पत्रासङ्गतायाः पुरुषासङ्गतायां दृष्टान्तत्वेन सङ्गशब्दस्यैवमर्थत्वनिर्णयात् । तस्मात् संयोगविशेष एवात्र बन्धाख्यहेयहेतुतया सूत्रकृदभिप्रेत इति गम्यते, इत्यलम् ॥ १९ ॥

[भा०] अतो यत्परतन्त्रा प्रकृतिर्बन्धकारणं सम्भवेत् तस्मादेव संयोगविशेषादौपाधिको बन्धोऽग्निसंयोगाज्जलौष्ण्यवदिति स्वसिद्धान्तमनेनैव प्रसङ्गेनान्तराल एवावधारयति—न नित्य० ।

तस्मात् तद्योगादृते प्रकृतिसंयोगं विना न पुरुषस्य तद्योगो बन्धसम्पर्कोऽस्ति, अपि तु स एव बन्धः । बन्धस्यौपाधिकत्वलाभाय नञ्द्वयेन वक्रोक्तिः । यदि हि बन्धः प्रकृतिसंयोगजन्यः स्यात् पाकजरूपवत्, तदा तद्वदेव तद्वियोगेऽप्यनुवर्तेत । न च द्वितीयक्षणादेर्दुःखनाशकत्वं कल्प्यम्, कारणनाशस्य कार्यनाशकतायाः क्लृप्तत्वेन तेनैवोपपत्ता-

वस्माभिस्तदकल्पनात्। वृत्तिर्हि दुःखादेरुपादानम्। अतो दीपशिखावत् क्षणभङ्गुराया वृत्तेराशुविनाशित्वेनैव तद्धर्माणां दुःखेच्छादीनां विनाशः सम्भवतीति। अतः प्रकृति-वियोगे बन्धाभावादौपाधिक एव बन्धो न तु स्वाभाविको नैमित्तिको वेति। तथा संयोग-निवृत्तिरेव साक्षाद्धानोपाय इत्यपि वक्रोक्तिफलम्। तथा च स्मृतिः—

यथाद् ज्वलगृहाश्लिष्टं गृहं विच्छिद्य रक्ष्यते।
तथा सदोषप्रकृतिविच्छिन्नोऽयं न शोचति॥ इति।

वैशेषिकाणामिव पारमार्थिको दुःखयोग इति भ्रमो मा भूदित्येतदर्थम्—नित्ये-त्यादि। यथा स्वभावशुद्धस्य स्फटिकस्य रागयोगो न जपायोगं विना घटते, तथैव नित्य-शुद्धादिस्वभावस्य दुःखसंयोगो न घटते, स्वतो दुःखाद्यसम्भवादित्यर्थः। तदुक्तं सौरे—

यथा हि केवलो रक्तः स्फटिको लक्ष्यते जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः॥ (सौ० पु० ११।३१)

इति। नित्यत्वं कालानवच्छिन्नत्वम्। शुद्धादिस्वभावत्वं च नित्यशुद्धत्वादिकम्। तत्र नित्यशुद्धत्वं सदा पापपुण्यशून्यत्वम्। नित्यबुद्धत्वमलुप्तचिद्रूपत्वम्। नित्यमुक्तत्वं सदा पारमार्थिकदुःखायुक्तत्वम्। प्रतिबिम्बरूपदुःखयोगस्त्वपारमार्थिको बन्ध इति भावः। आत्मनो नित्यशुद्धत्वादौ च श्रुतिः—"अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुः" (नृ० ता० उ० २।९।९) इत्यादि।

नन्वस्य मननशास्त्रत्वादत्रार्थे युक्तिरपि वक्तव्येति चेत्, सत्यम्; 'न तद्योगस्तद्यो-गादृते' इत्यनेन नित्यशुद्धत्वादौ युक्तिरप्युक्तैव। तथाहि—आत्मनि नित्यत्वविभुत्वादिकं तावन्न्यायादिदर्शनेष्वेव साधितम्। तत्र नित्यस्य विभोरात्मनो यद्योगं विना दुःखाद्य-खिलविकारैर्योगो न भवति, तस्यैवान्तःकरणस्य सर्वसम्मतकारणस्य तदुपादानकारणत्व-मेव युक्तं लाघवात्, सर्वविकारेष्वन्तःकरणस्यैवान्वयव्यतिरेकाभ्यां च; न पुनरन्तर्विका-रेषु मनसो निमित्तत्वमात्मनश्चोपादानत्वं युक्तम्, कारणद्वयकल्पने गौरवात्।

नन्वहं सुखी दुःखी करोमीत्याद्यनुभवादात्मनो विकारोपादानत्वसिद्धिरिति चेन्न, अहं गौर इत्यादिभ्रमशतान्तःपातित्वेनाप्रामाण्यशङ्कास्कन्दिततयोक्तप्रत्यक्षाणामुक्ततर्कानु-गृहीतानुमानापेक्षया दुर्बलत्वात्। आत्मनश्चिन्मात्रत्वे तु युक्तिरग्रे वक्ष्यत इति दिक्।

अस्य सूत्रस्यैवार्थः कारिकयाऽप्युक्तः—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः॥ (सां० का० २०)

इति। कर्तृत्वमत्र दुःखित्वादिसकलविकारोपलक्षणम्। तथा योगसूत्रेऽप्यस्य सूत्रस्यैवार्थ उक्तः "द्रष्टृदृश्ययोः संयोगो हेयहेतुः" (२।१७) इति। गीतायां च "पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्" (गी० १३।२१) इति। प्रकृतिस्थः प्रकृतौ संयुक्तः। तथा च श्रुतावपि—"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" (क० उ० १।३।४) इति।

न च कालादिवदेव प्रकृतिसंयोगोऽपि मुक्तामुक्तपुरुषसाधारणतया कथं बन्धहेतुरिति वाच्यम् ; जन्मापरनाम्नः स्वस्वबुद्धिभावापन्नप्रकृतिसंयोगविशेषस्यैवात्र संयोगशब्दार्थत्वात् ; योगभाष्ये (२।२३-२४) व्यासैस्तथा व्याख्यातत्वात् ; बुद्धिवृत्त्युपाधिनैव पुरुषे दुःखयोगाच्च। वैशेषिकादिवदेव भोगजनकतावच्छेदकत्वेनान्तःकरणसंयोगे वैजात्यं चास्माभिरपीष्टम्। अतो न सुषुप्त्यादौ बन्धप्रसङ्गः। स्वत्वं च स्वस्वभुक्तवृत्तिवासनावत्त्वम् ; यत्किञ्चिद्वृत्तितत्संस्कारप्रवाहोऽप्यनादिरतः स्वस्वामिभावव्यवस्थितिः।

कश्चित् तु 'प्रकृतिपुरुषयोः संयोगाङ्गीकारे पुरुषस्य परिणामसङ्गौ प्रसज्येयाताम्। अतोऽत्राविवेक एव योगशब्दार्थो न तु संयोग इति', तन्न; "तद्योगोऽप्यविवेकाद्" (१।५५) इति सूत्रेणाविवेकस्य योगहेतुताया एव सूत्रकारेण वक्ष्यमाणत्वात्। "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः", "तस्य हेतुरविद्या" (यो० सू० २।२३-२४) इति सूत्राभ्यां पातञ्जलेऽपि संयोगहेतुत्वस्यैवाविद्याया उक्तत्वाच्च।

किञ्च, विवेकाभावरूपस्याविवेकस्य संयोगत्वे प्रलयादावपि प्रकृतिपुरुषसंयोगसत्त्वेन भोगाद्यापत्तिः, मिथ्याज्ञानरूपस्याविवेकस्य च संयोगत्वे आत्माश्रयः, पुम्प्रकृतिसंयोगस्याज्ञानादिहेतुत्वादिति। तस्मादविवेकातिरिक्तो योगो वक्तव्यः। स च संयोग एव, अन्यस्याप्रामाणिकत्वात्। संयोगश्च न परिणामः सामान्यगुणातिरिक्तधर्मोत्पत्त्यैव परिणामित्वव्यवहारात्। अन्यथा कूटस्थस्य सर्वगतत्वरूपविभुत्वानुपपत्तेः। नापि संयोगमात्रं सङ्गः, परिणामहेतुसंयोगस्यैव सङ्गशब्दार्थताया वक्तव्यत्वादिति।

ननु तथापि कथं नित्ययोः प्रकृतिपुरुषयोर्महदादिहेतुरनित्यः संयोगो घटत इति चेन्न; प्रकृतेः परिच्छिन्नापरिच्छिन्नत्रिविधगुणसमुदायरूपतया परिच्छिन्नगुणावच्छेदेन पुरुषसंयोगोत्पत्तेः सम्भवात्। श्रुतिस्मृतिसिद्धत्वात् प्रकृतिसंयोगक्षोभयोरिति। एतच्च योगवार्त्तिके (२।१८-२०) प्रपञ्चितमस्माभिः।

अपरस्तु–'भोग्य-भोक्तृयोग्यतैवानयोः संयोगः' इत्याह। तदपि न, योग्यताया नित्यत्वे ज्ञाननिवर्त्यत्वानुपपत्तेः। अनित्यत्वे किमपराद्धं संयोगेन, परिणामित्वापत्तेः समानत्वात्, भोग्यभोक्तृयोग्यतायाः संयोगरूपत्वस्य सूत्रादिष्वनुक्तत्वेनाप्रामाणिकत्वाच्चेति। तस्मात् संयोगविशेष एवात्र बन्धाख्यहेयहेतुतया सूत्रकाराभिप्रेत इति स्वयं बन्धहेतुरवधारितः॥ १९॥

[ भा० सा० ] प्रकृतिसंयोगादृते पुरुषस्य न तद्योगो बन्धयोगः, किन्तु तत्सम्बन्धरूपौपाधिक एव बन्ध इत्याशयः। संयोगश्चाविवेकमूलकः सम्बन्धविशेषः स्वस्वामिबुद्धिरूपपरिणामहेतुः, तस्यैव सङ्गपदार्थत्वात्। यदि बन्धः प्रकृतिसंयोगजन्यः स्यात्, तदा पाकजरूपवत्तद्वियोगेऽप्यनुवर्तेत। न च द्वितीयक्षणादेर्दुःखनाशकत्वम्, दुःखाद्युपादानतयोपादाननाशस्य कार्यनाशकतया दृष्टेन दीपशिखावत् क्षणभङ्गुरायास्तस्या नाशेनैव तन्नाशोपपत्तिः, तेषां तन्नाशकत्वकल्पने मानाभावात्। तस्मात्प्रकृतिवियोगे बन्धाभावादौपाधिकः स इति भावः। एवं च तन्निवृत्तिरेव साक्षाद्धानोपाय इति सूचितम्।

यथा ज्वलद्गृहाश्लिष्टं गृहं विच्छिद्य रक्ष्यते ।
तथा सदोषप्रकृतिविच्छिन्नोऽयं न शोचति ॥ इति स्मृतेः ।

वैशेषिकादीनामिव पारमार्थिकदुःखभ्रमनिरासाय— नित्येत्यादि । नित्यशुद्धस्त्रिगुणासङ्गी पापपुण्यशून्यो वा । नित्यबुद्धत्वमलुप्तचिद्रूपत्वम् । नित्यमुक्तत्वं बिम्बरूपपारमार्थिकदुःखायुक्तत्वम् । प्रतिबिम्बरूपदुःखयोगस्त्वपारमार्थिकः । नित्यत्वं च कालानवच्छिन्नत्वम् । एवं च स्वभावशुद्धस्य स्फटिकस्य रक्तत्वयोगो यथा जपायोगं विना न, एवं नित्यशुद्धादिस्वभावस्य पुरुषस्योपाधिसंयोगं विना न दुःखयोगः, विमोदुःखाद्यसंभवात्, सामान्यगुणातिरिक्तधर्मोत्पत्तौ परिणामित्वापत्तेः । एवं च कूटस्थनित्यत्वानुपपत्तिरिति भावः । तथा च श्रुतिः— "अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो निरञ्जनः" (नृ० ता० उ० २।९।९) इत्यादि । युक्तिरपि न्यायादिदर्शनेष्वेव नित्यविभुत्वेन सिद्धस्यात्मनोऽन्तःकरणयोगं विना दुःखाद्यखिलविकारयोगभावेन सर्वसंमतकारणस्यान्तःकरणस्यैव दुःखाद्युपादानकारणत्वं युक्तम्, न पुनस्तस्य निमित्तत्वमात्मनश्चोपादानत्वम्, कारणद्वयकल्पने गौरवात् । अहं सुखीत्यादि प्रत्यक्षं च अहं गौर इत्यादिवदप्रामाण्यशङ्का-कलङ्कितत्वेन दुर्बलम् । चिन्मात्रत्वे च युक्तिरग्रे वक्ष्यते । तदुक्तं गीतायाम्—

"पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्" ( गी० १३।२१ ) इति ।

प्रकृतिस्थः प्रकृत्या विवेकमापन्नः । भोगजनकतावच्छेदकतयान्तःकरणसंयोगे वैजात्याङ्गीकारान्न सुषुप्त्यादौ दुःखादिभोगः ।

ननु विभ्वोः प्रकृतिपुरुषयोः कथं महदादिहेतुरनित्यः संयोग इति चेत्, न; प्रकृतेः परिच्छिन्नापरिच्छिन्नत्रिविधगुणसमुदायरूपतया परिच्छिन्नगुणावच्छेदेन संयोगोत्पत्तिसम्भवात् । ॥ १९ ॥

## नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥२०॥

[वृ०] अथाऽविद्यया तस्य बन्धो भविष्यतीत्याह — नाविद्यातो० ।

अविद्या हि विद्याप्रागभावः प्रध्वंसाभावो वा, उभयथाप्यवस्तु । न चावस्तुना वस्तुन आत्मनः संभवति बन्धः । तस्मादविद्यया बन्ध इति व्यपदेशमात्रम्, न तत्त्वम् ॥ २० ॥

[वृ० सा०] इदानीमन्याभिप्रेतान् बन्धहेतून् निरस्यति—नाविद्येति । अद्वैतवादिनामविद्याया अप्यवस्तुत्वेन तया बन्धानुपपत्तिः, नहि स्वाप्नरज्ज्वा बन्धनं दृष्टम् ॥ २० ॥

[भा० इदानीं नास्तिकाभिप्रेता अपि बन्धहेतवो निराकर्तव्याः । तत्र—

'षडभिज्ञो दशबलोऽद्वयवादो विनायकः (अ० को० १।१।९)

इत्यनुशासनादिसिद्धाः क्षणिकविज्ञानात्मवादिनो बौद्धप्रभेदा एवमाहुः—नास्ति प्रकृत्यादि बाह्यं वस्त्वन्यत्, येन तत्संयोगादौपाधिकस्तात्त्विको वा बन्धः स्यात् । किन्तु क्षणिकविज्ञानसन्तानमात्रमद्वितीयं तत्त्वम्, अन्यत् सर्वं सांवृतिकम्, संवृतिश्चाविद्या मिथ्याज्ञानाख्या, तत एव बन्ध इति । तथा च तैरुक्तम्—

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासनिदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ (प्र० वा० २।३५४) इति।
तन्मतमादौ निराक्रियते—नाविद्यातो० ।

अपिशब्दः पूर्वोक्तकालाद्यपेक्षया। अविद्यातोऽपि न साक्षाद्बन्धयोगः, अद्वैतवादिनां तेषामविद्याया अप्यवस्तुत्वेन तया बन्धानौचित्यात्। नहि स्वाप्नरज्ज्वा बन्धनं दृष्टमित्यर्थः। बन्धोऽप्यवास्तव इति चेन्न; स्वयं सूत्रकारेण निराकरिष्यमाणत्वात्। विज्ञानाद्वैतश्रवणोत्तरं बन्धनिवृत्तये योगाभ्यासाभ्युपगमविरोधाच्च । बन्धमिथ्यात्वश्रवणेन बन्धनिवृत्त्याख्यफलसिद्धत्वनिश्चयात् तदर्थं बह्वायाससाध्य-योगाङ्गानुष्ठानासम्भवादिति॥ २०॥

[भा० सा०] इदानीं नास्तिकाभिमतान् बन्धहेतून्निराकरोति। तत्र क्षणिकविज्ञानाद्वैतवादिनो नास्तिकाः। नास्ति प्रकृत्यादिकं वाह्यं वस्तु, येन तत्सङ्गादौपाधिको वन्धः, किन्तु क्षणिकविज्ञानसन्तानमात्रमद्वितीयं तत्त्वम्, अन्यत्सर्वं सांवृतिकम्। संवृतिश्च अविद्या मिथ्याज्ञानाख्या। तत्संवन्धादेव वन्धः, तत्संवन्धनाशश्च प्रारब्धसमाप्त्यनन्तरमेवेति जीवन्मुक्तस्य भोगानुपपत्तिः, इति तन्मतं निराकरोति—नाविद्येति।

अपिः पूर्वोक्तकालाद्यपेक्षया। अविद्यातोऽपि न साक्षाद् बन्धः, अद्वैतवादिनां तेषामविद्याया अवस्तुत्वात्। नहि स्वाप्नरज्ज्वा वन्धनं दृष्टमिति भावः। अत्राविद्यापदेन वासनारूपाऽविद्या बोध्या। न च बन्धोऽप्यवास्तवः, विज्ञानाद्वैतश्रवणोत्तरबन्धमिथ्यात्वश्रवणेनैव बन्धनिवृत्त्याख्यफलस्य सिद्धत्वनिश्चयेन तदर्थे बह्वायाससाध्ययोगाभ्यासाभ्युपगमविरोधात्॥ २०॥

## वस्तुत्वे सिद्धान्तहानिः ॥२१॥

[वृ०] विद्यातोऽन्याऽविद्या वस्तुभूताभविष्यतीत्यत आह—वस्तुत्वे०। अस्माकं तावदविद्यायाः सद्रूपत्वे नाशाभावादनिर्मोक्षः। अद्वैतिनां त्वविद्या न तात्त्विकी। द्वैतवादिनां त्वनादेर्वस्तुभूतस्य तस्य नाशाभावादुपदेशानर्थक्यम्॥ २१॥

[वृ० सा०] अविद्याया वस्तुत्वे त्वाह—वस्तुत्व इति। स्पष्टम्॥ २१॥

[भा०, वस्तुत्वे०। यदि चाविद्याया वस्तुत्वं स्वीक्रियते, तदा स्वाभ्युपगतस्याविद्याऽनृतत्वस्य हानिरित्यर्थः॥ २१॥

[भा० सा०] तदेवाह—वस्तुत्व इति। त्वदभ्युपगताविद्यातुच्छत्वहानिरित्यर्थः ॥२१॥

## विजातीयद्वैतापत्तिश्च ॥२२॥

[वृ०] दूषणान्तरमाह—विजातीय०। यद्यविद्या वस्तुभूताऽनादिस्तदा नित्यात्मतुल्या। अनात्मत्वे विजातीयद्वैतत्वम्॥२२।

[वृ० सा०] विजातीयेति। तर्हि सजातीयविजातीयद्वैताभाव इष्यते॥ २२॥

[भा०] विजातीय० । किञ्चाविद्याया वस्तुत्वे क्षणिकविज्ञानसन्तानाद् विजातीयं द्वैतं प्रसज्येत; तच्च भवतामनिष्टमित्यर्थः । सन्तानान्तःपातिव्यक्तीनामानन्त्यात् सजातीयद्वैतमिष्यत एवेत्याशयेन विजातीयेति विशेषणम् । नन्वविद्याया अपि ज्ञानविशेषत्वाद् अविद्ययापि कथं विजातीयद्वैतमिति चेन्न; ज्ञानरूपाविद्याया बन्धोत्तरकालीनतया वासनारूपाविद्याया एव तैर्बन्धहेतुत्वाभ्युपगमात् । वासना तु ज्ञानाद् विजातीयैवेति ।

एभिश्च सूत्रैर्ब्रह्ममीमांसासिद्धान्तो निराक्रियत इति भ्रमो न कर्तव्यः, ब्रह्ममीमांसायां केनापि सूत्रेणाविद्यामात्रतो बन्धस्यानुक्तत्वात् । "अविभागो वचनाद्" ( ब्र० सू० ४।२।१६ ) इत्यादिसूत्रैर्ब्रह्ममीमांसाया अभिप्रेतस्याविभागलक्षणाद्वैतस्याविद्यादिवास्तवत्वेऽप्यविरोधाच्च ।

यत् तु वेदान्तिब्रुवाणामाधुनिकस्य मायावादस्यात्र लिङ्गं दृश्यते, तत् तेषामपि विज्ञानवाद्येकदेशितया युक्तमेव—

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥ (प० पु० ६।२६३।७०)

इत्यादिपद्मपुराणस्थशिववाक्यपरम्पराभ्यः, न तु तद्वेदान्तमतम्—
'वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्' (प० पु० ६।२६३।७३)

इति तद्वाक्यशेषादिति । मायावादिनोऽत्र च न साक्षात् प्रतिवादित्वम्, विजातीयेतिविशेषणवैयर्थ्यात् । मायावादे सजातीयाद्वैतस्याप्यनभ्युपगमादिति । अस्मादत्र प्रकरणे विज्ञानवादिनां बन्धहेतुव्यवस्थैव साक्षान्निराक्रियते ।

अनयैव च रीत्या नवीनानामपि प्रच्छन्नबौद्धानां मायावादिनामविद्यामात्रस्य तुच्छस्य बन्धहेतुत्वं निराकृतं वेदितव्यम् । अस्मन्मते त्वविद्यायाः कूटस्थनित्यतारूपपारमार्थिकत्वाभावेऽपि घटादिवद् वास्तवत्वेन वक्ष्यमाणसंयोगद्वारा बन्धहेतुत्वे यथोक्तबाधानवकाशः । एवं योगमते ब्रह्ममीमांसामतेऽपीति ॥ २२ ॥

[भा० सा०] युक्त्यन्तरमाह—विजातीयेति । तच्च तवानिष्टम्, संतानान्तःपातिव्यक्तीनामानन्त्यात्सजातीयद्वैतमिष्यत एवेत्यत उक्तम्—विजातीयेति । अत एवात्र मायावादिनो न खण्डनम्, तेन सजातीयद्वैतस्याप्यनङ्गीकारेण विजातीयेति विशेषणवैयर्थ्यात् ॥ २२ ॥

## विरुद्धोभयरूपा चेत् ॥२३॥

[वृ०] अथान्यपदार्थानामीदृशी गतिः, अविद्या तु वस्तुभूताऽनादिरपि विनङ्क्ष्यतीत्याह—विरुद्धो० । अन्योऽन्यविरुद्धरूपा, अनादिरपि नाशात् प्रागभावरूपा ॥ २३ ॥

[वृ० सा०] शङ्कते—विरुद्धेति । अविद्या न सती, येन विजातीयद्वैतापत्तिः; नाप्यसती कार्योपलम्भात्, किन्तु सदसद्रूपेति चेत् ॥ २३ ॥

[भा०] पुनः शङ्कते—विरुद्धो० । ननु विरुद्धं यदुभयं सदसच्च सदसद्विलक्षणं वा, तद्रूपैवाविद्या वक्तव्या, अतो न तया पारमार्थिकाद्वैतभङ्ग इति चेदित्यर्थः । स्वयं तु

सदसत्त्वं प्रपञ्चस्य यद् वक्ष्यति तत्र सत्त्वासत्त्वे व्यक्ताव्यक्तत्वरूपत्वाद् विरुद्धे एव न भवत इति सूचयितुं विरुद्धपदोपादानम् ॥ २३ ॥

[भा० सा०] शङ्कते—विरुद्धेति। वस्तुभूता नश्वरा चेति सदसदुभयरूपा सदसद्भिन्नलक्षणा वाऽतो न पारमार्थिकाद्वैतभङ्ग इति चेत्, इत्यर्थः। स्वमते प्रपञ्चस्य सदसत्त्वरूपत्वं व्यक्तत्वाव्यक्तत्वरूपतयेति न विरुद्धमिति भावः ॥ २३ ॥

## न तादृक्पदार्थाप्रतीतेः ॥२४॥

[वृ०] उत्तरमाह—न तादृक्०। न कुत्रापि केनापि तादृक् पदार्थः प्रतीतः ॥२४॥

[वृ० सा०] न तादृगिति। विवादास्पदे हि वस्तुनि दृष्टान्त आवश्यक इति भावः। किञ्च, अविद्यायाः साक्षादेव दुःखयोगाख्यबन्धहेतुत्वे ज्ञानेनाविद्याक्षयानन्तरं प्रारब्धभोगानुपपत्तिः, बन्धस्य कारणनाशात्। सिद्धान्ते तु प्रकृतेः संयोगद्वारैव बन्धहेतुत्वात्, जन्माख्यस्य च संयोगस्य प्रारब्धसमाप्तिं विना न नाश इति न दोषः ॥ २४ ॥

[भा०] परिहरति—न तादृक्०। सुगमम्। अपि चाविद्यायाः साक्षादेव दुःखयोगाख्यबन्धहेतुत्वे ज्ञानेनाविद्याक्षयानन्तरं प्रारब्धभोगानुपपत्तिः, बन्धपर्यायस्य दुःखभोगस्य कारणनाशादिति। अस्मदादिमते तु नायं दोषः, संयोगद्वारैवाविद्याकर्मादीनां बन्धहेतुत्वात्। जन्माख्यश्च संयोगः प्रारब्धसमाप्तिं विना न नश्यतीति ॥ २४ ॥

[भा० सा०] उत्तरयति—नेति। अप्रतीतिरप्रसिद्धिः, किं चाविद्यायां साक्षाद् दुःखयोगाख्यबन्धहेतुत्वे ज्ञानेनाविद्यानाशे बन्धपर्यायदुःखभोगकरणनाशात् प्रारब्धसमाप्तिं विनाऽनाशान्न दोषः ॥ २४ ॥

## न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ॥२५॥

[वृ०] यद्येवं तर्हि प्रकृत्यादीनां षट्पदार्थवैधर्म्यात् कुत्र प्रवेशः, इत्यत्राह—न वयं०। स्पष्टम् ॥ २५ ॥

[वृ० सा०] पुनः शङ्कते—न वयमिति। न वयं नियतपदार्थवादिनः। अतोऽप्रतीतोऽपि सदसदात्मकः सदसद्विलक्षणो वा विद्यापदार्थ इत्यङ्गीकुर्मः, मानसिद्धत्वात्। आदिपदान्नैयायिकः। स हि षोडशपदार्थवादी ॥ २५ ॥

[भा०] पुनः शङ्कते—न वयं०। ननु वैशेषिकाद्यास्तिकवन्न वयं षट्षोडशादिनियतपदार्थवादिनः। अतोऽप्रतीतोऽपि सदसदात्मकः सदसद्विलक्षणो वा पदार्थोऽविद्येत्यभ्युपेयमिति भावः ॥ २५ ॥

[भा० सा०] पुनः शङ्कते—न वयमिति। षडित्युपलक्षणं षोडशेत्यस्यापि, एवं च सदसद्विलक्षणस्य सदसद्रूपस्य वा तादृशपदार्थस्याभ्युपगमे न दोष इति भावः ॥ २५ ॥

## अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् ॥२६॥

[वृ०] यद्यनियताः पदार्थाः, कथं पञ्चविंशतितत्त्वमित्यत्राह—अनियतत्वे०।

षडेव पदार्था इति न ब्रूमः, न तु युक्तिसिद्धमपि नाङ्गीकुर्मः। अन्यथा बालोन्मत्ततुल्यत्वम्। तथा च—

नह्याप्तवादान्नभसो निपतन्ति महासुराः।
युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः॥ ( वि० पु० ३।१८।२९) ॥२६॥

[वृ० सा०] परिहरति—अनियतेति। पदार्थनियमो मास्तु, तथापि भावाभावविरोधेन युक्तिविरुद्धस्य सदसदात्मकपदार्थस्य संग्रहो भवद्वचनमात्राच्छिष्याणां न सम्भवति। अन्यथा बालोन्मत्ताद्युक्तस्याप्ययौक्तिकस्य संग्रहः स्यादित्यर्थः। श्रुत्यादिकं मानं चात्र नास्ति, तस्यान्यथा-सिद्धेरिति भावः॥ २६॥

[भा०] परिहरति --अनियतत्वे०। पदार्थनियमो मास्तु, तथापि भावाभावविरोधेन युक्तिविरुद्धस्य सदसदात्मकपदार्थस्य संग्रहो भवद्वचनमात्राच्छिष्याणां न सम्भवति। अन्यथा बालकाद्युक्तस्याप्ययौक्तिकस्य संग्रहः स्यादित्यर्थः। श्रुत्यादिकं चास्मिन्नर्थे स्फुटं नास्ति; युक्तिविरोधेन च सन्दिग्धश्रुतेरर्थान्तरसिद्धिरिति भावः।

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी॥ (सौ० पु० ११।२९)

इत्यादिसौरादिवाक्यानां त्वयमर्थः—

विकारजननीं मायामष्टरूपामजां ध्रुवाम्॥ ( चू० उ० ३ )

इत्यादिश्रुतिसिद्धा मायाख्या प्रकृतिः परमार्थसती न भवति, पूर्वपूर्वविकाररूपैः प्रतिक्षणमपायात्, नापि परमार्थासती भवत्यर्थक्रियाकारित्वेन शशशृङ्गविलक्षणत्वात्, नापि तदुभयात्मिका विरोधाच्च; अतः सदसद्भ्यामनिर्वाच्या सत्येवेत्यसत्येवेति च निर्धार्योपदेष्टुमशक्या। किन्तु मिथ्याभूता लयाख्यव्यावहारिकासत्त्ववती परिणामिनित्य-तारूपव्यावहारिकसत्त्ववती चेति। एतच्चाग्रे (१।६१,६५) प्रपञ्चयिष्याम इति दिक्। एतत्प्रकरणोपन्यस्तानि च सर्वाण्येव दूषणान्याधुनिकेऽपि मायावादे योजनीयानि॥२६॥

[मा० सा०] परिहरति—अनियतेति। भावाभावविरोधेन युक्तिविरुद्धोऽयं पदार्थ इति भावः।

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी॥ ( सौ० पु० ११।२९ )

इत्यादि सौरादिवाक्यानां त्वयमर्थः—अर्थक्रियाकारित्वेन शशशृङ्गविलक्षणत्वान्ना-सद्रूपा, न च सद्रूपा, ज्ञाने नाशात्। नोभयरूपा विरोधात्, सत्येवासत्येवेति च निर्धार्यो-पदेष्टुमशक्यत्वादनिर्वाच्या मिथ्याभूता। पारमार्थिकसत्यत्वरहिता सनातनी व्यावहारिक-सत्यत्ववती चेतीति न दोषः॥ २६॥

## नानादिविषयोपरागनिमित्तोऽप्यस्य ॥२७॥

[वृ०] बौद्धपक्षं निरस्यति—नानादि०।

अस्य आत्मनोऽनादिविषयवासनानिमित्तो बन्धो भविष्यतीति न। अस्माकं

तावद्वासनया सहात्मनः सम्बन्धाभावाद् बन्धाभावः। बौद्धनयेऽपि स्थिरस्यात्मनोऽसत्त्वाद्वासनाया अपि तावत्कालं स्थित्यभावात् को बन्ध इति ॥ २७ ॥

[वृ० सा०] केचिन्नास्तिका आहुः—सन्ति बाह्या विषयाः क्षणिकास्तेषां वासनया जीवस्य बन्ध इति, तद् दूषयति—नानादीति। अस्य पुरुषस्य प्रवाहरूपेणानादिकार्या या विषयवासना, तन्निमित्तकोऽपि बन्धो न सम्भवति। निमित्ततोऽप्यस्येति पाठस्तु सुगमः ॥२७॥

[भा०] अपरे नास्तिका आहुः—क्षणिका बाह्यविषयाः सन्ति, तेषां वासनया जीवस्य बन्ध इति, तदपि दूषयति—नानादि०।

अस्यात्मनः प्रवाहरूपेणानादिर्या विषयवासना तन्निमित्तकोऽपि बन्धो न सम्भवतीत्यर्थः। निमित्ततोऽप्यस्येति पाठस्तु समीचीनः ॥ २७ ॥

[भा० सा०] अन्ये नास्तिकाः क्षणिका बाह्यविषयाः सन्तीति तेषां वासनया जीवस्य बन्ध इति वदन्ति। तद् दूषयति—नानादीति।

अस्यात्मनः प्रवाहरूपेणानादिर्या बाह्यविषयवासना तत्संबन्धतोऽपि न बन्ध इत्यर्थः ॥२७॥

**न बाह्याभ्यन्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि देशभेदात्, स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ॥२८॥**

[वृ०] बाह्यवस्तूपरागाद्वासनासन्तानेनात्मसन्तानस्य बन्धो भविष्यतीत्यत्र आह—न बाह्या०।

यद्युच्येत रविजलभाजनयोरपि दृष्ट उपरञ्ज्योपरञ्जकभावः, तन्न; तत्र रश्मिसम्बन्धादुपरागः, अत्र तु तत्सम्बन्धो नास्ति। वासनाद्वारेण चेत्, न; तावत्कालासत्त्वात् कथं सम्बन्धः? सन्तानस्य चेत्, यदि सन्तानी व्यतिरिक्तः, सिद्धान्तहानिः। अथाऽव्यतिरिक्तः, तथापि तेन तत्र किञ्चिदाधेयम्। आधानं त्वशक्यम्, क्षणिकत्वात्। अनाधाने किं तेनाऽसत्कल्पेनेति ॥ २८ ॥

[वृ० सा०] कुत इत्याह—न बाह्येति। तन्मते हि परिच्छिन्नो देहान्तरस्थ एवात्मा तस्याभ्यन्तरस्य न बाह्यविषयेण सहोपरञ्ज्योपरञ्जकभावोऽपि, कुतः? स्रुघ्नस्थपाटलिपुत्रस्थयोरिव देशव्यवधानात्। संयोगे सत्येव हि वासनाख्य उपरागो दृष्टः, यथा मञ्जिष्ठावस्त्रयोः। अपिना स्वमते सङ्गाभावः समुच्चीयते ॥ २८ ॥

[भा०] अत्र हेतुमाह—न बाह्या०।

तन्मते परिच्छिन्नो देहान्तःस्थ एवात्मा, तस्याभ्यन्तरस्य न बाह्यविषयेण सहोपरञ्ज्योपरञ्जकभावोऽपि सम्भवति। कुतः, स्रुघ्नस्थपाटलिपुत्रस्थयोरिव देशव्यवधानादित्यर्थः। संयोगे सत्येव हि वासनाख्य उपरागो दृष्टः, यथा मञ्जिष्ठावस्त्रयोः, यथा वा पुष्पस्फटिकयोरिति। अपिशब्देन स्वमतेऽपि संयोगाभावादिः समुच्चीयते। स्रुघ्नपाटलिपुत्रौ विप्रकृष्टौ देशविशेषौ ॥ २८ ॥

[भा० सा०] हेतुमाह—न बाह्येति। तन्मते देहपरिच्छिन्न एव देहान्तःस्थ आत्मा। तस्याभ्यन्तरस्य न बाह्यविषयेण सहायं संबन्धोऽपि देशव्यवधानात्। संयोगे सत्येव वासनाख्य उपरागो दृष्टः, मञ्जिष्ठापुष्पाभ्यां वासःस्फटिकयोरिवेति भावः ॥ २८ ॥

## द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥२९॥

[वृ०] मा भूद्वासनया आन्तरोपरागः, आत्मनो व्यापित्वाद् बाह्यैकदेशेनात्मसम्बन्धादुपरागो भविष्यतीत्यत्राह—द्वयोरेक०।

एकात्मवादिनां सर्वदा लब्धोपरागादनिर्मोक्ष इति नास्ति व्यवस्था। नानात्मवादिनां तु सर्वेषां सर्वार्थैः सम्बन्धादेकदा तुल्यज्ञानोत्पादान्न व्यवस्था ॥ २९ ॥

[वृ० सा०] नन्विन्द्रियाणामिवात्मनो विषयदेशे गमनाद्विषयसंयोगेन विषयोपरागः स्यात्तत्राह—द्वयोरिति। एकस्मिन् विषयदेशे संयोगेन लब्धादुपरागाद् बन्धो न सम्भवतीति शेषः। कुतः ? यस्माद् द्वयोर्बद्धमुक्तात्मनोर्न व्यवस्था, आत्मनो गमनसंयोगाङ्गीकारे मुक्तस्यापि बन्धापत्तिरित्यर्थः ॥ २९ ॥

[भा०] ननु भवतामिन्द्रियाणामिवास्माकमात्मनो विषयदेशे गमनाद्विषयसंयोगेन विषयोपरागो वक्तव्यस्तत्राह—द्वयोरेक०।

द्वयोर्बद्धमुक्तात्मनोरेकस्मिन् विषयदेशे लब्धविषयोपरागान्न बन्धमोक्षव्यवस्था स्यात्। मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥ २९ ॥

[भा० सा०] ननु इन्द्रियाणामिवात्मनो विषयदेशे गमनात् तत्संयोगेन विषयोपरागोऽस्त आह—द्वयोरिति। द्वयोर्बद्धमुक्तयोरेकस्मिन् विषयदेशे लब्धाद्विषयोपरागाद् बद्धमुक्तव्यवस्थाभाव इत्यर्थः ॥ २९ ॥

## अदृष्टवशाच्चेत् ॥३०॥

[वृ०] शङ्कते—अदृष्ट०। यद्यपि सर्वदा सम्बन्धात् सर्वत्र ज्ञानं प्रसज्येत, तथापि यस्यादृष्टेन यज्ज्ञानं जन्यते तदेव तस्य कारणमिति न सर्वत्र ज्ञानम् ॥ ३० ॥

[वृ० सा०] अत्र शङ्कते—अदृष्टेति। विषयसंयोगसाम्येऽप्यदृष्टवशादेवोपरागलाभ इति चेत् ॥ ३० ॥

[भा०] अत्र शङ्कते—अदृष्ट०। नन्वेकदेशसम्बन्धेन विषयसंयोगसाम्येऽप्यदृष्टवशादेवोपरागलाभ इति चेदित्यर्थः ॥ ३० ॥

[भा० सा०] शङ्कते—अदृष्टेति। विषयसंयोगसाम्येऽप्यदृष्टवशादिवोपरागक्वाचित्कत्वमिति चेदित्यर्थः ॥ ३० ॥

## न द्वयोरेककालायोगादुपकार्योपकारकभावः ॥३१॥

[वृ०] दूषणमाह—न द्वयो०। न द्वयोः कर्तृ-भोक्त्रोरेककालायोगाद् एककालिकासत्त्वेन नोपकार्योपकारकभावः सम्भवति ॥ ३१ ॥

[वृ० सा०] न द्वयोरिति। तव मते कर्तृभोक्त्रोर्भेदात्, एककालासम्बन्धाच्च नैवोपकार्योपकारकभावः, न कर्तृनिष्ठाददृष्टाद् भोक्तृनिष्ठविषयोपरागः सम्भवतीत्यर्थः॥ ३१ ॥

[भा०] परिहरति—न द्वयो०। क्षणिकत्वाभ्युपगमाद् द्वयोः कर्तृभोक्त्रोरेककालासत्त्वेन नोपकार्योपकारकभावः। न कर्तृनिष्ठादृष्टेन भोक्तृनिष्ठो विषयोपरागः सम्भवतीत्यर्थः॥ ३१ ॥

[भा० सा०] परिहरति—न द्वयोरिति। क्षणिकत्वाभ्युपगमाद् द्वयोः कर्तृभोक्त्रोरेककालासत्त्वेन न कर्तृनिष्ठाददृष्टाद्भोक्तृनिष्ठो विषयोपरागः संभवतीति भावः॥ ३१ ॥

## पुत्रकर्मवदिति चेत्॥ ३२ ॥

[वृ०] शङ्कते—पुत्रकर्म०। यथा पुत्रेष्टियागादिना अविद्यमानस्य पुत्रस्य संस्कारद्वारा उपकारः क्रियते, तथाऽत्रापि भविष्यति॥ ३२ ॥

[वृ० सा०] ननु पितृनिष्ठेन गर्भाधानादिकर्मणापि पुत्रस्योपकारो यथा भवति तद्वद् व्यधिकरणेनैवादृष्टेन भोक्तुर्विषयोपरागः स्यादिति शङ्कते—पुत्रकर्मेति। पुत्रकर्मवत् पुत्रसंस्कारकर्मवत्॥ ३२ ॥

[भा०] शङ्कते—पुत्रकर्म०। ननु यथा पितृनिष्ठेन पुत्रकर्मणा पुत्रस्योपकारो भवति, तद्वद् व्यधिकरणेनैवादृष्टेन विषयोपरागः स्यादित्यर्थः॥३२॥

[भा० सा०] पुनः शङ्कते—पुत्रेति। पुत्रकर्म पुत्रेष्ट्यादि, तेन। यथा पितृनिष्ठेन पुत्रस्योपकारो भवति, तद्वद् व्यधिकरणेनैवादृष्टेन विषयोपरागः स्यादित्यर्थः॥ ३२ ॥

## नास्ति हि तत्र स्थिर एक आत्मा यो गर्भाधानादिकर्मणा संस्क्रियेत॥३३॥

[वृ०] सिद्धान्तमाह—नास्ति हि०। स्वमते त्वात्माऽनादिर्नित्यः शुद्धो बुद्धः, तदुद्देशेन हविस्त्यागादयो युज्यन्ते इति॥ ३३ ॥

[वृ० सा०] दृष्टान्तासिद्ध्या परिहरति—नास्तीति। त्वन्मते गर्भाधानादिकर्मणापि पुत्रस्योपकारो न घटते। हि यस्माद् गर्भाधानमारभ्य स्थिर एक आत्माऽऽधानादिसंस्कारकर्मभिः संस्कार्यो नास्ति। आस्तिकमते तु स्थैर्याभ्युपगमाद्वचनाच्च तत्र पुत्रनिष्ठादृष्टस्यैवान्तरत्तेः पुत्रोपकारसंभव इति भावः॥ ३३ ॥

[भा०] दृष्टान्तासिद्ध्या परिहरति—नास्ति०।

पुत्रेष्ट्यापि तन्मते पुत्रस्योपकारो न घटते। हि यस्मात् तत्र तन्मते गर्भाधानमारभ्य जन्मपर्यन्तं स्थायी एक आत्मा नास्ति, यो जन्मोत्तरकालीनकर्माधिकारार्थं पुत्रेष्ट्या संस्क्रियेतेति दृष्टान्तस्याप्यसिद्धिरित्यर्थः। अस्मन्मते तु स्थैर्याभ्युपगमात् तत्राप्यदृष्टसामानाधिकरण्यमेवास्ति। पुत्रेष्ट्या जनितेन पुत्रोपाधिनिष्ठादृष्टेनैव पुत्रोपाधिद्वारा पुत्रस्योपकारादित्यस्मन्मतेऽपि न दृष्टान्तासिद्धिरिति भावः॥ ३३ ॥

[भा० सा०] दृष्टान्तोऽप्यनुपपन्न एवेत्याह—नास्तीति। तत्र गर्भाधानमारभ्य जन्मपर्यन्त एक आत्मा नास्ति, यो जन्मोत्तरकालीनकर्माधिकारसिद्धयर्थं पुत्रेष्ट्यादिना गर्भाधानादिसंस्कारेण वा संस्क्रियेतेति दृष्टान्तासिद्धिरिति भावः। अस्मन्मते तु स्थैर्याभ्युपगमात् पुत्रेष्ट्या जनितेन पुत्रोपरधिनिष्ठादृष्टेनोपाधिद्वारा पुत्रोपकारान्न दोषः ॥ ३३ ॥

## स्थिरकार्यासिद्धेः क्षणिकत्वम् ॥३४॥

[वृ०] आत्मा अस्थिरबोध इत्याह—स्थिरकार्या०।

सत्त्वमर्थक्रियाकारित्वम्, तच्च क्रमाक्रमाभ्यां व्याप्तम्, तौ चाक्षणिके न सम्भवतः, अतस्तौ क्षणिकत्वमापादयतः ॥ ३४ ॥

[वृ० सा०] ननु क्षणिको बन्धोऽनियतकारणकोऽभावकारणकोऽकारणक एव वाऽस्त्वित्याशयेन पुनः प्रत्यवतिष्ठते—स्थिरेति। बन्धस्येति शेषः। तथा चाकारणक एवास्त्वित्याशयः। बन्धादिकं क्षणिकम्, सत्त्वात्, दीपशिखावदिति प्रयोगः। न च घटादौ व्यभिचारः, पक्षसमत्वात् ॥ ३४ ॥

[भा०] ननु बन्धस्यापि क्षणिकत्वादनियतकारणकोऽभावकारणको वा बन्धोऽस्त्वित्याशयेनापरो नास्तिकः प्रत्यवतिष्ठते—स्थिरकार्या०।

बन्धस्येति शेषः। भावस्तूक्त एव। अत्रायं प्रयोगः—विवादास्पदं बन्धादि क्षणिकं सत्त्वाद्दीपशिखादिवदिति। न च घटादौ व्यभिचारस्तस्यापि पक्षसमत्वात्। एतदेवोक्तं स्थिरकार्यासिद्धेरिति ॥ ३४ ॥

[भा० सा०] ननु बन्धस्यापि क्षणिकत्वमित्यपरो नास्तिकः प्रत्यवतिष्ठते—स्थिरेति। बन्धस्येति शेषः। विवादास्पदं बन्धादि क्षणिकम्, सत्त्वात्, दीपशिखावद् इति प्रयोगः। घटादिकमपि पक्ष एवेति न व्यभिचारः ॥ ३४ ॥

## न प्रत्यभिज्ञाबाधात् ॥३५॥

[वृ०] परिहरति—न प्रत्य०।

यद्यपि सहकारिसद्भावासद्भावाभ्यां करणाकरणन्यायैः स्थिरसिद्धिः समाधेया, तथापि सर्ववाद्यविवादसिद्धत्वात् 'स एवायम्' इत्यबाधितप्रत्यभिज्ञाबाध उक्तः। एतदन्यत्र प्रपञ्चितमिति नेह प्रतन्यते ॥ ३५ ॥

[वृ० सा०] एतदेवोक्तं स्थिरकार्यासिद्धेरित्यनेन। दूषयति—नेति। न कस्यापि क्षणिकत्वम्। यदद्राक्षं तदेव स्पृशामीत्यादि प्रत्यभिज्ञानुगृहीतेन बन्धादिकं स्थिरं सत्त्वाद् घटादिवदिति प्रत्यनुमानेन क्षणिकत्वस्य बाधात् ॥ ३५ ॥

[भा०] समाधत्ते—न प्रत्य०।

न कस्यापि क्षणिकत्वमिति शेषः। यदेवाहमद्राक्षं तदेवाहं स्पृशामीत्यादिप्रत्यभिज्ञया स्थैर्यसिद्धेः क्षणिकत्वस्य बाधात्। प्रतिपक्षानुमानेनेत्यर्थः। तद्यथा—बन्धादि स्थिरं सत्त्वाद् घटादिवदिति अस्मन्मत एवानुकूलतर्कसत्त्वेन न सत्प्रतिपक्षता। प्रदीपादौ च सूक्ष्मानेकक्षणानाकलनेन क्षणिकत्वभ्रम एव परेषामिति ॥ ३५ ॥

[भा० सा०] परिहरति—नेति । न कस्यापि क्षणिकत्वं यदेवाहमद्राक्षं तदेवाहं स्पृशामीति प्रत्यभिज्ञया स्थैर्यसिद्धेः । बन्धादिकं स्थिरं, सत्त्वाद् घटादिवत्, इति सत्प्रतिपक्षानुमानेन स्थिरत्वम् । प्रत्यभिज्ञा चानुकूलतर्कं इति वानुमानं दुर्बलम्, प्रदीपादौ सूक्ष्मानेकक्षणानां कलनेन क्षणिकत्वभ्रम एव परेषामिति भावः ॥ ३५ ॥

## श्रुतिन्यायविरोधाच्च ॥३६॥

[वृ०] दूषणान्तरमाह—श्रुति० ।

श्रुतिराह 'अस्ति जन्मान्तरफलोपभोक्ता पुरुषः' । न्यायश्च 'को नामानुपभोग्ये कर्मणि तत्साधने वा प्रवर्तते' । यद्युच्येत कारुणिकानां विरागात् प्रवृत्तिर्दृश्यते, तन्न, तत्रापि तदुपकारेण स्वधर्मलाभात्; धर्मानभिसन्धानेऽपि मोक्षसाधनत्वात् ॥ ३६ ॥

[वृ० सा०] श्रुतीति—"सदेव सौम्येदमग्र आसीत्" (छा० उ० ६।२।१), "तम एवेदमग्र आसीत्" (मै० आ० ५।२) "कथमसतः सज्जायेत" (छा० उ० ६।२।२) इत्यादिश्रुतिप्रपञ्चस्य भावयुक्तिभिः कारणकत्वायोगेन क्षणिकत्वस्यापि श्रुतियुक्तिविरुद्धत्वात् ॥ ३६ ॥

[भा०] श्रुति० । "सदेव सोम्येदमग्र आसीत्", ( छा० उ० ६।२।१ ) "तम एवेदमग्र आसीद्" ( मै० आ० ५।२ ) इत्यादिश्रुतिभिः, "कथमसतः सज्जायेत" ( छा० उ० ६।२।२ ) इत्यादिश्रौतादियुक्तिभिश्च कार्यकारणात्मकाखिलप्रपञ्चे क्षणिकत्वानुमानस्य विरोधान्न क्षणिकत्वं कस्यापीत्यर्थः ॥ ३६ ॥

[भा० सा०] श्रुतीति—"सदेव सौम्येदमग्र आसीद्" (छा० उ० ६।२।१) इति श्रुतिः । "कथमसतः सज्जायेत" (छा० उ० ६।२।२) इत्यादि युक्त्या चाखिलप्रपञ्चे क्षणिकत्वानुमानं विरुद्धमित्यर्थः ॥ ३६ ॥

## दृष्टान्तासिद्धेश्च ॥३७॥

[वृ०] दूषणान्तरमाह—दृष्टान्ता० ।

सर्वस्यैव पक्षप्रवेशान्नास्ति दृष्टान्तः । अप्रवेशे स एव स्थिरः । अथ तस्यापि क्षणिकत्वमन्यहेतुना प्रसाध्यताम्, तत्रापि दृष्टान्तासिद्धिरिति ॥ ३७ ॥

[वृ० सा०] दृष्टान्तेति—दृष्टान्ते दीपशिखादौ क्षणिकत्वस्यासिद्धेः सूक्ष्मानेकक्षणानाकलनेन क्षणिकत्वभ्रम एव तत्र भवतीति भावः ॥ ३७ ॥

[भा०] दृष्टान्ता० । प्रदीपशिखादिदृष्टान्ते क्षणिकत्वासिद्धेश्च न क्षणिकत्वानुमानमित्यर्थः ॥ ३७ ॥

[भा० सा०] दूषणान्तरमाह—दृष्टान्तेति । सर्वस्यैव पक्षकोटिप्रवेशादिति भावः ॥३७॥

## युगपज्जायमानयोर्न कार्यकारणभावः ॥३८॥

[वृ०] क्षणिकपक्ष एवार्थक्रिया न सम्भवतीत्याह—युगपज्जाय० । सव्येतरविषाणयोरिव युगपज्जायमानयोः स्वलक्षणार्थक्रिययोः । एतच्चासकृदुक्तम् ॥ ३८ ॥

[वृ० सा०] किञ्च, क्षणिकत्ववादे मृद्घटादिस्थले कार्यकारणभावो नोपपद्येत । न च नास्त्येव स इति वाच्यम्; कार्यार्थिनः प्रवृत्त्यन्यथानुपपत्त्या तत्सिद्धेरित्यभिप्रेत्याह—युगपदिति ॥

[भा०] किञ्च, क्षणिकतावादिनां मृद्घटादिस्थलेऽपि कार्यकारणभावः प्रवृत्ति-निवृत्त्यन्यथानुपपत्तिसिद्धो नोपपद्येतेत्याह—युगपज्जाय० ।

किं युगपज्जायमानयोः कार्यकारणभावः, किं वा क्रमिकयोः ? तत्र नाद्यः, विनिगमकाभावादिभ्य इति भावः ॥ ३८ ॥

[भा० सा० ] क्षणिकपक्षेऽर्थक्रियाऽसंभवमप्याह—युगपदिति । सव्येतरविषाणवदिति भावः ॥ ३८ ॥

## पूर्वापाये उत्तरायोगात् ॥ ३९ ॥

[ वृ० ] पूर्वापरकालभावितामात्रात् कार्यकारणभावो भविष्यतीत्यत्राह–पूर्वा० । भवेदेवम्, यद्यतिशयाधायकत्वं स्यात्; तदेव त्वशक्यं क्षणिकत्वादिति ॥ ३९ ॥

[वृ० सा०] किं मृद्घट्योर्युगपज्जायमानयोः कार्यकारणभावः, किं वा क्रमिकयोः ? नाद्यः; विनिगमकाभावात्, घटार्थिनो मृदि प्रवृत्त्यनुपपत्तेश्च । नान्त्य इत्याह—पूर्व इति । पूर्वस्य कारणस्यापायकाले उत्तरस्य कार्यस्यायोगात् । उपादानकारणानुगततयैव हि कार्यानुभवः, स च क्षणिकत्ववादे न सम्भवति ॥ ३९ ॥

[भा०] नान्त्य इत्याह—पूर्वापाये० ।

पूर्वस्य कारणस्यापायकाले उत्तरस्य कार्यस्योत्पत्त्यनौचित्यादपि न क्षणिकवादे सम्भवति कार्यकारणभावः । उपादानकारणानुगततयैव कार्यानुभवादित्यर्थः ॥ ३९ ॥

[ भा० सा० ] ननु पूर्वापरकालभाविता मात्रेण भविष्यतीत्यत आह—पूर्वेति । उपादान-कारणस्य कार्यसहभावेनैव कारणत्वादिति भावः ॥ ३९ ॥

## तद्भावे तदयोगादुभयव्यभिचारादपि न ॥ ४० ॥

[ वृ० ] एतत् स्पष्टयति—तद्भावे० ।

हेतुकाले कार्याभावादुभयव्यभिचारादपि न कार्यकारणभावः । आस्तां तावदर्थ-क्रियाकारित्वम्, अयं हेतुरिदं कार्यमिति व्यवहारोऽपि न स्यात् ॥ ४० ॥

[वृ० सा०] तद्भाव इति । पूर्वस्य भावकाले उत्तरस्यासम्बन्धादुभयव्यभिचारादपि न कार्यकारणभाव इति शेषः । यदोपादेयं तदोपादानम्, यदोपादानाभावस्तदोपादेयाभाव इत्यन्वयव्यतिरेकौ हि उपादेयोपादानयोः कार्यकारणभावग्राहकौ, तौ च क्षणिकत्वेन क्रमिकयोस्तयोर्विरुद्धकालत्वान्न सम्भवतः ॥ ४० ॥

[भा०] उपादानकारणमधिकृत्यैव दूषणान्तरमाह—तद्भावे० ।

यतः पूर्वस्य भावकाले उत्तरस्यासम्बन्धोऽत उभयव्यभिचारादन्वयव्यतिरेक-व्यभिचारादपि न कार्यकारणभाव इत्यर्थः । तथाहि—यदोपादेयोत्पत्तिस्तदोपादानम्, यदा चोपादानाभावस्तदोपादेयोत्पत्त्यभाव इत्यन्वयव्यतिरेकेणैवोपादानोपादेययोः कार्य-

कारणभावग्रहो भवति । तत्र क्षणिकत्वेन क्रमिकयोस्तयोर्विरुद्धकालतयान्वयव्यतिरेक-व्यभिचाराभ्यां न कार्यकारणभावसिद्धिरिति ॥ ४० ॥

[ भा० सा० ] उपादानकारणमधिकृत्यैव दूषणान्तरमाह—तद्भाव इति । पूर्वापरयोर्भावकाले तदन्यतायोगादुभयोरन्वयव्यतिरेकाभावान्न कार्यकारणभावः । यत्सत्त्वे यत्सत्त्वं यदभावे यदभाव इत्यन्वयव्यतिरेकाभ्यां हि तद्ग्रहः । तत्र क्षणिकत्वेन क्रमिकयोस्तयोर्विरुद्ध-कालतयोभयत्रापि व्यभिचारान्न कार्यकारणभावसिद्धिरिति भावः ॥ ४० ॥

## पूर्वभावमात्रे न नियमः ॥ ४१ ॥

[ वृ० ] अथ हेतोः कार्यकाले सत्त्वमप्रयोजकम्, पूर्वकालभाविता‌मात्रेण भविष्यतीत्यत्र आह—पूर्वभाव० ।

किं भिन्नसन्तानस्य, एकसन्तानस्य वा ? भिन्नसन्तानस्य चेत्, अतिप्रसक्तिः । एकसन्तानस्य चेत्, निरन्वयध्वंसः । तस्य हि भिन्नसन्तानेन तुल्यत्वान्न नियमः । अन्वयश्च नास्तीत्युक्तम् । अथाविद्यमानस्यापि हेतुता दृश्यते, यथेषुक्षेपकस्य इषुक्षेपा-नन्तरमपस्मारादिना मरणम्, पश्चादिषुविद्धस्य मरणकर्तृत्वम्; तन्न, तत्रापि मरणे व्यापारद्वारेणान्वयात् ॥ ४१ ॥

[वृ० सा०] ननु निमित्तकारणस्येवोपादानस्यापि पूर्वभावमात्रेणैव कारणतास्तु; तत्राह—पूर्वेति । न नियम इति । इदमेवोपादानमिति न नियमः स्यात्, निमित्तकारणानामपि पूर्वभावाविशेषात् । इदमेव हि निमित्तोपादानयोर्विभागो लोकसिद्धः ॥ ४१ ॥

[भा०] ननु निमित्तकारणस्येवोपादानकारणस्यापि पूर्वभावमात्रेणैव कारणताऽस्तु, तत्राह—पूर्वभाव० ।

पूर्वभावमात्राभ्युपगमे चेदमेवोपादानमिति नियमो न स्यान्निमित्तकारणानामपि पूर्वभावाविशेषात् । उपादाननिमित्तयोर्विभागः सर्वलोकसिद्ध इत्यर्थः ॥ ४१ ॥

[ भा० सा० ] ननु निमित्तकारणस्येवोपादानकारणस्यापि पूर्वभावमात्रेणैव कारणतास्तु, तत्राह—पूर्वेति । उपादाननिमित्तयोर्न स्यादित्यर्थः ॥ ४१ ॥

## न विज्ञानमात्रं बाह्यप्रतीतेः ॥ ४२ ॥

[वृ०] बाह्यवस्तूपरागाद् बन्ध इत्युक्तम् । ननु बाह्यं च वस्तु नास्ति, विज्ञानात्म-कत्वाज्जगत इति विज्ञानवादिमतं निरस्यति—न विज्ञान० ।

न विज्ञानमात्रं जगत् । तथा सति 'अहं घटः' इति प्रत्ययः स्यात्, न तु 'अयं घटः' इति । वासनाविशेषादिति चेत्, न; बाह्याभावे घटवासनाया एवासत्त्वात् कथं विशेषः ? किञ्च; वासनाया अपि कारणं वासनैव ? उत बाह्यवासनापि ? वासनापीति पक्षेऽन्यस्यापि सत्त्वात् स एव बाह्योऽर्थः । ननु नास्त्येव बाह्योऽर्थः, अवयवातिरिक्तस्याऽवयविनोऽभावात् । तथा हि—अवयवावयविनोरेकत्वम्, एकत्वप्रतीतेः । चलत्य-वयवेऽवयवी चलति । अल्पावयवे न चलत्यवयवी । 'न चलति' इति विरुद्धधर्माध्यासेन

भेदान्नैकत्वम् । एवं रक्तारक्तावृतानावृततद्देशातद्देशत्वादिदोषा उदाहार्याः । मा भूदवयवी, तथापि न बाह्यार्थापलापः, परमाणुपुञ्जस्यैव स्थूलत्वेन ग्रहणात् । न अवयविना हि कार्येण परमाणुरनुमातव्यः, तदभावात् क्वानुमानम् । परमाणूनामतीन्द्रियत्वात् पुञ्जेऽपि किञ्चिदतिशयानाधानात् 'स्थूलोऽयम्' इति प्रत्ययो भ्रान्त इति विज्ञानमात्रं जगदिति । अत्रोच्यते—अवयवावयविनोर्भेदात् । अपि च द्वयोरन्यत्वान्नावयवकम्पेऽवयवी कम्पते । यत्र तु बहुतरावयवकम्पस्तत्रावयवी कम्पत एव । एवं रक्तारक्तादिविरोधेऽपि सिद्धान्ता वक्तव्याः । तस्मात् सिद्धो बाह्योऽर्थः । वासनैवेति पक्षे सर्वदा ज्ञानोत्पत्तिरिति ॥ ४२ ॥

[वृ० सा०] अथ विज्ञानातिरिक्तवस्त्वभावेन बन्धोऽपि मिथ्येति न कारणान्वेषणमिति विज्ञानवादिनां मतं निराकरोति—नेति ॥ ४२ ॥

[भा०] अपरे तु नास्तिका आहुः—'विज्ञानातिरिक्तवस्त्वभावेन बन्धोऽपि विज्ञानमात्रं स्वप्नपदार्थवत् । अतोऽत्यन्तमिथ्यात्वेन न तत्र कारणमस्ति' इति । तन्मतमपाकरोति—न विज्ञान० ।

न विज्ञानमात्रं तत्त्वम्, बाह्यार्थानामपि विज्ञानवत् प्रतीतिसिद्धत्वादित्यर्थः ॥४२ ॥

[ भा० सा० ] अपरे नास्तिका आहुर्विज्ञानातिरिक्तवस्त्वभावेन बन्धः स्वाप्नपदार्थवदत्यन्तमिथ्या, अतो न तत्र कारणापेक्षेति । तन्निराकरोति—नेति । न विज्ञानमात्रं तत्त्वम्, बाह्यार्थानामपि तद्वत्प्रतीतिसिद्धत्वादित्यर्थः ॥ ४२ ॥

## तदभावे तदभावाच्छून्यं तर्हि ॥ ४३ ॥

[ वृ० ] निर्विषयस्य ज्ञानस्यादर्शनाद्विषयाभावाद् ज्ञानमपि नास्तीति शून्यवाद्याह—तदभावे० । विषयाभावे ज्ञानाभावाच्छून्यम्; स्वविषयत्वे कर्तृकर्मविरोध इति ॥ ४३ ॥

[वृ० सा०] स्वाप्नप्रतीतिदृष्टान्तेन विषयाभावेऽप्युपपत्तिस्तत्राह—तद्भाव इति । तर्हि बाह्याभावे शून्यं प्रसज्येत, कुतः ? बाह्याभावे विज्ञानाभावात् । प्रतीतिर्हि विषयसाधिका बाह्यप्रतीतिक्षेत्रविषयं साधयेत्, विज्ञानप्रतीतिरपि न विज्ञानं साधयेदिति भावः ॥ ४३ ॥

[भा०] ननु लाघवतर्केण स्वप्नादिदृष्टान्तैर्दृश्यत्वहेतुकमिथ्यात्वानुमानेन बाह्यवस्त्वनुभवो बाधनीयः, अत्र भवतां श्रुतिस्मृती अपि स्तः—"चिद्धीदं सर्वम्" (नृ० ता० उ० २।७), "तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः" (कू० पु० २।२।३९) इत्यादौ । इत्यतो दूषणान्तरमाह—तदभावे० ।

तर्हि बाह्याभावे शून्यमेव प्रसज्येत, न तु विज्ञानमपि । कुतः, तदभावे तदभावाद् बाह्याभावे विज्ञानस्याप्यभावप्रसङ्गाद्विज्ञानप्रतीतेरपि बाह्यप्रतीतिवदवस्तुविषयत्वानुमानसम्भवात्, विज्ञानप्रामाण्यस्य क्वाप्यसिद्धत्वाच्च, तथा विज्ञाने प्रमाणानामपि बाह्यतयापलापाच्चेत्यर्थः ।

नन्वनुभवे कस्यापि विवादाभावेन नास्ति तत्र प्रमाणापेक्षेति चेन्न; शून्यवादिनामेव तत्र विवादात्। अथासतापि प्रमाणेन वस्तु सिद्धयति, विषयाबाधस्यैव प्रामाण्यप्रयोजकत्वान्न तु प्रमाणपारमार्थिकत्वस्येति चेन्न; एवं सत्यसत्प्रमाणस्य सर्वत्र सुलभत्वेन क्वाप्यर्थे प्रमाणान्वेषणस्यायोगात्। अथासन्मध्येऽपि व्यावहारिकसत्त्वरूपो विशेषः प्रमाणादिष्वेष्टव्य इति चेत्; आयातं मार्गेण। किं पुनरिदं व्यावहारिकत्वम्? यदि परिणामित्वं तदास्माभिरपीदृशमेव सत्त्वं ग्राह्यग्राहकप्रमाणानामिष्टम्। शुक्तिरजतादितुल्यत्वस्यैव प्रपञ्चेऽस्माभिः प्रतिषेधात्। यदि पुनः प्रतीयमानतामात्रं तदापि तादृशैरेव प्रमाणैर्बाह्यार्थस्यापि सिद्धिप्रसङ्गात्। लाघवतर्कानुगृहीतेन यथाकथञ्चिदनुमानेनैव बाधस्तु विज्ञानेऽपि समान इति।

एतेनाधुनिकानां वेदान्तिब्रुवाणामपि मतं विज्ञानवादतुल्ययोगक्षेमतया निरस्तम्। विज्ञानमात्रसत्यताप्रतिपादकश्रुतिस्मृतयस्तु कूटस्थत्वरूपां पारमार्थिकसत्तामेव बाह्यानां प्रतिषेधन्ति, नतु परिणामित्वरूपां व्यावहारिकसत्तामपि।

यत् तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्॥
वस्तु राजेति यल्लोके यत् तु राजभटादिकम्।
तथान्यच्च नृपेत्थं तु न सत् सङ्कल्पनामयम्॥

( वि० पु० २।१३।९४-९५ )

इति विष्णुपुराणादिभ्यः परिणामित्वस्यैवासत्तात्वावगमादिति। सङ्कल्पनामयम् - ईश्वरादिसङ्कल्परचितम्। एतेन—"विज्ञानमयमेवैतदशेषमवगच्छत" (वि० पु० ३।१८।१६) इत्यादिना विष्णुपुराणे मायामोहरूपिणा विष्णुनाऽसुरेभ्योऽपि तत्त्वमेवोपदिष्टम्। ते त्वनधिकारादिदोषैर्विपरीतार्थग्रहणेन विज्ञानवादिनो नास्तिका बभूवुरित्यवगन्तव्यम्। तदेतत् सर्वं ब्रह्ममीमांसाभाष्ये (१।१।२-४) मायावादनिरसनप्रसङ्गतो विस्तारितमस्माभिः॥ ४३॥

[ भा० सा० ] ननु लाघवतर्केण स्वप्नादिदृष्टान्तैर्दृश्यत्वहेतुकमिथ्यात्वानुमानेन बाह्यवस्त्वनुभवो बोधनीयस्तत्रभवताम्। श्रुतिरपि—"चिद्धीदं सर्वम्" (नृ० ता० उ० २।७), "तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः" इत्यादि, अतो दूषणान्तरमाह – तदभाव इति। बाह्याभावे विज्ञानस्याप्यभावात् शून्यमेव प्रसज्येतेत्यर्थः। बाह्यप्रतीतेरिव विज्ञानप्रतीतिरपि, शून्यवादिनां तत्प्रतीतौ विवादेनावस्तुविषयत्वानुमानसम्भवात्। ज्ञानप्रामाण्यस्य दृष्टान्ताभावेनासिद्धेः। तत्प्रमाणानां बाह्यतयोपलापसम्भवाच्चेति भावः। नन्वसतापि प्रमाणेन वस्तु सिद्धयति, विषयाबाधस्यैव प्रामाण्यप्रयोजकत्वं न तु प्रमाणसत्त्वमिति चेन्न; असत्प्रमाणस्य सर्वत्र सुलभत्वेन क्वाप्यर्थे प्रमाणान्वेषणायोगात्। अथासत्प्रमाणेऽपि व्यावहारिकसत्तारूपो विशेष एष्टव्य इति चेत्; किमिदं व्यावहारिकत्वम्? यदि परिणामित्वम्, तदसिद्धं न इष्टम्, तादृशस्य प्रपञ्चेऽस्माभिरङ्गीकारात्। शुक्तिरजतादितुल्यत्वस्यैव प्रपञ्चेऽस्माभिः प्रतिषेधात्। अथ प्रतीयमानतामात्रम्, तदा तादृक्प्रमाणैस्तादृशस्य बाह्यार्थस्यापि सिद्ध्यापत्तेः। उक्तश्रुतिरपि

कूटस्थत्वरूपां पारमार्थिकसत्तामेव बाह्येषु प्रतिषेधति, न तु परिणामित्वरूपां व्यावहारिकसत्तामिति दिक् ॥ ४३ ॥

## शून्यं तत्त्वम्, भावो विनश्यति, वस्तुधर्मत्वाद्विनाशस्य ॥४४॥

[ वृ० ]यदि भावरूपं तत्त्वं स्यात्तदा भावस्य नाशात्तत्त्वनाशेऽनिर्मोक्षः, वस्तुधर्मत्वाद्विनाशस्य वस्तुनोऽवश्यं विनाशात् ॥ ४४ ॥

[वृ० सा०] अस्तु तर्हि शून्यमेव तत्त्वमतश्च बन्धकारणान्वेषणं युक्तं तुच्छत्वादिति नास्तिकशिरोमणिः प्रत्यवतिष्ठते—शून्यमिति । शून्यमेव तत्त्वम्, यतः सर्वोऽपि भावो विनश्यति, यश्च विनाशी स मिथ्या, स्वप्नवत् । अतः सर्ववस्तूनामाद्यन्तयोरभावमात्रत्वान्मध्ये क्षणिकं सत्त्वं सांवृतिकम्, न पारमार्थिकम् ततः किं केन बध्येत । भावानां विनाशित्वे हेतुः—वस्तुधर्मत्वाद्विनाशस्येति । विनाशस्य वस्तुस्वभावत्वादित्यर्थः ॥ ४४ ॥

[भा०] नन्वेवं भवतु शून्यमेव तत्त्वम्, तदा सुतरामेव बन्धकारणान्वेषणं न युक्तम्, तुच्छत्वादिति नास्तिकशिरोमणिः प्रत्यवतिष्ठते—शून्यं० ।

शून्यमेव तत्त्वम् । यतः सर्वोऽपि भावो विनश्यति । यश्च विनाशी स मिथ्या स्वप्नवत् । अतः सर्ववस्तूनामाद्यन्तयोरभावमात्रत्वान्मध्ये क्षणिकसत्त्वं सांवृतिकम्, न पारमार्थिकं बन्धादि । ततः किं केन बध्येतेत्याशयः । भावानां विनाशित्वे हेतुर्वस्तुधर्मत्वाद्विनाशस्येति । विनाशस्य वस्तुस्वभावत्वात् । स्वभावं तु विहाय न पदार्थस्तिष्ठतीत्यर्थः ॥ ४४ ॥

[भा० सा०] अपरे नास्तिकशिरोमणयः शून्यमेव तत्त्वम्, तदा सुतरां बाधकारणान्वेषणं न युक्तम्, तुच्छत्वादिति प्रत्यवतिष्ठन्ते – शून्यमिति । शून्यमेव तत्त्वम् । यतः सर्वो भावो विनश्यति । यश्च विनाशी स तुच्छो मिथ्या स्वप्नवत्, तत्र हेतुर्वस्त्वित्यादि । नहि स्वभावं विहाय पदार्थस्तिष्ठतीत्यर्थः । सर्ववस्तूनामाद्यन्तयोरभावमात्रत्वान्मध्ये क्षणिकसत्त्वं सांवृतिकं न पारमार्थिकमतो बन्धादि न पारमार्थिकमित्यर्थः ॥ ४४ ॥

## अपवादमात्रमबुद्धानाम् ॥ ४५ ॥

[ वृ० ] समाधानमाह—अपवाद० ।

अभावो न नश्यतीति वाङ्मात्रं नतु तत्त्वम् । अबुद्धानामज्ञातशास्त्राणाम्, प्रागभावस्य विनाशदर्शनात्, सत्कार्यसिद्धौ भावस्याविनाशात् । तिरोभावे नाशशब्दप्रयोगेऽपि प्रकृतिपुरुषयोरनाशात् । नन्वभाव एव नास्ति, कुतस्तस्य नाशानाशचिन्ता ? कथं तर्हि अघटं भूतलमिति ज्ञानम् ? भूतलालम्बनं चेत्, घटवत्यपि भूतले तदभावज्ञानप्रसङ्गः; भूतलस्य तादवस्थ्यात् । केवलभूतलालम्बनमभावज्ञानम्, तच्च घटे सति कैवल्यं नास्तीति चेत्, किं भूतलस्वरूपमात्रं कैवल्यम्, तदतिरिक्तं वा ? यदि स्वरूपमात्रम्, घटे सत्यपि तस्य सद्भावादभावज्ञानं स्यात् । अतिरिक्तपक्षे स एवाऽभावः । अथ भूतलस्यैकाकित्वेऽभावव्यवहारः, घटे सति एकाकित्वं नास्तीति क्वाऽभावव्यवहारहेतुः ?

तन्न; एकाकित्वमेकत्वसंख्या वा, अन्यद्वा ? एकत्वसंख्या च घटवत्यपि भूतलेऽस्ति। अन्यदिति पक्षे स एवाभावः। विषयावैलक्षण्ये विज्ञानवैलक्षण्याभावात्। ननु भावाभावयोः सम्बन्धाभावात् कथमभावज्ञानमिति ? यथा घटोऽयमिति इन्द्रियान्वयव्यतिरेकाज्ज्ञानं तथाऽभावज्ञानमपि सकारणम्। कार्यदर्शनाद्धि कारणं परिकल्प्यते, न तु दृष्टकार्यपलापः शक्यते वक्तुम्। किञ्च, अनियतपदार्थवादित्वादस्माकं यथोपपन्नः सम्बन्धोऽपि कश्चिद् भविष्यतीति का नो हानिः। तस्मात् सिद्धोऽभाव इति ॥ ४५ ॥

[वृ० सा०] परिहरति—अपवादेति। भावत्वाद्विनाशित्वमिति मूढानामपवादमात्रं मिथ्यावाद एव, नाशकारणाभावेन निरवयवद्रव्याणां नाशासम्भवात्। किं बहुना, कार्याणामपि न विनाशसिद्धिः, घटो जीर्ण इति प्रत्ययेनेव घटोऽस्तीत्यादिप्रत्ययेनापि घटादेरतीताख्याया अवस्थाया एव सिद्धेः ॥ ४५ ॥

[भा०] परिहरति—अपवाद०।

भावत्वाद्विनाशित्वमिति मूढानामपवादमात्रं मिथ्यावाद एव, नाशकारणाभावेन निरवयवद्रव्याणां नाशासम्भवात्, कार्याणामपि विनाशासिद्धेश्च। घटो जीर्ण इति प्रत्ययवदेव घटोऽतीत इत्यादिप्रतीत्या घटादेरतीताख्याया अवस्थाया एव सिद्धेः। अव्यक्ततायाश्च कार्यातीतताभ्युपगमेऽस्मन्मतप्रवेश एव। किञ्च, विनाशस्य प्रपञ्चतत्त्वताभ्युपगमेऽपि विनाश एव बन्धस्य पुरुषार्थः सम्भवत्येवेति।

कश्चित् तु व्याचष्टे—"शून्यं तत्त्वमित्यज्ञानां कुत्सितवादमात्रम्, न पुनरत्र युक्तिरस्ति, प्रमाणसत्त्वासत्त्वविकल्पासहत्वात्। शून्ये प्रमाणाङ्गीकारे तेनैव शून्यताक्षतिः। अनङ्गीकारे प्रमाणाभावान्न शून्यसिद्धिः। स्वतःसिद्धौ च चिद्रूपताद्यापत्तिरित्यर्थः" इति।

न च—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता। ( मा० का० २।३२ )

सर्वशून्यं निरालम्बं स्वरूपं यत्र चिन्त्यते।
अभावयोगः स प्रोक्तो येनात्मानं प्रपश्यति ॥ ( शि० पु० ७।२।३७।६ )

इति श्रुतिस्मृतिभ्यामपि शून्यं तत्त्वतया प्रतिपाद्यत इति वाच्यम्; पुरुषाणां निरोधाद्यभावस्यैव तादृशीषु श्रुतिषु तत्त्वतयोक्तत्वात्, पूर्वोत्तरवाक्याभ्यां पुरुषस्यैव प्रकरणात्, विलीनविश्वचिदाकाशस्यैवैतादृशस्मृतिषु तत्त्वतया प्रतिपादनाच्च।

त्रैलोक्यं गगनाकारं नभस्तुल्यं वपुः स्वकम्।
वियद्गामि मनो ध्यायन् योगी ब्रह्मैव गीयते ॥

इत्यादिवाक्यान्तरैरेकवाक्यत्वात्। आकाशशून्ययोः पर्यायत्वादिति। मनोमहत्तत्त्वाद्यखिलान्तःकरणं वियद्गामि चिदाकाशे लीनम् ॥ ४५ ॥

[भा० सा०] परिहरति—अपवादेति । भावत्वाद्विनाशित्वमिति मूढानामपवादमात्रं मिथ्यावादः । नाशकारणाभावेन गगनादीनां नाशासम्भवाद् घटो जीर्ण इति प्रतीतिवद् घटो नष्ट इति प्रतीतेरतीतावस्थाविषयत्वात् । अव्यक्ततायाश्च कार्यतत्त्वतास्माकमिष्टैव । "सर्वं शून्यं निरालम्बम्" इत्यादिश्रुतिपु शून्यशब्दस्तु विलीनविश्वचिदाकाशपर इति बोध्यम् । किञ्च शून्यतावादः प्रमाणसत्त्वासत्त्वाभ्यां गलितगर्भः । शून्ये प्रमाणसत्त्वे तेनैव शून्यताक्षतिरसत्त्वे प्रमाणाभावान्न शून्यसिद्धिरिति दिक् ॥ ४५ ॥

## उभयपक्षसमानक्षेमत्वादयमपि ॥ ४६ ॥

[वृ० ] समाधानान्तरमाह—उभय० ।

अयमपि शून्यवादः क्षणिकपक्षविज्ञानपक्षतुल्यक्षेमत्वान्निराकार्यः । यथा प्रत्यक्ष-प्रत्यभिज्ञया क्षणिकनिराकरणम्, बाह्यवस्तुप्रत्यक्षाद् विज्ञाननिराकरणम्, तथाऽयमपि प्रत्यक्षेणैव समस्तविश्वदर्शनाच्छून्यवादो निराकार्यः ॥ ४६ ॥

[वृ० सा०] किञ्च—उभयेति । क्षणिक बाह्यपक्षेण विज्ञानमात्रपक्षेण च सह समान-क्षेमत्वादतुल्यनिरसनहेतुकत्वादयमपि पक्षो न सम्यक् । क्षणिकपक्षनिरासहेतुः प्रत्यभिज्ञादि-र्विज्ञानपक्षनिरासहेतुर्बाह्यप्रतीत्यादिश्चात्रापि समान इति भावः ॥ ४६ ॥

[भा०] दूषणान्तरमाह -उभय० ।

क्षणिकबाह्यविज्ञानोभयपक्षयोः समानक्षेमत्वात् तुल्यनिरसनहेतुकत्वादयमपि पक्षो विनश्यतीत्यनुषङ्गः । क्षणिकपक्षनिरासहेतुर्हि यत् प्रत्यभिज्ञानुपपत्त्यादिः शून्य-वादेऽपि समानः, तथा विज्ञानपक्षनिरासहेतुर्बाह्यप्रतीत्यादिरप्यत्र समान इत्यर्थः ॥४६॥

[भा० सा०] दूषणान्तरमाह —उभयेति । क्षणिकबाह्यपक्षविज्ञानपक्षाभ्यां समान-क्षेमत्वात्तुल्यनिरासहेतुकत्वादयमपि पक्षो विनश्यतीत्यर्थः । क्षणिकपक्षनिरासहेतुः प्रत्यभिज्ञानुप-पत्त्यादिर्विज्ञानपक्षनिरासहेतुर्बाह्यप्रतीत्यनुपपत्त्यादिः । सोऽत्रापि समान इत्यर्थः ॥ ४६ ॥

## अपुरुषार्थत्वमुभयथा ॥ ४७ ॥

[ वृ० ] दूषणान्तरमाह—अपुरुषार्थ० ।

यदि शून्यमभावः ? को हि स्वस्थात्मा अभावाय यतेत; मोक्षः पुरुषार्थ इति भावशब्दप्रयोगश्चानर्थकः स्यात् । अथ भावाभावव्यतिरिक्तं शून्यम् । एवम्भूतस्य वस्तुनोऽदर्शनादप्यपुरुषार्थत्वम् ॥ ४७ ॥

[वृ० सा०] यश्च तैः शून्येऽप्यस्यैव पुरुषार्थत्वमभ्युपेयते, तदपि दुर्घटमित्याह—अपुरुषेति । दुःखनिवृत्तिरूपतया दुःखनिवृत्तिसाधनतया वा शून्यस्य पुरुषार्थत्वं स्यात्; तच्च न घटते, स्वनिष्ठत्वेनैव सुखादीनां लोके पुरुषार्थत्वावगमात्, स्थिरस्य पुरुषस्य चानङ्गीकारा-दित्यर्थः ॥ ४७ ॥

[भा०] यदपि दुःखनिवृत्तिरूपतया तत्साधनतया वा शून्यतैवास्तु पुरुषार्थ इति तैर्मन्यते, तदपि दुर्घटमित्याह—अपुरुषा० ।

उभयथा स्वतः परतश्च शून्यतायाः पुरुषार्थत्वं न संभवति, स्वनिष्ठत्वेनैव सुखादीनां पुरुषार्थत्वात् । स्थिरस्य च पुरुषस्यानभ्युपगमादित्यर्थः ॥ ४७ ॥

[भा० सा०] शून्यतैव पुरुषार्थ इति तन्मतं दूषयति—अपुरुषेति । उभयथा दुःखनिवृत्तिरूपतया दुःखनिवृत्तिसाधनतया वा शून्यताया न पुरुषार्थत्वम्, स्वनिष्ठत्वेनैव सुखादीनां पुरुषार्थत्वात् । स्थिरस्य च पुरुषस्यानभ्युपगमादित्यर्थः ॥ ४७ ॥

## न, गतिविशेषात् ॥ ४८ ॥

[ वृ० ] शून्यवादिनं निराकर्तुं देहपरिमाण आत्मेति क्षपणकमतमाह—न, गति० । न शून्यं तत्त्वम्, शून्यस्य गत्यभावात् । दृश्यते च गतिः । तथा च श्रुतिः—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद् यमः" ( महा० वन० २९७।१७ ), "पापेन नरकं याति", "पुण्येन स्वर्गं याति", "ज्ञानेन ब्रह्मलोकं याति" इति ॥ ४८ ॥

[वृ० सा०] अन्यान्यपि सम्भाव्यबन्धकारणानि निरस्यति—नेति । शरीरप्रवेशादिरूपात् पुरुषस्य बन्धो नेत्यर्थः ॥ ४८ ॥

[भा०] तदेवं बन्धकारणविषये नास्तिकमतानि दूषितानि । इदानीं पूर्वनिरस्तावशिष्टान्यास्तिकसंभाव्यान्यप्यन्यानि बन्धकारणानि निरस्यन्ते—न गति० ।

प्रकरणाद् बन्धो लभ्यते । न, गतिविशेषात् शरीरप्रवेशादिरूपादपि पुरुषस्य बन्ध इत्यर्थः ॥ ४८ ॥

[भा० सा०] इदानीमन्यानि बन्धकारणान्यास्तिकसम्भाव्यानि निरस्यति—न, गतीति । प्रकरणाद् बन्धो लभ्यते । शरीरप्रवेशादिरूपाद् गतिविशेषादपि न पुरुषस्य बन्ध इत्यर्थः ॥ ४८ ॥

## निष्क्रियस्य तदसम्भवात् ॥ ४९ ॥

[ वृ० ] तद् दूषयति—निष्क्रियस्य० । क्रियाशून्यस्य पुरुषस्य गमनासम्भवात् ॥ ४९ ॥

[वृ० सा०] हेतुमाह— निष्क्रियेति । स्पष्टम् ॥ ४९ ॥

[भा०] अत्र हेतुमाह —निष्क्रियस्य० । निष्क्रियस्य विभोः पुरुषस्य गत्यसंभवादित्यर्थः ॥ ४९ ॥

[भा० सा०] हेतुमाह—निष्क्रियेति । निष्क्रियत्वं विभुत्वात् ॥ ४९ ॥

## मूर्तत्वाद् घटादिवत् समानधर्मापत्तावपसिद्धान्तः ॥ ५० ॥

[ वृ० ] निष्क्रियत्वमेवाह—मूर्तत्वाद० । मूर्ता घटादयः क्रियावन्तः, तत्तुल्यधर्मत्वे विनाशित्वादयमपसिद्धान्तः । किञ्च, जन्मान्तरसंचारे हस्तिकृमिदेहपरिमाणत्वात् सङ्कोचविकाशित्वेन सावयवत्वादनित्यत्वमिति ॥ ५० ॥

[वृ० सा०] ननु श्रुतिस्मृत्योर्गमनागमनश्रवणात् सक्रियत्वमेवास्तु, तथा च परिच्छिन्नत्वमपीत्यत आह—मूर्तत्वादिति । घटादिवन्मूर्तत्वात् परिच्छिन्नत्वात् तत्समानधर्माणां सावयवत्वविनाशित्वादीनामापत्तावास्तिकानामपसिद्धान्तः स्यादित्यर्थः ॥ ५० ॥

[भा०] ननु श्रुतिस्मृत्योरिहलोकपरलोकगमनागमनश्रवणात् पुरुषस्य परिच्छिन्नत्वमेवास्तु। तथा च श्रुतिरपि 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' ( श्वे० उ० ३।१३ ) इत्यादिरित्याशङ्कामपाकरोति—मूर्तत्वाद्०।

यदि च घटादिवत् पुमान् मूर्तः परिच्छिन्नः स्वीक्रियते, तदा सावयवत्वविनाशित्वादिना घटादिसमानधर्मापत्तावपसिद्धान्तः स्यादित्यर्थः ॥ ५० ॥

[भा० सा०] मध्यमपरिमाणत्वमात्मनो निरस्यति—मूर्तेति। मूर्तत्वं परिच्छिन्नत्वम्। जन्मान्तरसंचारे हस्तिकृमिदेहपरिमाणत्वात् संकोचविकासवत्त्वेन घटादिवत्सावयवत्वविनाशित्वापत्तावपसिद्धान्त आस्तिकानामित्यर्थः। अणुत्वे तु देहव्यापिज्ञानाद्यनुपपत्तिरिति बोध्यम् ॥५०॥

## गतिश्रुतिरप्युपाधियोगादाकाशवत् ॥ ५१ ॥

[ वृ० ] एवं चाङ्गुष्ठमात्रमित्यादिश्रुतिविरोधः, अत आह—गतिश्रुति०।

यथा घटाद्युपाधिभेदाद् घटे गच्छति घटाकाशं गच्छतीति ज्ञानम्, तथा गच्छति शरीरे शरीराद्यवच्छेदादात्मा गच्छतीति प्रतीतिः ॥ ५१ ॥

[वृ० सा०] आत्मनोऽपरिच्छिन्नत्वे गतिश्रुतिमुपपादयति—गतीति। "नित्यः सर्वगतः स्थाणुः" ( गी० २।२४ ) इत्यादिप्रमाणेनात्मनोऽपरिच्छिन्नत्वे गतिश्रुतिरौपाधिकगतिपरा व्याख्येया—

घटसंवृतमाकाशं नीयमाने यथा घटे।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ ( ब्र० वि० १३ ) इति श्रुतिः।
प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम्।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ॥ ( म० भा० शा० ३०३।४५ )

इत्यादिस्मृत्या गतेः प्रकृतिनिष्ठत्वावगमाच्च ॥ ५१ ॥

[भा०] गतिश्रुतिमुपपादयति—गतिश्रुति०।

या च गतिश्रुतिरपि पुरुषेऽस्ति सा विभुत्वश्रुतिस्मृतियुक्त्यनुरोधेनाकाशस्येवोपाधियोगादेव मन्तव्येत्यर्थः। तत्र च प्रमाणम्—

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ ( ब्र० वि० १३ )

बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः। ( श्वे० उ० ५।८ ) इत्यादिश्रुतिः। "नित्यः सर्वगतः स्थाणुः" ( गी० २।२४ ) इत्यादिका च स्मृतिः। मध्यमपरिमाणत्वे सावयवत्वापत्त्या विनाशित्वम्, अणुत्वे च देहव्यापिज्ञानाद्यनुपपत्तिरित्यादिश्च युक्तिरिति। अत एव—

प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम्।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा।
( म० भा० शा० ३०३।४५ )

इत्यादिस्मृतिभिः प्रकृतेरेव विशिष्य क्रियारूपा गतिः स्मर्यत इति ॥ ५१ ॥

[भा० सा०] "पापेन नरकं गच्छति" इत्यादिगतिश्रुतिमुपपादयति—गतीति। उपाधिरत्र प्रकृतिकार्यमन्तःकरणादिः, यथाकाशस्य घटादिः, तद्गमनेनैव गतिव्यवहार इति भावः ॥ ५१ ॥

## न कर्मणाप्यतद्धर्मत्वात् ॥ ५२ ॥

[वृ० ] किमुपाधिना, कर्मवैचित्र्यादेव तद्विशेषो भविष्यतीत्यत आह—न कर्मणा०। भवेदेवं यदि कर्म आत्मधर्मः स्यात्, न त्वात्मनः कश्चिद्धर्मोऽस्ति निर्गुणत्वात् ॥ ५२ ॥

[वृ० सा०] पूर्वं विहितनिषिद्धव्यापाररूपकर्मणा बन्धो निराकृतः, इदानीमदृष्टरूपकर्मणापि तन्निरस्यति—नेति ॥ ५२ ॥

[भा०] न कर्मणा०। कर्मणाऽदृष्टेनापि साक्षान्न पुरुषस्य बन्धः। कुतः, पुरुषधर्मत्वाभावादित्यर्थः। पूर्वं विहितनिषिद्धव्यापाररूपेण कर्मणा बन्धो निराकृतः, ( सू० १।१६ ) अत्र तु तज्जन्यादृष्टेनेत्यार्थिकविभागादपौनरुक्त्यम् ॥ ५२ ॥

[भा० सा०] नेति। कर्मणा तज्जन्यादृष्टेनापि न पुंसां साक्षाद्बन्धः। पुरुषधर्मत्वाभावादित्यर्थः। किन्त्वन्तःकरणधर्मः स इति भावः। पूर्वं व्यापाररूपकर्मणा बन्धो निराकृतः, इह तु तज्जन्यादृष्टेनेति भेदः ॥ ५२ ॥

## निर्गुणादिश्रुतिविरोधश्चेति ॥ ५३ ॥

[वृ०] तद्धर्म एव कर्म भविष्यति, को विरोधः ? इत्यत आह—निर्गुणादि०। "असङ्गो ह्ययं पुरुषः" ( बृ० उ० ४।३।१६ ) इति श्रुतिर्विरुद्धा स्यात् ॥५३॥

[वृ० सा०] निर्गुणेति। स्वभावादिभिः कर्मान्तरेणान्येन वा केनचित् पुरुषस्य बन्धोत्पत्तौ "साक्षी चेता केवलो निर्गुणश्च" ( श्वे० उ० ६।११ ) इत्यादिश्रुतिविरोधः। इति शब्दो बन्धहेतुपरीक्षासमाप्तौ ॥ ५३ ॥

[भा०] किं बहुना, स्वभावादिकर्मान्तैरन्येन वा केनापि पुरुषस्य बन्धोत्पत्तिर्न घटते, श्रुतिविरोधादिति साधारणं बाधकमाह—निर्गुणादि०।

पुरुषबन्धस्यानौपाधिकत्वे "साक्षी चेता केवलो निर्गुणश्च" ( श्वे० उ० ६।११ ) इत्यादिश्रुतिविरोधश्चेत्यर्थः। इतिशब्दो बन्धहेतुपरीक्षासमाप्तौ ॥ ५३ ॥

[भा० सा०] स्वभावादिकर्मान्तैः पुरुषे बन्धोत्पत्तौ श्रुतिविरोधं साधारणं बाधकमाह—निर्गुणेति। पुरुषबन्धस्यानौपाधिकत्वे "साक्षी चेता केवलो निर्गुणश्च" ( श्वे० उ० ६।११ ) इत्यादिश्रुतिविरोध इत्यर्थः। इति बन्धहेतुपरीक्षासमाप्तौ। तस्मात् प्रकृतिपुरुषसंयोग एव बन्धहेतुरिति स्थितम् ॥ ५३ ॥

## अतिप्रसक्तिरन्यधर्मत्वे ॥ ५४ ॥

[वृ० ] मा भूदात्मधर्मः, अन्यधर्मेणापि क्रियाविशेषो भविष्यति, आत्मनो व्यापित्वेन सर्वसम्बन्धादित्यत आह—अतिप्रसक्ति०। सर्वसम्बन्धाविशेषान्मुक्तात्मनामपि

बन्धप्रसक्तिः ॥ ५४ ॥

[वृ० सा०] अतिप्रसक्तिरिति स्पष्टम् ॥ ५४ ॥

[भा०] नन्वन्यधर्मेणाप्यन्यस्य बन्धः स्यात्, तत्राह—अतिप्र० । बन्धतत्कारणयोर्भिन्नधर्मत्वेऽतिप्रसक्तिः, मुक्तस्यापि बन्धापत्तिरित्यर्थः ॥ ५४ ॥

[भा० सा०] अन्यधर्मेणाप्यन्यस्य बन्धे मुक्तस्यापि बन्धापत्तिरूपोऽतिप्रसङ्ग इत्याह—अतीति ॥ ५४ ॥

## तद्योगोऽप्यविवेकान्न समानत्वम् ॥ ५५ ॥

[वृ०] ननु तवापि धर्माधर्मव्यवस्थास्ति, बद्धस्य हि मुक्त्यर्थं प्रवृत्तिर्दृश्यते । तत्र यस्तव सिद्धान्तः, सोऽस्माकं भविष्यतीति समानमित्यत आह—तद्योगे० ।

धर्माधर्मयोगेऽपि न समानधर्मत्वम्, अविवेकात् । यदि तात्त्विको धर्माधर्मयोग आत्मनः स्यात्, तदा तुल्यत्वम्; किन्तु अविवेकादात्मनो धर्माधर्मयोगाभिमान इति क्व समानत्वम् ॥ ५५ ॥

[वृ० सा०] ननु प्रकृतिपुरुषसंयोगोऽपि स्वाभाविकत्वे कालादिनिमित्तकत्वे वा मुक्तस्यापि बन्धापादकः, इत्यतो विशेषमाह—तद्योग इति । प्रकृतिसंयोगोऽपि, अविवेकात् । अतो न समानत्वं दोषस्य, मुक्तस्याविवेकाभावान्न पुनः संयोगो भवतीत्यर्थः । अविवेकश्च विषयतासम्बन्धेन पुरुषधर्मं इति न वैयधिकरण्यम् । अगृहीतासंसर्गकज्ञानद्वयरूपश्चासौ तद्वासनारूपो वा । तस्य च संयोगाख्यजन्महेतुत्वं त्रिधा—साक्षात्, धर्माधर्मोत्पत्तिद्वारा, रागादिदृष्टद्वारा चेत्यादि बोध्यम् ॥ ५५ ॥

[भा०] तदेवं "न स्वभावतो बद्धस्य" (१।७) इत्यादिना प्रघट्टकेनेतरप्रतिषेधतः प्रकृतिपुरुषसंयोग एव साक्षाद् बन्धहेतुरवधारितः ( सू० १।१९ ) । तत्रेयमाशङ्का—ननु प्रकृतिसंयोगोऽपि पुरुषे स्वाभाविकत्वादिविकल्पग्रस्तः कथं न भवति ? संयोगस्य स्वाभाविकत्वकालादिनिमित्तकत्वे हि मुक्तस्यापि बन्धापत्तिरित्यादिदोषा यथायोग्यं समाना एवेति । तामिमामाशङ्कां परिहरति—तद्योगो० ।

पूर्वोक्ततद्योगोऽपि पुरुषस्याविवेकाद्वक्ष्यमाणादविवेकादेव हि निमित्तात् संयोगो भवति । अतो नोक्तदोषाणां समानत्वमस्तीत्यर्थः । स चाविवेको मुक्तेषु नास्तीति न तेषां पुनः संयोगो भवतीति ।

नन्वविवेकोऽत्र न प्रकृतिपुरुषाभेदसाक्षात्कारः, संयोगात् प्रागसत्त्वात्, किन्तु विवेकप्रागभावो विवेकाख्यज्ञानवासना वा; तदुभयमपि न पुरुषधर्मः, किन्तु बुद्धिधर्म एवेत्यन्यधर्मेणान्यत्र संयोगेऽतिप्रसङ्गदोषसाम्यमस्त्येवेति चेत्; मैवम्, विषयतासम्बन्धेनाविवेकस्य पुरुषधर्मत्वात् । तथा च प्रकृतिर्बुद्धिरूपा सती यस्मै स्वामिपुरुषाय तनुं विविच्य न दर्शितवती स्ववृत्तिदर्शनार्थं तदीयबुद्धिरूपेण तत्रैव पुरुषे संयुज्यत इति व्यवस्थयाऽतिप्रसङ्गाभावात् । तदुक्तं कारिकया—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ (सां० का० २१ )

इति । स्वामिने पुरुषाय प्रधानेन दर्शयितुं तयोः कैवल्यार्थं चेत्यर्थः । अविवेकस्य वृत्तिरूपत्वं तु "वाङ्मात्रं न तु तत्त्वं चित्तस्थिते" ( सू० १।५८ ) इत्यागामिसूत्रे वक्ष्यामः । अविवेकश्च संयोगद्वारैव बन्धकारणं प्रलये बन्धादर्शनात्, अविवेकनाशेऽपि जीवन्मुक्तस्य दुःखभोगदर्शनाच्च । अतः साक्षादेवाविवेको बन्धकारणं प्राङ्नोक्तः ।

ननु भोग्यभोक्तृभावनियामकत्वेन क्लृप्तस्यानादिस्वस्वामिभावस्य कर्मादीनां वा संयोगहेतुत्वमस्तु, किमित्यविवेकोऽपि संयोगहेतुरिष्यत इति चेन्न —

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ ( गी० १३।२१ )

इति गीतायां सङ्गाख्याभिमानस्य संयोगहेतुत्वस्मरणात् । वक्ष्यमाणादिवाक्ययुक्तिभ्यश्च, अन्यथा ज्ञानतो मोक्षस्य श्रुतिस्मृतिसिद्धस्यानुपपत्तेश्च । अथैवमपि स्वोपाधिकर्मादिकमपि संयोगकारणं भवति, तद्विहाय कथमविवेक एव केवलं तत्र कारणमुच्यत इति ? उच्यते—अविवेकापेक्षया कर्मादीनामपि परम्परयैव पुरुषसम्बन्धः । तथाविवेक एव पुरुषेण साक्षाच्छेत्तुं शक्यते, कर्मादिकं त्वविवेकाख्यहेतूच्छेदद्वारैवेत्याशयेनाविवेक एव मुख्यतः संयोगहेतुतयोक्त इति ।

अयं चाविवेकोऽगृहीतासंसर्गकमुभयज्ञानमविद्यास्थलाभिषिक्त एव विवक्षितः । "बन्धो विपर्ययात्" ( सू० ३।२४ ), "विपर्ययभेदाः पञ्च" ( सू० ३।२७ ) इत्यागामिसूत्रद्वयात्, "तस्य हेतुरविद्या" ( यो० सू० २।२४ ) इति योगसूत्रेऽप्यविद्याया एव पञ्चपर्वाया बुद्धिपुरुषसंयोगहेतुतावचनाच्चान्यथाख्यात्यनभ्युपगममात्र एव योगतोऽत्र विशेषौचित्यात् । न पुनरविवेकोऽत्राभावमात्रं विवेकप्रागभावो वा, मुक्तस्यापि बन्धापत्तेः । जीवन्मुक्तस्यापि भावविवेकव्यक्तिप्रागभावेन धर्माधर्मोत्पत्तिद्वारा पुनर्बन्धप्रसङ्गाच्च । तथाऽऽगामिसूत्रस्थ( सां० सू० १।५६ )ध्वान्तदृष्टान्तानुपपत्तेश्च, अभावस्य ध्वान्तवदावरकत्वासम्भवात् । तथा वृद्धिह्रासावप्यविवेकस्य श्रूयमाणौ नोपपद्येयातामिति ।

अस्मन्मते च वासनारूपस्यैवाविवेकस्य संयोगाख्यजन्महेतुतया तमोवदावरकत्ववृद्धिह्रासादिकमञ्जसैवोपपद्यते । "तस्य हेतुरविद्या" ( २।२४ ) इति पातञ्जलसूत्रे च भाष्यकारैरविद्याशब्देनाऽविद्याबीजं व्याख्यातम्, ज्ञानस्य संयोगोत्तरकालीनत्वेन संयोगाजनकत्वादिति । अपि च "पुरुषः प्रकृतिस्थो हि भुङ्क्ते" ( गी० १३।२१ ) इत्यादिवाक्येष्वभिमानाख्यसंयोगस्यैव प्रकृतिस्थताख्यसंयोगहेतुतावगम्यते । अत एव चाविद्या नाभावः, अपि तु विद्याविरोधिज्ञानान्तरमिति योगभाष्ये व्यासदेवैः प्रयत्नेनावधृतम् । तस्मादविवेकाविद्ययोस्तुल्ययोगक्षेमतयाऽविवेकस्यापि ज्ञानविशेषत्वमिति सिद्धम् ।

अयं चाविवेकस्त्रिधा संयोगाख्यजन्महेतुः साक्षाद्धर्माधर्मोत्पत्तिद्वारा रागादिदृष्टद्वारा च भवति। "सति मूले तद्विपाकः" ( यो० सू० २।१३ ) इति योगसूत्रात्, "कर्तास्मीति निबद्ध्यते" इति स्मृतेः, "वीतरागजन्मादर्शनाद्" ( ३।१।२५ ) इति न्यायसूत्राच्च। तदुक्तं मोक्षधर्मेऽपि—

ज्ञानेन्द्रियाणीन्द्रियार्थान् नोपसर्पन्त्यतर्षुलम्।
हीनश्च करणैर्देही न देहं पुनरर्हति ॥ ( म० भा० शा० २१३।२१ )
तस्मात् तर्षात्मकाद्रागाद् बीजाज्जायन्ति जन्तवः।
( म० भा शा० २१३।१० )

इति। रागस्त्वविवेककार्यं इति योगसूत्राभ्यामप्येततत् प्रत्येतव्यं समानतन्त्रन्यायात्। तच्च सूत्रद्वयं—"क्लेशमूलः कर्माशयः" ( २।१२ ), "सति मूले तद्विपाको जात्यायुर्भोगाः" ( २।१३ ) इति। क्लेशाश्चाविद्यादिपञ्चकमिति। अविवेकस्य बन्धजनने द्वारजातं च पिण्डीकृत्येश्वरगीतायामुक्तम्—

अनात्मन्यात्मविज्ञानं तस्माद् दुःखं तथेतरत्।
रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ॥ ( कू० पु० २।२।२० )
कार्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतिः।
तद्दोषादेव सर्वेषां सर्वदेहसमुद्भवः ॥ ( कू० पु० २।२।२१ )

इति। एतदेव न्याये सूत्रितम्—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" ( न्या० सू० १।१।२ ) इति। तदेवं संयोगाख्यजन्मद्वारा बन्धाख्यहेयस्य मूलकारणमविवेक इति हेयहेतुः प्रतिपादितः ॥ ५५ ॥

[भा० सा०] ननु तत्संयोगस्यापि स्वभावकालादिनिमित्तकत्वे मुक्तबन्धापत्त्यादिरूपो दोष इत्यत आह---तद्योग इति। वक्ष्यमाणादविवेकान्निमित्तात् संयोग इति न दोषाणां समानमित्यर्थः। स चाविवेको मुक्तेषु नास्तीति न पुनः संयोगः। अविवेकश्च संयोगद्वारैव बन्धकारणमतो विवेकनाशेऽपि जीवन्मुक्तस्य दुःखभोगोपपत्तिः। अविवेकश्चागृहीतासंसर्गकं प्रकृतिपुरुषोभयज्ञानमविद्यास्यत्वादभिषिक्तं तद्वासना च। तच्च विषयतासम्बन्धेन पुरुषधर्मेऽपि। अविद्यापि नाभावः। किन्तु विद्याविरोधिज्ञानान्तरमिति योगभाष्ये स्पष्टम्। अत एवाविवेकस्य तमोऽवदारकत्वं वृद्धिह्रासादिकं चोपपन्नम्। अभावत्वे तत्त्वानुपपत्तेः। तत्र वासनारूपोऽविवेकः संयोगाख्यजन्मद्वारैव बन्धकारणम्। अत एव प्रलये दुःखभोगरूपबन्धादर्शनमविवेकनाशेऽपि जीवन्मुक्तस्य तद्दर्शनं च।

प्रकृतिर्बुद्धिरूपा सती यस्मै स्वामिपुरुषायात्मानं विविच्य प्रदर्शितवती स्ववृत्तिदर्शनार्थं सा बुद्धिस्तत्रैव पुरुषे संयुज्यते, इति व्यवस्थया नातिप्रसङ्गः।

यद्यपि कर्माद्यपि जन्मादिसंयोगकारणं तथाप्यविवेक एव साक्षात्पुरुषेणोच्छेत्तुं शक्यते, कर्मादिकं त्वविवेकाख्यहेतूच्छेदद्वारैव, साशयेन तस्यैव संयोगहेतुत्वमुक्तम्। तदुक्तम्—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ ( गी० १३।२२ ) इति ।

सङ्गो गुणाभिमान इति दिक् । अविवेककार्यं च—

अनात्मन्यात्मविज्ञानं तस्माद् दुःखं तथेतरत् ।
रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ॥
कार्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतिः ।
तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः ॥

इति ईश्वरगीतायामुक्तम् ॥ ५५ ॥ ( ई० गी० २।२०, २१ )

**नियतकारणात् तदुच्छित्तिर्ध्वान्तवत् ॥ ५६ ॥**

[वृ०] भवत्वविवेकाद् बन्धः । तथाप्यविवेकनाशार्थं धर्माङ्गीकरणात् तुल्यत्वम् । अन्यथा सर्वदा बन्धः स्यात्, इत्यत आह—नियत० ।

अन्वयव्यतिरेकाभ्यां यस्य यत् कारणमवगतं तद्व्यभिचारे सर्वतोऽनाश्वासः । यथा ध्वान्तनाशाय प्रकाशः, तथात्रापि विवेकादविवेकनाशः । विवेकार्थं धर्मस्वीकारे का क्षतिः ? प्राकृतेनापि धर्मेणोपपत्तेः । किमिदं ध्वान्तं नाम ? अभावस्तम इति केचित्, तन्न; विधिमुखप्रतीतेः । अभावत्वे किमालोकप्रागभावः, प्रध्वंसाभावो वा ? यदि प्रागभावस्तर्हि यथा घटे उत्पन्ने घटप्रागभावो नष्टः, तथाऽऽलोके सत्यालोकप्रागभावो नष्ट इति प्रत्ययः स्यात् । भविष्यदालोकप्रागभावसत्त्वे वर्तमानालोके सत्यन्धकारोऽविनष्टः स्यात् । अथ प्रध्वंसाभावः ? तथाप्यनश्वरत्वादालोकान्तरे सत्यन्धकारप्रतीतिप्रसङ्गः, यथा घटान्तरे उत्पन्ने नष्टघटप्रध्वंसोऽस्त्येव । अन्योन्याभावस्तु वस्तुनोरप्यस्ति । अत्यन्ताभावस्तु दुष्टत्वान्नाशङ्कनीयः । तदुक्तम्—

न च भासामभावस्य तमस्त्वं वृद्धसम्मतम् ।
छायायाः कार्ष्ण्यमित्येवं पुराणेषु गुणश्रुतेः ॥
दूरासन्नप्रदीपाद्धि महदल्पा चलाऽचला ।
देहानुवर्तिनी छाया न वस्तुत्वाद् विना भवेत् ॥

अभावस्तम इति तु व्यपदेशोऽभावे सति प्रतीयमानत्वादिति । आलोके सति वस्तुग्रहणम्, तदभावे सति कथं ग्रहणमिति वैधर्म्यमात्रम् । यथा कौशिको भानिरपेक्ष एव गृह्णाति, तथाऽऽलोकानपेक्षमेव तमोग्रहणं वैचित्र्यात् पदार्थस्य । तस्माद्रूपविशेषोऽयं यत्रावरकमस्ति तत्रारोप्यं गृह्यते । द्रव्यान्तरमिति केचित् । तदुक्तम्—

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥

अथ भवतु गुणो वा द्रव्यं वा, नास्माकं सिद्धान्तक्षतिः, अनियतपदार्थवादित्वात्, अभावस्तु न भवतीति ब्रूमः ॥ ५६ ॥

[वृ० सा०] एवं हेयहेतुं प्रतिपाद्य ानोपायं प्रतिपादयति—नियतेति । शुक्तिरजतादिस्थले लोकसिद्धं यन्नियतं कारणं विवेकख्यातिरविप्लवा हानोपाय इति ॥ ५६ ॥

[भा०] इतः परं क्रमप्राप्तं हानोपायव्यूहमतिविस्तरेणा शास्त्रसमाप्ति प्रतिपादयति । अन्तराऽन्तरा चोक्तव्यूहानपि विस्तारयिष्यति ।

नियत० । शुक्तिरजतादिस्थले लोकसिद्धं यन्नियतकारणं विवेकसाक्षात्कारस्तस्मात् तस्याविवेकस्योच्छित्तिर्भवति, ध्वान्तवत् । यथा ध्वान्तमालोकादेव नियतकारणाद् नश्यति नोपायान्तरेण, तथैवाविवेकोऽपि विवेकादेव नश्यति न तु कर्मादिभ्यः साक्षादित्यर्थः । तदेतदुक्तं योगसूत्रेण—"विवेकख्यातिरविप्लवा हानोपायः" ( यो० सू० २।२६ ) इति । कर्मादीनि तु ज्ञानस्यैव साधनानि, "योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" ( २।२८ ) इति योगसूत्रेण सत्त्वशुद्धिद्वारा ज्ञान एव योगाङ्गान्तर्गतसर्वकर्मणां साधनत्वावधारणादिति । प्राचीनास्तु वेदान्तिनो मोक्षेऽपि कर्मणो ज्ञानाङ्गत्वमाहुः—

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ( ई० उ० ११ )

इति श्रुतौ, "सहकारित्वेन च" ( ब्र० सू० ३।४।३३ ) इति वेदान्तसूत्रे चाङ्गाङ्गिभावेन ज्ञानकर्मणोः सहकारित्वावधारणात् ।

ज्ञानिनाऽज्ञानिना वापि यावद्देहस्य धारणम् ।
तावद् वर्णाश्रमप्रोक्तं कर्तव्यं कर्म मुक्तये ॥

इत्यादिस्मृतेश्च । "उपमर्दं च" ( ब्र० सू० ३।४।१६ ) इति वेदान्तसूत्रेण तु कर्मत्यागो योगारूढस्य न्यायप्राप्तोऽनूद्यत एव, ज्ञानस्य मुख्यतो मोक्षहेतुत्वं व्यवस्थापयितुम् । यदि हि विक्षेपकत्वात् कर्म ज्ञानाभ्यासस्य विरोधि भवेत्, तदा 'गुणलोपे न गुणिनः' इति न्यायेन प्रधानरक्षार्थमङ्गभूतं कर्मैव त्याज्यं जडभरतादिवदित्याशयादिति । तेषां मतेऽपि विवेकद्वारतां विनाऽविवेकनाशकत्वं कर्मणां नैव सिद्ध्यतीति न तद्विरोधः ।

अत्र सूत्रे ध्वान्तस्यालोकनाश्यत्ववचनात् तमोऽपि द्रव्यमेव, न त्वालोकाभावः । असति बाधके नीलं तम इत्यादिप्रत्ययानां भ्रमत्वानौचित्यात् । न च क्लृप्तेनैवोपपत्तावतिरिक्तकल्पनागौरवमेव बाधकमिति वाच्यम्; एवं च सति विज्ञानमात्रेणैव स्वप्नवत् सर्वव्यवहारोपपत्तावतिरिक्तकल्पनागौरवेण बाह्यार्थप्रतीतेरपि बाधापत्तेः । तस्मादत्र प्रामाणिकत्वाद् गौरवं न दोषायेति ।

ननु विवेकज्ञानं विनाऽप्यविवेकाख्यज्ञानव्यक्तीनां स्वस्वतृतीयक्षणेऽवश्यं विनाशाज्ज्ञानस्य तन्नाशकत्वं किमर्थमिष्यत इति चेत् ? अविवेकशब्देन तद्वासनाया एव पूर्वसूत्रे (१।५५) व्याख्यातत्वात् । अनागतावस्थस्याविवेकस्यास्मन्मते नाशसम्भवाच्चेति ॥५६॥

[मा० सा०] अथ तद्धानोपायमाह—नियतेति । शुक्तिरजतादिस्थले लोकसिद्धं यन्नियतविवेकसाक्षात्कारस्तस्मादविवेकस्योच्छित्तिर्नाशः, यथा ध्वान्तस्यालोकादेव, न तु

कर्मादिभ्यः साक्षादित्यर्थः। योगकर्मादीनि तु विवेकस्यैव साधनानीति द्रष्टव्यम्। एवं च विवेकदाढर्च्यपर्यन्तं कर्मानुष्ठानमावश्यकमेव।

ज्ञानिनाऽज्ञानिना चापि यावद् देहस्य धारणम्।
तावद् वर्णाश्रमप्रोक्तं कर्तव्यं कर्म मुक्तये॥ इति स्मृतेः।

योगारूढस्य तु विक्षेपकतया कर्मणो ज्ञानाभ्यासविरोधित्वेन प्रधानरक्षार्थमङ्गभूत-कर्मत्यागो न्यायसिद्धो जडभरतादिरिव। ध्वान्तमपि द्रव्यं नालोकाभावः, असति बाधके नीलं तम इत्यादिप्रतीतेर्भ्रमत्वानौचित्यात्। अन्यथा विज्ञानमात्रेण स्वप्नवत्सर्वव्यवहारोपपत्तौ बाह्यार्थप्रतीतेरपि बाधापत्तेः।

यद्यपि विवेकाख्यज्ञानव्यक्तीनां स्वस्वतृतीयक्षणेऽवश्यं नाशस्तथाप्यविवेकवासनाया विवेकादेव नाश इत्यवधेयम्।

अथ विवेकज्ञानस्य किं स्वरूपम्? उच्यते। आत्मा सुखदुःखाद्यनुभवितृत्वेन लोकसिद्धः, अनात्मा च प्रकृत्यादिर्जडवर्गः, तयोरन्योन्यवैधर्म्येण परिणामत्वादिरूपदोषगुणात्मकत्वेन हेयोपादेयतया पृथक्त्वेन ज्ञानं विवेकज्ञानम्, "स एष नेति नेत्यात्मा" ( बृ० उ० ३।९।२६ ) इति श्रुतेः।

अथासौ प्रकृतिर्नाहमियं हि कलुषात्मिका।
शुद्धबुद्धस्वभावोऽहमिति त्यजति तां विदन्॥ इति स्मृतेश्च।

यद्यप्यन्योन्यभेदज्ञानमेव विवेकज्ञानम्, तथाप्यात्मविशेष्यकमेव मोक्षकारणम्, "आत्मा वा अरे द्रष्टव्यः" ( बृ० उ० २।४।५ ) इति श्रुतेः।

नन्वनात्मनि आत्मबुद्धिरूपाऽविद्या योगशास्त्रे उक्ता, तस्याः कथमात्मविशेष्यकज्ञानं निवर्तकमिति चेत्, न; तादृशाविद्याया अनात्मविशेष्यकविवेकज्ञानद्वारा तन्निवर्त्यत्वात्। यद्योगेन निर्विकल्पकमात्मज्ञानं जायते तद्विवेकज्ञानद्वारैव मोक्षकारणं न तु साक्षात्। अहं गौरः कर्ता सुखी दुःखीत्यादिज्ञानरूपाविद्यायाः सकलसंसारानर्थहेतोर्नाहं गौर इत्यादि ज्ञानमात्रनिवर्त्यत्वाद् ग्राह्याभावत्वप्रकारकज्ञानत्वेनाविरोधात्। अन्यथा शुक्तिनिर्विकल्पक-स्यापीदं रजतमिति ज्ञानविरोधित्वापत्तेः। योगजन्यकेवलात्मसाक्षात्कारस्तु योग्यानुपलब्धि-विषयोपाधिगतधर्माभावमुपाधिभेदं च ग्राहयति, ततोऽविद्यानिवृत्तिरिति बोध्यम्।

एवं सर्वभूतेषु समताज्ञानमात्मनः सर्वात्मकत्वादिज्ञानं च श्रुतिसिद्धं विवेकज्ञानस्यैव शेषभूतम्, ज्ञानान्तराणां साक्षादभिमानानिवर्तकत्वात्।

ननु विवेकज्ञानस्याप्यविद्याप्रतिबन्धकत्वेन तन्नाशोत्तरं पुनरभिमानप्रसङ्गः, शुक्ति-रजतविवेकदर्शिनोऽपि कालान्तरे रजतभ्रमवदिति चेत्, न; तत्र दूरत्वादिरूपविषयदोषाणां पटलादिरूपदोषाणां चोत्पत्त्या पुनर्भ्रमसम्भवेऽपि जातमात्रस्याभिमाने दोषान्तरानुपलब्ध्या अनात्मन्यात्माभिमानेऽनादिवासनयैव दोषत्वस्य सर्वास्तिकसम्मतत्वेन तस्या विवेकजन्य-दृढवासनया विवेकसाक्षात्कारनिष्ठारूपया समूलोन्मूलनैः पुनरभिमानासम्भवात्, वासनाख्य-दोषाभावात्।

यदि बुद्धिपुरुषयोरन्योन्यप्रतिबिम्बनमविवेककारणं दोषः, तथापि तं दोषमुन्मूल्यैव विवेकसाक्षात्कार उदितः, इति न तस्य पुनर्भ्रमहेतुत्वम् । फलबलेन योगजधर्मासहकृतस्यैव तस्य दोषकत्वकल्पनाच्च । तन्निष्ठालक्षणत्वं च "न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति" ( गी० १४।२२ ) इत्यादिना गीतायामुक्तम् ।

न चैवमपि प्रतियोगीयपदार्थानामनन्तत्वेन प्रातिस्विकरूपेण विवेकग्रहासम्भवः, दृश्यत्वपरिणामित्वादिसामान्यरूपैस्तद्ग्रहसम्भवात् । तथाहि द्रष्टा साक्षात् स्वप्रकाशकेभ्यो भिन्नः, प्रकाशकत्वात्, यो यस्य प्रकाशकः स तस्माद्भिन्नः, यथा घटादालोकः । अवृत्तिप्रकाश्या च वृत्तिरित्यनुमानेनान्तर्दृश्येभ्यो बुद्धिवृत्तितदारूढार्थेभ्यो विवेकतो बुद्धिसाक्षी सिद्ध्यति, कर्तृकर्मविरोधश्चानुकूलतर्कः ।

आत्मनि व्यभिचारवारणायाह—साक्षादिति । वृत्तिद्वारैवात्मनः स्वविषयत्वात् । अनेन चानुमानेन वृत्तीनामज्ञातसत्त्वाभावेनाखिलवृत्तीनां द्रष्टा विभुकूटस्थनित्यैकज्ञानस्वरूपः सिद्धयति । लाघवाद् वक्ष्यमाणतर्कगणाच्च । यथा न्यायनये 'क्षितिः सकर्तृका कार्यत्वात्' इत्यनुमानेन लाघवात् कर्तुरेकत्वनित्यत्वादिकम् । तत्र विभुत्वं परिच्छिन्नभिन्नत्वम्, कूटस्थत्वं परिणामिभिन्नत्वम्, एवं बुद्धयात्मनोर्दृग्दृश्यरूपतो विवेकग्रहे जाते ततः परिणामित्वादिरूपैः सामान्यतोऽप्यात्मानात्मविवेकः सिद्धयति । आत्मा प्रकृतितत्कार्येभ्यो भिन्नः, परिणामित्वा-दित्याद्यनुमानादपि तद्ग्रहः ।

ननु परिणामित्वं संहत्यकारित्वं सुखदुःखमोहात्मकत्वम्, चतुर्विंशतितत्त्वादीनि बहूनि सामान्यानि, इति तैस्तै रूपैर्विवेकग्रहस्य मोक्षहेतुत्वेनानुगम इति चेत्, न; अभिमानप्रतिषेधक-ज्ञानेनैवानुगमात् ।

न च सामान्यरूपेण विवेकस्यैव सर्वाभिमाननिवर्तकत्वे "नाहं देहो नेन्द्रियाणि" ( जाबा० उ० १०।४ ) इत्यादि प्रत्येकरूपैर्विवेकग्रहाणां मोक्षहेतुत्वं श्रुत्यादावुच्यमानं कथं घटेतेति वाच्यम्; अवान्तरविवेकानां सामान्यविवेकप्रपञ्चमात्रत्वादिति दिक् ।

वेदान्तिनस्तु—दृश्यत्वेनैव प्रकृत्यादीनां तेभ्यो द्रष्टृत्वेनात्मविवेकः । दृश्यत्वं फलव्याप्यत्वरूपं प्रकाश्यत्वम् । "आत्मा वा अरे द्रष्टव्यः" ( बृ० उ० २।४५ ) इत्यादि-श्रुत्या आत्मनो वृत्तिव्याप्यत्वरूपमेव दृश्यत्वमुच्यते, न फलव्याप्यत्वरूपम्, स्वयंप्रकाश-रूपस्य प्रकाशापेक्षाविरहात् । अतः प्रकाश्यत्वरूपदृश्यत्वस्यात्मन्यभावः । अहमित्यनुभूय-मानस्यापि चैतन्याख्यफलव्याप्यत्वाभावात्, बुद्धेरस्वप्रकाशतया सुखदुःखादिमत्त्वेन चैतन्य-व्याप्यत्वमस्त्येवेत्याहुरित्यलम् ॥ ५६ ॥

## प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ॥ ५७ ॥

[वृ०] विवेकान्मुक्तिरित्युक्तम् । घटपटादीनां विवेकोऽस्मदादीनामप्यस्तीति सर्वमुक्तिप्रसङ्ग इत्यत्राह—प्रधाना० ।

सर्वेषां मूलं प्रधानम्, तस्याविवेकादन्याविवेकस्य सम्भवः । पदार्थाना-मन्योऽन्यं भवत्वविवेको विवेको वा, न तेन बन्धमोक्षौ, किन्तु प्रधानविवेकाविवेका-भ्याम् । अतस्तद्धाने प्रधानाविवेकहाने सर्वाविवेकहानम् ॥ ५७ ॥

[वृ० सा०] ननु प्रकृतिपुरुषाविवेक एव चेत् प्रकृतिसंयोगद्वारा बन्धहेतुः, तयोर्विवेक एव चेन्मोक्षहेतुस्तर्हि देहाद्यभिमानसत्त्वेऽपि मोक्षः स्यात्, स च श्रुत्यादिविरुद्धस्तत्राह – प्रधानेति। पुरुषे प्रधानाविवेकात् कारणाद् योऽन्याविवेको बुद्धिदेहाद्यविवेको जायते, कार्याविवेकस्य कार्यतया अनादिकारणाविवेकमूलकत्वात्, तस्य प्रधानाविवेकहाने सत्यवश्यमित्यर्थः। ननु बुद्ध्याद्यभिमानातिरिक्ते प्रधानाभिमाने किं मानम्? अहमज्ञ इत्याद्यभिमानानां बुद्ध्यादिविषयत्वेनैवोपपत्तेरिति चेत्, न; "मृत्वा मृत्वा पुनः सृष्टौ स्वर्गी स्यां मा च नारकी" इत्याद्यभिमानानां प्रधानविषयत्वं विनानुपपत्तेः, अतीतानां बुद्ध्याद्यखिलकार्याणां पुनः सृष्ट्यभावात्। प्रधानस्य त्विदमेव प्रलयोत्तरं जन्म यद् बुद्ध्यादिरूपैकपरिणामत्यागेऽपरबुद्ध्यादिरूपतया परिणमनमिति। किं च बुद्ध्यादिषु पुरुषाणामभिमानोऽनादिर्वक्तुं न शक्यते, बुद्ध्यादीनां कार्यत्वात्। अतः कार्येष्वभिमानव्यवस्थार्थं नियामकाकाङ्क्षायां कारणाभिमानः, सुवर्णाभिमानाच्च तज्जन्यकटकादिष्वभिमान इति। प्रधानाभिमानवासनयोश्च बीजाङ्कुरवद् अनादित्वान्न तदभिमाने नियामकान्तरापेक्षेति ॥ ५७ ॥

[भा०] ननु प्रकृतिपुरुषाविवेक एव चेत्थं संयोगद्वारा बन्धहेतुस्तयोर्विवेक एव च मोक्षहेतुस्तर्हि देहाद्यभिमानसत्त्वेऽपि मोक्षः स्यात्। तच्च श्रुतिस्मृतिन्यायविरुद्धमिति तत्राह—प्रधाना०।

पुरुषे प्रधानाविवेकात् कारणाद् योऽन्याविवेको बुद्ध्याद्यविवेको जायते, कार्याविवेकस्य कार्यतयाऽनादिकारणाविवेकमूलकत्वात्; तस्य प्रधानाविवेकहाने सत्यवश्यं हानमित्यर्थः। यथा शरीरादात्मनि विविक्ते शरीरकार्येषु रूपादिष्वविवेको न सम्भवति, तथा कूटस्थत्वादिधर्मैः प्रधानात् पुरुषे विविक्ते तत्कार्येषु परिणामादिधर्मकेषु बुद्ध्यादिष्वभिमानो नोत्पत्तुमुत्सहते तुल्यन्यायात्, कारणनाशाच्चेति भावः। तदेतत् स्मर्यते—

चित्राधारपटत्यागे त्यक्तं तस्य हि चित्रकम्।
प्रकृतेर्विरमे चेत्थं ध्यायिनां के स्मरादयः॥ इति।

विरमो विरामस्त्यागः। आदिशब्देन द्रव्यरूपा अपि विकारा ग्राह्या इति। यच्च बुद्धिपुरुषविवेकादेव मोक्ष इत्यपि क्वचिदुच्यते, तत्र स्थूलसूक्ष्मबुद्धिग्रहणात् प्रकृतेरपि ग्रहणम्। अन्यथा बुद्धिविवेकेऽपि प्रकृत्यभिमानसम्भवादिति।

ननु बुद्ध्याद्यभिमानातिरिक्ते प्रकृत्यभिमाने किं प्रमाणम्? अहमज्ञ इत्याद्यखिलाभिमानानां बुद्ध्यादिविषयत्वेनैवोपपत्तेरिति चेन्न;

मृत्वा मृत्वा पुनः सृष्टौ स्वर्गी स्यां मा च नारकी।

इत्याद्यभिमानानां प्रधानविषयत्वं विनानुपपत्तेः। अतीतानां बुद्ध्याद्यखिलकार्याणां पुनः सृष्ट्यभावात्। प्रधानस्य त्विदमेव प्रलयानन्तरं जन्म यद् बुद्ध्यादिरूपैकपरिणामत्यागेनापरबुद्ध्यादिरूपतया परिणमनमिति। न चात्मनि जन्मादिज्ञानमभिमान

एव न भवति, पुरुषस्यापि लिङ्गशरीरसंयोगवियोगरूपयोर्जन्ममरणयोः पारमार्थिकत्वादिति वाच्यम्;

न जायते म्रियते वा कदाचिन् नायं भूत्वा भविता वा न भूयः ॥ (गी० २।२०)

इत्यादिवाक्यैर्जन्मादिप्रतिषेधेनोत्पत्तिविनाशाभिमानरूपस्यात्मनि जन्मादिज्ञानस्य सिद्धेरप्रसक्तस्य प्रतिषेधायोगात् ।

किञ्च, बुद्धयादिषु पुरुषाणामभिमानोऽनादिर्वक्तुं न शक्यते, बुद्धयादीनां कार्यत्वात् । अतः कार्येष्वभिमानव्यवस्थार्थं नियामकाकाङ्क्षायां कारणाभिमान एव नियामकतया सिद्धयति, लोके दृष्टत्वात्, कल्पनायाश्च दृष्टानुसारित्वात् । यथा लोके दृष्टः क्षेत्राभिमानात् क्षेत्रजन्यधान्यादिष्वभिमानः, सुवर्णाभिमानाच्च तज्जन्यकटकादिष्वभिमानः, तयोर्निवृत्त्या च तयोर्निवृत्तिरिति प्रधानाभिमानतद्वासनयोश्च बीजाङ्कुरवदनादित्वान्न तदभिमाने नियामकान्तरापेक्षेति ॥ ५७ ॥

[ भा० सा० ] ननु प्रकृति-पुरुषविवेकस्य मोक्षहेतुत्वे देहाद्यभिमानसत्त्वेऽपि मोक्षः स्यादत आह—प्रधानेति । प्रधानाविवेकहेतुक एव बुद्धिदेहाद्यात्मविवेकः कार्याविवेकस्य कार्यतया कारणविवेकमूलकत्वात् । अतस्तद्धाने प्रधानाविवेकहाने देहाद्यविवेकस्यापि हानमेवेत्यर्थः । यथा शरीराभिमाने निवृत्ते तत्कार्यरूपादिष्वभिमानो न, तथा कूटस्थत्वादिधर्मैः प्रधानात् पुरुषे विविक्ते तत्कार्यपरिणामादिधर्मकबुद्धयादिष्वभिमानो नोपतिष्ठति, तुल्यन्यायात् कारणनाशाच्चेति भावः । एवं देहादिविवेकेऽपि न मोक्षः, प्रधानाविवेकस्यैव बन्धहेतुत्वेन तद्विवेकस्यैव मोक्षहेतुत्वात् ।

नन्वहमज्ञ इत्याद्यभिमानानां बुद्धयादिविषयत्वेनैवोपपत्तेः प्रधानाभिमानरूपे तदविवेके न मानमिति चेत्; "मृत्वा मृत्वा पुनः सृष्टौ स्वर्गी स्यां मा च नारकी" इत्याद्यभिमानानां प्रधानविषयत्वं विनानुपपत्तेः, अतीतबुद्धयादेः पुनः सृष्टयभावात् । प्रधानस्य त्विदमेव प्रलयोत्तरं जन्म, यदेकबुद्धयादिरूपपरिणामत्यागेनापरबुद्धयादिरूपतया परिणमनमिति ।

किञ्च, बुद्धयाद्यभिमानो नानादिः, बुद्धयादीनां कार्यत्वात् । अतस्तदभिमाननियामकत्वेन कारणाभिमानोऽवश्यं स्वीकार्यः । दृष्टो हि क्षेत्रादिकारणाभिमानजन्यः क्षेत्रजधान्यादावभिमानः । कारणभूतप्रधानाभिमानतद्वासने च बीजाङ्कुरवदनादी, इति न तदभिमाने नियामकान्तरापेक्षा । दृष्टश्च स्वर्णाभिमानात्तज्जन्यकटकादिष्वभिमानः, तन्निवृत्त्या च तन्निवृत्तिरिति दिक् ॥ ५७ ॥

## वाङ्मात्रं तु न तत्त्वम्, चित्तस्थितेः ॥ ५८ ॥

[वृ०] भवतु विवेकान्मुक्तिः, स किमात्मसम्बन्धी न वा ? आत्मसम्बन्धी चेत्, आत्मनः कूटस्थत्वव्याघातः । असम्बन्धी चेत्, अतिप्रसक्तिः । इत्यत आह—वाङ्मात्रं० ।

आत्मसम्बन्धीति वाङ्मात्रम्, न तु तात्त्विकः सम्बन्धः । असम्बन्धेऽपि

चित्तस्थितेः चित्ते विवेकस्थितेः। चित्तसन्निधानादात्मनि विवेकाभिमान इति निवेदयिष्यामः ॥ ५८ ॥

[वृ० सा०] नन्वेवमपि पुरुषस्य चेद्धमं( द् बन्ध )मोक्षौ विवेकाविवेकौ च स्वीकृतौ तर्हि नित्यशुद्धबुद्धमुक्तस्येति स्वोक्तविरोधोऽत आह—वागिति।

बन्धादीनां सर्वेषां चित्त एवावस्थानात् पुरुषे बन्धादिवाङ्मात्रं स्फटिकलौहित्यवत्, न तु तत्त्वमनारोपितं जपालौहित्यवदित्यर्थः। उक्तं च—

बन्धमोक्षौ सुखं दुःखं मोहापत्तिश्च मायया।
स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥ इति।

माययेति मायाख्यप्रकृत्यौपाधिकीत्यर्थः। नन्वेवं तुच्छस्य बन्धस्य हाने कथं पुरुषार्थः, कथं वान्यधर्माभ्यां विवेकाभ्यामन्यस्य बन्धमोक्षस्वीकारे कर्मादिभिरिव नाव्यवस्थेति चेत्, अत्राभियुक्ताः समादधुः—यद्यपि दुःखयोगरूपो बन्धः, वृत्तिरूपौ च विवेकाविवेकौ चित्तस्यैव, तथापि पुरुषे दुःखप्रतिबिम्बत एव भोग इत्यवस्तुत्वेऽपि तद्धानं तं पुरुषार्थं दुःखं मा भुञ्जीयेति प्रार्थनात्। एवं च यस्मै पुरुषाय प्रकृतिरविवेकेनात्मानं दर्शितवती तद्वासनावशात् तमेव संयोगद्वारा बध्नाति नान्यम्। यस्मै विवेकेनात्मानं दर्शितवती तमेव स्ववियोगद्वारा विमोचयति वासनोच्छेदादिति व्यवस्थापि घटत इति। कर्मादिभिर्बन्धाभ्युपगमे त्वेवं व्यवस्था न घटते, कर्मादीनां साक्षात्पुरुषेष्वप्रतिबिम्बनादिति ॥ ५८ ॥

[भा० ] एवं प्रतिपादिते चतुर्व्यूहे पुनरियमाशङ्का—ननु पुरुषे चेद् बन्धमोक्षौ विवेकाविवेकौ स्वीकृतौ, तर्हि नित्यशुद्धबुद्धमुक्तस्येति स्वोक्तिविरोधः। तथा च—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ( मा० का० ३:३२ )

इत्यादिश्रुतिविरोधश्चेति। तां परिहरति—वाङ्मात्रं०।

बन्धादीनां सर्वेषां चित्त एवावस्थानात् तत् पुरुषे वाङ्मात्रं सर्वं स्फटिकलौहित्यवत् प्रतिबिम्बमात्रत्वान्न तु तत्त्वं तस्य भावः। अनारोपितं जपालौहित्यवदित्यर्थः। अतो नोक्तविरोध इति भावः। "स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव" (बृ० उ० ४।३।७७) इत्यादिश्रुतयस्त्वत्र प्रमाणम्। पुरुषः समानो लोकयोरेकरूपः। इवशब्दाभ्यां नानारूपत्वस्यौपाधिकत्वमुक्तम्। तथा चोक्तम्—

बन्धमोक्षौ सुखं दुःखं मोहापत्तिश्च मायया।
स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥ इति।

मायया मायाख्यप्रकृत्यौपाधिकीत्यर्थः।

नन्वेवं तुच्छस्य बन्धस्य हानं कथं पुरुषार्थः, कथं वान्यधर्माभ्यामविवेकविवेकाभ्यामन्यस्य बन्धमोक्षस्वीकारे कर्मादिभिरिव नाव्यवस्थेति चेत्; अत्रोक्तप्रायमपि पुनः प्रपञ्चयते।

यद्यपि दुःखयोगरूपो बन्धो वृत्तिरूपौ च विवेकाविवेकौ चित्तस्यैव, तथापि पुरुषे दुःखप्रतिबिम्ब एव भोग इत्यवस्तुत्वेऽपि तद्धानं पुरुषार्थः। दुःखं मा भुञ्जीयेति प्रार्थनात्। एवं यस्मै पुरुषाय प्रकृतिरविवेकेनात्मानं दर्शितवती तद्वासनावशात् तमेव संयोगद्वारा बध्नाति नान्यम्। तथा यस्मै विवेकेनात्मानं दर्शितवती तद्वासनावशात् तमेव स्ववियोगद्वारा मोचयति, वासनोच्छेदादिति व्यवस्थापि घटत इति। कर्मादिभिर्बन्धाभ्युपगमे त्वेवं व्यवस्था न घटते। कर्मादीनां साक्षिभास्यत्वाभावेन साक्षात् पुरुषेष्वप्रतिबिम्बनादिति ॥ ५८ ॥

[भा० सा०] ननु बन्धमोक्षविवेकाविवेकादीनां पुरुषनिष्ठत्वे तस्य नित्यशुद्धबुद्धमुक्तत्वहानिरत आह—वागिति।

बन्धादीनां सर्वेषां चित्त एवावस्थानात् पुरुषे वाङ्मात्रं शाब्दमात्रं स्फटिकलौहित्यवत्, प्रतिबिम्बमात्रत्वात्, न तु तत्त्वं जपालौहित्यवदनारोपितं तस्येत्यर्थः। "स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव" ( बृ० उ० ४।३।७ ) इत्यादिश्रुतयोऽत्र प्रमाणम्। इवाभ्यां नानारूपत्वस्यौपाधिकत्वमुक्तम्।

एवं च यद्यपि दुःखभोगरूपो बन्धो विवेकाविवेकौ च वृत्तिरूपौ चित्तस्यैव तथा चान्यधर्माभ्यामन्यस्य बन्धमोक्षस्वीकारेऽव्यवस्था। तथापि पुरुषे दुःखप्रतिबिम्ब एव भोग इत्यवस्तुत्वेऽपि तद्धानं पुरुषार्थः, दुखं मा भुञ्जीयेति प्रार्थनात्।

एवं च यस्मै पुरुषाय प्रकृतिरविवेकेनात्मानं दर्शितवती यद्वासनावशात् तमेव संयोगद्वारा बध्नाति नान्यम्। तथा यस्मै विवेकेनात्मानं दर्शितवती तमेव स्ववियोगद्वारा मोचयति, वासनोच्छेदादिति व्यवस्था। कर्मादिभिर्बन्धाभ्युपगमे त्वेषा व्यवस्था न सिद्ध्येत्, कर्मादीनां साक्षिभास्यत्वाभावेन साक्षात्पुरुषेष्वप्रतिबिम्बनात् ॥ ५८ ॥

## युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते। ५९॥

[वृ०] भवतु श्रवणादेव विवेकज्ञानम्। अनेकजन्मायाससाध्येनापरोक्षज्ञानेन किमित्यत आह—युक्तितो०। व्यक्तम् ॥ ५९ ॥

[वृ० सा०] ननु बन्धस्य वाङ्मात्रत्वे श्रवणेन युक्त्या वा स निवर्तेत, किं विवेकसाक्षात्कारेणात आह—युक्तितोऽपीति। दिङ्मूढस्य वाङ्मात्रमपि दिग्वैपरीत्यं साक्षात्कारं विना न बाध्यते, तथा प्रकृतेऽपि। युक्तिर्मननम्। अपिना श्रवणसमुच्चयः। बन्धबाधो बन्धनिवृत्तिः ॥ ५९ ॥

[भा०] ननु बन्धादिकं चेत् पुरुषे वाङ्मात्रं तर्हि श्रवणेन युक्त्या वा तस्य बाधो भवतु। किमर्थं श्रुतिस्मृत्योः साक्षात्कारपर्यन्तं विवेकज्ञानमुपदिश्यते मोक्षहेतुतयेति। तत्राह—युक्तितो०।

युक्तिर्मननम्। अपिशब्दः श्रवणसमुच्चयार्थः। वाङ्मात्रमपि पुरुषस्य बन्धादिकं श्रवणमननमात्रेण न बाध्यते साक्षात्कारं विना, यथा दिङ्मूढस्य जनस्य वाङ्मात्रमपि दिग्वैपरीत्यं श्रवणयुक्तिभ्यां न बाध्यते, साक्षात्कारं विनेत्यर्थः। प्रकृते चेदमेव

बाध्यत्वं यत् पुरुषे बन्धादिबुद्धिनिवृत्तिर्न त्वभावसाक्षात्कारः, श्रवणादिना तदुत्पत्तिसम्भावनाया अप्यभावादिति ।

अथवेत्थं व्याख्येयम्—ननु "नियतकारणात् तदुच्छित्तिः" ( सां० सू० १।५६ ) इत्यनेन विवेकज्ञानमविवेकोच्छेदकमुक्तम्, तज्ज्ञानं किं श्रवणादिसाधारणमुतास्ति कश्चिद्विशेष इत्याकाङ्क्षायामाह—युक्तितोऽपीत्यादिसूत्रम् । अविवेको युक्तितः श्रवणतश्च न बाध्यते, नोच्छिद्यते, विवेकापरोक्षं विना दिङ्मोहवदित्यर्थः । साक्षात्कारभ्रमे साक्षात्कारविशेषदर्शनस्यैव विरोधित्वादिति । ५९ ॥

[ भा०सा० ] ननु वाङ्मात्रस्य बन्धस्य श्रवणमननाभ्यामेव बाधसम्भवेनापरोक्षसाक्षात्कारपर्यन्तं विवेकज्ञानोपदेशो मोक्षहेतुतया श्रुत्यादिषु व्यर्थोऽत आह—युक्तीति ।

युक्तिर्मननम् । अपिना श्रवणं वाङ्मात्रमपि । बन्धादि श्रवणमननमात्रेण न बाध्यतेऽपरोक्षं विना । यथा दिङ्मूढस्य वाङ्मात्रमपि दिग्वैपरीत्यं श्रवणयुक्तिभ्यां न बाध्यते साक्षात्कारं विनेत्यर्थः । प्रकृते चेदमेव बाध्यत्वं यत्पुरुषे बन्धादिप्रतिभासनिवृत्तिः । साक्षात्कारभ्रमे साक्षात्काररूपविशेषदर्शनस्यैव विरोधित्वादिति तत्त्वम् ॥ ५९ ॥

**अचाक्षुषाणामनुमानेन बोधः, धूमादिभिरिव वह्नेः ॥६० ।**

[वृ०] प्रकृत्यादयः सन्ति, ते च महदादिक्रमेण परिणमन्त इति न दृष्टमित्यत आह—अचाक्षुषा० ।

भवेदेवम्, यदि प्रत्यक्षमेव प्रमाणं नानुमानादिकमिति । प्रकृत्यादीनामदर्शनेऽपि सामान्यतो दृष्टादनुमानात् सिद्धेः ॥ ६० ॥

[वृ० सा०] प्रकृतिपुरुषसिद्धौ हि तद्विवेकान्मोक्षः स्यादतस्तत्सिद्धौ प्रमाणमुपन्यस्यति अचाक्षुषेति । अचाक्षुषाणामप्रत्यक्षाणामनुमानेनेत्यागमोपलक्षणम् । तथा चेश्वरकृष्ण आह—

सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम् ॥
( सां० का० ६ ) इति ॥ ६० ॥

[ भा० तदेवं विवेकसाक्षात्कारान्मोक्षं प्रतिपाद्य इतः परं विवेकः प्रतिपादनीयः । तत्रादौ प्रकृतिपुरुषादीनां विवेकतः सिद्धौ प्रमाणान्युपन्यस्यन्ते—अचाक्षुषा० ।

अचाक्षुषाणामप्रत्यक्षाणाम् । केचित् तावत् पदार्थाः स्थूलभूततत्कार्यदेहादयः प्रत्यक्षसिद्धा एव । प्रत्यक्षेणासिद्धानां प्रकृतिपुरुषादीनामनुमानेन प्रमाणेन बोधः पुरुषनिष्ठफलसिद्धिर्भवति । यथा धूमादिभिर्जनितेनानुमानेन वह्नेः सिद्धिरित्यर्थः । अनुमानासिद्धमप्यागमात् सिद्ध्यतीत्यपि बोध्यम् । अस्य शास्त्रस्यानुमानप्राधान्यात् तु केवलानुमानस्य मुख्यतयैवोपन्यासो न त्वागमस्यानपेक्षेति । तथा च कारिका—

सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ (सां० का० ६)

इति । अनेन च सूत्रेणेदं मननशास्त्रमित्यवगम्यते ॥६०॥

[भा० सा०] तत्र प्रकृतिपुरुषादीनां सिद्धौ हि तद्विवेकजो मोक्षोऽतस्तत्सिद्धौ प्रमाणमाह—अचाक्षुषेति । अचाक्षुषा अप्रत्यक्षाः प्रधानादयः स्थूलभूता देहादयः प्रत्यक्षसिद्धा एव । प्रत्यक्षेणासिद्धानां च प्रकृतिपुरुषादीनामनुमानेन बोधसिद्धिर्भवति, यथा धूमादिजनितानुमानेन वह्नेः सिद्धिरित्यर्थः । अनुमानासिद्धमागमादपि सिद्धयतीति बोध्यम् । सूत्रेऽनुमानेनेत्युपलक्षणम् । एतेनास्य मननशास्त्रत्वं ध्वनितम् ॥ ६० ॥

**सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियम्, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः ॥६१॥**

[वृ०] प्रकृत्यादीनां सृष्टिक्रममाह—सत्त्वरज० ।

यद्यपि त्रयाणां साम्यावस्था प्रकृतिः, तथाप्येकैकस्मिन्नपि प्रकृतिशब्दप्रयोगः साङ्केतिकः । महानिति बुद्धितत्त्वम् । अहङ्कार इत्यभिमानः । पञ्च तन्मात्राणीति शब्द-स्पर्श-रूप-रस-गन्धाः । उभयमिन्द्रियम्—बाह्यानि पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि, पञ्च च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणनामानि । आन्तरं मनः । स्थूलभूतानि आकाशवायुतेजोजलभूमयः । तेषाञ्च पञ्चतन्मात्रेभ्य उत्पत्तिरिति बोद्धव्यम् । स्थूल इत्युपलक्षणम्, तेन सूक्ष्मभूतानामपि ग्रहणम् । पुरुष इति संख्यापूरणार्थम्, न तु सृष्टिक्रमार्थम्, नित्यत्वादात्मनः ॥ ६१ ॥

[वृ० सा०] विवेकप्रतियोग्यनुयोगिपदार्थान् वक्ष्यमाणानुमानोपयोगिकार्यकारणभावं च दर्शयति—सत्त्वेति ।

लघुत्वादिगुणयोगात् सुखादित्रयं द्रव्यम् । तत्र गुणशब्दस्तु पुरुषोपकरणत्वात् । तदेव प्रकृतिर्न तु तदाधारवस्त्वन्तरम्, सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादिति वक्ष्यमाणत्वात् । साम्यावस्था न्यूनाधिकभावेनासंहननम्, अकार्यावस्थत्वमित्यर्थः । एवं च कार्यभिन्नं गुणत्रयं प्रकृतिरिति पर्यवसितोऽर्थः । इदं च मूलप्रकृतिलक्षणम्, तत्त्वान्तरोपादानत्वं प्रकृतित्वमिति तु सामान्यलक्षणम् । उभयं बाह्याभ्यन्तरभेदेनैकादशविधम् । स्थूलभूतानीत्युक्त्या तन्मात्राणां सूक्ष्मभूतत्वमभिप्रैति । पुरुषस्तु कार्यकारणविलक्षणः । एवं पञ्चविंशतिर्गणः पदार्थसमूहः ॥६१॥

[भा०] उक्तप्रमाणैः साध्यस्य विवेकस्य प्रतियोग्यनुयोगिपदार्थानां संग्रहसूत्रं वक्ष्यमाणानुमानोपयोगिकार्यकारणभावमपि प्रदर्शयति—सत्त्वरज० ।

सत्त्वादीनि द्रव्याणि न वैशेषिका गुणाः, संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च । तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणत्वात्

पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते। तेषां सत्त्वादिद्रव्याणां या साम्यावस्थाऽन्यूनानतिरिक्तावस्था न्यूनाधिकभावेनासंहतावस्थेति यावत्, अकार्यावस्थेति निष्कर्षः। अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात्।

सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा।
एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्॥

इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च। सत्त्वादीनामनुगमाय सामान्येति। पुरुषव्यावर्तनाय गुणेति। महदादिव्यावर्तनाय चोपलक्षितान्तमिति। महदादयोऽपि हि कार्यसत्त्वादिरूपाः पुरुषोपकरणतया गुणाश्च भवन्तीति। तदत्र प्रकृतेः स्वरूपमेवोक्तम्। अस्या विशेषस्तु पश्चाद्वक्ष्यते। प्रकृतेः कार्यं महान् महत्तत्त्वम्। महदादीनां स्वरूपं विशेषश्च वक्ष्यते। महतश्च कार्यमहङ्कारः। अहङ्कारस्य कार्यद्वयं तन्मात्राण्युभयमिन्द्रियं च। तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेनैकादशविधम्। तन्मात्राणां कार्याणि पञ्च स्थूलभूतानि। स्थूलशब्दात् तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम्। पुरुषस्तु कार्यकारणविलक्षण इति। इत्येवं पञ्चविंशतिर्गणः पदार्थव्यूहः। एतदतिरिक्तः पदार्थो नास्तीत्यर्थः। अथवा सत्त्वादीनां प्रत्येकव्यक्त्यानन्त्यं गणशब्दो वक्ति।

अयं च पञ्चविंशतिको गणो द्रव्यरूप एव। धर्मधर्म्यभेदात् तु गुणकर्मसामान्यादीनामत्रैवान्तर्भावः। एतदतिरिक्तपदार्थसत्त्वे हि ततोऽपि पुरुषस्य विवेक्तव्यतया तदसंग्रहन्यूनतापद्येत। एतेन साङ्ख्यानामनियतपदार्थाभ्युपगम इति मूढप्रलाप उपेक्षणीयः। दिक्कालौ चाकाशमेव। "दिक्कालावाकाशादिभ्यः" (२।२२) इत्यागामिसूत्रात्। एव एव पदार्थाः परस्परप्रवेशाप्रवेशाभ्यां क्वचित् तन्त्र एकमेव, क्वचित् तु षट्, क्वचिच्च षोडश, क्वचिच्च सङ्ख्यान्तरैरप्युपदिश्यन्ते। विशेषस्तु साधर्म्यवैधर्म्यमात्र इति मन्तव्यम्। तथा चोक्तं भागवते—

एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च।
पूर्वस्मिन् वा परस्मिन् वा तत्त्वे तत्त्वानि सर्वशः॥ (११।२२।८)

इति नानाप्रसङ्ख्यानं तत्त्वानामृषिभिः कृतम्।
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम्॥ (११।२२।२५)

इति। एते च पदार्थाः श्रुतिष्वपि गणिताः; यथा गर्भोपनिषदि—"अष्टौ प्रकृतयः षोडश विकाराः" (३) इति। प्रश्नोपनिषदि च—"पृथिवी च पृथिवीमात्रा च" (४।८) इत्यादिना। एवं मैत्रेयोपनिषदादिष्वपि। अष्टौ च प्रकृतयः कारिकया व्याख्याताः—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥ (सां० का० ३)

इति। एकमेवाद्वितीयं तत्त्वमिति श्रुतिस्मृतिप्रवादस्तु सर्वतत्त्वानां पुरुषे विलाप-

नेन शक्तिशक्तिमदभेदेनेत्यविरोधः। लयस्तु सूक्ष्मीभावेनावस्थानं न तु नाश इति। तदुक्तम्

आसीज्ज्ञानमथोऽप्यर्थं एकमेवाविकल्पितम्।

अविकल्पितमविभक्तम्। एतच्च ब्रह्ममीमांसाभाष्ये ( वि० भा० १।१।४–५ ) अद्वैतप्रसङ्गतो विस्तरेणोपपादितम्। विशेषस्त्वयं यत् सेश्वरवादेऽन्यतत्त्वानां तत्रैवाविभागादीश्वरचैतन्यमेवैकं तत्त्वम्। निरीश्वरवादे तु त्रिवेणिवदन्योन्याविभक्ततयैकस्मिन् कूटस्थे तेजोमण्डलवदादित्यमण्डले प्रकृत्याख्यसूक्ष्मावस्थाया महदादेरविभागादात्मैवैकं तत्त्वमिति। तथा च वक्ष्यति—"नाद्वैतश्रुतिविरोधो जातिपरत्वात्" ( सां० सू० १।१५४ ) इति ॥ ६१ ॥

[भा० सा०] अथोक्तप्रमाणसाध्यविवेकस्य प्रतियोग्यनुयोगिपदार्थजातमनुमानोपयोगि तत्कार्यकारणभावं च दर्शयति—सत्त्वेति। सत्त्वादीनि द्रव्याणि संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च, सुखप्रकाशलाघवप्रसादादिगुणकत्वाच्च, अनाश्रितत्वाच्च, उपादानत्वाच्च। तेषु गुणशब्दप्रयोगस्तु पुरुषोपकरणत्वात् पुरुषबन्धादित्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते। तेषां या साम्यावस्था अन्यूनानतिरिक्तावस्था असंहननावस्था अकार्यावस्थेति यावत्। अकार्यावस्थं गुणसामान्यं प्रकृतिरिति निष्कर्षः।

एकैकेषु वैषम्यावस्थायां च प्रकृतिशब्दप्रयोगो गौणः। अखिलविकारोपादानगुणत्रयात्मकत्वं प्रकृतित्वम्। तद्गुणवती अतिरिक्ता सेति त्वयुक्तम्, सूत्रविरोधात्। प्रकृतेर्गुणा इति तु वनस्य वृक्षा इतिवत्। "प्रकृतेरभवन् गुणाः" इति तेषां प्रकृतिकार्यवचस्तु महत्तत्त्वकारणीभूतकार्यसत्त्वादपरं, गुणनित्यतावाक्यविरोधात्। महदादिसृष्टिर्हि गुणवैषम्याच्छ्रूयते। वैषम्यं च सजातीयसंवलनगुणान्तरव्यावृत्तप्रकाशादिफलोपहितः सत्त्वादिगुणव्यवहारयोग्यपरिणाम इति। गुणानां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्यभेदात्, मनःसङ्कल्पात्मकत्वात्।

प्रकृतेः कार्यं महान् महत्तत्त्वम्। महदादीनां स्वरूपं विशेषश्च वक्ष्यते। महतः कार्योऽहङ्कारः। अहङ्कारस्य कार्यद्वयं पञ्चतन्मात्राण्युभयेन्द्रियं च। तत्रेन्द्रियं बाह्यान्तरभेदेनैकादशधा। तन्मात्राणां कार्याणि पञ्च स्थूलभूतानि, स्थूलशब्देन पञ्चतन्मात्राणां सूक्ष्मभूतत्वं दर्शितम्। पुरुषस्तु कार्यकारणविलक्षण इत्येवं पञ्चविंशतिर्गणः पदार्थव्यूह इत्यर्थः। व्यक्त्यानन्त्यं त्विष्टमेव।

अयं गणो द्रव्यरूप एव। धर्मधर्म्यभेदात् तु गुणकर्मसामान्यादीनामत्रैवान्तर्भावः। दिक्कालावाकाशमेव। एत एव पदार्थाः परस्परप्रवेशाप्रवेशाभ्यां क्वचिदेकं क्वचित्षट् क्वचित्षोडश क्वचित्षड्विंशादिसङ्ख्यान्तरैरप्युपदिश्यन्ते। एकमेवाद्वितीयमिति प्रवादस्तु सर्वतत्त्वानां पुरुषे विलापनेन विभागेन वा शुक्तिमदभेदेनेत्यविरोधः। लयश्च सूक्ष्मरूपेणावस्थानम्। सांख्यमतेऽयं विशेषः—यत्सेश्वरवादेऽन्यतत्त्वानां तत्रैवाविभागादीश्वरचैतन्यमेकमेव तत्त्वम्, निरीश्वरवादे तु अन्योन्याविभक्ततया एकस्मिन्कूटस्थे तेजोमण्डलवदात्ममण्डले

प्रकृत्याख्यसूक्ष्मावस्थया महदादेरविभागात्मैवैकं तत्त्वम् । आत्मेति जातिपरो निर्देशः। महदादिकारणीभूतवैषम्यावस्थसत्त्वादित्रयमादायाष्टाविंशतितत्त्वानीत्यन्ये ॥ ६१ ॥

## स्थूलात् पञ्चतन्मात्रस्य ॥६२॥

[वृ०] कार्यात् कारणानुमानं प्रातिलोम्येनाह—स्थूलात्० । स्थूलात् पञ्चभूतात् कार्यात् सत्त्वरजस्तमोभेदेन शान्तघोरमूढरूपात् पञ्चतन्मात्रस्य ज्ञानम् ॥ ६२ ॥

[वृ० सा०] अनुमानक्रममाह सूत्रैः—स्थूलेति । अनुमानेन बोध इत्यनुवर्तते । स्थूलं पृथिव्यादि प्रत्यक्षसिद्धम्, तेन तन्मात्राणामनुमानमपकर्षकाष्ठापन्नानि स्थूलभूतानि स्वविशेषगुणवद्द्रव्योपादानकानि, स्थूलत्वात्, पटवदिति प्रयोगः ॥ ६२ ॥

[भा०] एतेषु पदार्थेष्वचाक्षुषाणामनुमानेन बोधं प्रतिपादयति सूत्रजातेन—स्थूलात्० । बोध इत्यनुवर्तते ( १।६० सूत्रतः ) । स्थूलं तावच्चाक्षुषमेव, तच्च तन्मात्रकार्यंतयोक्तम् । ततः स्थूलभूतात् कार्यात् तत्कारणतया तन्मात्रानुमानेन स्थूलविवेकतो बोध इत्यर्थः । आकाशसाधारण्याय स्थूलत्वमत्र बाह्येन्द्रियग्राह्यगुणकत्वं शान्तादि विशेषवत्त्वं वा । तन्मात्राणि च यज्जातीयेषु शान्तादिविशेषत्रयं न तिष्ठति तज्जातीयानां शब्दस्पर्शरूपरसगन्धानामाधारभूतानि सूक्ष्मद्रव्याणि स्थूलानामविशेषाः—

तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता ।
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः ॥ ( वि० पु० १।२।४३ )

इति विष्णुपुराणादिभ्यः । अस्यायमर्थः—तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्तीति कृत्वा धर्मधर्म्यभेदाद् द्रव्याणामपि तन्मात्रता स्मृता । ते च पदार्थाः शान्तघोरमूढाख्यैः स्थूलगतशब्दादिविशेषैः शून्याः, एकरूपत्वात् । तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः । अतोऽविशेषिणोऽविशेषसंज्ञिता इति । शान्तं सुखात्मकं घोरं दुःखात्मकं मूढं मोहात्मकम् । तन्मात्राणि च देवादिमात्रभोग्यत्वेन केवलं सुखात्मकान्येव सुखाधिक्यादिति ।

अत्रेदमनुमानम्—अपकर्षकाष्ठापन्नानि स्थूलभूतानि स्वविशेषगुणवद्द्रव्योपादानकानि स्थूलत्वाद् घटपटादिवदिति । अत्रानवस्थापत्त्या सूक्ष्ममादायैव साध्यं पर्यवस्यति। अनुकूलतर्कश्चात्र कारणगुणक्रमेण कार्यगुणोत्पत्तेर्बाधकव्यतिरेकेणापरिहार्यत्वम्, श्रुतिस्मृतयश्चेति । प्रकृतेः शब्दस्पर्शादिमत्त्वे तु बाधकमस्ति—

शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम् ।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥ (वि० पु० १।२।२०-२१)

इति विष्णुपुराणादिवाक्यजातम् । बुद्ध्यहङ्कारयोश्च शब्दस्पर्शादिमत्त्वे भूतकारणत्वश्रुतिस्मृतय एव बाधकाः सन्ति । बाह्येन्द्रियग्राह्यजातीयविशेषगुणवत्त्वस्यैव भूतलक्षणत्वेन तयोरपि भूतत्वापत्त्या स्वस्य स्वकारणत्वानुपपत्तेरिति ।

नन्वेवं कारणद्रव्येषु रूपाद्यभावे तन्मात्ररूपादेः किं कारणमिति चेत्; स्वकारणद्रव्याणां न्यूनाधिकभावेनान्योऽन्यं संयोगविशेष एव। हरिद्रादीनां संयोगस्य तदुभयारब्धद्रव्ये रक्तरूपादिहेतुत्वदर्शनात्। दृष्टानुसारेण स्वाश्रयहेतुसंयोगानामेव रूपादिहेतुत्वसंभवे तार्किकाणां परमाणुषु रूपकल्पनं तु हेयम्। सजातीयकारणगुणस्यैव कार्यगुणारम्भकतेति तु तेषामपि न नियमः। त्रसरेणुमहत्त्वादाववयवबहुत्वादेरेव तैरपि हेतुत्वाभ्युपगमादिति दिक्।

इन्द्रियानुमानं चाकाशानुमानवद्दर्शनस्पर्शनवचनादिभिः प्रत्यक्षाभिर्वृत्तिभिरेवेति तदत्र नोक्तम्। तत्त्वान्तरेण तत्त्वान्तरानुमानानामेव प्रकृतत्वादिति न न्यूनता। तन्मात्राणां चोत्पत्तौ योगभाष्योक्तप्रक्रियैव ग्राह्या। यथा—अहङ्काराच्छब्दतन्मात्रं ततश्चाहङ्कारसहकृताच्छब्दतन्मात्राच्छब्दस्पर्शगुणकं स्पर्शतन्मात्रम्। एवं क्रमेणैकैकगुणवृद्ध्या तन्मात्राण्युत्पद्यन्त इति। या तु—

आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह।
बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः॥ ( वि० पु० १।२।३८ )

इत्यादिना विष्णुपुराणे स्पर्शादितन्मात्रसृष्टिराकाशादिस्थूलभूतचतुष्टयादुक्ता, सा भूतरूपेण परिणमनरूपैव मन्तव्या। आकाशादीनि जलान्तानि हि स्थूलभूतानि स्वस्वोत्तरभूतरूपेण स्वानुगततन्मात्राः स्वोपष्टम्भतः परिणमयन्तीति॥ ६२॥

[भा० सा०] अथैषामनुमानाद् बोधं दर्शयति—स्थूलेति। बोध इत्यनुवर्तते। स्थूलं चाक्षुषमेव। स्थूलात् पञ्चभूतात्मकात् कार्यात् स्वकारणतया पञ्चतन्मात्रस्य बोध इत्यर्थः। स्थूलत्वमत्र बाह्येन्द्रियग्राह्यगुणकत्वमाकाशसाधारणम्। तन्मात्रत्वं च यज्जातीयेषु शान्तघोरमूढाख्यं विशेषत्रयं तिष्ठति तज्जातीयतदनाश्रयशब्दस्पर्शरूपरसगन्धाश्रयसूक्ष्मद्रव्यत्वम्। शान्तं सुखात्मकं, घोरं दुःखात्मकं, मूढं मोहात्मकम्। तन्मात्राणि च देवादिभोग्यत्वेन केवलसुखात्मकान्येव सुखाधिक्यादिति तत्त्वम्।

अनुमानं चेत्थम्—स्थूलभूतानि स्वविशेषगुणवद्द्रव्योपादानकानि, स्थूलत्वात्। घटादिवदिति। अनवस्थापत्त्या च सूक्ष्ममादायैव साध्यं पर्यवस्यति। सूक्ष्मत्वं च तेषां देवादिभोग्यत्वेन। एवं शब्दादीनां प्रकृत्यादिषु ततोऽपि सूक्ष्मरूपे स्थाने बोध्यम्। अन्यथोत्तरोत्तरकार्येषु नानुपपत्तिः।

शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाव्ययम्॥ ( वि० पु० १।२।२० )

इत्यादि तु अतिसूक्ष्मतापरम्।

केचित्तु तद्वाक्यात्प्रकृतिस्तच्छून्यैव। महदहङ्कारावपि तच्छून्यावेव, अन्यथा बाह्येन्द्रियग्राह्यजातीयगुणविशेषवत्त्वस्यैव भूतत्वेन तयोरपि भूतत्वापत्तौ स्वस्य कारणत्वानुपपत्त्या तयोर्भूतकारणत्वश्रुतिविरोधापत्तेः। तस्माद्धरिद्रादीनां संयोगेन तदुभयारब्धे रक्तत्वरूपवद् वह्नवय-

वारब्धे त्र्यसरेणोर्महत्त्ववच्च महदहङ्कारसंयोगाच्छब्दतन्मात्रं तदुभयसहकृताच्छब्दतन्मात्राच्छब्द-स्पर्शगुणात्मकं स्पर्शतन्मात्रमिति क्रमेणैकैकगुणवृद्ध्या तन्मात्राणामुत्पत्तिरित्याहुः।

अत्रेदं चिन्त्यम्; सूक्ष्मभूतानां स्थूलभूतकारणत्वदर्शनात् प्रागुक्तनियमत्यागे माना-भावाच्चेति। इन्द्रियानुमानं चाकाशानुमानवद्दर्शनस्पर्शनवचनादिभिः प्रत्यक्षाभिर्वृत्तिभिरेवेति। तदत्र नोक्तम्. तत्त्वान्तरेण तत्त्वान्तरानुमानानामेव प्रकृतत्वात्। तत्राहङ्काराच्छब्दतन्मात्रम्, अहङ्कारसहकृताच्छब्दतन्मात्राच्छब्दस्पर्शगुणकं स्पर्शतन्मात्रम्। एवं क्रमेणैकैकगुणवृद्ध्या इतरतन्मात्राण्युत्पद्यन्ते, इति प्रक्रिया योगभाष्ये (२।१९) उक्ता। तत्र पूर्व-पूर्वतन्मात्रस्योपष्ट-म्भकतामात्रम्। यत्तु आकाशादिस्थूलभूतचतुष्टयात् स्पर्शादितन्मात्रसृष्टिरुक्ता—

भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह।
आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम्॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह।
वायुरुत्पद्यते तस्मात्तस्य स्पर्शो गुणोऽभवत्॥
(वि० पु० १।१।३७, ३८)

इत्यादिना, सा तु स्थूलभूतानि स्वोत्तरभूतरूपेण स्वानुगततन्मात्राः स्वोपष्टम्भतोऽ-हङ्कारोपष्टम्भकतया परिणामयन्तीत्याशयेन कथञ्चिन्नेयाः। अत्र पञ्चतन्मात्रोत्तरमुभयेन्द्रिय-मित्युक्त्या तेष्वपि उपष्टम्भकतया तदनुगमोऽभिमत इति लक्ष्यते॥ ६२॥

## बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ॥६३॥

[वृ०] बाह्या०। बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्यै-रहङ्कारस्य ज्ञानम्॥ ६३॥

[वृ० सा०] बाह्येति। बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैस्तन्मात्रेन्द्रियाण्यभिमानवद्-द्रव्योपादानकानि, अभिमानकार्यत्वात्, यन्नैवं तन्नैवं, यथा पुरुष इत्यनुमानप्रकारः। अत्र साधारणद्रव्याणां हिरण्यगर्भाहङ्कारोपादानकत्वमेवेत्यवधेयम्॥ ६३॥

[भा०] बाह्याभ्य०। बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्यैस्त-त्कारणतयाहङ्कारस्यानुमानेन बोध इत्यर्थः। अहङ्कारश्चाभिमानवृत्तिकमन्तःकरणद्रव्यं न त्वभिमानमात्रम्, द्रव्यस्यैव लोके द्रव्योपादानत्वदर्शनात्। सुषुप्त्यादावहङ्कारवृत्ति-नाशेन भूतनाशप्रसङ्गाद्वासनाश्रयत्वेनैवाहङ्काराख्यद्रव्यसिद्धेश्चेति। अत्रेत्थमनुमानम्—तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकानि, अभिमानकार्यद्रव्यत्वात्, यन्नैवं तन्नैवम्, यथा पुरुषादिरिति। नन्वभिमानवद्द्रव्यमेवासिद्धमिति चेत्, अहं गौर इत्यादिवृत्त्युपा-दानतया चक्षुरादिवत् तत्सिद्धेः। अनेन चानुमानेन मनआद्यतिरेकमात्रस्य तत्कारणतया प्रसाध्यत्वात्। अत्र चायमनुकूलस्तर्कः। "बहु स्यां प्रजायेय" (छा० उ० ६।२।३) इत्यादिश्रुतिस्मृतिभ्यस्तावद् भूतादिसृष्टेरभिमानपूर्वकत्वाद् बुद्धिवृत्तिपूर्वकसृष्टौ कारण-तयाऽभिमानः सिद्धः। तत्र चैकार्थसमवायप्रत्यासत्त्यैवाभिमानस्य सृष्टिहेतुत्वं लाघवात् कल्प्यत इति।

नन्वेवं कुलालाहङ्कारस्यापि घटोपादानत्वापत्त्या कुलालमुक्तौ तदन्तःकरणनाशे तन्निर्मितघटनाशः स्यात्; न चैतद्युक्तम्, पुरुषान्तरेण स एवायं घट इति प्रत्यभिज्ञायमानत्वादिति। मैवम्; मुक्तपुरुषभोगहेतुपरिणामस्यैव तदन्तःकरणमोक्षोत्तरमुच्छेदात्, न तु परिणामसामान्यस्यान्तःकरणस्वरूपस्य वोच्छेदः। "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" (२।२२) इति योगसूत्रे मुक्तपुरुषोपकरणस्याप्यन्यपुरुषार्थसाधकत्वसिद्धेरिति। अथवा घटादिष्वपि हिरण्यगर्भाहङ्कार एव कारणमस्तु न कुलालाद्यहङ्कारस्तथापि सामान्यव्याप्तौ न व्यभिचारः; समष्टिबुद्ध्याद्युपादानिकैव हि सृष्टिः पुराणादिषु साङ्ख्ययोगयोश्च प्रतिपाद्यते, न तु तदंशव्यष्टिबुद्ध्याद्युपादानिका। यथा महापृथिव्या एव स्थावरजङ्गमाद्युपादानत्वं न तु पृथिव्यंशलोष्टादेरिति ॥ ६३ ॥

[भा० सा०] बाह्येति—बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्यैस्तत्कारणाहङ्कारस्यानुमानमित्यर्थः।

अहङ्कारश्चाहं गौर इति वृत्त्युपादानतया चक्षुरादिवत्सिद्धमभिमानवृत्तिकमन्तःकरणद्रव्यम्, न त्वभिमानमात्रम्, द्रव्यस्यैव लोके द्रव्योपादानत्वदर्शनात्। किञ्चाभिमानस्य द्रव्यत्वेऽपि त्रिक्षणावस्थायिवृत्तित्वेन तन्नाशे कार्यनाशापत्तिरतः स्थिरं तदाधारद्रव्यमावश्यकम्। तच्चाभिमानवासना च द्रव्यम्। अत एव सुषुप्त्यादावहङ्कारवृत्तिनाशेऽपि न मूतनाशः।

अनुमानं तु—तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकानि, अभिमानकार्यद्रव्यत्वात्, यन्नैवं तन्नैवम्, यथा पुरुषादिरिति। अनेन चानुमानेन तत्र मन आद्यतिरेकमात्रं तत्कारणतया प्रसाध्यते। "बहु स्यां प्रजायेय" (छा० उ० ६।२।३) इत्यादि श्रुत्यादयोऽत्रानुकूलतर्कः। तैश्च बुद्धिप्रवृत्तिपूर्वकः सृष्टावभिमानः कारणतया सिद्धः। स चैकार्थसमवायप्रत्यासत्त्यैव सृष्टिहेतुर्लाघवात्।

न च कुलालाहङ्कारस्य घटोपादानस्य कुलालमुक्तौ तदन्तःकरणनाशे तन्निमित्तघटादिनाशापत्तिः, तथा पुरुषान्तरस्य स एवायमिति प्रत्यभिज्ञा न स्यात्, इति वाच्यम्; मुक्तपुरुषभोगहेतुतदन्तःकरणपरिणामस्यैव मोक्षोत्तरमुच्छेदो न तु परिणामसामान्यस्येति स्वीकारात्। यद्वा घटादिष्वपि समष्टिभूतहिरण्यगर्भाहङ्कार एव कारणमिति न दोषः ॥ ६३ ॥

## तेनान्तःकरणस्य ॥६४॥

[वृ०] तेनान्तः०। तेनाहङ्कारेण कार्येणान्तःकरणस्य बुद्धेर्ज्ञानम् ॥ ६४ ॥

[वृ० सा०] तेनेति। तेनाहङ्कारेण कार्येण तत्कारणतया मुख्यस्यान्तःकरणस्य महदाख्यस्यानुमानेन बोधः। अत्र प्रयोगः—अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्यम्, द्रव्यत्वात्, यन्नैवं तन्नैवम्, यथा पुरुषादिरिति। अत्रायं तर्को बोध्यः—सर्वोऽपि लोकः पदार्थमादौ स्वरूपतो निश्चित्य पश्चादभिमन्यते 'अयमहम्, मयेदं कर्तव्यम्' इत्यादिरूपेणेति, तावत्सिद्धम्। तत्राहङ्कारद्रव्यकारणाकाङ्क्षायां वृत्त्योः कार्यकारणभावेन तदाश्रययोरेव कार्यकारणभावो लाघवात् कल्प्यते, कारणस्य वृत्तिलाभेन कार्यवृत्तिलाभस्यौत्सर्गिकत्वादिति ॥६४॥

[भा०] तेनान्तः० । तेनाहङ्कारेण कार्येण तत्कारणतया मुख्यस्यान्तःकरणस्य महदाख्यबुद्धेरनुमानेन बोध इत्यर्थः । अत्राप्ययं प्रयोगः—अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकम्, निश्चयकार्यद्रव्यत्वात्, यन्नेवं तन्नैवम्, यथा पुरुषादिरिति । अत्राप्ययं तर्कः सर्वोऽपि लोकः पदार्थमादौ स्वरूपतो निश्चित्य पश्चादभिमन्यते 'अयमहं मयेदं कर्तव्यम्' इत्यादिरूपेणेति तावत् सिद्धमेव । तत्राहङ्कारद्रव्यकारणाकाङ्क्षायां वृत्त्योः कार्यकारणभावेन तदाश्रययोरेव कार्यकारणभावो लाघवात् कल्प्यते । कारणस्य वृत्तिलाभेन कार्यवृत्तिलाभस्यौत्सर्गिकत्वादिति । श्रुतावपि "स ईक्षाञ्चक्रे" ( बृ० उ० १।४।२ ), "तदैक्षत" ( छा० उ० ६।२।३ ) इत्यादौ सर्गाद्युत्पन्नबुद्धित एव तदितराखिलसृष्टिरवगम्यत इति ।

यद्यप्येकमेवान्तःकरणं वृत्तिभेदेन त्रिविधं लाघवात्—

गुणक्षोभे जायमाने महान् प्रादुर्बभूव ह ।
मनो महांश्च विज्ञेय एकं तद् वृत्तिभेदतः ॥

इति लैङ्गात् । "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" ( २।४।१२ ) इति वेदान्तसूत्रेण प्राणदृष्टान्तविधया मनसोऽपि वृत्तिमात्रभेदेन बहुत्वसिद्धेश्च । अन्यथा निश्चयादिवृत्तिभिरिव भ्रमसंशयनिद्राक्रोधादिवृत्तिभिरपि स्वसमसंख्यानन्तान्तःकरणापत्तेः । बुद्ध्यादिष्वव्यवस्थया मनआदिप्रयोगस्य पातञ्जलादिसर्वशास्त्रेष्वनुपपत्तेश्च । तथापि वंशपर्वस्विवावान्तरभेदमाश्रित्यान्तःकरणत्रये क्रमः कार्यकारणभावश्चोक्तः, योगोपयोगिश्रुतिस्मृतिपरिभाषानुसारादिति मन्तव्यम् । तदुक्तं वासिष्ठे—

अहमर्थोदयो योऽयं चित्तात्मा वेदनात्मकः ।
एतच्चित्तद्रुमस्यास्य वीजं विद्धि महामते ॥
एतस्मात् प्रथमोद्भिन्नादङ्कुरोऽभिनवाकृतिः ।
निश्चयात्मा निराकारो वुद्धिरित्यभिधीयते ॥
अस्य बुद्ध्यभिधानस्य याऽङ्कुरस्य प्रपीनता ।
सङ्कल्परूपिणी तस्याश्चित्तचेतोमनोऽभिधा ॥ इति ।

अहमर्थोऽन्तःकरणसामान्यम् । अत्र वाक्ये बीजाऽङ्कुरन्यायेनैकस्यैवान्तःकरणवृक्षस्य वृत्तिमात्ररूपेण चित्ताद्याख्यावस्थाभेदाः क्रमिकास्त्रिविधाः परिणामा उक्ता इति । सांख्यशास्त्रे च चिन्तावृत्तिकस्य चित्तस्य बुद्धावेवान्तर्भावः । अहङ्कारस्य चात्र वाक्ये बुद्धावन्तर्भावः ॥६४॥

[ भा० सा० ] तेनेति । तेनाहङ्कारेण स्वकारणस्य मुख्यस्यान्तःकरणस्य महद्बुद्धिमनःसंज्ञाकस्यानुमानमित्यर्थः । अहङ्कारद्रव्यं निश्चयवृत्तिवासनाद् द्रव्योपादानकम्, निश्चयकार्यद्रव्यत्वात्, यन्नैवं तन्नैवम्, यथा पुरुषादि । अस्य कार्यत्वं तु एकदा पञ्चेन्द्रियज्ञानोत्पत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धं श्रुतिस्मृतिप्रामाण्याच्च ।

एवमेवान्तःकरणसामान्यस्य कार्यत्वं बोध्यम् । लोको हि पदार्थमादौ स्वरूपतो निश्चित्य पश्चादभिमन्यते 'अयमहं, ममेदं कर्तव्यम्' इति । "तदैक्षत" (छा० उ०६।२।३)इत्यादिश्रुतिश्च सर्गाद्युत्पन्नबुद्धित एव तदितराखिलसृष्टिमवगमयति ।

यद्यप्येकमेवान्तःकरणं वृत्तिभेदाद् बहुविधम्—यथा चिन्तावृत्तिकमन्तःकरणं चित्तम्, निश्चयवृत्तिकं बुद्धिः, अभिमानवृत्तिकमहङ्कारः, सङ्कल्पवृत्तिकं मन इति क्वचिदुक्तम्। युक्तं च। अन्यथा भ्रमसंशयनिद्रादिवृत्तिभिः स्वसमसंख्यानन्तान्तःकरणापत्तिः । अत एव बुद्धयादित्रवस्थयैव मनोव्यवहारः पातञ्जलादीनाम्; तथाप्यत्रावान्तरभेदमाश्रित्यान्तःकरणत्रये क्रमेण कार्यकारणभाव उक्तः ।

चिन्तावृत्तिकस्य चात्र बुद्धावेवान्तर्भावः। केचिदहङ्कारवृत्तिकमपि बुद्धित्वेन व्यवहरन्ति। तृतीयं त्विन्द्रियेषु गणितमिति दिक् ॥ ६४ ॥

## ततः प्रकृतेः ॥६५॥

[वृ०] ततः०। ततो महत्तत्त्वात् कार्यात् प्रकृतेर्मूलकारणस्य प्रधानस्य ज्ञानम् ॥ ६५ ॥

[ वृ० सा० ] तत इति । ततो महत्तत्त्वात् कार्यात् प्रकृतेरनुमानेन बोधः । सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या, कार्यत्वे सति सुखदुःखमोहात्मकत्वादिति कारणगुणानुसारेणैव कार्यगुणौचित्यं चात्रानुकूलस्तर्कः । ननु विषयेषु सुखादिमत्त्वे प्रमाणं नास्ति , अहं सुखी दुःखी मूढ इत्येवानुभवात्, तत्कथं कान्तादिर्विषयो दृष्टान्त इति चेत्; अत्राहुः—सुखाद्यात्मकबुद्धिकार्यतया स्रक्सुखं चन्दनसुखमित्याद्यनुभवेन च विषयाणामपि सुखादिधर्मकत्वसिद्धेः । किञ्च, यस्यान्वयव्यतिरेकौ सुखादिना सह दृश्येते तस्यैव सुखाद्युपादानत्वं कल्प्यते । तस्य निमित्तत्वं परिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वयकल्पनागौरवात् । अपि चान्योन्यसंवादेन प्रत्यभिज्ञया च विषयेषु सर्वपुरुषसाधारणस्थिरसुखसिद्धिः । तत्तत्सुखग्रहणायास्मन्नये वृत्तिनियमादिकल्पनागौरवं च फलसुखत्वान्न दोषावहम् । विषयेऽपि सुखादिकं च मार्कण्डेयपुराणे उक्तम्—

तत्सन्तु चेतस्यथवापि देहे सुखानि दुःखानि च किं ममात्र । (३७।३८) इति ।

अहं सुखीत्यादिप्रत्ययास्तु अहं धनीत्यादिप्रत्ययवत् स्वस्वामिभावाख्यसम्बन्धविषयकाः । तेषां प्रत्ययानां समवायसम्बन्धविषयकत्वभ्रमनिरासार्थं तु सुखिदुःखिमूढेभ्यः पुरुषो विविच्यते शास्त्रेष्विति । यत्तु विषयासम्प्रयोगकाले शान्तिसुखं सात्त्विकं सुषुप्त्यादौ व्यज्यते तदेव बुद्धिधर्मं आत्मसुखमुच्यते इति । यद्यपि वैशेषिकाद्यास्तार्किका अन्यथाप्यनुमिमन्ते, तथापि स्मृत्याद्युपोद्बलितत्वात् सांख्यप्रक्रियैवात्र साध्वीति मन्तव्यम् । एवं च "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" इत्यत्र मननं सांख्यरीत्यैव । नन्वेवमप्यखिलजडेभ्यः पुरुषविवेक एव हेतुस्तत्किमर्थं जडानामन्योन्यविवेकोऽत्र दर्शित इति चेत्; प्रकृत्यादितत्त्वोपासनया सत्त्वशुद्धयर्थं तद्विवेकस्याप्यपेक्षितत्वादिति ॥ ६५ ॥

[भा०] ततः० । ततो महत्तत्त्वात् कार्यात् कारणतया प्रकृतेरनुमानेन बोध इत्यर्थः । अन्तःकरणसामान्यस्यापि कार्यत्वं तावदेकदा पञ्चेन्द्रियज्ञानानुत्पत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धम्, श्रुतिस्मृतिप्रामाण्याच्च । तस्य च प्रकृति-कार्यत्वेऽयं प्रयोगः—सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या, कार्यत्वे सति सुखदुःखमोहात्मकत्वात्, कान्तादिवदिति । कारणगुणानुसारेणैव कार्यगुणौचित्यं चात्रानुकूलस्तर्कः, श्रुतिस्मृतयोऽपीति मन्तव्यम् ।

ननु विषयेषु सुखादिमत्त्वे प्रमाणं नास्ति, अहं सुखीत्याद्येवानुभवात् । तत् कथं कान्तादिर्विषयो दृष्टान्त इति चेन्न; सुखाद्यात्मकबुद्धिकार्यतया स्रक्सुखं चन्दन-सुखमित्याद्यनुभवेन च विषयाणामपि सुखादिधर्मकत्वसिद्धेः, श्रुतिस्मृतिप्रामाण्याच्च । किञ्च, यस्यान्वयव्यतिरेकौ सुखादिना सह दृश्येते तस्यैव सुखाद्युपादानत्वं कल्प्यते । तस्य निमित्तत्वं परिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वयकल्पनागौरवात् । अपि चान्योन्यसंवादेन प्रत्यभिज्ञया च विषयेषु सर्वपुरुषसाधारणस्थिरसुखसिद्धिः । तत्सुखग्रहणायास्मन्नये वृत्तिनियमादिकल्पनागौरवं च फलमुखत्वान्न दोषावहम् । अन्यथा प्रत्यभिज्ञयाऽवयव्यसिद्धिप्रसङ्गात् तत्कारणादिकल्पनागौरवादिति । विषयेऽपि सुखादिकं च मार्कण्डेये प्रोक्तम्—

तत् सन्तु चेतस्यथवापि देहे सुखानि दुःखानि च किं ममात्र । (मा० पु० ३७।३८)

इति । अहं सुखीत्यादिप्रत्ययस्तु, अहं धनीत्यादिप्रत्ययवत् स्वस्वामिभावाख्यसम्बन्ध-विषयकः । तेषां प्रत्ययानां समवायसम्बन्धविषयकत्वभ्रमनिरासार्थं तु सुखिदुःखि-मूढेभ्यः पुरुषो विविच्यते शास्त्रेष्विति । शब्दादिषु च सुखाद्यात्मताव्यवहार एकार्थसमवायात् । अस्तु वा शब्दादिषु साक्षादेव सुखमुक्तप्रमाणेभ्यः, विषयगत-सुखादेश्च बुद्धिमात्रग्राह्यत्वं फलबलात् । यत् तु विषयासम्प्रयोगकाले शान्तिसुखं सात्त्विकं सुषुप्त्यादौ व्यज्यते, तदेव बुद्धिधर्म आत्मसुखमुच्यत इति ।

यद्यपि वैशेषिकाद्या अपि तार्किकाः प्रपञ्चेऽन्यथापि कार्यकारणव्यवस्थामनुमिमते, तथापि बहुलश्रुतिस्मृत्युपोद्बलनेनास्माभिरनुमितैव व्यवस्था मुमुक्षुभिरुपादेया, मूल-शैथिल्यदोषेण परानुमानानां दुर्बलत्वात् । अत एव "तर्काप्रतिष्ठानाद्" ( २।१।११) इति वेदान्तसूत्रेणाप्रतिष्ठादोषतः केवलतर्कोऽपास्तः । तथा मनुनापि—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ ( मनु० १२।१०६)

इति वेदाविरुद्धतर्कस्यैवार्थनिश्चायकत्वमुक्तम् । तस्मात्—"श्रोतव्यः श्रुति-वाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" इत्यादिवाक्येभ्यः श्रवणसमानार्थकमेव मननं बलवत् । अन्याकारं मननं तु परेषां दुर्बलम् । एवं पुरुषेऽपि सुखदुःखादिमत्त्वे

तेषामनुमानं बहुलश्रुत्यादिविरोधाद् दुर्बलमिति दिक् । प्रकृतिगतविशेषं च पश्चाद्वक्ष्यामः ॥ ६१ ॥

[ भा० सा० ] तत इति । महत्तत्त्वात् कार्यात् स्वकारणप्रकृतेरनुमानमित्यर्थः । सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मजन्या, कार्यत्वे सति सुखदुःखमोहधर्मकत्वात्, कान्तावदिति, कारणगुणानुसारेण कार्यगुणौचित्यमनुकूलतर्कः । सुखाद्यात्मकबुद्धिकार्यतया स्रक्सुखमित्याद्यनुभवेन च स्रगादीनां निमित्तकारणत्वे उपादानकारणान्तरकल्पने गौरवेण च विषयाणामपि सुखादिमत्त्वमिति कान्तादिदृष्टान्तोपपत्तिः ।

किञ्चान्योन्यसंवादेन प्रत्यभिज्ञया च विषयेषु सर्वपुरुषसाधारणस्थिरसुखत्वसिद्धिः । तत्सुखग्रहणायास्मन्नये वृत्तिनियमादिकल्पनागौरवं च फलमुखत्वान्न दोषावहम्, अन्यथा प्रत्यभिज्ञयाऽव्ययवसिद्धिप्रसङ्गः ।

किञ्चान्तःकरणस्य सुखाद्याकारवृत्तिहेतुतया विषये सुखादिसिद्धिः । अन्यथा वृत्तौ कुतस्तदाकारसमर्पणं स्यात् । न च रूपादिगतोत्तमत्वादिकं तत्र सुखाद्युत्पत्तौ नियामकम्, सुखादिमत्त्वातिरिक्तोत्तमत्वादेर्दुर्वचत्वात् ।

किञ्च, यस्यान्वयव्यतिरेकौ सुखादिना दृश्येते तस्यैव सुखाद्युपादानत्वे कल्पिते तस्य निमित्तत्वमस्योपादानत्वमिति कारणद्वयकल्पने गौरवात् । अहं सुखीत्यादिप्रत्ययस्तु तत्तत्सुखाद्याकारवृत्तिप्रतिबिम्बमात्रेण स्वस्वामिभावाख्यसंबन्धमात्रेणाहं धनीत्यादिप्रत्ययवत् । तेषां प्रत्ययानां समवायसंबन्धविषयकत्वभ्रमनिरासार्थं सुखिदुःखिमूढेभ्यः पुरुषो विविच्यते शास्त्रेषु ।

यत्तु विषयासंप्रयोगकाले सात्त्विकं शान्तिसुखं सुषुप्त्यादौ व्यज्यते, तद् बुद्धिधर्मं आत्मसुखमित्युच्यते । एवंच कार्यकारणव्यवस्था श्रुत्यादिसिद्धतया युक्ता मुमुक्षूपादेया च । न गौतमाद्युक्तेः(क्ति) श्रवणसमानाकारमननस्यैव युक्तत्वादित्यलम् ।

ननु प्रकृतिपुरुषविवेकस्यैव मुक्तिहेतुत्वाज्जडानामप्यन्योन्यविवेकदर्शनमफलमिति चेत्, न; प्रकृत्यादितत्त्वोपासनया सत्त्वशुद्ध्यर्थं तद्विवेकस्याप्यपेक्षितत्वादिति ॥ ६५ ॥

## संहतपरार्थत्वात् पुरुषस्य ॥६६॥

[वृ०] संहत० । न प्रकृतेः कार्यत्वात् पुरुषस्य ज्ञानम्, प्रकृतेर्नित्यत्वात्, पुरुषस्याकारणत्वात् । किन्तु प्रकृतेः संहतत्वात् त्रिगुणात्मकत्वात् परार्थत्वम् । परश्च पुरुषः, अतस्तस्य ज्ञानम् । स चासंहतो वक्तव्यः, अनवस्थाभयात् ॥ ६६ ॥

[ वृ० सा० ] अथ यथोक्तकार्यकारणभावशून्यस्य पुरुषस्य प्रकारान्तरेणानुमानमाह—संहतेति । संघातकारणीभूतसंयोगस्तद्वतो व्यक्तमहदादेः पदार्थत्वात् । हेतोः पुरुषस्य बोधप्रयोगस्तु विवादास्पदं प्रकृतिमहदादिकं स्वेतरस्य भोगापवर्गफलकम्, संहतत्वात्, शय्यासनादिवत् । अनेन चानुमानेन प्रकृतेः परोऽसंहत एव पुरुषः सिद्ध्यति, तस्यापि संहतत्वेनावस्थापत्तेः ॥ ६६ ॥

[भा०] नन्वखिलजडेभ्यः पुरुषविवेक एव मुक्तौ हेतुस्तत् किमर्थं जडानामन्योन्यविवेकोऽत्र दर्शित इति चेत्; प्रकृत्यादितत्त्वोपासनया सत्त्वशुद्ध्यर्थं

विवेकस्याप्यपेक्षितत्वादिति । कार्यकारणमुद्रया प्रकृतिपर्यन्तस्यानुमानेन विवेकतः सिद्धिमुक्त्वा यथोक्तकार्यकारणभावशून्यस्य पुरुषस्य प्रकारान्तरेणानुमानतस्तथा सिद्धिमाह—संहत० ।

संहननमारम्भकसंयोगः, स चावयवावयव्यभेदात् प्रकृतिकार्यसाधारणः । तथा च संहतानां प्रकृतितत्कार्याणां परार्थत्वानुमानेन पुरुषस्य बोध इत्यर्थः । तद्यथा विवादास्पदं प्रकृतिमहदादिकं परार्थं स्वेतरस्य भोगापवर्गफलकम्, संहतत्वात्, शय्यासनादिवदित्यनुमानेन प्रकृतेः परोऽसंहत एव पुरुषः सिद्धयति, तस्यापि संहतत्वेऽनवस्थापत्तेः ।

पातञ्जले च "परार्थं संहत्यकारित्वाद्" (यो०सू० ४।२४) इति सूत्रकारेणानुमानं कृतम् । तत् तु यथाश्रुतमेवान्त्यावयवसाधारणम् । इतरसाहित्येनार्थक्रियाकारित्वस्यैव संहत्यकारिताशब्दार्थत्वात् । पुरुषस्तु विषयप्रकाशरूपायां स्वार्थक्रियायां नान्यदपेक्षते, नित्यप्रकाशरूपत्वात् । पुरुषस्यार्थसम्बन्धमात्रे बुद्धिवृत्त्यपेक्षणात् । सम्बन्धस्तु नासाधारण्यर्थक्रियेति । अत्र च "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति" ( बृ० उ० २।४।५ ) इत्यादिश्रुतिस्मृतयोऽनुकूलतर्काः । अन्यच्च सुखादिमत् प्रधानादिकं यदि स्वस्य सुखादिभोगार्थं स्यात्, तदा तस्य साक्षात् स्वज्ञेयत्वे कर्मकर्तृविरोधः । नहि धर्मिभानं विना सुखस्य भानं सम्भवति, अहं सुखीत्येवं सुखानुभवादिति । अपि च संहन्यमानानां बहूनां गुणानां तत्कार्याणां चानेकविकाराणामनेकचैतन्यगुणकल्पनायां गौरवेण लाघवादेक एव चित्प्रकाशरूपः पुरुषः सर्वसंहतेभ्यः परः कल्पयितुं युज्यत इति ।

अनेन सूत्रेण निमित्तकारणतया पुरुषानुमानमुक्तम्, पुरुषार्थस्याखिलवस्तुसंहनननिमित्तत्ववचनात् । अत एव सर्गाद्युत्पन्नं पुरुषं प्रकृत्य विष्णुपुराणादौ स्मर्यते—

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥ ( वि० पु० १।४।५१ )
गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने ।
गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम ॥ ( वि० पु० १।२।३३ )

इत्यादिक्षेत्रज्ञाधिष्ठानं चासमाप्तपुरुषार्थस्य संयोगमात्रं गुणव्यञ्जनं महत्तत्त्वं कारणतया त्रिगुणात्मप्रधानव्यञ्जकत्वादिति । तदेवमचाक्षुषाणामनुमानेन सिद्धिरुक्ता ( सां० सू० १।६० ) ॥ ६६ ॥

[ भा० सा० ] अथ कार्यकारणभावशून्यस्य पुरुषस्यानुमानमाह—संहतेति । संहननमारम्भकसंयोगः । स चावयवावयविनोरभेदात् प्रकृतितत्कार्यसाधारणः । संहतानां प्रकृतितत्कार्याणां परार्थत्वानुमानेन पुरुषस्य बोध इत्यर्थः ।

यद्वा इतरसाहित्येनार्थक्रियाकारित्वं संहतत्वम्, पुरुषस्तु विषयप्रकाशरूपायां स्वार्थक्रियायां नेतरापेक्षः, नित्यप्रकाशरूपत्वात्। पुरुषस्यार्थसंबन्धमात्रे हि बुद्धिवृत्त्यपेक्षासम्बन्धश्च नासाधारणक्रियेति। तादृशं प्रकृतिमहदादिकं परार्थं स्वेतरस्य भोगापवर्गफलकम्, संहतत्वात्, शय्यासनवत्। अनेन चानुमानेन परोऽसंहत एव पुरुषः सिद्धयति। तस्यापि संहतत्वेऽनवस्थापत्तेः। "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृ० उ० २।४।५) इत्यादि श्रुतयोऽत्रानुकूलतर्काः। किञ्च प्रकृत्यादीनां स्वार्थत्वेऽनेकेषु चैतन्यगुणकल्पनायां गौरवेण लाघवादेक एव चित्प्रकाशरूपः पुरुषः कल्पयितुं युक्तः।

यद्वा संहतानां पदार्थत्वात्पराधीनत्वादिति सूत्रार्थः। एवं चानेन रूपेण निमित्तकारणतया पुरुषानुमानम्। पुरुषेऽखिलवस्तुसंहननिमित्तत्वस्य—

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः॥ (वि० पु० १।४।५१)
गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मुने।
गुणव्यञ्जनसंभूतिः सर्गकाले द्विजोत्तम॥ (वि० पु० १।२।३३)

इत्यादि विष्णुपुराणादौ स्मरणात्। क्षेत्रज्ञाधिष्ठानं चासमात्तपुरुषार्थपुरुषस्य संयोगमात्रं गुणव्यञ्जनं तद्वैषम्यम्। पुरुषे यद्यपि अनुमानापेक्षा नास्ति सर्वसंमतत्वात्, तथापि प्रकृत्यादिविवेके सामान्यतोदृष्टानुमानापेक्षा। अत्र प्रत्यक्षसिद्धदेहाद्यर्थत्वं शय्यादिषु गृहीतम्, तेन तद्विजातीयः पुरुषोऽनुमेयः॥ ६६॥

## मूले मूलाभावादमूलं मूलम् ॥६७॥

[वृ०] अथ किं प्रकृतेरपि कारणं भविष्यतीत्यत्राह—मूले०। मूलप्रकृतेर्मूलाभावात् कारणाभावादमूलं यत् कारणं तन्मूलम्, सैव प्रकृतिः॥६७॥

[वृ० सा०] इदानीं सर्वकारणत्वोपपत्तेः प्रकृतेर्नित्यत्वमुपपादयति पुरुषकौटस्थ्यसिद्धयर्थम्—मूल इति। त्रयोविंशतितत्त्वानां मूले प्रधाने अनवस्थापत्त्या कारणाभावादकारणं प्रधानमित्यर्थः॥६७॥

[भा०] इदानीं सर्वकारणत्वोपपत्तये प्रकृतिनित्यत्वमुपपाद्यते पुरुषकौटस्थ्यसिद्धयर्थम्—मूले०। त्रयोविंशतितत्त्वानां मूलमुपादानं प्रधानं मूलशून्यम् अनवस्थापत्त्या तत्र मूलान्तरासम्भवादित्यर्थः॥ ६७॥

[भा० सा०] देहादीनां भोक्तृत्वं चाविवेकेन प्राग्गृहीतम्, इदानीं प्रकृतेर्नित्यत्वमाह—मूल इति। मूलं सर्वेषामुपादानं प्रधानं मूलशून्यम्। अनवस्थापत्त्या मूलभूते तत्र मूलान्तरासंभवादित्यर्थः॥ ६७॥

## पारम्पर्येऽप्येकत्र परिनिष्ठेति सञ्ज्ञामात्रम् ॥६८॥

[वृ०] अत्र युक्तिमाह—पारम्पर्ये०। प्रकृतेरन्यत् कारणम्, तस्याप्यन्यत्

कारणमित्यनवस्थादोषादन्ततोऽकारणं मूलं वक्तव्यम्। सैव प्रकृतिरिति। पञ्चविंशतितत्त्वाधिकाङ्गीकारे च गौरवं स्यात् ॥ ६८ ॥

[ वृ० सा० ] ननु "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" ( म० भा० शा० ३३४।३१) इत्यादिस्मृत्या प्रधानस्यापि पुरुषादुत्पत्तिश्रवणात्, पुरुषः प्रकृतेर्मूलमास्ताम्। पुरुषस्य नित्यतया च नानवस्था, अविद्याद्वारकतया च न कौटस्थ्यहानिरपि। स्मर्यते हि "तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि" ( कू० पु० २।२।१६ ); इत्यत आह—पारम्पर्येति। पुरुषस्याविद्याद्वारा जगत्कारणत्वेऽपि एकत्राविद्यायां परिणामिकारणत्वपर्यवसानम्, पुरुषस्यापरिणामित्वात्। अतो यत्र पर्यवसानं सैव प्रकृतिरिति। मूलप्रकृतिरिति हि मूलकारणस्य संज्ञामात्रम् ॥ ६८ ॥

[भा०] ननु "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" ( म० भा० शा० ३३४।३७ ) इत्यादिना प्रधानस्यापि पुरुषादुत्पत्तिश्रवणात् पुरुष एव प्रकृतेर्मूलं भवतु, पुरुषस्य नित्यतया च नानवस्था, अविद्याद्वारकतया च न पुरुषकौटस्थ्यहानिः, तथा च स्मर्यते—

तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि। ( कू० पु० २।२।१६ )

इति। इत्याशङ्क्याह—पारम्पर्ये०।

अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽप्येकस्मिन्नविद्यादौ यत्र कुत्रचिन्नित्ये द्वारे परम्परायाः पर्यवसानं भविष्यति, पुरुषस्यापरिणामित्वात्। अतो यत्र पर्यवसानं सैव नित्या प्रकृतिः। प्रकृतिरिह मूलकारणस्य संज्ञामात्रमित्यर्थः ॥६८॥

[ भा० सा० ] ननु तस्मादव्यक्तमुत्पन्नमिति तस्यापि पुरुषादुत्पत्तिश्रवणात् पुरुष एव तस्य मूलं भवतु। पुरुषस्य नित्यत्वाच्च नाव्यवस्था, अविद्याया द्वारत्वाच्च न पुरुषस्य कौटस्थ्यहानिः। "तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि। ( कू० पु० २।२।१६ ) इति स्मृतेः। अत आह—पारम्पर्यं इति। अविद्यादिद्वारेण परम्परया पुरुषस्य सर्वमूलत्वे कुत्रचिन्नित्ये द्वारे परम्परायां परिमाणादिकारणत्वपर्यवसानं वाच्यम्, पुरुषस्य परिणामित्वात्। अतो यत्र पर्यवसानं तस्यैव प्रकृतिरिति संज्ञेत्यर्थः ॥ ६८ ॥

## समानः प्रकृतेर्द्वयोः ॥६९॥

[वृ०] प्रकृतेरप्रत्यक्षत्वात् कथं कारणत्वावगम इत्यत्राह—समानः०।

द्वयोः वादिप्रतिवादिनोः समानस्तुल्यत्वम्। यथा परमाणोरप्रत्यक्षत्वेऽपि घटादौ तद्गुणदर्शनात् परमाण्वनुमानम्, तथात्रापि जगत्त्रैगुण्यदर्शनात् कारणं प्रकृतिस्त्रिगुणात्मिकेत्यनुमीयते। तथा हि—एका कामिनी भर्तुः सुखदेति सात्त्विकी, अविनयाद् दुःखदेति राजसी, विरहान्मोहदेति तामसी; एवं सर्वे भावा द्रष्टव्याः ॥६९॥

[ बृ० सा० ] नन्वेवं गणना नोपपद्यते, प्रकृतिकारणभूतजडतत्त्वान्तरापत्तेरित्यत आह—समान इति । प्रकृतेर्मूलकारणविचारे द्वयोर्वादिप्रतिवादिनोः समानः पक्षः । यथा प्रकृतेरुत्पत्तिः श्रूयते तथा अविद्याया अपि, (न तत्त्वाधिक्यमिति ?) "अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः" ( वि० पु० १।५।५ ) इत्याद्युक्तेः । अतश्चैकस्या अवश्यं गौण्युत्पत्तिर्वक्तव्या, सा च प्रकृतेरेव पुरुषसंयोगादिभिरभिव्यक्तिरूपा युक्ता, "संयोगलक्षणोत्पत्तिः कथ्यते कर्मज्ञानयोः" इति कौर्मे प्रकृतिपुरुषयोर्गौण्युत्पत्तिस्मरणात् । अविद्या च मिथ्याज्ञानरूपा बुद्धिपर्याय इत्यतो न तत्त्वाधिक्यमिति ॥ ६९ ॥

[भा०] नन्वेवं पञ्चविंशतितत्त्वानीति नोपपद्यते, महत्तत्त्वकारणाव्यक्तापेक्षयापि जडतत्त्वान्तरापत्तेरित्याशयेन मूलसमाधानमाह—समानः० ।

वस्तुतस्तु प्रकृतेर्मूलकारणविचारे द्वयोर्वादिप्रतिवादिनोरावयोः समानः पक्षः । एतदुक्तं भवति—यथा प्रकृतेरुत्पत्तिः श्रूयते एवमविद्याया अपि—

अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ( वि० पु० १।५।५ )

इत्यादिवाक्यैः । अत एकस्या अवश्यं गौण्युत्पत्तिर्वक्तव्या । तत्र च प्रकृतेरेव पुरुषसंयोगादिभिरभिव्यक्तिरूपा गौण्युत्पत्तिर्युक्ता । "संयोगलक्षणोत्पत्तिः कथ्यते कर्मज्ञानयोः" इति कौर्मवाक्ये प्रकृतिपुरुषयोर्गौणोत्पत्तिस्मरणात् । अविद्यायाश्च क्वापि गौणोत्पत्त्यश्रवणात् तस्या अनादिता । वाक्यानि तु प्रवाहरूपेणैव वासनाद्यनादिवाक्यवद्व्याख्येयानीति ।

"अविद्या च मिथ्याज्ञानरूपा बुद्धिधर्म" ( द्र० यो० सू० १।८ भा०) इति योगे सूत्रितम् अतो न तत्त्वाधिक्यम् । अथवा द्वयोः प्रकृतिपुरुषयोः समान एव न्याय इत्यर्थः ।

यतः प्रधानपुरुषौ यतश्चैतच्चराचरम् ।<br>
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु ॥

इत्यादिवाक्यैः पुरुषस्याप्युत्पत्तिश्रवणादिति भावः । तथा च पुरुषस्येव प्रकृतेरपि गौण्येवोत्पत्तिः, नित्यत्वश्रवणादित्यपि समानमिति । तस्मात् प्रकृतिरेवोपादानं जगतः, प्रकृतिधर्मश्चाविद्या जगन्निमित्तकारणम्, तथा पुरुषोऽपीति सिद्धम् । यत् तु—

अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणम् ।<br>
सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम् ॥ ( म० भा० शा० ३०७।२ )

इति मोक्षधर्मे प्रकृतिपुरुषयोरविद्याविद्येति वचनम्, तत् तु तदुभयविषयतयोपचरितमेव । परिणामित्वेन हि पुरुषापेक्षया प्रकृतिरसतीति तस्या अविद्याविषयत्वमुक्तम् । एवमेव तस्मिन् प्रकरणे स्वस्वकारणापेक्षया भूतान्तं कार्यजातमविद्येत्युक्तम्, स्वस्वापेक्षया च स्वस्वकारणं विद्येति । पुरुषस्य परिणामरूपं जगदुपादानत्वं तु प्रकृत्युपाधिकमेव

कर्तृत्वादिवच्छ्रुतिस्मृत्योरुपासार्थमेवानूद्यते। अन्यथा "अस्थूलमनण्वह्रस्वम्" ( बृ० उ० ३।८।८ ) इत्यादिश्रुतिविरोधापत्तेरिति मन्तव्यम्।

मायाशब्देन च प्रकृतिरेवोच्यते, "मायां तु प्रकृतिं विद्याद्" ( श्वे० उ० ४।१) इति श्रुतौ, "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः" ( श्वे० उ० ४।९ ) इति पूर्वप्रक्रान्तमायाया प्रकृतिस्वरूपतावचनात्।

सत्त्वं रजस्तम इति प्राकृतं तु गुणत्रयम्।
एतन्मयी च प्रकृतिर्माया या वैष्णवी श्रुता।
लोहितश्वेतकृष्णेति तस्यास्तादृग्बहुप्रजाः।

इत्यादिस्मृतिभ्यश्च। न तु ज्ञाननाश्या अविद्या मायाशब्दार्थो नित्यत्वानुपपत्तेः। किञ्चाऽविद्याया द्रव्यत्वे शब्दमात्रभेदः, गुणत्वे च तदाधारतया प्रकृतिसिद्धिः, पुरुषस्य निर्गुणत्वादिभ्यः। अथ द्रव्यगुणकर्मविलक्षणैवास्माभिरविद्या वक्तव्येति चेन्न; "तादृक्पदार्थाप्रतीतेः" ( सां० सू० १।१२४ ) उक्तत्वादिति ॥६९॥

[ भा० सा० ] न चैवं "पञ्चविंशतितत्त्वानि" इति व्याहतमविद्यारूपजडतत्त्वान्तरस्य तदुत्पत्तिश्रवणेनावश्यकत्वादत आह—समानेति। प्रकृतेर्मूलकारणविचारे द्वयोरप्यावयोः समानः पक्षः। अयं भावः—प्रकृतेरिव "अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः" (वि० पु०१।५।५) इत्यादिनाऽविद्याया अप्युत्पत्तिः श्रूयते। न च तस्या अभिव्यक्तिरूपा गौणी उत्पत्तिस्तर्हि प्रकृतेरेव "संयोगलक्षणोत्पत्तिः कथ्यते ज्ञानकर्मणोः" इति कौर्मेण प्रकृतिपुरुषयोर्गौण्युत्पत्तिश्रवणात् तथोत्पत्तिरस्तु पुरुषसंयोगादिभिः, अभिव्यक्तिश्च घृतेनेव के(?)क्षारगन्धयोः पुरुषसंयोगेन कार्यजनकत्वरूपा। अविद्याया अनादितावचनानि तु वासनाद्यनादितावाक्यवत्प्रवाहानादित्वबोधकानि। अत एव "अविद्या च मिथ्याज्ञानरूपा बुद्धिः धर्मयोगः" इति योगसूत्रम् (१।८)। एवम्—

यतः प्रधानपुरुषौ यतश्चैतच्चराचरम्।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु॥

इत्यादौ पुरुषस्याप्युत्पत्तिश्रवणं गौणमेवेति बोध्यम्। प्रकृतेरपि नित्यत्वम् "अजामेकाम्" ( श्वे० उ० ४।५) इत्यादौ स्पष्टम्। एवं च प्रकृतिरेव जगदुपादानम्। तद्धर्मश्चाविद्या निमित्तकारणं तथा पुरुषोऽपीति सिद्धम्।

यत्तु प्रकृतेरेवाविद्यात्ववचनं क्वचित्, तत्तु धर्मधर्मिणोरभेदाद् बोध्यम्। यद्वा पुरुषापेक्षया प्रकृतेः परिणामिनीत्वादसतीत्वादविद्याविषयत्वेन तत्त्वम्। यत्तु कार्येऽविद्यात्वोक्तिः कारणभावे च विद्येति, तत्रोच्यते; तदाप्येवमेव कथञ्चिद्व्याख्येयं गुणत्रयम्, अस्याः प्रकृतेरेव मायेति व्यवहारः, न तु ज्ञाननाश्याविद्यानित्यत्वादनुपपत्तेः॥ ६९॥

## अधिकारित्रैविध्यान्न नियमः ॥७०॥

[वृ०] यदि हि विवेकेन पुरुषदर्शनान्मुक्तिस्तदा शास्त्रश्रवणादेव मुक्तिः स्यात्, न चैवम्; कस्यापि हि क्षिप्रं कस्यापि च चिरेणेति दर्शनादित्यत आह—अधिकारि०।

अधिकारिणस्त्रिविधा भवन्ति—उत्तममध्यमाधमभेदात् । तद्भेदः सहकारिणोऽविद्यादेर्भेदात्, तद्भेदश्चादृष्टभेदात् । ततश्च श्रवणमात्रादिति न नियमः ॥ ७० ॥

[ वृ० सा० ] नन्वेवं प्रकृतिपुरुषाद्यनुमानप्रकारसत्त्वे सर्वेषां विवेकमननं कुतो न जायते, तत्राह—अधिकारीति । मनने हि मन्दो मध्यम उत्तम इति त्रिविधा अधिकारिणः । तत्र मन्दैः बौद्धाद्युक्तैः कुतर्कैरनुमानानि बाध्यन्ते । मध्यमैर्विरुद्धासल्लिङ्गैः सत्प्रतिपक्षितानि क्रियन्ते । उत्तमाधिकारिणामेव तूक्तरीत्या मननमिति भावः । सर्वेषामेव उक्तरीत्या मननमिति नियमो नेत्यक्षरार्थः ॥ ७० ॥

[भा०] नन्वेवं चेत् प्रकृतिपुरुषाद्यनुमानप्रकारोऽस्ति तर्हि सर्वेषामेव कथं विवेकमननं न जायते, तत्राह—अधिकारि० ।

श्रवणादाविव मननेऽप्यधिकारिणस्त्रिविधा मन्दमध्यमोत्तमा इत्यतो न सर्वेषामेव मनननियमः । कुतर्कादिभिर्मन्दमध्यमयोर्बाधसत्प्रतिपक्षतासम्भवादित्यर्थः । मन्दैर्हि बौद्धाद्युक्तकुतर्कजातेनोक्तानुमानानि बाध्यन्ते । मध्यमैश्च बुद्धाद्युक्तैरेव विरुद्धासल्लिङ्गैः सत्प्रतिपक्षितानि क्रियन्ते । अत उत्तमाधिकारिणामेवैतादृशमननं भवतीति भावः । प्रकृतेः स्वरूपं गुणसाम्यं प्रागेवोक्तम्, सूक्ष्मभूतादिकं च प्रसिद्धमेवास्तीति ॥७०॥

[ भा० सा० ] नन्वेवमनुमानैः सर्वेषामेव विवेकमननं कथं नेति चेदत्राह—अधिकारी इति । उत्तम एवात्राधिकारिणो न मन्दमध्याविति भावः । मन्दैर्हि बौद्धाद्युक्तकुतर्कैरेतानि बाध्यन्ते, मध्यमैश्च तदुक्तैर्विरुद्धासल्लिङ्गैः सत्प्रतिपक्षितानि क्रियन्ते इति तात्पर्यम् ॥ ७० ॥

**महदाख्यमाद्यं कार्यं तन्मनः ॥७१॥**

[वृ०] पूर्वं "प्रकृतेर्महान्" (सां०सू०६१) इति सूत्रे कार्यकारणभावः प्रतिपादितः, न तु क्रमः, इति भ्रमं निराकरोति—महदाख्य० । यत् प्रकृतेराद्यं कार्यं तन्महत्, महत्तत्त्वं बुद्धिः, तदेव मननान्मन इति ॥ ७१ ॥

[ वृ० सा० ] महदहङ्कारयोः स्वरूपमाह सूत्राभ्याम्—महदिति । मन इति मननवृत्तिकम् । मननमत्र निश्चयस्तद्वृत्तिका बुद्धिः, तन्महदाख्यमाद्यं कार्यम् ॥ ७१ ॥

[भा०] अवशिष्टयोर्महदहङ्कारयोः स्वरूपमाह सूत्राभ्याम्— महदाख्य० । महदाख्यमाद्यं कार्यं तन्मनो मननवृत्तिकम् । मननमत्र निश्चयस्तद्वृत्तिका बुद्धिरित्यर्थः ।

यदेतद्विस्तृतं बीजं प्रधानपुरुषात्मकम् ।
महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते ॥

इत्यादिवाक्येभ्यो बुद्धेरेवाद्यकार्यत्वावगमात् ॥७१॥

[ भा० सा० ] महतः संज्ञान्तरमाह- महदिति । मननं निश्चयस्तद्वृत्तिकत्वान्मन इत्यर्थः ॥ ७१ ॥

## चरमोऽहङ्कारः ॥७२॥

[वृ०] चरमो० । अनन्तरं बुद्धेः कार्यमहङ्कारः ॥ ७२ ॥

[वृ० सा०] चरमेति । यः अहं करोमीत्यहङ्कारोऽभिमानवृत्तिकः पदार्थः, सः चरमो महतोऽनन्तरोऽहङ्कार इत्यर्थः ॥ ७२ ॥

[भा०] चरमो० । तस्यानन्तरो यः सोऽहङ्करोतीत्यहङ्कारोऽभिमानवृत्तिक इत्यर्थः ॥७२॥

[भा० सा०] चरमेति । तस्यानन्तरो यः सोऽहङ्कारः, अभिमानवृत्तिकत्वादित्यर्थः ॥७२॥

## तत्कार्यत्वमुत्तरेषाम् ॥७३॥

[वृ०] तत्कार्य० । तत्कार्यत्वम् अहङ्कारकार्यत्वम्, उत्तरेषामेकादशेन्द्रियाणां पञ्चतन्मात्राणाञ्च । पारम्पर्येण तन्मात्रकार्याणामपि भूतानां तत् कार्यत्वमित्युक्तम् ॥७३॥

[वृ० सा०] अतस्तत्कार्यत्वमन्येषामुपपन्नमित्याह—तत्कार्येति ॥ ७३ ॥

[भा०] यतोऽभिमानवृत्तिकोऽहङ्कारोऽतस्तत्कार्यत्वमुत्तरेषामुपपन्नमित्याह — तत्कार्य० । सुगमम् । एवं त्रिसूत्रीं व्याख्याय पौनरुक्त्याशङ्काऽपास्ता ॥ ७३ ॥

[भा० सा०] अत एव तत्कार्यत्वं साक्षात्परम्परयान्येषामित्याह—तत्कार्यत्वमिति । स्पष्टम् ॥ ७३ ॥

## आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ॥७४॥

[वृ०] ननु यद्येवम्, तर्हि प्रधानकार्यं जगदिति सिद्धान्तहानिरित्यत आह—आद्य० । यथा मृत्पिण्डकार्यस्य घटस्य पारम्पर्येऽपि परमाणुकारणता, तथा प्रकृतेरपि मूलकारणता ॥ ७४ ॥

[वृ० सा०] ननु प्रकृतिः सर्वकारणमित्यभ्युपगमविरोधोऽत आह—आद्यहेतुतेति । द्व्यणुकादिद्वारा घटादावणूनामिव महदादिद्वारा सर्वकार्ये प्रकृतेः कारणत्वमित्यर्थः ॥ ७४ ॥

[भा०] नन्वेवं प्रकृतिः सर्गकारणमिति श्रुतिस्मृतिविरोध इत्याशङ्कायामाह—आद्यहेतुता० । पारम्पर्येऽपि साक्षादहेतुत्वेऽप्याद्यायाः प्रकृतेर्हेतुताऽहङ्कारादिषु महदादिद्वाराऽस्ति । यथा वैशेषिकमतेऽणूनां घटादिहेतुता द्व्यणुकादिद्वारैवेत्यर्थः ॥ ७४ ॥

[भा० सा०] नन्वेवं प्रकृतिः सर्वकारणमिति श्रुतिविरोधोऽत आह—आद्येति । पारम्पर्येऽपि साक्षादहेतुत्वेऽपि आद्यस्य प्रधानस्याहङ्कारादिषु हेतुत्वं महदादिद्वारास्ति । यथा वैशेषिकमतेऽणूनां घटादिहेतुता द्व्यणुकद्वारेत्यर्थः ॥ ७४ ॥

## पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः । ७५ ।

प्रकृतिपुरुषयोर्नित्यत्वात् सृष्ट्यादौ कस्य कारणत्वमित्यत्राह—पूर्वभावि० । न पूर्वभावित्वमात्रेण कारणत्वम्, किन्त्वन्वयव्यतिरेकाभ्याम् । द्वयोर्मध्ये

एकतरस्य पुरुषस्य कारणत्वयोग्यताहानिः,अविकारित्वश्रुतेः । अतोऽन्यतरस्य प्रधानस्य कारणत्वयोगः ॥ ७५ ॥

[ वृ० सा० ] ननु प्रकृतिपुरुषयोः पूर्वत्वाविशेषे प्रकृतेरेव कारणत्वे किं नियामकम् ? तत्राह—पूर्वभावीति । द्वयोः पूर्वत्वे सत्यपि पुरुषस्यापरिणामित्वात् कारणत्वहाने सति प्रकृतेः कारणत्वौचित्यमित्यर्थः । पुरुषस्यापरिणामित्वे बीजं तु तस्य संहत्यकारित्वे पदार्थत्वापत्त्याऽनवस्था, असंहत्यकारित्वे सदा महदादिकार्यप्रसंगः । प्रकृतिद्वारा परिणामकल्पने तु लाघवात्तस्या एव परिणामित्वमस्तु, पुरुषे तु स्वामित्वात्स्रष्टृत्वोपचारः । यथा योधेषु वर्तमानौ जयपराजयौ राज्ञि उपचर्येते तथा फलसुखदुःखभोक्तृत्वेन तत्स्वामित्वादिति ॥ ७५ ॥

[भा०] ननु प्रकृतिपुरुषयोरुभयोरेव नित्यत्वात् प्रकृतेरेव कारणत्वे किं नियामकं तत्राह—पूर्वभावित्वे० ।

द्वयोरेव पुम्प्रकृत्योरखिलकार्यपूर्वभावित्वेऽप्येकतरस्य पुरुषस्यापरिणामित्वेन कारणताहान्याऽन्यतरस्याः कारणत्वौचित्यमित्यर्थः । पुरुषस्यापरिणामित्वे चेदं बीजम् । पुरुषस्य संहत्यकारित्वे परार्थत्वापत्त्याऽनवस्था । असंहत्यकारित्वे सर्वदा महदादिकार्यप्रसङ्गः । प्रकृतिद्वारा परिणामकल्पने च लाघवात् तस्या एव परिणामोऽस्तु । पुरुषे तु स्वामित्वेन स्रष्टृत्वोपचारः । यथा योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते तत्फलसुखदुःखभोक्तृत्वेन तत्स्वामित्वादिति ।

किञ्च, धर्मिग्राहकमानेन कारणतयैव प्रकृतेः सिद्धौ नान्यकारणाकाङ्क्षाऽस्ति । यथा धर्मिग्राहकप्रमाणेन द्रष्टृतया पुरुषसिद्धौ नान्यद्रष्ट्राऽऽकाङ्क्षेति, अपि च पुरुषस्य परिणामित्वे कदाचिच्चक्षुर्मन आदिवद् आन्ध्यत्वमपि स्यात् । तथा च विद्यमानमपि सुखदुःखादिकं न ज्ञायेत । ततश्चाहं सुखी न वेत्यादिसंशयापत्तिः । अतः सदा प्रकाशस्वरूपत्वानपायेन पुरुषस्यापरिणामित्वं सिद्धयति । तदुक्तं योगसूत्रेण—"सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्" ( ४।१८ ) इति । तद्भाष्येण च—"सदा ज्ञानविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयति" ( २।२० ) इति । सदा प्रकाशस्वरूपत्वेऽपि यदा नैकदा विश्वप्रकाशत्वं तथा वक्ष्यामः ॥७५॥

[ भा० सा० ] ननु प्रकृतिपुरुषयोर्नित्यत्वात् प्रकृतेरेव कारणत्वे नियामकाभावोऽत आह—पूर्वेति । पुरुषप्रकृत्योरखिलकार्यपूर्ववर्तित्वे एकतरस्य पुरुषस्यापरिणामित्वेन कारणताहाने तस्या एव कारणत्वमित्यर्थः । पुरुषस्य संहत्य कर्तृत्वे परार्थत्वापत्त्याऽनवस्थापत्तिः । असंहतस्य कर्तृत्वे सर्वदा महदादिकार्यप्रसङ्गः । प्रकृतिद्वारा परिणामकल्पने तस्या एव परिणामोऽस्तु, पुरुषे तत्फलसुखदुःखभोक्तृत्वेन तत्स्वामितया स्रष्टृत्वोपचारः । यथा योधगतजयपराजयौ राज्ञि उपचर्येते । सदा प्रकाशरूपत्वाच्च पुरुषोऽपरिणामी । किञ्च, धर्मिग्राहकमानेन कारणतया सिद्धौ नान्यस्य कारणस्याकाङ्क्षा, यथा द्रष्टृत्वेन पुरुषसिद्धौ नान्यद्रष्टाकाङ्क्षेति दिक् ॥ ७५ ॥

## परिच्छिन्नं न सर्वोपादानम् ॥७६॥

[वृ०] अविवादात् परमाणूनामेव कारणत्वमस्त्वित्यत आह—परिच्छिन्नं० ।

यत् परिच्छिन्नं न तत् सर्वोपादानम्, यथा तन्तुर्घटस्य कारणम्। तस्मात् पदार्थानां पृथक् पृथक् कारणं वक्तव्यम्। एककारणत्वे च लाघवं स्यादिति ॥ ७६ ॥

[ वृ० सा० ] प्रकृतेर्युगपत्कारणत्वोपपत्तये विभुत्वमाह—परिच्छिन्नमिति । यतः सर्वोपादानप्रधानं नातः परिच्छिन्नमित्यर्थः ॥ ७६ ॥

[भा०] प्रकृतेर्युगपत्कारणत्वोपपत्तये विभुत्वमपि प्रतिपादयति परिच्छिन्नं० ।

सर्वोपादानं प्रधानं न परिच्छिन्नं व्यापकमित्यर्थः । सर्वोपादानत्वमत्र हेतुगर्भविशेषणम्, परिच्छिन्ने तदसम्भवादिति ।

ननु प्रकृतेरपरिच्छिन्नत्वं नोपपद्यते, प्रकृतिर्हि सत्त्वादिगुणत्रयादतिरिक्ता न भवति "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वाद्" ( सां० सू० ६।२० ) इत्यागामिसूत्रात्, योगसूत्रभाष्याभ्यां ( २।१८, २० ) स्पष्टमवधृतत्वाच्च। तेषां च सत्त्वादीनां लघुत्वचलत्वगुरुत्वादयो धर्मा वक्ष्यमाणा विभुत्वे सति विरुद्ध्यन्ते, सृष्ट्यादिहेतवः संयोगविभागादयश्च नोपपद्यन्त इति ।

अत्रोच्यते परिच्छिन्नत्वमत्र दैशिकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वम्, तदभावश्च व्यापकत्वम्। तथा च जगत्कारणत्वस्य दैशिकाभावप्रतियोगितानवच्छेदकत्वमेवेति प्रकृतेर्व्यापकत्वमिति पर्यवसितम् । यथा प्राणस्य स्थावरजङ्गमाद्यखिलशरीरव्यापकत्वं प्राणत्वसामान्येनोच्यते, प्राणव्यक्तीनां सर्वदेहसम्बन्धात्, तद्वत् प्रकृतेर्व्यापकत्वमिति । प्रकृतेरक्रियैकत्वादिकं च साधर्म्यवैधर्म्यसूत्रे ( १।१२८ ) प्रतिपादयिष्यामः ॥७६॥

[ भा० सा० ] प्रकृतेर्युगपत्कारणत्वोपपत्तये विभुत्वमाह—परीति । सर्वोपादानं प्रधानं न परिच्छिन्नं किन्तु व्यापकम्, परिच्छिन्ने युगपत्सर्वोपादानत्वासंभवादित्यर्थः। अत्र परिच्छिन्नत्वं दैशिकभावप्रतियोगितावच्छेदकधर्मवत्त्वम् । एतेन प्रकृत्यात्मभूतानां सत्त्वादीनां लघुत्वचलत्वादयो धर्मा वक्ष्यमाणा विभुत्वे विरुध्यन्ते, सृष्ट्यादिहेतवः संयोगविभागाश्च नोपपद्यन्तेऽतोऽप्यात्मनः संपरिच्छिन्नत्वं चावश्यकमित्यपास्तम् ॥ ७६ ॥

## तदुत्पत्तिश्रुतेश्च ॥७७॥

[वृ०] अत्र श्रुतिं प्रमाणयति—तदुत्पत्ति० । युक्तिस्तावत् प्रोक्ता । श्रुतिरपि प्रधानस्य जगत्कारणतामाह—"प्रधानाज्जगज्जायते" इति ॥ ७७ ॥

[ वृ० सा० ] तदिति । न केवलं सर्वोपादानत्वात्, किन्तु तेषां परिच्छिन्नानामुत्पत्तिश्रवणाच्च । "अथ यदल्पं तन्मर्त्यम्" ( छा० उ० ७।२४।१ ) इति परिच्छिन्नस्य मरणधर्मकत्वेनोत्पत्त्यवगमादिति भावः ॥ ७७ ॥

[भा०] न केवलं सर्वोपादानत्वात्, अपि तु— तदुत्पत्ति०।

तेषां परिच्छिन्नानामुत्पत्तिश्रवणाच्च। "अथ यदल्पं तन्मर्त्यम्" (छा० उ० ७।२४।१) इत्यादिश्रुतिषु करणधर्मकत्वेन परिच्छिन्नस्योत्पत्त्यवगमात्। श्रुत्यन्तरेभ्यश्चेत्यर्थः ॥७७॥

[भा० सा०] युक्त्यन्तरमाह—तदिति। तेषां परिच्छिन्नानाम्। "अथ यदल्पं तन्मर्त्यम्" इति श्रुतेः ॥ ७७ ॥

## नावस्तुनो वस्तुसिद्धिः ॥७८॥

[वृ०] प्रागसतो घटस्य भवनं दृश्यते। अतो नियतपूर्वभावित्वात् प्रागभावः कारणमस्त्वित्यत आह—नावस्तुनो०। यद्यभावाद् भावोत्पत्तिः स्यात्, कारणरूपं कार्यं दृश्यते, इति जगतोऽप्यवस्तुत्वं स्यात् ॥ ७८ ॥

[वृ० सा०] इदानीं प्रागभावादेः कारणतां निरस्यति—नेति। नृशृङ्गादिवावस्तुनोऽभावाद्वस्तूत्पत्तिर्न घटत इत्यर्थः ॥ ७८ ॥

[भा०] इदानीं प्रकृतिकारणतोपपत्तयेऽभावादिकारणतां निरस्यति—नावस्तुनो०।

अवस्तुनोऽभावान्न वस्तुसिद्धिर्भावोत्पत्तिः। शशशृङ्गाज्जगदुत्पत्त्या मोक्षाद्यनुपपत्तेः, तददर्शनाच्चेत्यर्थः ॥७८॥

[भा० सा०] इदानीं प्रकृतिकारणत्वं द्रढयितुमभावादिकारणतां निरस्यति—नेति। अवस्तुनोऽभावान्न वस्तुसिद्धिर्भावोत्पत्तिः, शशशृङ्गाज्जगदुत्पत्त्या मोक्षाद्यनुपपत्तेरित्यर्थः ॥७८॥

## अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥७९॥

[वृ०] भवतु जगदप्यवस्तु, का नो हानिरित्यत आह—अबाधाद०।

शुक्तौ रजतज्ञाने, 'नेदं रजतम्' इति ज्ञानाद् रजतबाधः। न चात्र 'नेदं भावरूपं जगत्' इति कस्यापि ज्ञानं येनास्य भावरूपबाधः स्यात्। दुष्टकारणजन्यत्वाच्च मिथ्येत्यवगम्यते, यथा काचकामलादिदोषात् पीतशङ्खज्ञानं कस्यचित्। अत्र च जगज्ज्ञानस्य सर्वेषां सर्वदा सत्यत्वाच्च न दोषोऽस्ति। तस्मात् नावस्तु जगदिति ॥ ७९ ॥

[वृ० सा०] ननु जगदप्यवस्त्वेवास्तु, तत्राह—अबाधेति। स्वप्नपदार्थस्येव प्रपञ्चस्य बाधो न, न वा शङ्खपीतिमादेरिव दुष्टेन्द्रियजन्यत्वम्, अतो नावस्तु कार्यमित्यर्थः ॥ ७९ ॥

[भा०] ननु जगदप्यवस्त्वेवास्तु स्वप्नादिवदिति तत्राह—अबाधा०।

स्वप्नपदार्थस्येव प्रपञ्चस्य बाधः श्रुत्यादिप्रमाणैर्नास्ति। तथा शङ्खपीतिमादेरिव दुष्टेन्द्रियादिजन्यत्वमपि नास्ति। दोषकल्पने प्रमाणाभावादित्यतो न कार्यस्यावस्तुत्वमित्यर्थः। ननु "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा० उ० ६।१।४)

इत्यादिश्रुतिभिरेव प्रपञ्चस्य बाधः, बाधाच्चाविद्याख्यदोषोऽपि स्वकारणेऽस्तीति चेन्न; मृद्दृष्टान्तसिद्धचन्यथानुपपत्त्या स्वकारणापेक्षयास्थैर्यरूपासत्त्वपरत्वात् तादृग्वाक्यानामन्यथासृष्टचादिवाक्यविरोधाच्च ।

किञ्च, श्रुत्या प्रपञ्चबाधे आत्माश्रयः । स्वस्यापि प्रपञ्चान्तर्गततया बाधेन तद्बोधितार्थे पुनः संशयापत्तिश्चेति । अत एव बाधाबाधादिवैधर्म्यादुपलम्भाच्च जाग्रत्प्रपञ्चस्य स्वप्नखपुष्पादितुल्यत्वमतिनिर्बन्धेन प्रत्याचष्टे वेदान्तसूत्रद्वयम्—"वैधर्म्याच्च न स्वप्नादिवद्" ( २।२।२९ ) इति, "उपलब्धेश्च" ( २२।२।३० ) इति च । "नेति नेति" ( बृ० उ० २।३।६ ) इत्येवंविधवाक्यानि च विवेकपराण्येव, न तु स्वरूपतः प्रपञ्चनिषेधपराणि, "प्रकृतैतावत्त्वं प्रतिषेधति" ( ३।२।२२ ) इति वेदान्तसूत्रात् । एवमन्यान्यपि वाक्यानि ब्रह्ममीमांसाभाष्येऽस्माभिर्व्याख्यातानि ॥७९॥

[भा० सा०] ननु जगदप्यवस्त्वेवास्तु स्वप्नादिवत्, अत्राह—अबाधादिति । एतज्ज्ञानस्येदं रजतमिति ज्ञानेन बाधवद् बाधानुभवाच्छङ्खपीतिमज्ञानवददुष्टेन्द्रियाजन्यत्वाच्च दोषकल्पने मानाभावाच्च तद्विषयककार्यस्य नावस्तुत्वमित्यर्थः ।

ननु "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छा० उ० ६।१।४ ) इत्यादिश्रुतिभिः प्रपञ्चस्य बाधः । बाधाच्च तत्कारणेऽविद्याख्यदोषोऽस्तीति चेन्न, अस्वकारणापेक्षाऽस्थैर्यरूपासत्यत्वपरत्वात् । अत एव मृद्दृष्टान्तोऽपि सङ्गच्छते । "नेति नेति" इति वाक्यान्यपि विवेकपराण्येवेत्याशयः । किञ्च, श्रुतिप्रपञ्चबाधे स्वस्यापि प्रपञ्चान्तर्गततया बाधे प्रमाणाबाधेन तद्बोधितार्थे संशयापत्तिरिति दिक् ॥ ७९ ॥

**भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तत्सिद्धिः ॥८०॥**

[वृ०]नन्वभावः कारणमस्तु, तथाप्यभावत्वं न जगतो भविष्यतीत्यत्राह—भावे० । भावे उपादानकारणे 'कारणगुणाः कार्ये' इति तद्योगेन भावयोगेन तत्सिद्धिः कार्यस्य वस्तुत्वसिद्धिः । अभावे जगदुपादानस्याभावत्वे तदभावाज्जगदभावस्यावश्यम्भावात् कुतस्तत् सिद्धिः, अभावस्य अभावरूपत्वादिति ॥ ८० ॥

[ वृ० सा० ] नावस्तुनो वस्तुसिद्धिरिति यदुक्तं तत्र हेतुमाह—भाव इति । भावरूपे कारणे सत्तायोगेन सत्कार्यसिद्धिः, अभावे तु सत्ताभावात् कुतः सत्कार्यसिद्धिः, कारणसरूपस्यैव कार्यस्यौचित्यात् । तरप् स्वार्थे ॥ ८० ॥

[भा०] "नावस्तुनो वस्तुसिद्धिः" ( सां० सू० १।७४ ) इति यदुक्तं तत्र हेतुमाह—भावे० । भावे कारणस्य सद्रूपत्वे तद्योगेन सत्तायोगेन कार्यसिद्धिर्घटेत । कारणस्याभावेऽसद्रूपत्वे तु तदभावात् कार्यस्याप्यसत्त्वात् कथं वस्तुभूतकार्यसिद्धिः, कारणस्वरूपस्यैव कार्यस्यौचित्यादित्यर्थः ॥८०॥

[ भा० सा० ] 'नावस्तुनो वस्तुसिद्धिः' इत्यत्र हेतुमाह—भाव इति । भावे कारणस्य सद्रूपत्वे तद्योगेन सत्तायोगेन कार्यसिद्धिर्घटेनाकारणस्याभावेऽसद्रूपत्वे तु तदभावात् कारणस्याप्यसत्त्वात्कुतो वस्तुभूतकार्यसिद्धिः, कारणस्वरूपस्यैव कार्यस्यौचित्यादित्यर्थः ॥ ८० ॥

## न कर्मण उपादानत्वायोगात् ॥८१॥

[वृ०] अथ कर्मैव जगत्कारणमस्तु, किं प्रधानकल्पनयेत्यत आह—न कर्मण० ।

निमित्तकारणमदृष्टमस्तु, धर्माधर्मयोस्तूपादानकारणत्वं न क्वचिद् दृष्टम् । प्रकृतिपुरुषविवेकदर्शनान्मुक्तिरिति प्रकृतिस्वीकारः ॥ ८१ ॥

[ वृ० सा० ] नन्वेवमप्यावश्यकत्वात्कर्मैव कारणमस्तु, किं प्रधानेन ? तत्राह—न कर्मण इति । न कर्मणोऽदृष्टाद्वस्तुसिद्धिः, तस्य निमित्तत्वेनोपादानत्वायोगात् ॥ ८१ ॥

[भा०] ननु तथापि कर्मैवावश्यकत्वाज्जगत्कारणमस्तु, किं प्रधानकल्पनयेति, तत्राप्याह—न कर्मण० ।

कर्मणोऽपि न वस्तुसिद्धिर्निमित्तकारणस्य कर्मणो न मूलकारणत्वम्, गुणानां द्रव्योपादानत्वायोगात् । कल्पना हि दृष्टानुसारेणैव भवति । वैशेषिकोक्तगुणानां चोपादानत्वं न क्वापि दृष्टमित्यर्थः । अत्र कर्मशब्दोऽविद्यादीनामप्युपलक्षको गुणत्वाविशेषेण तेषामप्युपादानत्वायोगात् । चक्षुषः पटलादिवदविद्यायाश्चेतनगतद्रव्यत्वे तु प्रधानस्य संज्ञामात्रभेद इति ॥८१॥

[ भा० सा० ] कर्मणां तत्त्वं खण्डयति—नेति । कर्म यागादि, तज्जन्यमदृष्टं वा । गुणानां द्रव्योपादानत्वायोगात्तेषां तत्त्वस्य अदृष्टत्वादिति भावः । एतेनाविद्यारूपगुणस्य कारणत्वमपि निरस्तम् । चक्षुःपटलादिवदविद्याया द्रव्यत्वे तु प्रधानेति संज्ञामात्रभेदादिति भावः ॥ ८१ ॥

## नानुश्रविकादपि तत्सिद्धिः, साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥८२॥

[वृ०] वेदोक्तार्थानुष्ठानादेव मुक्तिसम्भवात् किं प्रकृत्येत्यत आह—नानुश्रवि० ।

वेदादनुश्रूयत इत्यानुश्रविको यागादिः, तस्मादपि न मोक्षसिद्धिः, साध्यत्वेनावृत्तियोगात् । कार्यत्वेनानित्यत्वाद् मुक्तस्य पुनः संसारानुवृत्तियोगः, तस्मादपुरुषार्थत्वम् ॥ ८२ ॥

[ वृ० सा० ] इदानीं कर्मणां साक्षान्मोक्षहेतुत्वं प्रतिपादयति पञ्चभिः सूत्रैः—नेति । गुरोरनुश्रूयत इत्यनुश्रवो वेदस्तत्र विहितमानुश्रविकं यागादिकर्म, ततोऽपि न पूर्वोक्तपुमर्थसिद्धिः, यतः कर्मसाध्यत्वेनावृत्तियोगात् । अपुरुषार्थत्वमत्यन्तपुरुषार्थत्वाभावः ॥ ८२ ॥

[भा०] तदेवं परिणामित्वापरिणामित्व-परार्थत्वापरार्थत्वाभ्यां पुम्प्रकृत्योर्विवेको दर्शितः । इदानीं विवेकज्ञानस्यैवाविवेकनाशद्वारा परमपुरुषार्थहेतुत्वम्, न तु तत्र वैदिककर्मणां साक्षाद्धेतुताऽस्तीति यत् प्रागुक्तम् "अविशेषश्चोभयोः" ( १।६ ) इति सूत्रेण, तदेव प्रपञ्चयति पञ्चभिः सूत्रैः ।

नानुश्रविका० । अपिशब्देन "न दृष्टात् तत्सिद्धिः" ( सां० सू० १।२ ) इति प्रागुक्तदृष्टसमुच्चयः । गुरोरनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितो यागादिरानुश्रविकं

कर्म, तस्मादपि न पूर्वोक्तपुरुषार्थसिद्धिः। यतः कर्मसाध्यत्वेन पुनरावृत्तिसम्बन्धादत्यन्त-पुरुषार्थत्वाभाव इत्यर्थः। कर्मसाध्यस्य चानित्यत्वे श्रुतिः—"तद्यथेह कर्मचितो लोकः क्षीयते" ( छा० उ० ८।१।६ ) इति। "न कर्मणान्यधर्मत्वाद्" ( सां० सू० १।१६ ) इति सूत्रेण पूर्वं कर्मणा बन्धो निराकृतः, इदानीं च मोक्षो निराक्रियत इत्यपौनरुक्त्यम्। अन्यधर्मत्वेन पूर्वोक्तहेतुना बन्ध इव मोक्षेऽपि कर्मणो हेतुत्वं निराकृतप्रायमिति पुनराशङ्कैव नोदेतीति चेन्न; बन्धहेतुत्वेनाविवेके सिद्धे तत्पुरुषीयाविवेकजत्वेन कर्मणां तदीयत्वव्यवस्थोपपत्तेरिति ॥८२॥

[भा० सा०] एवं विवेकज्ञानमेव परमपुरुषार्थहेतुर्न तु वैदिककर्मणां साक्षात्तद्धेतुतेत्याह—नेति। गुरोरनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितं यागादिरानुश्रविकस्तस्मादपि नोक्तपुरुषार्थ-सिद्धिः। अपिना न दृष्टात्तत्सिद्धिरित्युक्तस्य समुच्चयः। कर्मसाध्यत्वेन "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवात्र पुण्यचितो लोकः क्षीयते" ( छा० उ० ८।१।६ ) इति श्रुत्या पुनरावृत्तियोगश्रवणात् तज्जन्यस्यात्यन्तपुरुषार्थत्वाभावः, इत्यर्थः। पूर्वं "न कर्मणान्यधर्मत्वात्" ( सां० सू० १।१६ ) इत्यनेन बन्धो निराकृतः, इदानीं मोक्षो निराक्रियत इत्यपौनरुक्त्यम्।

नन्वन्यधर्मत्वेन मोक्षेऽपि तद्धेतुत्वं निराकृतमेवेति चेन्न; बन्धहेतुत्वेनाविवेके सिद्धे तत्पुरुषीयाविवेकजत्वेन कर्मणां तदीयत्वादिति ॥ ८२ ॥

## तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥८३॥

[वृ०] पुरुषार्थत्वं दर्शयति—तत्र०। तत्र—प्रकृतिपुरुषयोः प्राप्तविवेकस्य विवेकज्ञानादनावृत्तिश्रुतिः "न स पुनरावर्तते" ( छा० उ० ८।१५।१ ) इति ॥ ८३ ॥

[ वृ० सा० ] तर्ह्युपासकस्य ब्रह्मलोकगतस्यानावृत्तिश्रुतिः कथम् ? तत्राह—तत्रेति। तत्र ब्रह्मलोके। "न स पुनरावर्तते"( छा० उ० ८।१५।१ ) इति श्रुतिः।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यत्र कृतात्मान इत्यस्य स्वरसात् ॥ ८३ ।

[भा०] नन्वेवं पञ्चाग्निविद्यारूपेणोपासनाख्यकर्मणा तीर्थमरणादिकर्मणा च ब्रह्मलोकं गतस्यानावृत्तिश्रुतिः कथमुपपद्यते; तत्राह—तत्र प्राप्त०।

तत्रानुश्रविककर्मणि ब्रह्मलोकगतानां याऽनावृत्तिश्रुतिः, सा तत्रैव प्राप्तविवेकस्य मन्तव्या। अन्यथा हि ब्रह्मलोकादप्यावृत्तिं प्रतिपादयतां वाक्यान्तराणां विरोध इत्यर्थः। तथापि साऽप्यनावृत्तिर्विवेकज्ञानस्यैव फलं न तु साक्षादेव कर्मण इति। एतच्च षष्ठाध्याये ( सू० १२-१६ ) प्रपञ्चयिष्यति। ब्रह्ममीमांसाभाष्ये ( ४।४ ) च तयोर्वाक्यान्युदाहृत्यास्माभिर्व्याख्यातानि ॥८३॥

[ भा० सा० ] ननु पञ्चाग्निविद्याद्युपासनादिभिर्ब्रह्मलोकं गतस्यानावृत्तिः श्रुतिः ( द्र०छा० उ० ५।४-१अ० )।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यादिरूपा स्मृतिश्च कथमुपपद्येत, इत्यत आह—तत्रेति। तत्र आनुश्रविककर्मणि ब्रह्मलोकं गतानां याऽनावृत्तिः, सा तत्रैव ब्रह्मलोके प्राप्तविवेकस्य मन्तव्या ॥ ८३ ॥

## दुःखाद् दुःखं जलाभिषेकवन्न जाड्यविमोक्षः ॥८४॥

[वृ०] विपक्षे दोषमाह—दुःखाद्०।

यदि कर्मसाध्यो मोक्षो भवेत्, कर्मणो दुःखबहुलत्वात् तत्कार्यो मोक्षोऽपि दुःखबहुलः स्यात्। अन्ततः क्षयित्वेनापि दुःखं स्यात्। न हि जाड्यार्त्तस्य जाड्यविमोक्षो जलाभिषेकात्, प्रत्युत जाड्यमेवेति ॥८४॥

[वृ० सा०] कीदृक् तर्हि फलं कर्मणस्तदाह—दुःखादिति। आनुश्रविकाद् दुःखाद् दुःखं दुःखधारैव भवति न तु जाड्यविमोकः, अविवेकनिवृत्तिः। दुःखविमोक्षस्त्वतिदूरे। यथा जाड्यार्तस्य जलाभिषेकाद् दुःखवृद्धिरेव भवति, न तु जाड्यविमोक्ष इत्यर्थः। अत एवेश्वरकृष्ण आह—"दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः" ( सां० का० २ ) इति ॥ ८४ ॥

[भा०] कर्मणस्तु फलं तदाह—दुःखाद्०। आनुश्रविकात् तु हिंसादिदोषेण दुःखात्मकभोगेन च दुःखाद् दुःखं दुःखधारैव भवति, न तु जाड्यविमोकोऽविवेकनिवृत्तिर्दुःखविमोकस्त्वतिदूर एव तिष्ठति। यथा जाड्यार्तस्य जलाभिषेकाद् दुःखानिवृत्तिरेव भवति, न तु जाड्यविमोक्ष इत्यर्थः। यदुक्तम्—

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम्।
भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥ ( भा० १।८।८२ )

श्रूयते च ब्रह्मलोकस्थानां विष्णुपार्षदानामपि जयविजयादीनां पुना राक्षसयोनौ दुःखधारेति ( द्र० भा० ३।१५-१६ अ० )। कारिकया चेदमुक्तम्—

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः। ( सां० का० २ ) इति ॥८४॥

[भा० सा०] मोक्षस्य कर्मसाध्यत्वे बाधकमाह—दुःखादिति। यागादेर्हिंसादिदोषेण दुःखात्मकाद् दुःखं दुःखधारैव न जाड्यविमोकः अविवेकनिवृत्तिः। मोक्षस्तु इतरेतरपथा जाड्यार्त्तस्य जलाभिषेकादिव दुःखवृद्धिरेव न जाड्यविमोक्ष इत्यर्थः। श्रूयते च ब्रह्मलोकस्थानां विष्णुपार्षदानां जयविजयादीनां पुना राक्षसयोनौ दुःखधारेति ॥ ८४ ॥

## काम्येऽकाम्येऽपि साध्यत्वाविशेषात् ॥८५॥

[वृ०] दुःखस्य कर्मसाध्यत्वमप्रयोजकम्, किन्तु काम्यकर्मसाध्यत्वं हेतुः, निष्कामकर्मणो मोक्षसाधनत्वात्। तथा च श्रुतिः—

कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥ इति।

अत्राह—काम्ये० । मा भूद् निष्कामकर्मसाध्यं दुःखम्, तथापि काम्यात् निष्कामकर्मविशेषेऽपि कर्मसाध्यत्वमविशिष्टम् । साध्यत्वात् क्षयित्वेन पुनरपि दुःखं स्यादिति भावः । निष्कामकर्मणो मोक्षसाधनत्वश्रुतिश्च ज्ञानार्थम्, ज्ञानाच्च मोक्ष इति पारम्पर्येण मोक्षसाधनत्वम् ॥ ८५ ॥

[ वृ० सा० ] ननु निष्कामकर्मणः फलं मोक्षो भविष्यति, तत्राह— काम्य इति । काम्येऽकाम्ये वा कर्मणि कृते तत्फलमत्यन्तपुरुषार्थो न, कर्मसाध्यत्वस्य तुल्यत्वात् ॥ ८५ ॥

[भा०] ननु निष्कामादन्तर्यागजपादिरूपकर्मणो न दुःखं प्रत्युत मोक्षः फलं श्रूयत इति, तत्राह—काम्ये० ।

काम्येऽकाम्ये च कर्मणि दुःखाद् दुःखं भवति । कुतः साध्यत्वाविशेषात् । कर्मसाध्यस्य सत्त्वशुद्धिद्वारकज्ञानस्यापि त्रिगुणात्मकतया दुःखात्मकत्वादित्यर्थः । "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" ( तै० आ० १०।१०।३ ) इत्यादिश्रुतिभ्यश्च कर्मणो न साक्षान्मोक्षः फलमिति भावः । त्यागेनाभिमानत्यागेन । एके केचिदेवामृतत्वमानशुः प्राप्तवन्तो न सर्वे । अभिमानत्यागस्य तत्त्वज्ञानजन्यतया दुर्लभत्वादित्यर्थः ॥८५॥

[ भा० सा० ] ननु निष्कामात्कर्मणोऽन्तर्यागजपादेर्मोक्षफलं स्यादत आह—काम्य इति । साध्यत्वाविशेषात्तन्नाशेषु न दुःखं स्यादित्यर्थः । "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" ( तै० आ० १०।१०।३ ) इत्यादिश्रुतेश्च न कर्मणः साक्षान्मोक्षफलमिति भावः । त्यागोऽभिमानत्यागः । स च तत्त्वज्ञानजन्यतया दुर्लभ इत्येके । केचिदेवामृतत्वं मोक्षं प्राप्नुयुरिति तदर्थः ॥ ८५ ॥

## निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ॥८६॥

[ वृ० ] यदि प्रकृतिपुरुषविवेकज्ञानादपि मोक्षो भवेत्, तथापि तस्य क्षयित्वात् पुनरपि संसार इति वादिप्रतिवादिनोस्तुल्यत्वमिति मत्वाह—निज० ।

निजमुक्तस्य स्वभावमुक्तस्य बन्धध्वंसः; बन्धोऽविवेकः, तद्विरोधेनाविवेकध्वंसोऽविवेकनाशः । अविवेकनाशस्य च प्रध्वंसत्वात् कुतः संसारस्य पुनरावर्तनमिति न समत्वम् ॥ ८६ ॥

[वृ० सा०] ननु ज्ञानसाध्यस्य कथमत्यन्तपुरुषार्थत्वम् ? तत्राह—निजेति । निजमुक्तस्य स्वभावमुक्तस्यात्मनो बन्धध्वंसमात्रं परं मुख्यं विवेकज्ञानस्य फलम् । ध्वंसस्य चाभावत्वेन नित्यत्वान्न दुःखात्मकत्वमतो न समानत्वं ज्ञानकर्मणोः । तस्माद्विवेकज्ञानमेव साक्षाद्धेयहानोपायः ॥ ८६ ॥

[ भा० ] ननु भवन्मतेऽपि कथं ज्ञानसाध्यस्य न दुःखत्वं साध्यत्वाविशेषादिति, तत्राह—निजमुक्तस्य० । निजमुक्तस्य स्वभावमुक्तस्याविद्याख्यकारणनाशेन यथोक्तबन्धनिवृत्तिमात्रं परमात्यन्तिकं विवेकज्ञानस्य फलम् । ध्वंसश्चाविनाशी, न तु कर्मण इव

सुखादिकं भावरूपं कार्यं येन नाशितया दुःखदं तत् स्यात्। कर्मणश्च दृष्टकारणं विना न साक्षादेवाविद्यानाशकत्वं घटत इति। अतो ज्ञानस्याक्षयत्वान्न समानत्वं ज्ञानकर्मणोरित्यर्थः। ज्ञानान्न पुनरावृत्तिः संभवति, अविवेकाख्यकारणनाशादिति सिद्धम्। तदेवं विवेकज्ञानमेव साक्षाज्ज्ञानोपाय इत्युक्तम् ॥ ८६ ॥

[भा० सा०] ननु ज्ञानसाध्यस्य कथं न दुःखत्वम्, साध्यत्वाविशेषादत आह—निजेति। निजमुक्तस्य स्वभावमुक्तस्य ज्ञानाद् अविवेकाख्यकारणनाशेन परमुत्कृष्टमविनाशि बन्धध्वंसमात्रं जन्यम्। अतो न समानत्वमित्यर्थः। ध्वंसस्याविनाशित्वात्। न तु कर्मण इव भावरूपं सुखादिकार्यं येन नाशितया दुःखदं तत्स्यात्। कर्मणश्च साक्षादविद्यानाशकत्वम्, उक्तश्रुतेः। ज्ञानेन तु कारणनाशान्न पुनरावृत्तिरिति सिद्धम्। कर्मणस्तत्त्वश्रवणं तु सत्त्वशुद्धिद्वारा परम्परया नेयम्। सत्त्वं मनः। एवं च विवेकविशिष्टा प्रकृतिरेव सर्वोपादानमिति बोध्यम् ॥ ८६ ॥

**द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा, तत्साधकतमं यत्तत् त्रिविधं प्रमाणम् ॥८७॥**

[ वृ० ] "पञ्चविंशतिर्गणः" ( सां० सू० १।६१ ) इत्युक्तम्, तत्सिद्धिश्च न प्रमाणेन विना, इति तद् दर्शयति—द्वयो०। द्वयोरिति इन्द्रियार्थयोर्विद्यमानयोः प्रत्यक्षे। एकतरस्य वाऽपीति विद्यमानस्य लिङ्गस्य शब्दस्य वाऽनुमाने शब्दे च। असन्निकृष्टार्थपरिच्छित्तिरिति अपरिच्छिन्नार्थपरिच्छित्तिः प्रमा प्रमितिः फलम्। एतेनानधिगतार्थगन्तृ प्रमाणमित्युक्तम्। प्रमासाधकतमं यत् तत् प्रमाणमिति प्रमाणसामान्यलक्षणम् ॥ ८७ ॥

[ वृ० सा० ] तस्य साक्षादुपायाः प्रमाणानि सम्प्रति परीक्ष्यन्ते—द्वयोरिति। असन्निकृष्टः प्रमातर्यनारूढोऽनधिगत इति यावत्। एवं भूतस्यार्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा। सा द्वयोर्बुद्धिपुरुषयोर्धर्मोऽस्तु, एकतरस्यैव वा, उभयथापि तस्याः साधकतमं फलायोगव्यवच्छिन्नं कारणं यत्तत्प्रमाणम्। तच्च त्रिविधमित्यर्थः। स्मृतिभ्रमसंशयानां व्युदासाय क्रमेणानधिगत इति, वस्तुन इति, अवधारणमिति। अत्र यदि प्रमाणरूपं फलं पुरुषनिष्ठमुच्यते तदा बुद्धिवृत्तिरेव प्रमाणम्, यदि बुद्धिनिष्ठं वृत्तिरूपं तत्, तदा इन्द्रियसन्निकर्षादिरेव प्रमाणम्। यदि तु पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते, तदोक्तमुभमेयव प्रमाणं भवति। चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैवेति बोध्यम्। ननु—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ( गी० १३।३३ )

इत्यादिषूपमानादि प्रकृतिपुरुषविवेके प्रमाणमुपन्यस्तं तत्कथं त्रिविधं प्रमाणं तत्राह—तदिति ॥ ८७ ॥

[ भा० ] इदानीं विवेकज्ञानस्यापि साक्षादुपायाः प्रमाणानि परीक्ष्यन्ते। "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" ( बृ० उ० २।४।५ ) इत्यादिश्रुतिभिर्हि प्रमाण-

त्रयेणात्मज्ञानमित्यवगम्यते। कर्मादिकं त्वन्यन्मनआदिप्रमाणानां शुद्धयादिकरमेवेति—द्वयोरेक०। असन्निकृष्टः प्रमातर्यनारूढोऽनधिगत इति यावत्। एवंभूतस्यार्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा, सा च द्वयोर्बुद्धि-पुरुषयोरुभयोरेव धर्मो भवतु। किं वैकतर-मात्रस्योभयथैव तस्या प्रमाया यत् साधकतमं फलायोगव्यवच्छिन्नं कारणम्, तच्च त्रिविधं वक्ष्यमाणरूपेणेत्यर्थः। स्मृतिव्यावर्तनायानधिगतेति। भ्रमव्यावर्तनाय वस्त्विति। संशयव्यावर्तनाय त्ववधारणमिति।

अत्र यदि प्रमारूपं फलं पुरुषनिष्ठमात्रमुच्यते, तदा बुद्धिवृत्तिरेव प्रमाणम्। यदि च बुद्धिनिष्ठमात्रमुच्यते, तदा तूक्तेन्द्रियसन्निकर्षादिरेव प्रमाणम्। पुरुषस्तु प्रमा-साक्ष्येव न प्रमातेति। यदि च पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते, तदा तूक्तमुभयमेव प्रमाभेदेन प्रमाणं भवति। चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैव सर्वथेति भावः। पातञ्जलभाष्ये ( सू० १।७ ) तु व्यासदेवैः पुरुषनिष्ठबोधः प्रमेत्युक्तः। पुरुषार्थमेव करणानां प्रवृत्त्या फलस्य पुरुषनिष्ठताया एवौचित्यात्। अतोऽत्रापि स एव मुख्यः सिद्धान्तः। न च पुरुषबोधरूपस्य नित्यतया कथं फलत्वमिति वाच्यम्; केवलस्य नित्यत्वेऽप्यर्थोपरक्तस्य कार्यत्वात्। पुरुषार्थोपरागस्यैव वा फलत्वादिति।

अत्रेयं प्रक्रिया। इन्द्रियप्रणालिकयाऽर्थसन्निकर्षेण लिङ्गज्ञानादिना वाऽऽदौ बुद्धे-रर्थाकारा वृत्तिर्जायते। तत्र चेन्द्रियसन्निकर्षजा प्रत्यक्षा वृत्तिरिन्द्रियविशिष्टबुद्धयाश्रिता नयनादिगतपित्तादिदोषैः पित्ताद्याकारवृत्त्युदयादिति विशेषः। सा च वृत्तिरर्थोपरक्ता प्रतिबिम्बरूपेण पुरुषारूढा सती भासते। पुरुषस्यापरिणामितया बुद्धिवत् स्वतोऽर्था-कारत्वासम्भवात्, अर्थाकारताया एव चार्थग्रहणत्वात्, अन्यस्य दुर्वचत्वादिति। तदेत-द्वक्ष्यति—"जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः" ( सां० सू० ६।२८ ) इति। योगसूत्रं च—"वृत्तिसारूप्यमितरत्र" (१।४) इति। स्मृतिरपि—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥ (यो० वा० उप० ९१।११३)

योगभाष्यञ्च—"बुद्धेः प्रतिसंवेदी पुरुषः" ( सू० २।२० ) इति प्रतिध्वनिवत् प्रतिसंवेदनं प्रतिबिम्बस्तस्याश्रय इत्यर्थः।

एतेन पुरुषाणां कूटस्थविभुचिद्रूपत्वेऽपि न सर्वदा सर्वाभासनप्रसङ्गः, असङ्गतया स्वतोऽर्थाकारत्वाभावात्। अर्थाकारतां विना च संयोगमात्रेणार्थग्रहणस्यातीन्द्रियादि-स्थले बुद्धावदृष्टत्वादिति। पुरुषे च स्वस्वबुद्धिवृत्तीनामेव प्रतिबिम्बार्पणसामर्थ्यमिति फलबलात् कल्प्यते। यथा रूपवतामेव जलादिषु प्रतिबिम्बनसामर्थ्यं नेतरस्येति। रूपवत्त्वं च न सामान्यतः प्रतिबिम्बप्रयोजकम्, शब्दस्यापि प्रतिध्वनिरूपप्रतिबिम्ब-दर्शनात्। न च शब्दजन्यं शब्दान्तरमेव प्रतिध्वनिरिति वाच्यम्; स्फटिकलौहित्यादेरपि जपासन्निकर्षजन्यतापत्त्या प्रतिबिम्बमिथ्यात्वसिद्धान्तक्षतेरिति। प्रतिबिम्बश्च बुद्धेरेव परिणामविशेषो बिम्बाकारो जलादिगत इति मन्तव्यम्।

केचित् तु वृत्तौ प्रतिबिम्बितं सदैव चैतन्यं वृत्तिं प्रकाशयति, तथा वृत्तिगतप्रतिबिम्ब एव वृत्तौ चैतन्यविषयता, न तु चैतन्ये वृत्तिप्रतिबिम्बोऽस्तीत्याहुः। तदसत्; उपदर्शितशास्त्रविरोधेन केवलतर्कस्याप्रयोजकत्वात्। विनिगमनाविरहेण वृत्तिचैतन्ययोरन्योन्यविषयताख्यसम्बन्धरूपतयाऽन्योन्यस्मिन्नन्योन्यप्रतिबिम्बसिद्धेश्च। बाह्यस्थलेऽर्थाकारताया एव विषयतारूपत्वसिद्धयाऽऽन्तरेऽपि तत्तदर्थाकारताया एव विषयतात्वौचित्याच्चेति।

ये तु तार्किका ज्ञानस्य विषयतां नेच्छन्ति, तन्मते ज्ञानव्यक्तीनामनुगमकधर्माभावेन घटविषयकं ज्ञानमित्याद्यनुगतव्यवहारानुपपत्तिः।

केचित् तु तार्किका अनयैवानुपपत्त्या विषयतामतिरिक्तपदार्थमाहुः। तदप्यसत्; अनुभूयमानामर्थाकारतां विहाय विषयतान्तरकल्पने गौरवादिति। ननु तथापि स्वस्वोपाधिवृत्तिरूपैव वृत्तिचैतन्ययोरन्योन्यविषयताऽस्तु, स्वोपाधिवृत्तित्वेनैवानुगमाद् अलमाकाराख्यप्रतिबिम्बद्वयेनेति चेन्न; प्रतिबिम्बं विना स्वत्वस्यापि दुर्वचत्वात्। स्वत्वं हि स्वभुक्तवृत्तिवासनावत्त्वम्। भोगश्च ज्ञानम्। तथा च विषयतालक्षणस्य विषयसामग्रीघटितत्वेनात्माश्रयः। तस्माद्चैतन्यचैतन्ययोरन्योन्यविषयतारूपोऽन्योन्यस्मिन्नन्योन्यप्रतिबिम्बः सिद्धः। अधिकं तु योगवार्त्तिके (सू० २।२०) द्रष्टव्यमिति दिक्।

अत्रायं प्रमात्रादिविभागः

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव नः।<br>
प्रमाऽर्थाकारवृत्तीनां चेतने प्रतिबिम्बनम्॥<br>
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते।<br>
साक्षाद्दर्शनरूपं च साक्षित्वं वक्ष्यति स्वयम्॥<br>
अतः स्यात् कारणाभावाद् वृत्तेः साक्ष्येव चेतनः।<br>
विष्ण्वादेः सर्वसाक्षित्वं गौणं लिङ्गाद्यभावतः। (द्र०यो०वा० १।७)इति॥८७॥

[ भा० सा० ] इदानीं विवेकज्ञानोपायभूतानि प्रमाणानि परीक्ष्यन्ते—द्वयोरिति। असन्निकृष्टोऽनधिगतः, एवं भूतोऽर्थो वस्तु, तस्य परिच्छित्तिरवधारणम्, सा प्रमा। सा च द्वयोर्बुद्धिपुरुषयोर्धर्मो भवतु, एकतरस्य वा? उभयथापि तत्साधकं फलायोगव्यवच्छिन्नं यत्कारणं तत्प्रमाणरूपेण त्रिविधमित्यर्थः। स्मृतिव्यावृत्तयेऽनधिगतेति। भ्रमव्यावृत्तये वस्त्विति। संशयव्यावृत्तयेऽवधारणमिति। तत्र यदि प्रमारूपं फलं पुरुषे एव तदा बुद्धिवृत्तिरेव प्रमाणम्। यदि बुद्धिमात्रनिष्ठं तदेन्द्रियसन्निकर्ष एव प्रमाणम्। चक्षुरादिषु तु प्रमाणव्यवहारपरम्परयैवेति भावः।

अत्रेदं तत्त्वम्—पुरुषनिष्ठ एव बोधः प्रमा। न च तद्बोधस्वरूपस्य नित्यतया कथं फलत्वम्? अर्थोपरक्तवृत्तिप्रतिबिम्बस्य कार्यत्वात्, तस्यैव च पुरुषनिष्ठप्रमात्वात्। अत्रेयं प्रक्रिया—इन्द्रियप्रणाड्यार्थसन्निकर्षेण लिङ्गज्ञानादिना वाऽऽदौ बुद्धेरर्थाकारा वृत्तिर्जायते। तत्र सन्निकर्षजा प्रत्यक्षा वृत्तिरिन्द्रियविशिष्टबुद्ध्याश्रिता, नयनादिगतपित्तादिदोषपीताद्याकार-

वृत्त्युदयात् । सा चार्थोपरक्तवृत्तिः पुरुषे प्रतिबिम्बिता भासते, पुरुषस्यापरिणामितया बुद्धिवत् स्वतोऽर्थाकारत्वासम्भवात् । अर्थाकारतैव चार्थग्रहणम् । अन्यादृश्या च दुर्वचत्वात्, पुरुषे च स्व-स्वबुद्धिवृत्तीनामेव प्रतिबिम्बार्पणसामर्थ्यं फलवत्त्वात् । अतः पुरुषाणां कूटस्थविभुचिद्रूपत्वेऽपि न सर्वदा सर्वावभासः । इदमेव च बुद्धौ सत्त्वम्, यत्स्वप्रतिबिम्बन-सामर्थ्येनेतरेतरस्येति ।

प्रतिबिम्बश्च बुद्धेरेव परिणामविशेषो बिम्बाकारो जलादिगत इति बोध्यम् । एवं प्रतिध्वनिः शब्दस्य प्रतिबिम्ब एव, न शब्दजन्यं शब्दान्तरम्, स्फटिकलौहित्यादेरपि जपासन्निकर्षजन्यतापत्त्या प्रतिबिम्बमिथ्यात्वहान्यापत्तेः । रूपवत्त्वं तु न सामान्यतः प्रतिबिम्बप्रयोजकम् ।

न च वृत्तिप्रतिबिम्बितचैतन्येनैव वृत्तिप्रकाशनोपपत्तौ चैतन्ये वृत्तिप्रतिबिम्बकल्पना व्यर्था, एवं च वृत्तिगतप्रतिबिम्ब एव वृत्तौ चैतन्यविषयितेति वाच्यम्; वृत्तिचैतन्ययोरन्योन्य-विषयत्वानुभवेनान्योन्यविषयताख्यसम्बन्धरूपतया अन्योन्यस्मिन् प्रतिबिम्बस्वीकारात् । वृत्ता-वर्थाकारताया एव विषयितारूपत्वेन चैतन्येऽपि तस्या एव विषयितात्वौचित्यात् ।

घटादौ विषयता च वृत्तौ स्वाकारसमर्पकतैव । अत एव योगभाष्ये उक्तम्—"बुद्धेः प्रतिसंवेदी पुरुषः" (सू० २।२०) इति । प्रतिसंवेदः संवेदनप्रतिबिम्बः, प्रतिध्वनिवत् । संवेदनं पुरुषप्रतिबिम्बः ।

वस्तुतस्तु वृत्तिगतचैतन्यप्रतिबिम्ब एव उभयविषयतारूप इत्यपि वक्तुं शक्यम्, इति दिक् । तदयं विभागः—

प्रमाता, चेतनः शुद्धः प्रमाणं वृत्तिरेव न ।
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते ।
साक्षाद्दर्शनरूपत्वे साक्षित्वं वक्ष्यति स्वयम् ॥ इति ॥ ८७ ॥

## तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥८८॥

[ वृ० ] कति प्रमाणानीत्यत आह - त्रिविधं० । प्रत्यक्षानुमानशब्दाः प्रमाणा-नीति । किमुपमानार्थापत्त्यभावसम्भवैतिह्यानि न स्युरिति ? अत्रोक्तं 'तत्सिद्धौ' इत्यादि । प्रमेयव्यवस्थार्थं प्रमाणस्वीकारः । त्रिविधप्रमाणसिद्धौ सर्वप्रमाणानां प्रमेय-व्यवस्थासिद्धेर्नाधिक्यसिद्धिः पृथक्प्रमाणत्वेन, त्रिविधप्रमाणेष्वेषामन्तर्भावादित्यर्थः । इन्द्रियार्थसन्निकर्षान्वयव्यतिरेकादिना यथायथं प्रत्यक्षादिषु सूरिभिरन्तर्भावितत्वात्, केवलमधिकः संज्ञाभेदः कृत इति नाधिकत्वेन प्रमाणसिद्धिरिति निष्कर्षः ॥ ८८ ॥

[ वृ० सा० ] त्रिविधप्रमाणसिद्धौ सर्वस्यार्थस्य सिद्धेर्न प्रमाणाधिक्यं सिद्ध्यति, गौरवादित्यर्थः । अत एव मनुनापि प्रमाणत्रयमेवोपन्यस्तम्—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ ( १२।१०५) इति ।

उपमानैतिह्यादीनामनुमानशब्दयोः प्रवेशः। अनुपलब्धेस्तु प्रत्यक्षे इति। गीतावाक्ये त्वित्थमनुमानमभिप्रेतम्—आपादतलमस्तकं कृत्स्नं स्वव्यतिरिक्तेनैकेन प्रकाश्यम्, स्वयं-प्रकाशत्वात्, त्रैलोक्यवदिति। तेजश्चैतन्यसाधारणं प्रकाशत्वमखण्डोपाधिः प्रकाशव्यवहार-नियामकतया सिद्ध्यति ॥ ८८ ॥

[ भा० ] ननु—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ( गी० १३।३३ )

इत्यादिवाक्येषूपमानादि प्रकृतिपुरुषविवेके प्रमाणमुपन्यस्तम्, तत् कथमुच्यते त्रिविधमिति; तत्राह—तत्सिद्धौ०। त्रिविधप्रमाणसिद्धौ च सर्वस्यार्थस्य सिद्धेर्न प्रमाणाधिक्यं सिद्ध्यति, गौरवादित्यर्थः। अत एव मनुनापि प्रमाणत्रयमेवोपन्यस्तम्—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ ( १२।१०५) इति।

उपमानैतिह्यादीनां चानुमानशब्दयोः प्रवेशः। अनुपलब्ध्यादीनां च प्रत्यक्षे प्रवेश इति। उक्तवाक्ये चेदमनुमानमभिप्रेतम्—आपादतलमस्तकं कृत्स्नं स्वव्यतिरिक्तेनैकेन प्रकाश्यं स्वयमप्रकाशत्वात् त्रैलोक्यवदिति। तेजश्चैतन्यसाधारणं च प्रकाशत्वमखण्डो-पाधिः प्रकाशव्यवहारनियामकतया सिद्ध इति ॥ ८८ ॥

[ भा० सा० ] ननूपमानादिकमप्यतिरिक्तमस्तीति त्रैविध्यहानिरत आह—तदिति। त्रिविधप्रमाणेनैव सर्वसिद्धेर्न प्रमाणाधिक्यमित्यर्थः। उपमानार्थापत्त्यादीनामनुमाने, ऐतिह्यादीनां शब्दे, अनुपलब्ध्यादीनां च प्रत्यक्षे प्रवेश इति भावः। 'यथा गौस्तथा गवय' इति वाक्यजन्यं ज्ञानं शाब्दमेव। गोसदृशो गवयपदवाच्य इति ज्ञानम् असति वृत्त्यन्तरे तत्र वृद्धैः प्रयुज्यमानत्वादि-हेतुकमनुमानमेव, यथा गोशब्दो गोत्वस्येति दृष्टान्तः। यथा सूर्यो लोकं प्रकाशयति तथा क्षेत्री कृत्स्नं क्षेत्रमित्यादि, सोऽपि आपादतलमस्तकं स्वातिरिक्तैकप्रकाश्यम्, स्वयमप्रकाशत्वात्, त्रैलोक्यवदित्यनुमानमेव। तेजश्चैतन्यसाधारणं प्रकाशत्वमखण्डोपाधिः।

यदपि जीवतो गृहाभावदर्शनेन बहिः सत्ताज्ञानं तदप्यनुमानमेव तल्लिङ्गकम्। परिच्छिन्नस्य एकत्रासत्त्वेऽपरत्र सत्त्वम्, एकत्र सत्त्वे चापरत्र तदभाव इति व्याप्तिग्रहः। एवमभावो भूतलादीनां कैवल्याख्यपरिणाम एव, सर्वभावानां प्रतिक्षणपरिणामित्वात्। स च प्रत्यक्ष एवेति नास्ति तत्रानुपलब्ध्यादिप्रमाणान्तरापेक्षा।

एवं सम्भवः खार्यां द्रोणाद्यवगमः। सोऽप्यनुमानमेव, खारी द्रोणवती, द्रोणाविनाभूता, खारीत्वादिति। एवमनिर्दिष्टप्रवक्तृकं वाक्यमैतिह्यं तत्प्रमाणमेव न, संशयजनकत्वात्। तत्त्वे वा शब्द एवान्तर्भाव इति दिक् ॥ ८८ ॥

**यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ॥८९॥**

[ वृ० ] विशेषलक्षणमाह—यत्सम्बन्ध०। 'यत् सम्बन्धसिद्धम्' इत्यनुमानशब्दौ व्यवच्छिन्नौ। तदाकारोल्लेखि घटाद्याकारोल्लेखि। तत् प्रत्यक्षमित्यनेन सविकल्प-

कमपि प्रत्यक्षं संगृहीतम्। बौद्धास्तु निर्विकल्पकमेव प्रत्यक्षमिति वर्णयन्ति —"कल्पनापोढमभ्रान्तं प्रत्यक्षम्" ( न्या० बि० १।४ ) इति। नामजात्यादियोजनात्मिका प्रतीतिः कल्पना; सा च सविकल्पकेऽप्यस्तीति न प्रत्यक्षं प्रमाणम्। तन्न; अदृष्टसाक्षात्कारिप्रमाजनकसामग्रीजनितं प्रत्यक्षम्। तदुभयं सविकल्पकं निर्विकल्पकञ्च। किन्तु सादृश्यात् संस्कारोद्बोधद्वारेण स्मृत्या नामजात्यादिसंविदुत्पद्यते, अत एवाधिकप्राप्त्या सविकल्पकमिति विशेषसंज्ञा। न च स्मृत्या कश्चिद्दोषः सामग्रीप्रत्यवायो वा जनितः। अथ स्मृत्याऽव्यवहितत्वात् न प्रमाणम्? अहो नैपुण्यम्, यत् सहकारिप्रामाण्यं बाधते। तथा च—

संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा॥
ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता॥ इति॥ ८९॥

[ वृ० सा० ] पुरुषनिष्ठा प्रमेति मुख्यसिद्धान्तमाश्रित्य प्रमाविशेषलक्षणानि वक्तुमुपक्रमते—तदिति। संबन्धं भवत् संवद्धवस्त्वाकारधारि भवति, यद्विज्ञानं बुद्धिवृत्तिस्तत्प्रत्यक्षं प्रमाणमित्यर्थः। अत्र सदित्यन्तं हेतुगर्भविशेषणम्। तथा च स्वार्थसन्निकर्षजन्यत्वमित्याकाराश्रयग्रहणं चक्षुरादिकरणद्वारकं बुद्धिवृत्तिश्च प्रदीपस्य शिखेव बाह्यार्थसन्निकर्षानन्तरमेव तदाकारोल्लेखिनी भवतीति नासम्भवः॥ ८९॥

[ भा० ] पुरुषनिष्ठा प्रमेति मुख्यसिद्धान्तमाश्रित्य प्रमाणानां विशेषलक्षणानि वक्तुमुपक्रमते—यत् सम्बद्ध०। सम्बन्धं भवत् सम्बद्धवस्त्वाकारधारि भवति, यद्विज्ञानं बुद्धिवृत्तिस्तत्प्रत्यक्षं प्रमाणमित्यर्थः। अत्र सदित्यन्तं हेतुगर्भविशेषणम्। तथा च स्वार्थसन्निकर्षजन्याकारस्याश्रयो वृत्तिः प्रत्यक्षं प्रमाणमिति निष्कर्षः। "वृत्तिः सम्बन्धार्थं सर्पति" ( ५।१०७ ) इत्यागामिसूत्राद् न वृत्तेः सन्निकर्षजन्यत्वमित्याकाराश्रयग्रहणम्। चक्षुरादिद्वारकबुद्धिवृत्तिश्च प्रदीपस्य शिखातुल्या बाह्यार्थसन्निकर्षानन्तरमेव तदाकारोल्लेखिनी भवतीति नासम्भवः॥ ८९॥

[ भा० सा० ] पुरुषनिष्ठैव प्रमेति सिद्धान्ताभिप्रायेण प्रमाणविशेषलक्षणान्याह—यदिति। संबन्धं भवद्यत्संबद्धवस्त्वाकारधारि विज्ञानं बुद्धिवृत्तिस्तत्प्रत्यक्षं प्रमाणमित्यर्थः। स्वार्थसंनिकर्षजन्याकाराश्रयवृत्तिः प्रत्यक्षं प्रमाणमित्यर्थः। वृत्तिर्न संनिकर्षजन्येत्याकाराश्रयेति। बुद्धिवृत्तिश्च दीपस्य शिखातुल्या चक्षुरादिद्वारा बाह्यार्थसंनिकर्षानन्तरं तदाकारोल्लेखिनीति नासंभवः॥ ८९॥

## योगिनामबाह्यप्रत्यक्षत्वान्न दोषः॥९०॥

[ वृ० ] ननु योगिप्रत्यक्षाव्यापकत्वाद् नेदं प्रत्यक्षलक्षणं युक्तमित्यत आह—योगिना०। बाह्यप्रत्यक्षलक्षणमिदं लौकिकम्, योगिप्रत्यक्षं त्वबाह्यमलौकिकं च। अतो नाव्यापकत्वदोषः॥ ९०॥

[ वृ० सा० ] ननु योगिनामतीतानागतव्यवहितवस्तुप्रत्यक्षेऽव्याप्तिः, संबद्धवस्त्वाकाराभावादित्याशङ्क्य तस्या लक्ष्यत्वेन समाधत्ते—योगिनामिति। ऐन्द्रियकप्रत्यक्षमेवात्र लक्ष्यं योगिनश्चाबाह्यप्रत्यक्षकाः, अतो न तत्राव्याप्तिदोष इत्यर्थः ॥ ९० ॥

[ भा० ] ननु योगिनामतीतानागतव्यवहितवस्तु-प्रत्यक्षेऽव्याप्तिः, सम्बद्धवस्त्वाकाराभावादित्याशङ्क्य तस्यालक्ष्यत्वेन समाधत्ते—योगिनाम०।

ऐन्द्रियकप्रत्यक्षमेवात्र लक्ष्यम्। योगिनश्चाबाह्यप्रत्यक्षकाः। अतो न दोषो न तत्प्रत्यक्षेऽव्याप्तिरित्यर्थः ॥ ९० ॥

[ भा० सा० ] ननु योगिनामतीतानागतवस्तुप्रत्यक्षेऽव्याप्तिः, तत्र संबद्धवस्त्वाकाराभावादित्यत आह—योगिनामिति। ऐन्द्रियकप्रत्यक्षमेवात्र लक्ष्यमिति भावः ॥ ९० ॥

**लीनवस्तुलब्धातिशयसम्बन्धाद्वा न दोषः ॥९१॥**

[ वृ० ] अथवा अनेन लक्षणेन योगिप्रत्यक्षस्यापि संग्रह इति पक्षान्तरमाह—लीनवस्तु०। सत्कार्यस्थितेर्नष्टमपि स्वकारणे लीनं भूतत्वेनास्ति, भविष्यदपि स्वकारणेऽनागतत्वेनास्ति। योगजधर्मानुग्रहाल्लब्धातिशयस्य योगिन एव प्रधानसम्बन्धात् सर्वदेशकालादिसम्बन्ध इति नाव्यापकत्वदोषः ॥ ९१ ॥

[ वृ० सा० ] वास्तवं समाधानमाह—लीनेति। अथवाऽस्तु योगिप्रत्यक्षमपि लक्ष्यम्, तथापि न दोषो नाव्याप्तिः। यतो लीनवस्तुषु लब्धयोगजधर्मजन्यातिशयस्य योगिचित्तस्य संबन्धो घटते। अत्र लीनशब्दः पराभिप्रेतासन्निकृष्टवाची, सत्कार्यवादिनां ह्यतीतादिकमपि स्वरूपतोऽस्तीति तत्संबन्धः सम्भवेदिति। व्यवहितविप्रकृष्टेषु संबन्धे हेतुविधया लब्धातिशयेति विशेषणम्। अतिशयञ्च व्यापकत्वं वृत्तिप्रतिबन्धकतमोनिवृत्त्यादिश्चेति ज्ञेयम् ॥ ९१ ॥

[ भा० ] वास्तवं समाधानमाह—लीनवस्तु०। अथवा तदपि लक्ष्यमेव, तथापि न दोषो नाव्याप्तिः। यतो लीनवस्तुषु लब्धयोगजधर्मजन्यातिशयस्य योगिचित्तस्य सम्बन्धो घटत इत्यर्थः। अत्र लीनशब्दः पराभिप्रेतासन्निकृष्टवाची। सत्कार्यवादिनां ह्यतीतादिकमपि स्वरूपतोऽस्तीति तत्सम्बन्धः सम्भवेदिति व्यवहितविप्रकृष्टेषु सम्बन्धहेतुविधया लब्धातिशयेति विशेषणम्। अतिशयश्च व्यापकत्वं वृत्तिप्रतिबन्धकतमोनिवृत्त्यादिश्चेति।

इदं चात्रावधेयम्। यत्सम्बद्धं सदिति पूर्वसूत्रे ( ८९ सू० ) बुद्धेरर्थसन्निकर्षस्यैव प्रत्यक्षहेतुतालाभात् प्रत्यक्षसामान्ये बाह्यार्थसाधारणे बुद्ध्यर्थसन्निकर्ष एव कारणम्। इन्द्रियसन्निकर्षास्तु चाक्षुषादिप्रत्यक्षेषु विशिष्यैव कारणानि। नन्वेवमिन्द्रियसन्निकर्षयोगजधर्माद्यभावेऽपि बुद्ध्या बाह्यार्थप्रत्यक्षापत्तिः। मैवम्; तमःप्रतिबन्धेन इदानीं बुद्धिसत्त्वस्य वृत्त्यसम्भवात्। तच्च तमः कदाचिदर्थेन्द्रिययोः सन्निकर्षेण कदाचिच्च योगजधर्मेणापसार्यते, अञ्जनसंयोगेन नयनमालिन्यवत्। न चैवं 'तद्धेतोरेव तदस्तु' इति न्यायेनेन्द्रियसन्निकर्षादेरेव बाह्यार्थप्रत्यक्षसामान्ये हेतुताऽस्त्विति वाच्यम्; सुषुप्त्यादौ तमसो बुद्धिवृत्तिप्रतिबन्धकत्वसिद्धेः।

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापनं तु तमसा तुरीयं त्रिषु सन्ततम् ॥ ( भा० ११।२५।२० )

इत्यादिस्मृतिभ्यः सुषुप्त्यादौ वृत्तिप्रतिबन्धकान्तराऽसम्भवाच्च । चाक्षुषवृत्तावपि तमसः प्रतिबन्धदर्शनाच्च ।

यत् तु शुष्कतार्किकाः सुषुप्तौ वृत्त्यनुत्पादार्थं ज्ञानसामान्ये त्वङ्मनोयोगं कारणं कल्पयन्ति, तदसत्; त्वगिन्द्रियोत्पत्तेः प्रागपि केवलबुद्धया स्वयम्भुवः सर्वप्रत्यक्षश्रवणात् । त्वङ्मनोयोगानुत्पादेऽपि तमस एव निमित्तताया वक्तव्यत्वाच्च। केवलतर्कस्याप्रतिष्ठादोषग्रस्तत्वाच्चेति दिक् ॥ ९१ ॥

[ मा० सा० ] वास्तवं समाधानमाह—लीनेति । लीनवस्तुषु असन्निकृष्टवस्तुषु लब्धयोगजधर्मजन्यातिशयस्य योगिचित्तस्य संबन्धसंभवान्नाव्याप्तिः । सत्कार्यवादिनामतीतादिकमपि स्वरूपतोऽस्तीति तत्संबन्धसंभवः । अतिशयश्च व्यापकत्वं वृत्तिप्रतिबन्धकतमोनिवृत्त्यादिश्च । तच्च तमः कदाचिदिन्द्रियार्थसन्निकर्षेण, कदाचिच्च योगजधर्मेणापसार्यते। अञ्जनसंयोगेन नयनमालिन्यवत् ।

एवञ्च प्रत्यक्षसामान्ये वृत्तिद्वारा बुद्धयर्थसन्निकर्ष एव कारणम् । इन्द्रियसन्निकर्षादि तु तमोपसारणद्वारा चाक्षुषादिप्रत्यक्षेषु विशिष्यैव कारणम् । न च लाघवादिन्द्रियसन्निकर्ष एव प्रत्यक्षे कारणमस्तु, सुषुप्तौ तमसो वृत्तिप्रबिन्धकत्वसिद्धेः ।

सत्त्वाज्जागरणं विद्याद् रजसा स्वप्नमादिशेत् ।
प्रस्वापनं तु तमसा तुरीयं त्रिषु सन्ततम् ॥ ( भा० ११।२५।२० )

इति स्मृतेः । यत्तु ज्ञानसामान्ये त्वङ्मनोयोगस्य कारणत्वात् सुषुप्तौ वृत्त्यनुत्पाद इति, तन्न; त्वगिन्द्रियोत्पत्तेः प्रागपि केवलबुद्धया स्वयम्भुवः सर्वप्रत्यक्षश्रवणात्। त्वङ्मनोयोगानुत्पत्तौ तमोऽतिरिक्तकारणाभावाच्च ॥ ९१ ॥

## ईश्वरासिद्धेः ॥९२॥

[ वृ० ] ईश्वरप्रत्यक्षस्यालक्षणमित्यत आह—ईश्वरा० । यदीश्वरसिद्धौ प्रमाणमस्ति, तदा तत्प्रत्यक्षचिन्ता उपपद्यते । तदेव तु नास्ति । क्षित्यादि सकर्तृकं कार्यत्वादिति प्रमाणमस्तीति चेत्, स किं शरीरी अशरीरी वा—इत्युभयथापि कर्तृत्वासम्भवाद् विशेषवादिनां कार्यत्वस्याभासत्त्वान्न तत् प्रमाणम् । एतदन्यत्र बहु प्रपञ्चितम् ॥ ९२ ॥

[ वृ० सा० ] ननु तथापीश्वरप्रत्यक्षेऽव्याप्तिः, तस्य नित्यत्वेन सन्निकर्षाजन्यत्वात्तत्राह-ईश्वरेति । ईश्वरे प्रमाणाभावाददोष इत्यनुवर्त्तते । अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढिवादेनैव । अत एवेश्वरासिद्धेरित्युक्तं न त्वीश्वराभावादिति बोध्यम् । ईश्वराभ्युपगमे तु सन्निकर्षजन्यजातीयत्वमेव विवक्षितं साजात्यं च ज्ञानत्वसाक्षाद्व्याप्यजात्येति भावः ॥ ९२ ॥

[ भा० ] ननु तथापीश्वरप्रत्यक्षेऽव्याप्तिः, तस्य नित्यत्वेन सन्निकर्षाजन्यत्वादिति, तत्राह—ईश्वरा०। ईश्वरे प्रमाणाभावान्न दोष इत्यनुवर्तते। अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढिवादेनैवेति प्रागेव प्रतिपादितम्। अन्यथा हीश्वराभावादित्येवोच्येत। ईश्वराभ्युपगमे तु सन्निकर्षजन्यजातीयत्वमेव प्रत्यक्षलक्षणं विवक्षितम्, साजात्यं च ज्ञानत्वसाक्षाद्व्याप्यजात्येति भावः ॥ ९२ ॥

[ भा० सा० ] ननु तथापीश्वरप्रत्यक्षेऽव्याप्तिः, तस्य नित्यत्वेन संनिकर्षाजन्यत्वादत आह—ईश्वरेति। ईश्वरे प्रमाणाभावान्न तत्प्रत्यक्षेऽव्याप्तिरित्यर्थः। इदं च प्रौढिवादेन, ईश्वराभ्युपगमे तु सन्निकर्षजन्यजातीयत्वं तल्लक्षणम्, साजात्यं च ज्ञानत्वसाक्षाद्व्याप्यजात्या ॥ ९२ ॥

## मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥९३॥

[ वृ० ] युक्त्यन्तरमाह—मुक्त०। स किं बद्धो वा मुक्तो वा? बद्धस्य धर्माधर्मयोगाद् नेश्वरत्वम्। मुक्तस्य ज्ञानचिकीर्षाप्रयत्नाभावाद् न कर्तृत्वमिति नेश्वरसिद्धिः। अथान्य एवासौ जीवन्मुक्त इति। एवं तर्हि दृष्टान्ताभावादसाधारणत्वम् ॥९३॥

[ वृ० सा० ] श्रुतिस्मृतिभ्यां कथमीशो न सिद्ध्येदित्याशङ्क्य तर्कनिरोधं बाधकमाह—मुक्तेति। ईश्वरोऽभिमतो यः स किं क्लेशादिभिर्मुक्तो बद्धो वा? अन्यतरस्याप्यसम्भवान्नेश्वरसिद्धिः ॥ ९३ ॥

[ भा० ] श्रुतिस्मृतिभ्यां कथमीशो न सिद्ध्यतीत्याकाङ्क्षायां तर्कविरोधं लौकिकमेव बाधकमाह—मुक्तबद्धयो०। ईश्वरोऽभिमतः किं क्लेशादिमुक्तो वा तैर्बद्धो वा? अन्यतरस्याप्यसम्भवान्नेश्वरसिद्धिरित्यर्थः ॥ ९३ ॥

[ भा० सा० ] तदङ्गीकारे तर्कविरोधमाह—मुक्तेति। ईश्वरे मुक्तत्वं बद्धत्वान्यतरस्यासंभवान्न तत्सिद्धिरित्यर्थः ॥ ९३ ॥

## उभयथाप्यसत्करत्वम् ॥९४॥

[ वृ० ] एतदेवाह—उभयथा०। उक्तव्याख्यानमेतत् सूत्रम्। असत्करत्वं प्रोक्तकारणात् कर्तृत्वाभावसाधकम् ॥ ९४ ॥

[ वृ० सा० ] तदेवाह—उभयथेति। मुक्तत्वे सृष्टिप्रयोजकरागाद्यभावात्, न सृष्टिकरत्वमीश्वरस्येति सृष्टिकर्तृत्वेनैव हीश्वरः साध्यते परैः। व्याख्यानात् सृष्टिपरः सच्छन्दोऽत्र वोध्यः ॥ ९४ ॥

[ भा० ] उभयथा०। मुक्तत्वे सति स्रष्टृत्वाद्यक्षमत्वं तत्प्रयोजकाभिमानरागाद्यभावात्। बद्धत्वेऽपि मूढत्वान्न सृष्ट्यादिक्षमत्वमित्यर्थः ॥ ९४ ॥

[ भा० सा० ] तदेवाह—उभयथेति। मुक्तत्वे स्रष्टृत्वाद्यक्षमत्वं तत्प्रयोजकाभिमानरागाद्यभावात्। तद्वत्त्वेऽपि मूढत्वान्न तत्क्षमत्वमित्यर्थः। व्याख्यानात्सच्छन्दोऽत्र सृष्टिपरः। एतेन क्षित्यादिकर्तृत्वेनेश्वरसिद्धिरित्यपास्तम् ॥ ९४ ॥

## मुक्तात्मनः प्रशंसा, उपासासिद्धस्य वा ॥९५॥

[ वृ० ] एवं तर्हि "स हि सर्ववित् सर्वकर्ता" इत्यादिश्रुतिबाधः स्यादित्यत्राह—मुक्तात्मनः। रागाद्यभावान्मुक्तात्मन इव मुक्तात्मनः, न तु मुक्तस्य, तस्य सङ्कल्पकर्तृत्वाद्यभावात्। तत्प्रशंसा, विधिवाक्योत्तम्भनाय। उपासासिद्धस्य वेति। उपासनया लब्धातिशयस्य योगिनोऽणिमादिसिद्धस्य प्रशंसा अभ्यासोत्तम्भनायेति ॥९५॥

[ वृ० सा० ] नन्वेवमपीश्वरप्रतिपादकश्रुतिस्मृत्योः का गतिस्तत्राह—मुक्तेति। केचित् श्रुतिस्मृती मुक्तात्मनः केवलात्मनो ज्ञेयताविधानाय तस्य सन्निधिमात्रेणैश्वर्येण स्तुतिरूपे, केचिच्चोपासनासिद्धस्यानित्येश्वरस्यैव नित्यत्वाद्युपासनासिद्धये गौण नित्यत्वादिना स्तुतिरूपे ॥९५॥

[ भा० ] नन्वेवमीश्वरप्रतिपादकश्रुतीनां का गतिस्तत्राह—मुक्तात्मनः०। यथायोगं काचित् श्रुतिर्मुक्तात्मनः केवलात्मसामान्यस्य सन्निधिमात्रैश्वर्येण स्तुतिरूपा प्ररोचनार्था। काचिच्च सङ्कल्पपूर्वकस्रष्टृत्वादिप्रतिपादिका श्रुतिः सिद्धस्य ब्रह्मविष्णुहरादेरेवानित्येश्वरस्याभिमानादिमतोऽपि गौणनित्यत्वादिमत्त्वान्नित्यत्वाद्युपासापरेत्यर्थः ॥ ९५ ॥

[ भा० सा० ] नन्वेवं "सर्ववित्सर्वस्य कर्ता" इत्यादीश्वरप्रतिपादकश्रुतीनां का गतिस्तत्राह—मुक्तेति। यथायोगं काचिच्छ्रुतिर्मुक्तात्मनः केवलात्मसामान्यस्य ज्ञेयताबोधनाय सन्निधिमात्रैश्वर्येण स्तुतिरूपा प्ररोचनार्था। काचित्तु संकल्पपूर्वकस्रष्टृत्वादिप्रतिपादिका श्रुतिः सिद्धस्य ब्रह्मविष्णुहरादेरनित्येश्वरस्याभिमानादिमतो गौणनित्यत्वादिमत्त्वान्नित्यत्वादिनोपासापरेत्यर्थः ॥ ९५ ॥

## तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥९६॥

[ वृ० ] चेतनाधिष्ठानं विना नाचेतनं प्रवर्त्तत इत्यतोऽपि नेश्वरसिद्धिरित्याह—तत्सन्नि०। तथा प्रतिबिम्बितशरीरे मणौ चलति अचलति शरीरे शरीरं चलतीत्यभिमानः, तथा तत्सन्निधानात् प्रकृतिप्रतिबिम्बितत्वादात्मनः प्रकृतेः कर्तृत्वं भोक्तृत्वमधिष्ठातृत्वमात्मनोऽभिमन्यते। तस्माच्चेतनोऽधिष्ठातेति भ्रान्तिरिति। तथा च—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥ (गी० ३।२७) ॥ ९६ ॥

[ वृ० सा० ] अधिष्ठातृत्वं कीदृशं तत्राह—तदिति। तत्पुरुषस्य सन्निधानात् संयोगाद् अधिष्ठातृत्वं प्रकृत्यधिष्ठातृत्वं महत्तत्त्वरूपेण परिणामयितृत्वं न तु संकल्पादिना, यथाऽयस्कान्तमणेः सान्निध्यमात्रेण लोहाकर्षत्वम्। उक्तं च—

निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्त्तते।
सत्तामात्रेण देवेन तथैवायं जगज्जनः।
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम्।
निरिच्छत्वादकर्तासौ कर्ता सन्निधिमात्रतः॥

( यो० वा० ३।५६।३०–३१ ) इति ॥ ९६ ॥

[ भा० ] ननु तथापि प्रकृत्याद्यखिलाधिष्ठातृत्वं श्रूयमाणं नोपपद्यते, लोके सङ्कल्पादिना परिणमनस्यैवाधिष्ठातृत्वव्यवहारादिति, तत्राह—तत्सन्नि० ।

यदि सङ्कल्पेन स्रष्टृत्वमधिष्ठातृत्वमुच्यते तदायं दोषः स्यात् । अस्माभिस्तु पुरुषस्य सन्निधानादेवाधिष्ठातृत्वं स्रष्टृत्वादिरूपमिष्यते, मणिवत् । यथाऽयस्कान्तमणेः सान्निध्यमात्रेण शल्यनिष्कर्षकत्वं न सङ्कल्पादिना, तथैवादिपुरुषस्य संयोगमात्रेण प्रकृतेर्महत्तत्त्वरूपेण परिणमनम् । इदमेव च स्वोपाधिस्रष्टृत्वमित्यर्थः । तथा चोक्तम्—

निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते ।
सत्तामात्रेण देवेन तथा चायं जगज्जनः ॥
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः ॥ ( यो० वा० ४।५६।३०-३१ )

इति । "तदैक्षत बहु स्याम्" ( छा० उ० ६।२।३ ) इत्यादिश्रुतिस्तु कूलं पिपतिषतीतिवद् गौणी, प्रकृतेरासन्नबहुतरगुणसंयोगात् । अथवा बुद्धिपूर्वसृष्टिविषयमेतादृशवाक्यजातं न त्वादिसर्गपरं तस्याबुद्धिपूर्वकत्वस्मरणादिति भावः । यथा कौर्मे —

इत्येष प्राकृतः सर्गः सङ्क्षेपात् कथितो मया ।
अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधत ॥ ( १।४।६ )

इति । अस्य च वाक्यस्यादिपुरुषबुद्ध्यजन्यत्वेन सङ्कोचे गौरवमिति ॥ ९६ ॥

[ भा० सा० ] ननु तथापि प्रकृत्याधिष्ठातृत्वं श्रूयमाणं नोपपद्यते, लोके संकल्पादिना स्रष्टुरेवाधिष्ठानत्वव्यवहारादत आह—तदिति । न संकल्पेन स्रष्टृत्वमधिष्ठातृत्वं किन्तु संनिधानात्स्रष्टृत्वमेव तत् । यथायस्कान्तमणेः सान्निध्यमात्रेण शल्यनिष्कर्षत्वं न संकल्पादिना, एवं पुरुषसंयोगमात्रेण प्रकृतेर्महत्तत्त्वरूपेण परिणमनम्, इदमेव च गौणं पुरुषस्य सोपाधिस्रष्टृत्वमित्यर्थः । "निरिच्छत्वादकर्ता स्यात्कर्ता सन्निधिमात्रतः" ( यो० वा० ४।५६।३१ ) इत्युक्तेः । "तदैक्षत बहु स्याम्" ( छा० उ० ६।२।३ ) इत्यादि तु बुद्धिपूर्वसृष्टिविषयकम्, न त्वादिसर्गपरम् । "अबुद्धिपूर्वकस्त्वेष ब्राह्मी सृष्टिं निबोधत" ( कू० पु० १।३।६६ ) इति कौर्मेण तस्याबुद्धिपूर्वकत्वस्मरणादिति भावः ॥ ९६ ॥

## विशेषकार्येऽपि जीवानाम् ॥९७॥

[ वृ० ] यदि न चेतनाधिष्ठातृत्वं तर्हि मृतशरीरस्याहारादिक्रिया स्यादित्यत आह - विशेष० । वायुयुक्तो बुद्ध्यादिर्जीवः, न त्वात्मा जीवः । आहारादिविशेषकार्येऽपि जीवानामेव कर्तृत्वम्, आत्मनोऽपरिणामित्वात् ॥ ९७ ॥

[ वृ० सा० ] लौकिककार्येष्वपि जीवानां सन्निधिमात्रेणैवाधिष्ठातृत्वमित्याह—विशेषेति । सन्निधानादधिष्ठातृत्वमित्यनुषङ्गः । जीवानां कूटस्थचिन्मात्रत्वादित्यर्थः ॥ ९७ ॥

[ भा० ] न केवलं सर्गादावेव पुरुषस्य संयोगमात्रेण स्रष्टृत्वादिकमपि त्वन्येष्वपि सङ्कल्पादिपूर्वकेषु भूतादिष्वखिलेषु विशेषकार्येष्वपि सर्वपुरुषाणामित्याह—विशेष० ।

अधिष्ठातृत्वं सन्निधानादित्यनुषज्यते । अन्तःकरणोपलक्षितस्यैव जीवशब्दार्थत्वं षष्ठाध्याये ( सू० ६३ ) वक्ष्यति । तथा च विशेषकार्ये विसर्गाख्ये व्यष्टिसृष्टावपि जीवानामन्तःकरणप्रतिबिम्बितचेतनानां सन्निधानादेवाधिष्ठातृत्वम्, न तु केनापि व्यापारेण कूटस्थचिन्मात्ररूपत्वादित्यर्थः ॥ ९७ ॥

[ भा० सा० ] महत्तत्त्वसृष्टाविवान्येष्वपि संकल्पादिपूर्वेषु भूतादिषु सर्वपुरुषाणां संयोगमात्रेण स्रष्टृत्वमित्याह—विशेषेति । विशेषकार्येषु सर्गाख्यव्यष्टिसृष्टौ जीवानामन्तःकरणोपलक्षितानां च तत्प्रतिबिम्बितानां चेतनानां संनिधानादधिष्ठातृत्वम्, न तु केनापि व्यापारेण कूटस्थचिन्मात्रत्वादित्यर्थः ॥ ९७ ॥

## सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥९८॥

[ वृ० ] आत्मनि चेज्ज्ञानं नास्ति, कथं ज्ञानायोपदेश इत्यत्राह—सिद्धरूप० । उत्तरसूत्रस्यान्तःकरणस्येति पदमनुषञ्जनीयम् । वाक्यार्थोपदेशोऽन्तःकरणस्येत्यन्तमेकं सूत्रं वा । तेनायमर्थः—सिद्धरूपबोद्धृत्वात् तात्त्विकरूपबोद्धृत्वान्महतोऽन्तःकरणस्य वाक्यार्थोपदेशः, तत्प्रतिबिम्बितत्वाच्च पुरुषस्य बोद्धृत्वाभिमानः ॥ ९८ ॥

[ वृ० सा० ] ननु नित्यसर्वज्ञेश्वराभावेऽन्धपरम्पराशङ्कया वेदाप्रामाण्यं स्यादत आह—सिद्धरूपेति । हिण्यगर्भादेः सिद्धरूपस्य यथार्थस्य बोद्धृत्वात्तद्वक्तृको वेदवाक्यार्थोपदेशः प्रमाणमिति शेषः ॥ ९८ ॥

[ भा० ] ननु चेत् सदा सर्वज्ञ ईश्वरो नास्ति, तर्हि वेदान्तमहावाक्यार्थस्य विवेकस्योपदेशोऽन्धपरम्पराशङ्कयाऽप्रामाण्यं प्रसज्येत, तत्राह—सिद्धरूप० ।

हिरण्यगर्भादीनां सिद्धरूपस्य यथार्थस्य बोद्धृत्वात् तद्वक्तृकायुर्वेदादिप्रामाण्येनावधृताच्चैषां वाक्यार्थोपदेशः प्रमाणमिति शेषः ॥ ९८ ॥

[ भा० सा० ] ननु यदि सर्वज्ञ ईश्वरो नास्ति तर्हि वेदस्यान्धपरम्पराशङ्कयाऽप्रामाण्यं प्रसज्येतेत्यत आह—सिद्धेति । हिरण्यगर्भादीनां सिद्धरूपस्य तत्त्वरूपस्य तत्त्वभूतार्थस्य यद्बोद्धृत्वं तत्तद्वक्तृकायुर्वेदादिप्रामाण्येनावधृतम्, तस्मात्तद्वाक्यभूतवेदार्थोपदेशः प्रमाणमित्यर्थः ॥ ९८ ॥

## अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥९९॥

[ वृ० ] एतदेव स्पष्टयति—अन्तः० । अन्तःकरणस्य बुद्धेः पुरुषच्छायापत्त्या तच्चैतन्योज्ज्वलितस्य चेतनत्वाभिमानादधिष्ठातृत्वम् । लोहवदिति—यथा आकर्षको लोहो निष्क्रियोऽपि सन्निधिमात्रेणाकर्षति ॥ ९९ ॥

[ वृ० सा० ] लौकिककार्येषु संकल्पादिनाऽधिष्ठातृत्वं कस्येत्याकाङ्क्षायामाह—अन्तःकरणेति । अग्निसंयोगविशेषेण यथा लोहमुज्ज्वलितं तद्वत्प्रतिबिम्बहेतुसंयोगविशेषेण चेतना-

ज्ज्वलितत्वाच्चेतनायमानस्यान्यचेतनेभ्यो विलक्षणस्यान्तःकरणस्य संकल्पादिद्वारकमनुपचरितमधिष्ठातृत्वमित्यर्थः। आदिसर्गस्त्वबुद्धिपूर्वक इति न तत्र मुख्याधिष्ठातुरपेक्षा। अत एव कौर्मे—

इत्येष प्रकृतिः सर्गः संक्षेपात् कथितो मया।
अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधत॥ ( कू० पु० १।४।६६ ) इति।

तदैक्षतेत्यादि तु कूलं पिपतिषतीत्यादिवत् कार्योन्मुखत्वमादाय कथंचिन्नेयमिति भावः॥ ९९॥

[ भा० ] ननु पुरुषस्य चेत् सन्निधिमात्रेण गौणमधिष्ठातृत्वं तर्हि मुख्यमधिष्ठातृत्वं कस्येत्याकाङ्क्षायामाह—अन्तःकरणस्य०। अन्तःकरणस्यानुपचरितमधिष्ठातृत्वं सङ्कल्पादिद्वारकं प्रत्येतव्यम्। नन्वधिष्ठातृत्वं घटादिवदचेतनस्य न युक्तम्, तत्राह—लोहवत् तदुज्ज्वलितत्वादिति। अन्तःकरणं हि तप्तलोहवच्चेतनोज्ज्वलितं भवति। अतस्तस्य चेतनायमानतयाऽधिष्ठातृत्वं घटादिव्यावृत्तमुपपद्यत इत्यर्थः।

नन्वेवं चैतन्येनान्तःकरणस्योज्ज्वलने चितेः सङ्गित्वमग्निवदेव स्यादिति चेन्न; नित्योज्ज्वलचैतन्यसंयोगविशेषमात्रस्य संयोगविशेषजन्यचैतन्यप्रतिबिम्बस्यैवान्तःकरणोज्ज्वलनरूपत्वात्। न तु चैतन्यमन्तःकरणे संक्रामति, येन सङ्गिता स्यात्। अग्नेरपि हि प्रकाशादिकं न लोहे संक्रामति, किन्त्वग्नियोगविशेष एव लोहस्योज्ज्वलनमिति। नन्वेवमपि संयोगेन परिणामित्वमिति चेन्न; सामान्यगुणातिरिक्तधर्मोत्पत्तावेव परिणामव्यवहारादिति।

अयं च संयोगविशेषोऽन्तःकरणस्यैव सत्त्वोद्रेकरूपात् परिणामाद्भवतीति फलबलात् कल्प्यते। पुरुषस्यापरिणामित्वेन संयोगे तन्निमित्तकविशेषासम्भवादिति। अयमेव च संयोगविशेषो बुद्ध्यात्मनोरन्योन्यप्रतिबिम्बने हेतुः। ननु प्रतिबिम्बहेतुतया संयोगविशेषावश्यकत्वे प्रतिबिम्बकल्पना व्यर्था, प्रतिबिम्बकार्यस्यार्थज्ञानादेः संयोगविशेषादेव संभवादिति चेत्, मैवम्; बुद्धौ चैतन्यप्रतिबिम्बश्चैतन्यदर्शनार्थं कल्प्यते, दर्पणे मुखप्रतिबिम्बवत्। अन्यथा कर्मकर्तृविरोधेन स्वस्य साक्षात् स्वदर्शनानुपपत्तेः।

अयमेव च चित्प्रतिबिम्बो बुद्धौ 'चिच्छायापत्तिः' इति 'चैतन्याध्यासः' इति 'चिदावेशः' इति चोच्यते। यश्च चैतन्ये बुद्धेः प्रतिबिम्बः स चारूढविषयैः सह बुद्धेर्भानार्थमिष्यते। अर्थाकारतयैवार्थग्रहणस्य बुद्धेः स्थले दृष्टत्वेन तां विना संयोगविशेषमात्रेणार्थभानस्य पुरुषेऽप्यनौचित्यात्। अर्थाकारस्यैवार्थग्रहणशब्दार्थत्वाच्चेति। स चार्थाकारः पुरुषे परिणामो न सम्भवतीत्यर्थात् प्रतिबिम्बरूप एव पर्यवस्यतीति दिक्।

स चायमन्योन्यप्रतिबिम्बो योगभाष्ये ( सू० २।२०, ४।२२ ) व्यासदेवैः सिद्धान्तितः—"चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति। तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा

हि ज्ञानवृत्तिरित्याख्यायते" इत्यादिना । योगवार्त्तिके (सू० २।२०, ४।२२) चैतद्विस्तरतोऽस्माभिः प्रतिपादितम् ।

कश्चित् तु "बुद्धिगतया चिच्छायया बुद्धेरेव सर्वार्थज्ञातृत्वमिच्छादिभिर्ज्ञानस्य सामानाधिकरण्यानुभवादन्यस्य ज्ञानेनान्यस्य प्रवृत्त्यनौचित्याच्च" इत्याह । तदात्माज्ञानमूलकत्वादुपेक्षणीयम् । एवं हि बुद्धेरेव ज्ञातृत्वे "चिदवसानो भोगः" (सां० सू० १।१०४) इत्यागामिसूत्रद्वयविरोधः । पुरुषे प्रमाणाभावश्च पुरुषलिङ्गस्य भोगस्य बुद्धावेव स्वीकारात् । न च प्रतिविम्बज्ञान्यथानुपपत्त्या बिम्बभूतः पुरुषः सेत्स्यतीति वाच्यम्; अन्योन्याश्रयात्, पृथग्विम्बसिद्धौ बुद्धिस्थचैतन्यस्य प्रतिबिम्बतासिद्धिः, प्रतिबिम्वतासिद्धौ च तत्प्रतियोगितया बिम्बसिद्धिरिति । अस्मन्मते च ज्ञातृतया पुरुषसिद्ध्यनन्तरं तस्य ज्ञेयत्वान्यथानुपपत्त्या प्रतिबिम्बसिद्धौ नान्योन्याश्रयः । अथ वृत्तिसाक्षितया विम्बरूपश्चेतनः सिद्ध्यतीति चेत्; तर्हि साक्षिण एव प्रमातृत्वमप्युचितम् । उभयोर्ज्ञातृत्वकल्पने गौरवात् । वृत्तिज्ञानघटज्ञानयोः सामानाधिकरण्यानुभवाच्च ।

किञ्चैवं सति बुद्धेरेव भोक्तृत्वे "भोक्तृभावात्" ( सां० सू० १।१४३) इत्यागामिसूत्रेण भोक्तृतया पुरुषसाधनं विरुध्येत । अथ बुद्धिगतचिच्छायारूपेण सम्बन्धेन विम्बस्यैव ज्ञानम् न तु चितौ बुद्धिप्रतिबिम्बः कल्प्यत इत्येतावन्मात्रतया चेत् तस्याशयो वर्ण्येत, तदप्यसत्; सूर्यादेः स्वप्रतिबिम्बरूपसम्बन्धेन जलादितत्स्थवस्तुभासकत्वादर्शनात्, किरणैरेव तदुभयभासनात् । मरुमरीचिकादौ च स्वाध्यस्तजलादिभासकत्वं दृष्टमेवेति दृष्टानुसारेणास्माभिश्चितौ वुद्धिप्रतिबिम्ब एव सर्वार्थभानहेतुतया सम्बन्धः कल्पित इति ।

यच्चोक्तमन्यस्य ज्ञानेनान्यस्य प्रवृत्त्यनुपपत्तिरिति । तदपि न, "अकर्तुरपि फलोपभोगोऽन्नाद्यवत्" ( सां० सू० १।१०५ ) इत्यागामिसूत्रेण ज्ञानप्रवृत्त्योर्वैय्यधिकरण्यस्य दृष्टान्तेनोपपादयिष्यमाणत्वात् । बुद्धेः सङ्कल्पेन देहक्रियायामिवात्रापि संयोगविशेषादेरेव नियामकत्वादिति ॥ ९९ ॥

[ भा० सा० ] इदानीं मुख्यमधिष्ठातारमाह—अन्तरिति । संकल्पो न स्रष्टृत्वरूपमुख्यमधिष्ठातृत्वम् । अन्तःकरणस्यादिसर्गस्त्वबुद्धिपूर्वक इति न तत्र मुख्याधिष्ठातुरपेक्षा 'तदैक्षत' इत्याद्यपि कूलं पिपतिषतीतिवत् कार्योन्मुखत्वमादाय कथंचिन्नेयम् ।

न च चेतनस्य तन्न युक्तमत आह—लोहवदिति । तप्तलोहवच्चेतनोज्ज्वलितत्वेन चेतनायमानतया तत्त्वमुपपद्यत इत्यर्थः । अत्रोज्ज्वलितत्वं नित्योज्ज्वलचैतन्यसंयोगविशेषस्तज्जन्यचैतन्यप्रतिबिम्ववत्त्वं वा, न तु चैतन्यस्यान्तःकरणे संक्रमः, तस्यासङ्गित्वापत्तेः । अग्नेरपि प्रकाशो न लोहे संक्रामति, किन्त्वग्निसंयोगविशेष एव लोहस्योज्ज्वलनमिति बोध्यम् ।

अयं च संयोगविशेषोऽन्तःकरणस्यैव सत्त्वोद्रेकरूपात् परिणामाद्भवति । अयमेव च संयोगविशेषो बुद्ध्यात्मनोरन्योन्यप्रतिबिम्बने हेतुः । न च तस्य परिणामित्वापत्तिः; सामान्यगुणातिरिक्तधर्मोत्पत्तावेव परिणामव्यवहारात् । तत्र बुद्धौ चैतन्यप्रतिबिम्वश्चैतन्य-

दर्शनार्थं कल्प्यते, दर्पणे मुखप्रतिबिम्बवत्, अन्यथा कर्तृकर्मविरोधेन स्वस्य साक्षात्स्वदर्शनानुपपत्तेः । आरूढविषयैः सह बुद्धेर्भानार्थं च चैतन्ये बुद्धिप्रतिबिम्बस्वीकारः । अर्थाकाररूपस्यैवार्थग्रहणस्य बुद्धिस्थले दृष्टत्वेन तां विना संयोगविशेषमात्रेणार्थमात्रस्य पुरुषेऽप्यनौचित्यात्, पुरुषस्यार्थाकाररूपपरिणामसंभवात् प्रतिबिम्बतायामेव पर्यवसानात् । एतेन संयोगविशेषादेव प्रतिबिम्बकार्यार्थं ज्ञानादेः संभवात् प्रतिबिम्बकल्पना व्यर्थेत्यपास्तम् ।

बुद्धौ चित्प्रतिबिम्ब एव चिच्छायापत्तिरिति, चैतन्याध्यास इति, चिदावेश इति चोच्यते । न च बुद्धिगतचिच्छायारूपेण संबन्धेन बिम्बस्य ज्ञानसंभवान्न चितौ बुद्धिप्रतिबिम्बः कल्प्य इति वाच्यम्; तेन संबन्धेन बुद्धिस्थसर्वार्थभानासंभवात् । सूर्यादेः स्वप्रतिबिम्बरूपसंबन्धेन जलादितत्स्थसकलवस्तुभासकत्वादर्शनात्, बाह्यकिरणैरेव तदुभयभासनात्, मरुमरीचिकादौ स्वाध्यस्तजलादिभासकत्वस्य दर्शनादस्माभिश्चितौ बुद्धिप्रतिबिम्ब एव सर्वार्थभानहेतुतया संबन्धः क्लृप्तः ।

यत्तु बुद्धिगतचिच्छायया बुद्धेरेव सर्वार्थज्ञातृत्वमुचितम्, अन्यथा ज्ञानेनाप्यस्य प्रवृत्तेरनुचितत्वाच्च ज्ञातृत्वेन सिद्धप्रतिबिम्बान्यथानुपपत्त्या बिम्बभूतपुरुषस्यापि सिद्धिः, वृत्तिसाक्षितया तस्य सिद्धेश्चेति, तन्न; वृत्तिज्ञानघटज्ञानयोः सामानाधिकरण्यानुभवेनोभयोर्ज्ञातृत्वं कल्प्यते, गौरवेण च साक्षिण एव प्रमातृत्वौचित्यात् । इच्छाप्रवृत्त्योर्ज्ञानेन वैयधिकरण्यस्याकर्तुरपि "फलोपभोगोऽन्नाद्यवत्" ( सां० सू० १।१०५ ) इति सूत्रेण नूत्रकर्तवोपपादयिष्यमाणत्वान्न दोषः । बुद्धेः संकल्पेन देहक्रियाग्रामिवात्रापि संयोगविशेषस्यैव नियामकत्वेनातिप्रसङ्गाभावाच्चेति दिक् ॥ ९९ ॥

## प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥१००॥

[ वृ० ] अनुमानलक्षणमाह - प्रतिबन्ध० । अविनाभावदर्शिनो व्याप्यज्ञानादनु व्यापकज्ञानमनुमानम् । अनेनान्वयि, व्यतिरेकि, अन्वयव्यतिरेकि, पूर्ववत्, शेषवत्, सामान्यतोदृष्टं च संगृहीतम् । वादिनामपि लक्षणान्यत्रैवान्तर्हितानीति । तथा च—

"अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्" ॥ (द्र० प्र० पा० भा०)॥१००॥

[ वृ० सा० ] अनुमानं लक्षयति --प्रतिबन्धेति । प्रतिबन्धो व्याप्तिः, तद्युक्तं तन्निरूपकं च प्रतिबद्धम् । तथा च व्याप्यदर्शनाद् व्यापकज्ञानं वृत्तिरूपमनुमानं प्रमाणम् । अनुमितिस्तु पौरुषेयो बोधः ॥ १०० ॥

[ भा० ] प्रत्यक्षप्रमाणं लक्षयित्वाऽनुमानं लक्षयति—प्रतिबन्ध० । प्रतिबन्धो व्याप्तिः । व्याप्तिदर्शनाद्व्यापकज्ञानं वृत्तिरूपमनुमानं प्रमाणमित्यर्थः । अनुमितिस्तु पौरुषेयो बोध इति ॥ १०० ॥

[ भा० सा० ] अथानुमानं लक्षयति—प्रतीति । प्रतिबन्धो व्याप्तिः । व्याप्यज्ञानाद् व्यापकज्ञानवृत्तिरूपमनुमानप्रमाणमित्यर्थः । अनुमितिस्तु पौरुषेयो बोधः ॥ १०० ॥

**आप्तोपदेशः शब्दः ॥ १०१ ॥**

[ वृ० ] शब्दं लक्षयति—आप्तोप०। आप्तोपदेशः शब्दः, न त्वाप्तेन कृतः, अपौरुषेयत्वाद्वेदस्य। अपौरुषेयत्वं च पञ्चमाध्याये 'न पौरुषेयत्वम्' ( ५।४६ ) इति सूत्रे प्रतिपादयिष्यामः। शब्द इति कारणकथनम्, फलं तु शब्दजन्यं ज्ञानं शब्दः, कार्ये कारणोपचारात्। शाक्यादिवाक्यानां वेदविरोधेनायुक्तत्वादाभासत्वम् ॥ १०१ ॥

[ वृ० सा० ] शब्दप्रमाणं लक्षयति—आप्तेति। आप्तो योग्यः। शब्दस्तदुपदेशस्तज्जन्यं ज्ञानं शब्दाख्यं प्रमाणम्। प्रमा त्वत्रापि पौरुषेयो बोधः ॥ १०१ ॥

[ भा० ] शब्दप्रमाणं लक्षयति—आप्तोप०। आप्तिरत्र योग्यता। वेदस्यापौरुषेयतायाः पञ्चमाध्याये ( ५।४६–५० ) वक्ष्यमाणत्वात्। तथा च योग्यः शब्दस्तज्जन्यं ज्ञानं शब्दाख्यं प्रमाणमित्यर्थः। फलं च पौरुषेयः शाब्दो बोध इति ॥ १०१ ॥

[ भा० सा० ] शब्दं लक्षयति—आप्तेति। आप्तिरत्र योग्यता। एवं च योग्यशब्दजन्यं वृत्त्याख्यं ज्ञानं शब्दरूपप्रमाणमित्यर्थः। फलं च पौरुषेयो बोधः। यद्वा आप्तिर्यथार्थज्ञानम्। तज्जनकोपदेश इत्यादि प्राग्वत् ॥ १०१ ॥

**उभयसिद्धिः प्रमाणात्तदुपदेशः ॥ १०२ ॥**

[ वृ० ] प्रकृतिपुरुषविवेकार्थं शास्त्रारम्भः, न च तयोः सिद्धौ प्रमाणमस्तीत्यत आह—उभय०। वक्ष्यमाणात् प्रमाणादुभयोः प्रकृतिपुरुषयोः सिद्धिर्ज्ञानम्। तस्मात्तद्विवेकार्थमुपदेशो युक्त इति ॥ १०२ ॥

[ वृ० सा० ] प्रमाणप्रतिपादनस्य फलमाह—उभयेति। आत्मानात्मनोर्विवेकेन सिद्धिः प्रमाणादेव भवति, अतः प्रमाणोपदेशः कृतः ॥ १०२ ॥

[ भा० ] प्रमाणप्रतिपादनस्य स्वयमेव फलमाह—उभय०। उभयोरात्मानात्मनोर्विवेकेन सिद्धिः प्रमाणादेव भवति। अतस्तस्य प्रमाणस्योपदेशः कृत इत्यर्थः ॥ १०२ ॥

[ भा० सा० ] प्रमाणप्रतिपादनस्य फलमाह—उभयेति। उभयोरात्मानात्मनोर्विवेकेन सिद्धिः प्रमाणादेव भवति, अतस्तस्य प्रमाणस्योपदेशः कृत इत्यर्थः ॥ १०२ ॥

**सामान्यतोदृष्टादुभयसिद्धिः ॥ १०३ ॥**

[ वृ० ] किं तत् प्रमाणमित्यत्राह—सामान्यतो०। प्रकृतेरप्रत्यक्षत्वाद् यत् कार्यं तत् कारणगुणपूर्वकम्, कार्यं च त्रिगुणात्मकमिति सामान्येन प्रकृतिसिद्धिः। आत्मनोऽप्रत्यक्षत्वेऽपि यत् संहतं तत् परार्थमित्यसंहतः परः सिद्धः। वक्ष्यति च "संहतपरार्थत्वात्" ( सां. सू. १।१४० ) इति ॥ १०३ ॥

[ वृ० सा० ] येनानुमानविशेषेण तत्सिद्धिस्तदाह—सामान्यत इति। अनुमानं त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं च। तत्र प्रत्यक्षीकृतजातीयविषयकं पूर्ववत्, यथा धूमेन वह्न्यनुमानम्। वह्निजातीयो हि महानसादौ पूर्वं प्रत्यक्षीकृतः। व्यतिरेक्यनुमानं शेषवत्, शेषो पूर्वार्थोऽस्य विषयत्वेनास्तीति, अप्रसिद्धसाध्यकमिति यावत्। यथा पृथिवीत्वेनेतरभेदानुमानम्।

पृथिवीतरभेदो हि प्रागसिद्धः। तदुभयभिन्नमनुमानं सामान्यतोदृष्टम्। यत्र सामान्यतः प्रत्यक्षादिजातीयमादाय व्याप्तिग्रहात् पक्षधर्मताबलेन तद्विजातीयोऽप्रत्यक्षाद्यर्थः सिद्धयति, यथा रूपादिज्ञाने नानाक्रियात्वेन करणवत्त्वानुमानम्। अत्र हि पृथिवीत्वादिजातीयं कुठारादिकरणमादाय व्याप्तिं गृहीत्वा तद्विजातीयमतीन्द्रियं ज्ञानकरणमिन्द्रियं साध्यते। तत्र सामान्यतोदृष्टादनुमानात् प्रकृतिपुरुषयोः सिद्धिः। महत्तत्त्वं सुखदुःखमोहधर्मकद्रव्योपादानकम्, कार्यत्वे सति सुखदुःखमोहधर्मकत्वात्, सुवर्णादिजकुण्डलादिवदिति। प्रकृतौ प्रधानं परार्थम्, संहत्यकारित्वादिति, पुरुषे सामान्यतोदृष्टं बोध्यम् ॥ १०३ ॥

[ भा० ] तत्र येनानुमानविशेषेण प्रमाणेन मुख्यतोऽत्र प्रकृतिपुरुषौ विविच्य साधनीयौ, तद् वर्णयति · सामान्यतो०। अनुमानं तावत् त्रिविधं भवति –पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति। तत्र प्रत्यक्षीकृतजातीयविषयकं पूर्ववत्। यथा धूमेन वह्न्यनुमानम्। वह्निजातीयो हि महानसादौ पूर्वं प्रत्यक्षीकृतः। व्यतिरेकानुमानं शेषवत्। शेषोऽपूर्वोऽर्थोऽस्य विषयत्वेनास्तीति शेषवत्। अप्रसिद्धसाध्यकमिति यावत्। यथा—पृथिवीत्वेनेतरभेदानुमानम्। पृथिवीतरभेदो हि प्रागसिद्धः। सामान्यतोदृष्टं च तदुभयभिन्नमनुमानम्। यत्र सामान्यतः प्रत्यक्षादिजातीयमादाय व्याप्तिग्रहात् पक्षधर्मताबलेन तद्विजातीयोऽप्रत्यक्षाद्यर्थः सिद्धयति। यथा—रूपादिज्ञाने क्रियात्वेन करणवत्त्वानुमानम्। अत्र हि पृथिवीत्वादिजातीयं कुठारादिकरणमादाय व्याप्तिं गृहीत्वा तद्विजातीयमतीन्द्रियं ज्ञानकरणमिन्द्रियं साध्यत इति।

तत्र सामान्यतोदृष्टादनुमानाद् द्वयोः प्रकृतिपुरुषयोः सिद्धिरित्यर्थः। तत्र प्रकृतेः सामान्यतोदृष्टमनुमानम्। यथा–महत्तत्त्वं सुखदुःखमोहधर्मकद्रव्योपादानकम्, कार्यत्वे सति सुखदुःखमोहधर्मकत्वात्, सुवर्णादिजकुण्डलादिवदित्यादि। पुरुषे तु यद्यप्यनुमानापेक्षा नास्ति सर्वसम्मतत्वात्, तथापि प्रकृत्यादिविवेके सामान्यतोदृष्टमेवापेक्ष्यते। तद्यथा – प्रधानं परार्थम्, संहत्यकारित्वात्, गृहादिवदिति। अत्र हि प्रत्यक्षसिद्धं देहाद्यर्थकत्वं गृहादिषु गृहीत्वा तद्विजातीयः पुरुषः प्रधानादिपरत्वेनानुमीयते। देहादीनां च भोक्तृत्वमविवेकेन प्राग् गृहीतमित्युभयसिद्धिरिति ॥ १०३ ॥

[ भा० सा० ] तत्र यादृशमनुमानमुपयुक्तं तद्दर्शयति—सामान्यत इति। अनुमानं तावत् त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं च। तत्र प्रत्यक्षीकृतजातीयविषयकमाद्यम्, यथा धूमे वह्नेरनुमानम्। वह्निजातीयो हि महानसादौ पूर्वं प्रत्यक्षीकृतः। अपूर्वार्थविषयकं व्यतिरेकानुमानं द्वितीयम्। अत्र सिद्धिसाध्यकमिति यावत्। शेषोऽपूर्वार्थो विषयत्वेनास्यास्तीत्यर्थात्। यथा पृथिवीत्वेनेतरभेदानुमानम्। पृथिवीतरभेदो हि प्रागसिद्धः। सामान्यतोदृष्टं च तदुभयभिन्नमनुमानम्। यत्र सामान्यतः प्रत्यक्षादिजातीयमादाय व्याप्तिग्रहात् पक्षधर्मताबलेन तद्विजातीयोऽप्रत्यक्षाद्यर्थः फलति। यथा रूपादिज्ञाने क्रियात्वेन करणत्वानुमानम्। अत्र हि पृथिवीत्वादिजातीयं प्रत्यक्षं कुठारादि करणमादाय व्याप्तिं गृहीत्वा तद्विजातीयमतीन्द्रियं

1215

ज्ञानकरणमिन्द्रियं साध्यते । तत्र सामान्यतोदृष्टादनुमानात्तद्द्वयोः प्रकृतिपुरुषयोः सिद्धिरित्यर्थः ॥ १०३ ॥

## चिदवसानो भोगः ॥ १०४ ॥

[ वृ० ] प्रकृतेर्नित्यत्वात् प्रवृत्तिशीलत्वाच्च सर्वदा भोग इत्यनिर्मोक्षः स्यादित्यत आह—चिदवसानो० । चिद् आत्मा, तद्विवेकावसानो भोगः । यथाऽनादिरपि प्रागभावो नश्यति, तथा नित्यायाः प्रकृतेर्विवेकज्ञानपर्यन्तः प्रसवः । अथाभाव एव, न तु भाव इति । न; अभावत्वं न प्रयोजकम्, प्रध्वंसाभावेऽतथादर्शनात् । अथ यथादर्शनं व्यवस्था अत्राप्येवम् ॥ १०४ ॥

[ वृ०सा० ] प्रमाणफलभूतसिद्धेः पुरुषनिष्ठत्वे पुरुषस्य परिणामितापत्तिरित्याशङ्क्य तस्याः स्वरूपमाह–चिदिति । अत्र प्रमाणाख्यवृत्त्यारूढं पदार्थजातं वृत्त्या सह पुरुषे प्रतिबिम्बितं यद्भासते स भोगः प्रमाणफलम् । स चैवार्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्नचैतन्यस्वरूपे पर्यवसितस्तत्स्वरूप एव यतः, अतो नोक्तशङ्केति भावः ॥ १०४ ॥

[ भा० ] या प्रमाणस्य फलभूता प्रमाख्या सिद्धिरुक्ता, तया पुरुषस्य परिणामापत्तिरित्याशङ्कायां तस्याः स्वरूपमाह—चिदवसानो० । पुरुषस्वरूपे चैतन्ये पर्यवसानं यस्यैतादृशी भोगसिद्धिरित्यर्थः । बुद्धेर्भोगस्य व्यावर्तनाय चिदवसान इति । चितः परिणामित्वसधर्मत्वादिशङ्कानिरासायावसानपदम् । चितौ भोगस्य स्वरूपे पर्यवसितत्वान्न कौटस्थ्यादिहानिरित्याशयः । तथाहि—प्रमाणाख्यवृत्त्यारूढं प्रकृतिपुरुषादिकं प्रमेय वृत्त्या सह पुरुषे प्रतिबिम्बितं सद्भासते । अतोऽर्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्नं स्वरूपचैतन्यमेव भानं पुरुषस्य भोगः, प्रमाणस्य च फलमिति । ततश्च प्रतिबिम्बरूपेणार्थसम्बन्धे द्वारतया वृत्तीनां करणत्वमिति । तदुक्तं विष्णुपुराणे—

गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति ।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः ॥ ( १।१४।३५ ) इति ।

राज्ञो हि करणवर्गः स्वामिने भोग्यजातं समर्पयतीति दृष्टमिति । भोगशब्दार्थश्चाभ्यवहरणम्, आत्मसात्करणमिति यावत् । स च देहादिचेतनान्तेषु साधारणः । विशेषस्त्वयम्—अपरिणामित्वात् पुरुषस्य विषयभोगः प्रतिबिम्बादानमात्रम् । अन्येषां तु परिणामित्वात् पुष्ट्यादिरपीति । अयमेव च परिणामरूपः पारमार्थिको भोगः पुरुषे प्रतिषिध्यते "बुद्धेर्भोग इवात्मनि" ( शि० व० २।५९ ) इत्यादिभिरिति मन्तव्यम् । अस्मिन् सूत्रे पुरुषस्यापि फलव्याप्यता सिद्धा, चिदवसानताया एवोभयसिद्धित्ववचनादिति ॥ १०४ ॥

[ भा० सा० ] ननु प्रमाणफलभूता प्रमोक्ता, तया पुरुषस्य परिणामापत्तिरिति शङ्कानिरासाय तस्याः स्वरूपमाह—चिदिति । चिति पुरुषस्वरूपे चैतन्येऽवसानं पर्यवसानं यस्य, एतादृशो भोगः प्रमेत्यर्थः । बुद्धेर्भोगव्यावृत्तये चिदवसानमिति । चितेः परिणामित्वशङ्कानिरासायावसानपदम् । भोगस्य चित्स्वरूपे पर्यवसानान्न पुरुषस्य कौटस्थ्यादिहानिः । तथाहि

प्रमाणाख्यवृत्त्यारूढं प्रकृतिपुरुषादिकं प्रमेयं वृत्त्या सह पुरुषे प्रतिबिम्बितं सद् भासते। अर्थोऽपरक्तवृत्तिप्रतिबिम्बावच्छिन्नं स्वरूपचैतन्यमेव भानम्। अयमेव पुरुषस्य भोगः। प्रमाणस्य फलं प्रतिबिम्बरूपेणार्थसम्बन्धे वृत्तीनां द्वारतया करणत्वमित्याशयः।

अपरिणामित्वात् पुरुषस्य विषयभोगः प्रतिबिम्बादानमात्रम्। अन्येषां तु देहादीनां परिणामित्वात् पुष्ट्यादिरूपः परिणामरूपश्च भोगः पुरुषे प्रतिपिद्धयत इति बोध्यम्। तदुक्तम्—

गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः॥ ( वि० पु० १।१४।३५ ) इति।

इन्द्रियैरित्यस्य वृत्तिभिरित्यर्थः। एवं च पुरुषस्यापि फलव्याप्यता सिद्धा, पुरुषप्रतिबिम्बशिष्टाया वृत्तेश्चैतन्ये प्रतिबिम्बस्य भानपदार्थत्वादिति दिक्॥ १०४॥

अकर्तुरपि फलोपभोगोऽन्नाद्यवत्॥ १०५॥

[ वृ० ] यदि कर्तृ प्रधानम्, भोक्ता पुरुषः, अन्यकृतकर्मणोऽन्यो भोक्तेति स्यादित्यत आह अकर्तु०। यथा सूपकारस्यान्नादिकर्तृत्वम्, अकर्तुरीश्वरस्य फलोपभोक्तृत्वम्, तथात्रापि। अथ यथोद्देश्यत्वेन कर्तृत्वमीश्वरस्य, तथात्राप्यात्मोद्देश्यत्वेन प्रकृतेः प्रसव इति॥ १०५॥

[ वृ० सा० ] ननु बुद्धिकृतधर्माधर्मफलस्यात्मनि भोगः कथमत आह—अकर्तुरिति। यथान्यकृतस्यान्नादेरुपभोगो राज्ञो भवति, तथा बुद्धिकृतधर्माधर्मफलस्य सुखदुःखस्योपभोगः पुरुषस्य। अविवेकस्य स्वस्वामिभावस्य वा नियामकत्वान्नातिप्रसङ्गः॥ १०५॥

[ भा० ] ननु कर्तुरेव लोके क्रियाफलभोगो दृष्टः। यथा सञ्चरत एव सञ्चारोत्थदुःखभोग इति। तत् कथं बुद्धिकृतधर्मादिफलस्य सुखाद्यात्मिकाया अर्थोपरक्तबुद्धिवृत्तेर्भोगः पुरुषे घटेतेत्याशङ्कायामाह—अकर्तुरपि०। बुद्धिकर्मफलस्यापि वृत्तेरुपभोगस्तदकर्तुरपि पुरुषस्य युक्तः, अन्नाद्यवत्। यथाऽन्यकृतस्यान्नादेरुपभोगो राज्ञो भवति तद्वदित्यर्थः। अविवेकस्य स्वस्वामिभावस्य वा भोगनियामकत्वात् तु नातिप्रसङ्गः। सुखदुःखादेः कर्मफलत्वमभ्युपेत्य बुद्धिगतं कर्मफलं पुरुषो भुङ्क्त इत्युक्तम्॥ १०५॥

[ भा० सा० ] ननु कर्तुरेव लोके क्रियाफलभोगो दृष्टः, यथा संचरत एव संचारोत्थदुःखभोगस्तत्कथं बुद्धिकृतधर्मादिफलस्य सुखाद्यात्मिकाया अर्थोपरक्तबुद्धिवृत्तेर्भोगः पुरुषे घटेतेत्यत आह—अकर्तुरिति। बुद्धिकृतकर्मफलस्यापि सुखाद्यात्मकवृत्तेस्तदकर्तुः पुरुषस्यापि भोगो युक्तः, अन्नाद्यवत्। यथान्यकृतस्यान्नादेरुपभोगो राज्ञो भवति तद्वदित्यर्थः। अविवेककृतस्वस्वामिभावस्य योगनियामकत्वान्नातिप्रसङ्गः, सुखादिकं कर्मफलमित्यभ्युपेत्येदम्॥ १०५॥

अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः॥ १०६॥

[ वृ० ] व्यवहारसिद्धान्तमुक्त्वा स्वसिद्धान्तमाह—अविवेकाद्०। न पुरुषः कर्ता

न भोक्ता, किन्तु महत्तत्त्वप्रविबिम्बितत्वात् कर्तृत्वाभिमानः । 'अविवेकाद्वा' इति प्रकृतिपुरुषयोर्विवेकाग्रहात् । तत्सिद्धेः कर्तुः फलोपभोगाभिमानसिद्धेरिति ॥ १०६ ॥

[ वृ० सा० ] सुखदुःखादेः कर्मफलत्वं स्वीकृत्य बुद्धिगतं कर्मफलं पुरुषो भुङ्क्त इत्युक्तम्, इदानीं पुरुषगतभोगस्यैव कर्मफलत्वं स्वीकृत्य बुद्धिकर्मणा पुरुष एव फलमुत्पद्यत इति मुख्यसिद्धान्तमाह—अविवेकादिति । अथवा कर्तृबुद्धौ जायमानं सुखदुःखं फलमेव न भवति, सुखं भुञ्जीयेत्यादिकामनया भोगस्यैव फलत्वात् । अथवा अविवेकात् पुरुषस्य कर्तृत्वसिद्धिः, ततः कर्तुः पुरुषस्य य एव कर्ता स एव भोक्तेति कर्मफलावगमः । अतो भोक्तृनिष्ठमेव फलं भवति ।

तर्हि शास्त्रविहितं फलमनुष्ठातरीति शास्त्रव्यवहारः कथम् ? तत्राह—तत्सिद्धेरकर्तृनिष्ठाया भोगाख्यसिद्धेः कर्तृबुद्धाववविवेकात् कर्तुः फलावगमः । शास्त्रेष्विति शेषः । योऽहं करोमि स एवाहं भुञ्ज इति लौकिकानुभवात्, या तु सुखं मे भूयादित्यादिकामना सा पुत्रो मे भूयादितिवत् फलसाधनत्वेनाप्युपपद्यते । भोगस्तु नान्यस्य साधनमिति स एव फलमिति मुख्यसिद्धान्तः । भोगस्य पुरुषस्वरूपत्वेऽप्यवच्छिन्नरूपेण कार्य्यता बोध्या, सुखाद्यवच्छिन्नचितेरेव कार्यत्वात् । १०६ ॥

[ भा० ] इदानीं पुरुषगतभोगस्यैव कर्मफलत्वं स्वीकृत्य बुद्धिकर्मणा पुरुष एव फलमुत्पद्यत इति मुख्यसिद्धान्तमाह—अविवेकाद्वा० । अथवा कर्तरि फलमेव न भवति, सुखं भुञ्जीयेत्यादिकामनाभिर्भोगस्यैव फलत्वात् । अतो भोक्तृनिष्ठमेव फलं भवति । 'शास्त्रविहितं फलमनुष्ठातरि' इति शास्त्रेषु कर्तुः फलावगमस्तु तत्सिद्धेरकर्तृनिष्ठाया भोगाख्यसिद्धेः कर्तृबुद्धाववविवेकादित्यर्थः । योऽहं करोमि स एवाहं भुञ्ज इति हि लौकिकानुभव इति । या च सुखं मे भूयादित्यादिकामना, सा पुत्रो मे भूयादितिवत् फलसाधनत्वेनैवोपपद्यते । भोगस्तु नान्यस्य साधनम् । अतः स एव फलमिति मुख्यः सिद्धान्तः । भोगस्य पुरुषस्वरूपत्वेऽपि वैशेषिकाणां मते श्रोत्रवत् कार्यता बोध्या, सुखाद्यवच्छिन्नचितेरेव भोगत्वात् । अस्मिंश्च भोगस्य फलत्वपक्षे दुःखभोगाभाव एवापवर्गो बोध्यः । अथवा भोग्यतारूपस्वत्वसम्बन्धेन सुखदुःखाभावयोरेव फलत्वमस्तु, तेन सम्बन्धेन धनादेरिव सुखादेरपि पुरुषनिष्ठत्वादिति ॥ १०६ ॥

[ भा० सा० ] इदानीं पुरुषगतभोग एव कर्मफलमिति मुख्यसिद्धान्तमाह—अविवेकादिति । यद्वा कर्तुः फलमेव न, सुखं भुञ्जीयेत्यादिकामनया भोगस्यैव फलत्वात् । अतो भोक्तृनिष्ठमेव फलम् । शास्त्रविहितं फलमनुष्ठातरीति शास्त्रेषु कर्तुः फलावगमस्तु तत्सिद्धेरकर्तृनिष्ठाया भोगाख्यसिद्धेः । कर्त्र्यां बुद्धाववविवेकादित्यर्थः । योऽहं करोमि स एवाहं भुञ्जे, इति लोकानुभवात् । सुखं मे भूयादित्यादिकामना तु साधनविषयतयोपपन्ना, पुत्रो मे भूयादितिवद् । भोगस्तु नान्यसाधनमतः स एव फलमिति सिद्धान्तः । भोगस्य पुरुषस्वरूपेऽपि वैशेषिकाणां श्रोत्रवत्कार्यता, सुखाद्यवच्छिन्नचितेरेव भोगत्वात् । दुःखभोगाभाव एव चापवर्ग इति दिक् ॥ १०६ ॥

## नोभयं च तत्त्वाख्याने ॥ १०७ ॥

[ वृ० ] एतद्व्यतिरेकमाह—नोभयं० । विवेकात्तत्त्वज्ञाने नोभयम्—न कर्तृत्वं न भोक्तृत्वमिति ॥ १०७ ॥

[ वृ० सा० ] प्रमाणफलत्वेनोक्ताया विवेकसिद्धेः फलमाह—नोभयमिति । प्रमाणेन तत्त्वाख्याने प्रकृतिपुरुषयोः साक्षात्कारे सति सुखं दुःखं च न भवतीत्यर्थः । "विद्वान् हर्षशोकौ जहाति" ( क० उ० १।२।१२ ) इति श्रुतेश्च ॥ १०७ ॥

[ भा० ] तदेवं प्रमाणानि प्रमाणफलभूतां प्रमेयसिद्धिं च प्रतिपाद्य प्रमेयसिद्धेरपि फलमाह—नोभयं० । प्रमाणेन प्रकृतिपुरुषयोस्तत्त्वाख्याने तत्त्वसाक्षात्कारे सत्युभयमपि सुखदुःखे न भवतः ॥ "विद्वान् हर्षशोकौ जहाति" ( क० उ० १।२।१२ ) इति श्रुतेः, न्यायाच्चेत्यर्थः ॥ १०७ ॥

[ भा० सा० ] इदानीं प्रमेयसिद्धेः फलमाह—नोभयमिति । प्रमाणेन प्रकृतिपुरुषयोस्तत्त्वाख्याने तत्त्वसाक्षात्कारे उभयमपि सुखदुःखे न भवतः । "विद्वान् हर्षशोकौ जहाति" ( क० उ० १।२।१२ ) इति श्रुतेर्न्यायाच्चेत्यर्थः ॥ १०७ ॥

## विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥ १०८ ॥

[ वृ० ] प्रमाणमुक्त्वा प्रमेयव्यवस्थामाह—विषयो० । इन्द्रियस्योपादानात् सम्बन्धाद्विषयः, इन्द्रियस्य हानात् सम्बन्धाभावादविषयः । असम्बन्धश्चातिदूरादेरयोग्यत्वात् । अतिदूराद्वियति पक्षी नोपलभ्यते, अतिसामीप्याल्लोचनस्थाञ्जनम्, व्यवधानात् कुड्यान्तःस्थं वस्तु । मनोऽनवस्थानाच्छोकादिग्रस्तस्य पार्श्वस्थवस्त्वग्रहणम्, सौक्ष्म्यादणोः, अभिभवान्मर्दलध्वनिना शङ्खध्वनेरित्यादि ॥ १०८ ॥

[ वृ० सा० ] ननु प्रकृतिश्चेदस्ति कुतो न प्रत्यक्षा, तस्मान्नास्तीति, तत्राह—विषय इति । उपादानं सम्बन्धः, हानं तदभावः, इन्द्रियस्य सम्बन्धासम्बन्धाभ्यां प्रत्यक्षविषयः प्रत्यक्षाविषयश्च पदार्थो भवति । प्रत्यक्षाविषयत्वे हेत्वन्तरमतिदूरादेरिति । अतिदूरादितीश्वरकृष्णः संजग्राह—

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ ( सां० का० ७ )

इति । उदाहरणानि तु कौमुद्यां व्यक्तानि ॥ १०८ ॥

[ भा० ] संक्षेपतो विवेकेनानुमापितौ प्रकृतिपुरुषौ, तयोः प्रकृतिपुरुषयोरनुमानेऽवान्तरविशेषा इतः परमध्यायसमाप्ति यावद्विचार्याः । तत्र चादौ प्रकृत्याद्यनुमानेष्वनुपलम्भबाधकमपाकरोति—विषय० । इन्द्रियानुपलभ्यतामात्रतो घटाद्यभाववत् प्रत्यक्षेण चार्वाकैः प्रकृत्याद्यभावः साधयितुं न शक्यते, यतो विद्यमानोऽप्यर्थ इन्द्रियाणां कालभेदेन विषयोऽविषयश्च भवति, अतिदूरत्वादिदोषात् । इन्द्रियघातेन्द्रियग्रहाभ्यां

चेत्यर्थः। सामग्रीसमवधाने सत्यनुपलम्भस्यैवाभावप्रत्यक्षहेतुता। प्रकृत्याद्युपलम्भे तु वक्ष्यमाणप्रतिबन्धान्न सामग्रीसमवधानमिति भावः। अतिदूरादयश्च दोषा कारिकया परिगणिताः—

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।
सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च ॥ ( सां० का० ७ ) इति।

समानाभिहारः सजातीयसंवलनम्। यथा माहिषे गव्यमिश्रणान्माहिषत्वाग्रहणमिति ॥ १०८ ॥

[ भा० सा० ] इदानीं प्रकृत्याद्यनुमानेष्वनुपलम्भबाधकमपाकरोति—विषय इति। उपादानं सम्बन्धः, हानं तदभावः। इन्द्रियैरनुपलब्धिमात्राद् घटाद्यभाववत् प्रत्यक्षेण चार्वाकैः प्रकृत्याद्यभावः साधयितुं न शक्यते, यतो विद्यमानोऽप्यर्थ इन्द्रियाणां कालभेदेन विषयोऽविषयश्च। अतिदूरत्वादिदोषादिन्द्रियासंबद्धेऽर्थेऽविषयः, इन्द्रियसंबद्धे च विषय इत्यर्थः। सत्युपलब्धिकरणकलापे उपलम्भस्यैवाभावनियामकता, यथा खपुष्पादेः। प्रकृत्याद्युपलम्भे तु वक्ष्यमाणप्रतिबन्धान्न कारणकलापसत्तेति भावः।

अतिदूरात्। यथा वियति अतिदूरे पक्षी नोपलभ्यते। आदिना सामीप्यं यथा लोचनस्थेऽञ्जने। इन्द्रियघातोऽपि तथा, अन्धबधिरत्वादिरूपः। मनोऽनवस्थितेः, यथा कामाद्युपहितमनसः। सौक्ष्म्यात् परमाण्वादेः व्यवधानम्, यथा कुड्यादिव्यवहिते। अभिभवो यथा दिवा सौरकराभिभूतग्रहनक्षत्रमण्डले। सजातीयसंवलनं यथा माहिषे गव्यसंमिश्रणे। एवमनुद्भवोऽपि क्षीराद्यवस्थायां दध्यादिविषये ॥ १०८ ॥

## सौक्ष्म्यादनुपलब्धिः ॥ १०९ ॥

[ वृ० ] प्रकृतेः कथमनुपलब्धिरित्यत आह—सौक्ष्म्या०। दुरूहत्वं सौक्ष्म्यं न त्वणुत्वम्, प्रकृतेर्विभुत्वात् ॥ १०९ ॥

[ वृ० सा० ] प्रकृत्यनुपलब्धौ कारणमाह—सौक्ष्म्यादिति। तस्याः प्रकृतेरनुपलब्धिः अप्रत्यक्षता। अत्र सूक्ष्मत्वं प्रत्यक्षप्रमाप्रतिबन्धको धर्मविशेषः। योगजधर्मस्योत्तेजकत्वाच्च योगिनां सूक्ष्ममपि प्रत्यक्षं भवतीति ॥ १०९ ॥

[ भा० ] नन्वतिदूरत्वादिषु मध्ये प्रकृत्याद्युपलम्भे किं प्रतिबन्धकमिति तत्राह—सौक्ष्म्यात्०। तयोः पूर्वोक्तयोः प्रकृतिपुरुषयोरनुपलब्धिस्तु सौक्ष्म्यादित्यर्थः। सूक्ष्मत्वं च नाणुत्वम्, विश्वव्यापनात्। नापि दुरूहत्वादिकम्, दुर्वचत्वात्। किन्तु प्रत्यक्षप्रमाप्रतिबन्धिका जातिः। योगजधर्मस्य चोत्तेजकतया प्रकृतिपुरुषादीनां प्रत्यक्षप्रमा भवति। जातिसाङ्कर्यं च न दोषावहम्। अथवा निरवयवद्रव्यत्वमेवात्र सूक्ष्मत्वं योगजधर्मश्चोत्तेजक एवेति ॥ १०९ ॥

[ भा० सा० ] प्रकृत्यादिविषये यो दोषस्तमाह—सौक्ष्म्यादिति। तयोः प्रकृतिपुरुषयोः। सूक्ष्मत्वं चात्र निरवयवद्रव्यत्वम्। प्रकृतौ तत्त्वं च सत्त्वादीनां प्रत्येकं तत्त्वाद् बोध्यम्। योगधर्मश्चोत्तेजक इति बोध्यम् ॥ १०९ ॥

## कार्यदर्शनात्तदुपलब्धेः ॥ ११० ॥

[ वृ० ] कथं तर्हि प्रकृतेर्व्यवस्थेत्यत आह—कार्य० । यथा घटदर्शनात् परमाणुज्ञानम्, तथा त्रिगुणकार्यदर्शनात् प्रकृतिज्ञानम् ॥ ११० ॥

[ वृ० सा० ] नन्वभावादेवानुपलब्धिरास्ताम्, किं सौक्ष्म्यकल्पनेनात आह—कार्येति । महदादिरूपकार्यदर्शनेन तस्याः प्रामाणिकत्वात् ॥ ११० ॥

[ भा० ] नन्वभावादेवानुपलब्धिसम्भवे किमर्थं सौक्ष्म्यं कल्प्यते । अन्यथा च शशशृङ्गादेरपि सौक्ष्म्यादनुपलब्धिः किं न स्यादिति तत्राह—कार्यदर्शनात्० । कार्यान्यथानुपपत्त्या प्रकृत्यादिसिद्धौ सत्यां तेषां सूक्ष्मत्वं कल्प्यते । अनुमानात् पूर्वं च सूक्ष्मत्वादिसंशयेनाभावानिर्णयादनुमानमुपपद्यत इत्यर्थः ॥ ११० ॥

[ भा० सा० ] ननु शशशृङ्गादिवदभावेनानुपलब्धिरस्तु किं सौक्ष्म्येण ? अन्यथा तेषामतिसौक्ष्म्यादेव सा किं न स्यादत आह—कार्येति । कार्यान्यथानुपपत्त्या तत्सिद्धौ प्रत्यक्षाभावाय सौक्ष्म्यं कल्प्यते, तेनैव शशशृङ्गादिष्वित्यर्थः । अनुमानात् पूर्वं च सूक्ष्मत्वादिसंशयेनाभावानिर्णयादनुमानमप्युपपद्यत इति भावः ॥ ११० ॥

## वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ॥ १११ ॥

[ वृ० ] ब्रह्मकारणं जगदिति इति केचित् । परमाणुकारणमित्यन्ये, प्रधानकारणमिति वृद्धा इति संशयमाह—वादि० । तदसिद्धिः प्रधानासिद्धिः ॥ १११ ॥

[ वृ० सा० ] ननु ब्रह्म जगतः कारणमिति केचित्, परमाणव इत्यपरे, कथं प्रकृतेरेव प्रामाणिकत्वमिति शङ्कते—वादीति ॥ १११ ॥

[ भा० ] अत्र शङ्कते—वादि० । ननु कार्यं चेदुत्पत्तेः प्राक् सिद्धं स्यात्, तदा तदाधारतया नित्या प्रकृतिः सेत्स्यति, कार्यसाहित्येनैव कारणानुमानस्य वक्ष्यमाणत्वात् । वादिविप्रतिपत्तेस्तु सत्कार्यस्यैवासिद्धिरिति यदीत्यर्थः ॥ १११ ॥

[ भा० सा० ] शङ्कते—वादीति । यदि कार्यमुत्पत्तेः प्राक् सिद्धं स्यात्तदा तदाधारतया नित्या प्रकृतिः सिद्ध्येत्; कार्यसाहित्येन कारणानुमानस्य वक्ष्यमाणत्वात् । वादिविप्रतिपत्तेस्तु सत्कार्यासिद्ध्या तदसिद्धिः प्रधानासिद्धिरित्यर्थः ॥ १११ ॥

## तथाप्येकतरदृष्ट्यान्यतरसिद्धेर्नापलापः ॥ ११२ ॥

[ वृ० ] सिद्धान्तमाह—तथाप्येक० । यदि वादिविप्रतिपत्तिमात्रेण पक्षासिद्धत्वम्, विपक्षेऽपि विप्रतिपत्तिरस्तीति कथं तत्सिद्धिः ? यदि व्याप्यज्ञानाद् व्यापकज्ञानस्याविनाभावित्वात् पक्षसिद्धिः, ममाप्येवमिति न कार्यादनुमानापलापः ॥ ११२ ॥

[ वृ० सा० ] तस्याः प्रकृतेः कार्येण कारणानुमानेन न कश्चिद्दोष इत्याश्रयेण समाधत्ते—तथापीति । कार्यदृष्ट्या कारणसिद्धेर्न कारणापलाप इत्यर्थः ॥ ११२ ॥

[भा०] अभ्युपेत्य परिहरति—तथाप्येकतर० । मास्तु सत् कार्यम्, तथाप्येकतरस्य दृष्ट्याऽन्यतरस्य कारणस्य सिद्धेरपलापो नास्त्येवेति नित्यं कारणं सिद्धमेव । तत एव च

परिणामिनः सकाशादपरिणामितया पुरुषस्य विवेकेन मोक्षोपपत्तिरित्यर्थः। अनेनैवाभ्युपगमवादेन वैशेषिकाद्यास्तिकशास्त्रं प्रवर्तते। अतो न सत्कार्यवादिश्रुतिस्मृतिविरोधेऽपि तेषामंशान्तरेष्वप्रामाण्यमिति मन्तव्यम् ॥ ११२ ॥

[ भा० सा० ] अभ्युपेत्य परिहरति—तथापीति। मास्तु सत् कार्यम्, तथाप्येकतरस्य कार्यस्य दृष्टत्वान्यतरस्य कारणस्य सिद्धेरपलापो नास्त्येवेति नित्यं किंचित् कारणं सिद्धम्। तत एव च परिणामिनः सकाशादपरिणामितया पुरुषस्य विवेकेन मोक्षोपपत्तिरित्यर्थः। अयमेव वैशेषिकशास्त्रवादः॥ ११२॥

## त्रिविधविरोधापत्तेः ॥ ११३ ॥

[ वृ० ] कार्यात् कारणमस्तु, तच्च प्रकृतिरिति कथमित्यत आह—त्रिविध०। त्रिविधो गुणः—सत्त्वरजस्तमांसि। तद्विरोधस्तच्छून्यं जगद्भवेत्, न चैवं दृश्यत इति ॥ ११३ ॥

[ वृ० सा० ] इदानीं प्रकृतेरेव कारणत्वे युक्तिमाह—त्रिविध इति। जगति उपलभ्यमानस्य सुखदुःखमोहात्मकत्वस्य विरोधः स्यात्, ब्रह्मणः परमाणूनां वा कारणत्वे ॥ ११३ ॥

[ भा० ] परमार्थतः परिहारमाह—त्रिविध०। अथ सर्वं कार्यं त्रिविधं सर्ववादिसिद्धमतीतमनागतं वर्तमानमिति। तत्र यदि कार्यं सदा सन्नेष्यते, तदा त्रिविधत्वानुपपत्तिः। अतीतादिकाले घटाद्यभावेन घटादेरतीतादिधर्मकत्वानुपपत्तेः, सदसतोः सम्बन्धानुपपत्तेः। किञ्च प्रतियोगित्वस्य प्रतियोगिरूपत्वे तद्दोषतादवस्थ्यात्। अभावमात्रस्वरूपत्वे घटाद्यभावो पटाद्यभावः स्यादभावत्वाविशेषात्। अभावेष्वपि स्वरूपतो विशेषाङ्गीकारे चाभावत्वस्य परिभाषामात्रत्वप्रसङ्गात्।

अथ प्रतियोग्येवाभावविशेषक इति चेन्न; असतः प्रतियोगिनः प्रागभावादिषु विशेषकत्वासम्भवादिति। तस्मान्नित्यस्यैव कार्यस्यातीतानागतवर्तमानावस्थाभेदा एव वक्तव्याः। घटोऽतीतो घटो वर्तमानो घटो भविष्यन्निति प्रत्ययानां तुल्यरूपतौचित्यात्। न त्वेकस्य भावविषयत्वमन्ययोश्चाभावविषयत्वमिति। ते एवातीतानागतत्वे अवस्थे ध्वंसप्रागभावव्यवहारं जनयतस्तदतिरिक्ताभावद्वये प्रमाणाभावादिति दिक्। अधिकं तु पातञ्जले ( यो० वा० ४।१२ ) द्रष्टव्यम्।

एवमत्यन्ताभावान्योन्याभावावप्यधिकरणस्वरूपावेव। न चैवं प्रतियोगिसत्ताकालेऽप्यधिकरणस्वरूपानपायादत्यन्ताभावप्रत्ययप्रसङ्ग इति वाच्यम्; परैरपि प्रतियोगिमति देशे तदत्यन्ताभावाङ्गीकारात्। प्रतियोगिसम्बन्धस्यातीतानागतावस्थयोरेव सामयिकात्यन्ताभावत्वसंभवाच्च। तस्मान्नास्मत्सिद्धान्तेऽभावोऽतिरिक्तः। किञ्च, घटो ध्वस्तः, घटो भावी, घटोऽत्र नास्तीत्यादिप्रत्ययनियामकतया किञ्चिद्वस्त्वाकाङ्क्षायां तद्भावरूपमेव कल्प्यते, लाघवात्। अभावस्यादृष्टस्य कल्पने गौरवादिति मन्तव्यम् ॥ ११३ ॥

[ भा० सा० ] वास्तवं परिहारमाह—त्रिविधेति । अतीतानागतवर्तमानत्वैः कार्यमात्रस्य त्रैविध्यमिष्यमाणं न सिद्ध्येदित्यर्थः । अतीतादिकाले घटाद्यभावेन तस्य ध्वंसप्रतियोगित्वादिरूपातीतत्वादिधर्मकत्वविरोधः, सदसतोरसंबन्धात् । प्रतियोगित्वस्य प्रतियोगिस्वरूपत्वे तद्दोषतादवस्थ्यम् । अभावमात्रस्वरूपत्वे पटाद्यभावेऽपि घटाद्यभावः स्यात्, अभावत्वाविशेषात् । अभावेष्वपि स्वरूपतो विशेषाङ्गीकारेऽभावत्वं परिभाषामात्रं स्यात् । न च प्रतियोग्येवाभावं विशेषयति; प्रागभावादिषु असतो विशेषकत्वासंभवात् । तस्मान्नित्यस्यैव कार्यस्यातीतानागतवर्तमानत्वाद्यवस्थाभेदा एव वक्तव्याः । घटोऽतीतो घटो वर्तमानो घटो भविष्यति—इति प्रत्ययानां तुल्यरूपतौचित्यात् । न त्वेकस्य भावविषयकत्वम्, अन्ययोश्चाभावविषयकत्वमित्यस्यौचित्यम्, अतीतानागतावस्थे एव ध्वंसप्रागभावव्यवहारप्रयोजिके, एवमत्यन्ताभावान्योन्याभावावपि प्रतियोग्यविशिष्टाधिकरणस्वरूपावेव ।

यद्वा घटादिसंबन्धस्यातीतत्वानागतावस्थे एव सामयिकात्यन्ताभाव इति दिक् । यद्वानेन सूत्रेण ब्रह्मपरमाण्वादीनामुपादानत्वं निराक्रियते, सुखदुःखमोहात्मकत्वविरोधापत्तेरित्यर्थः ॥ ११३ ॥

## नासदुत्पादो नृश्रृङ्गवत् ॥ ११४ ॥

[ वृ० ] कार्यस्य किं सत उत्पत्तिरसतो वेति संशयं निरस्यति--नासदु० ।

असदेकस्वभावं नृश्रृङ्गादि, सदेकस्वभावमाकाशादि, सदसत्स्वभावा घटादय इति कथं नृश्रृङ्गतुल्यत्वम्? तन्न; घटादीनां प्रागभावसमयेऽसत्त्वम्, नृश्रृङ्गादीनां तु सर्वदाऽसत्त्वमिति द्वयोः को विशेषः? घटादीनां जन्मदर्शनं विशेष इति चेत्; एतदेव चिन्त्यते, एतदेवोत्तरमित्यहो नैपुण्यम्! ॥ ११४ ॥

[ वृ० सा० ] इदानीं कार्यस्योत्पत्तेः प्रागपि सत्त्वं व्यवस्थापयति—नासदिति । नृश्रृङ्गतुल्यस्यासत उत्पादो न संभवति ॥ ११४ ॥

[ भा० ] इतश्च सत्कार्यसिद्धिरित्याह—नासदु० । नरश्रृङ्गतुल्यस्यासत उत्पादोऽपि न संभवतीत्यर्थः ॥ ११४ ॥

[ भा० सा० ] इतश्च सत्कार्यसिद्धिरित्याह—नेति । नृश्रृङ्गतुल्यस्यासत उत्पादोऽपि न संभवतीत्यर्थः ॥ ११४ ॥

## उपादाननियमात् ॥ ११५ ॥

[ वृ० ] सत्कार्ये न्यायमाह—उपादान० । कारणसंबन्धात् कार्यस्य । संबन्धश्च विद्यमानयोरेव, अन्यथा सर्वदा सर्वत्र सर्वकार्योत्पत्तिः स्यात् ॥ ११५ ॥

[ वृ० सा० ] अत्र हेतुमाह—उपादानेति । उपादाने मृदादौ कार्यस्य घटादेर्नियमात्, उत्पत्तेः प्राक्कारणे कार्यासत्तायां न कोऽपि विशेषोऽस्ति येन मृद् घटमेवासतं जनयेत्, न पटादि, तन्तवश्च पटमेवासतं जनयेयुः, न पुनर्घटादि । कार्यसत्तायास्तु विशेषाङ्गीकारे भावत्वापत्तिः ॥ ११५ ॥

[ भा० ] अत्र हेतुमाह—उपादान० । मृद्येव घट उत्पद्यते, तन्तुष्वेव पट इत्येवं कार्याणामुपादानकारणं प्रति नियमोऽस्ति । स न संभवति, उत्पत्तेः प्राक कारणे कार्यसत्तायां हि न कोऽपि विशेषोऽस्ति येन कश्चिदेवासन्तं जनयेन्नेतरमिति । विशेषाङ्गीकारे च भावत्वापत्तेर्गतमसत्तया । स एव च विशेषोऽस्माभिः कार्यस्यानागतावस्थेत्युच्यत इति ।

एतेन यद्वैशेषिकाः प्रागभावमेव कार्योत्पत्तिनियामकं कल्पयन्ति, तदप्यपास्तम् । अभावकल्पनापेक्षया भावकल्पने लाघवात् । भावानां दृष्टत्वादन्यानपेक्षत्वाच्च । किञ्चाभावेषु स्वतो विशेषे भावत्वापत्तिः । प्रतियोगिरूपविशेषश्च प्रतियोग्यसत्ताकाले नास्ति । अतोऽभावानामविशिष्टतया न कार्योत्पत्तौ नियामकत्वं युक्तमिति ॥ ११५ ॥

[ भा० सा० ] तत्र हेतुमाह—उपादानेति । मृद्येव घट उत्पद्यते, तन्तुष्वेव पट इत्येवं कार्याणामुपादानकारणं प्रति नियमो दृश्यते, स न संभवति । कारणे कार्यसत्तायां हि न कोऽपि विशेषोऽस्ति येन किंचिदेवासद् जनयेन्न परमिति । विशेषाङ्गीकारे च स एव विशेषोऽस्माभिः कार्यस्यानागतावस्थेत्युच्यते । एतेन प्रागभावस्यैव कार्योत्पत्तिनियामकत्वेन कल्पनाऽपास्ता, अभावकल्पनापेक्षया भावकल्पने लाघवात् ।

न च मृदि घटस्यैवानागतावस्थेत्यत्र किं मानम् ? मृदि घटस्यैव प्रागभाव इत्यत्र मृद्येव कारणतेत्यत्र च तवापि नियामकाभावात्, अन्वयव्यतिरेकाविति चेत्; तुल्यं ममापि ॥ ११५ ॥

## सर्वत्र सर्वदा सर्वासम्भवात् ॥ ११६ ॥

[ वृ० ] एतदेवाह—सर्वत्र० । व्यक्तम् ॥ ११६ ॥

[ वृ० सा० ] उपादाननियमे प्रमाणमाह—सर्वत्रेति । सर्वासंभवात् सर्वानुत्पत्तेः, लोके दर्शनाद्विति शेषः ॥ ११६ ॥

[ भा० ] उपादाननियमे प्रमाणमाह—सर्वत्र० । सुगमम् । उपादाननियमे च सर्वत्र सर्वदा सर्वं संभवेदित्याशयः ॥ ११६ ॥

[ भा० सा० ] उपादाननियमे प्रमाणमाह—सर्वत्रेति । उपादानानियमे च सर्वत्र सर्वदा सर्वं संभवेदित्याशयः ॥ ११६ ॥

## शक्तस्य शक्यकरणात् ॥ ११७ ॥

[ वृ० ] ननूपादानकारणत्वाविशेषेऽपि यस्य यत् शक्यं तदेव तत् करोति । नहि तन्तुर्घटस्य कारणं भवति, कुतः सर्वसम्भवः, इत्यत आह—शक्तस्य० ।

शक्तस्य शक्तिः शक्यविषया वा ? न वा ? शक्यविषया चेत्, शक्यस्य सत्त्वं वाच्यम् । नेति पक्षे तन्तुतो घटोत्पत्तिस्तदवस्था ॥ ११७ ॥

[ वृ० सा० ] इतश्च नासदुत्पाद इत्याह—शक्तस्येति । कार्यशक्तिमत्त्वमेवाद्युपादान-कारणत्वम्, शक्तिश्च कार्यस्यानागतावस्थैवेति । शक्तस्य कारणस्य शक्यकार्यकरणादपि नासत उत्पाद इत्यर्थः ॥ ११७ ॥

[ भा० ] इतश्च नासदुत्पाद इत्याह—शक्तस्य०। कार्यशक्तिमत्त्वमेवोपादानकारणत्वम्, अन्यस्य दुर्वचत्वात् लाघवाच्च। सा शक्तिः कार्यस्यानागतावस्थैवेत्यतः शक्तस्य शक्यकार्यकरणान्नासत उत्पाद इत्यर्थः ॥ ११७ ॥

[ भा० सा० ] इतोऽपि नासदुत्पाद इत्याह—शक्तस्येति। कार्यशक्तिमत्त्वमेवोपादानत्वम्, अन्यस्य दुर्वचत्वात्। शक्तिश्च कार्यस्यानागतावस्थैव। अर्थान्तरत्वे तस्याः कार्यासंबद्धत्वेऽव्यवस्था, संबद्धत्वे नासतो संबन्ध इति शक्तस्य शक्यकार्यकरणात् नासत उत्पाद इत्यर्थः ॥ ११७ ॥

## कारणभावाच्च ॥ ११८ ॥

[ वृ० ] अपरं न्यायमाह—कारण०। कार्यकारणयोरेकत्वात्। घटाकारेण परिणतोऽपि मृद्रूपतां न जहाति। न च सदसतोरेकत्वम्, यदि द्वयोरेकत्वं मृत्पिण्डेनापि जलाहरणं कर्तव्यमिति। भवेदेवम्, यद्यत्यन्ताभेदः स्यात्; भेदाभेदपक्षे तु न कश्चिद् दोष इति। तथा च—

"असत्त्वान्नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥"
"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥" (गी० २।१६) ॥११८॥

[वृ० सा०] किंच—कारणेति। कार्यस्य कारणात्मकत्वादित्यर्थः। नहि कार्यकारणयोरभेदे कारणं सत् कार्यं त्वसदिति संभवति। कार्यस्य कारणभेदसाधकान्युक्तानि तत्त्वकौमुद्याम्—

"न पटस्तन्तुभ्यो भिद्यते, तद्धर्मत्वात्, इह यद्यतो भिद्यते न तत्तस्य धर्मः, यथा गौरश्वस्य। संयोगाप्राप्त्यभावश्चार्थान्तरत्वाभावसाधकः, अर्थान्तरत्वे संयोगो दृष्टो यथा कुण्डबदरयोः। अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः। न चेह संयोगाप्राप्ती, तस्मान्नार्थान्तरत्वं गुरुत्वान्तरकार्यग्रहणं च कार्यकारणयोरभेदसाधकम्। इह हि यद्यस्माद्भिन्नं तस्मात्तस्य गुरुत्वान्तरकार्यं दृश्यते। पलिकस्य स्वस्तिकस्य गुरुत्वकार्यो योऽवनतिविशेषस्ततो द्विपलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः स्पष्ट एव। तस्मादभिन्नस्तन्तुभ्यः पट इति। स्वात्मनि क्रियाविरोधबुद्धिव्यपदेशार्थक्रियाभेदाच्च नैकान्तिकं भेदं साधयितुमर्हति, एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात्। तथाहि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति, न तु कूर्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा। एवमेकस्या मृदः सुवर्णस्य वा ते ते घटमुकुटादयो निःसरन्त आविर्भवन्त्युत्पद्यन्ते इत्युच्यते, निविशमानास्तिरोभवन्ति विनश्यन्तीत्युच्यते। न पुनरसतामुत्पादः सतां वा नाशः। यथा च कूर्मः स्वावयवेभ्यः संकोचविकासिभ्यो न भिन्नः, एवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः। इह तन्तुषु पट इत्यादि बुद्धिव्यपदेशभेदा अपि इह वने तिलका इतिवदुपपन्नाः। न चार्थक्रियाभेदोऽपि भेदमापादयति, एकस्यापि नानार्थक्रियासंदर्शनात्। यथैव वह्निर्दाहकः पाचकश्चेति। नाप्यर्थक्रियाव्यवस्था

वस्तुभेदहेतुः, तेषामेव व्यस्तसमस्तानामर्थक्रियाव्यवस्थादर्शनात् । यथा प्रत्येकं विष्टयो दर्शन-लक्षणामर्थक्रियां कुर्वन्ति न तु शिबिकावहनम्, मिलितास्तु शिबिकामुद्वहन्ति, एवं तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि आविर्भूतपटभावाः प्रावरिष्यन्तीति" ॥ ११८ ॥

[ भा० ] इतश्च—कारण० । उत्पत्तेः प्रागपि कार्यस्य कारणाभेदः श्रूयते, तस्माच्च सत्कार्यसिद्धया नासदुत्पाद इत्यर्थः । कार्यस्यासत्त्वे हि सदसतोरभेदानुपपत्तिरिति । उत्पत्तेः प्राक् कार्याणां कारणाभेदे च श्रुतिः—"तद्धीदं तर्ह्यव्याकृतमासीत्" ( बृ० उ० १।४।७ ), "सदेव सोम्येदमग्र आसीत्" ( छा० उ० ६।२।१ ), "आत्मैवेदमग्र आसीत्" ( मै० आ० ५।२ ), "आप एवेदमग्र आसुः" ( बृ० उ० ५।५।१ ) इत्याद्याः ॥ ११८ ॥

[ भा० सा० ] हेत्वन्तरमाह—कारणेति । "तद्धीदं तर्ह्यव्याकृतमासीत्" ( बृ० उ० १।४।७ ), "सदेव सोम्येदमग्र आसीत्" ( छा० उ० ६।२।१ ) इति श्रुतेरुत्पत्तेः प्रागपि कार्यकारणभेदश्रवणान्नासदुत्पादः । असत्त्वे हि सदसतोरभेदानुपपत्तिरित्यर्थः । किं च तन्तुपटयोर्भेदे धर्मधर्मिभावानुपपत्तिः, अश्वपुरुषवत् । अत्यन्ताभेदेऽपि न स घटवत्, संयोगाच्च । दृष्टो ह्यत्यन्तभेदे कुण्डलवदरयोः संयोगः । एवं विभागाभावोऽपि तत्साधकः ।

किं चात्यन्तभेदे गुरुत्वान्तरं दृष्टम्, यथा पलिकस्वस्तिकाद् द्विपलिकस्वस्तिकस्य । तन्तुषु पट इति वने तिलका इतिवत् । आरोपिताभेदमादाय यथा विष्टयः प्रत्येकं शिबिका-वहनमकुर्वन्तोऽपि मिलिताः कुर्वन्ति, एवं तन्तवः प्रत्येकं प्रावरणमकुर्वन्तोऽप्याविर्भूतपटभावाः करिष्यन्तीति नैषाप्यनुपपत्तिः ।

स्वात्मनि क्रियाविरोधोऽपि न, कूर्माङ्गवत् । यथा कूर्माङ्गानि तच्छरीरे निविश-मानानि तिरोभवन्ति, निःसरन्ति चाविर्भवन्ति, एवं स्वर्णात् कटकमुकुटादयो निःसरन्त उत्पद्यन्त इत्युच्यते । निविशमानास्तिरोभवन्तो विनश्यन्तीत्युच्यत इति न दोषः ॥ ११८ ॥

## न भावे भावयोगश्चेत् ॥ ११९ ॥

[ वृ० ] शङ्कते—भावे० । यदि भावे कारणे भावस्य कार्यस्य विद्यमानस्य योग उत्पत्तिः, तदा 'भविष्यति घटः, उत्पद्यते, नष्टः' इति व्यपदेशो न स्यात् ॥११९॥

[ वृ० सा० ] शङ्कते—नेति । कार्यस्योत्पत्तेः प्रागपि भावे तद्रूपे सति उत्पत्तियोगो न चेत्, असत एवोत्पत्तिव्यवहारात् ॥ ११९ ॥

[ भा० ] शङ्कते—न भावे० । नन्वेवं कार्यस्य नित्यत्वे सति भावरूपे कार्ये भावयोग उत्पत्तियोगो न सम्भवति । असतः सत्त्व एवोत्पत्तिव्यवहारादिति चेदि-त्यर्थः ॥ ११९ ॥

[ भा० सा० ] शङ्कते—नेति । भावे कार्यस्य सत्त्वे तस्य भावयोगो न स्यात् । असतः सत्त्व एवोत्पत्तिव्यवहारादित्यर्थः ॥ ११९ ॥

## न अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥ १२० ॥

[ वृ० ] सिद्धान्तमाह—न अभि० । यथा शुक्लपटस्य मलिनस्य क्षालनादिना शुक्लत्वमभिव्यज्यते, तथा कुलालव्यापाराद् घटोऽभिव्यज्यते, मुद्गराभिघातात्तिरोभूयते च । दृष्टं च, अभिव्यक्तिः पीडनेन तिलेषु तैलस्य, दोहनेन गवि पयसः, अवघातेन धान्ये तण्डुलस्येत्यादि । तस्मादभिव्यक्तिनिबन्धनौ शब्दप्रयोगार्थक्रियाभेदाविति ॥ १२० ॥

[ वृ० सा० ] समाधत्ते—नाभिव्यक्तीति । कार्योत्पत्तेर्व्यवहाराव्यवहारौ कार्याभिव्यक्तिनिमित्तकौ, अभिव्यक्तित उत्पत्तिव्यवहारोऽभिव्यक्त्यभावाच्चोत्पत्तिव्यवहाराभावो न त्वसतः सत्तयाऽभिव्यक्तिश्च न ज्ञानम्, किन्तु वर्तमानावस्था । कारणव्यापारोऽपि कार्यस्य वर्तमानलक्षणं परिणाममेव जनयति । दृष्टं च सतः कार्यस्य कारणादभिव्यक्तिमात्रम् । लोकेऽपि यथा शिलामध्यस्थप्रतिमाया लौकिकव्यापारेणाभिव्यक्तिमात्रं तिलस्थतैलस्य निष्पीडनेन धान्यस्य तण्डुलादेरवघातेन चेति ॥ १२० ॥

[भा०] परिहरति—नाभिव्यक्ति० । कार्योत्पत्तेर्व्यवहाराव्यवहारौ कार्याभिव्यक्तिनिमित्तकौ । अभिव्यक्तिगत उत्पत्तिव्यवहारोऽभिव्यक्त्यभावाच्चोत्पत्तिव्यवहाराभावः, न त्वसतः सत्तयेत्यर्थः ।

अभिव्यक्तिश्च न ज्ञानम्, किन्तु वर्तमानावस्था । कारणव्यापारोऽपि कार्यस्य वर्तमानलक्षणपरिणाममेव जनयति । सतश्च कार्यस्य कारणव्यापारादभिव्यक्तिमात्रं लोकेऽपि दृष्टम् । यथा शिलामध्यस्थप्रतिमाया लैङ्गिकव्यापारेणाभिव्यक्तिमात्रं तिलस्थतैलस्य च निष्पीडनेन, धान्यस्थतण्डुलस्य चावघातेनेति । तदुक्तं वासिष्ठे—

सुषुप्तावस्थया चक्रपद्मरेखाः शिलोदरे ।
यथा स्थिता चितेरन्तस्तथेयं जगदावली ॥ इति ।

प्रकृतिद्वारेणेत्यर्थः ॥ १२० ॥

[ भा० सा० ] परिहरति—नाभिव्यक्तीति । तन्न; अभिव्यक्तितस्तद्व्यवहाराभाव इत्यर्थः । अभिव्यक्तिश्च न ज्ञानम्, किंतु वर्तमानावस्था । कारणव्यापारोऽपि कार्यस्य वर्तमानलक्षणपरिणाममेव जनयति । तिलस्थतैलस्य निष्पीडनेनेवेत्यर्थः ।

सुषुप्तावस्थया चक्रपद्मरेखाः शिलोदरे ।
यथा स्थिता चितेरन्तस्तथेयं जगदावली ॥

इति वासिष्ठोक्तेः । चितेरन्तः प्रकृतिद्वारेणेत्यर्थः ॥ १२० ॥

## नाशः कारणलयः ॥ १२१ ॥

[ वृ० ] अस्त्वभिव्यक्तिनिबन्धनोत्पत्तिः, किं निबन्धनो नाशः ? इत्यत आह—नाशः० । मुद्गराभिघाताद् घटस्य कारणे लयः, तन्निबन्धनो नाश इति शब्दार्थक्रिया-

भेदौ। यदि लयः, तर्हि पुनरुद्भवो दृश्येत, न च दृश्यत इति चेत्, मूढैर्न दृश्यते, विवेकिभिर्दृश्यत एव। तथाहि—तन्तौ नष्टे मृद्रूपेण परिणामः, मृदश्च कार्पासवृक्षरूपेण परिणामः, तस्य पुनः पुष्पफलतन्तुरूपेण परिणामः। एवं सर्वे भावाः॥ १२१॥

[ वृ० सा० ] नाशस्वरूपमाह—नाश इति। 'लीङ् श्लेषणे' इति धात्वनुसाराल्लयः सूक्ष्मतया कारणेष्वविभागः। स एवातीतावस्थाख्यो नाश इत्युच्यते। अनागताख्यस्तु लयः प्रागभाव इत्युच्यते, इति शेषः। लीनकार्यव्यक्तेस्तु पुनरभिव्यक्तिर्नास्ति, प्रत्यभिज्ञाद्यापत्त्या पातञ्जले निराकृतत्वात्। परेषामिवास्माकमप्यनागतावस्थाया अभिव्यक्तिहेतुत्वाच्चेति केचित्। अपरे तु यदि लयो नाशः पुनरुद्भवोऽपि दृश्येत, न च दृश्यते इत्याशङ्क्य मूढैर्न दृश्यते विवेचकैर्दृश्यत एव। तथाहि तन्तौ नष्टे मृद्रूपेण परिणामो मृदश्च कार्पासवृक्षरूपेण परिणामस्तस्य पुष्पफलतन्तुरूपेण परिणामः, एवं सर्वे भावा इत्याहुः।

नन्वतीतमप्यस्तीत्यत्र किं प्रमाणम्? न ह्यनागतसत्तायां "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत" (बृ० उ० १।४।७) इति श्रुत्यादय इवातीतसत्तायां किंचित्प्रमाणमुपलभ्यते स्पष्टमिति चेत्, अत्राहुः केचिदभियुक्ताः; योगिप्रत्यक्षान्यथानुपपत्त्योरनागतातीतयोरुभयोः सत्तासिद्धेः, प्रत्यक्षसामान्ये विषयस्य हेतुत्वात्। अन्यथा वर्तमानस्यापि प्रत्यक्षेणासिद्ध्यापत्तेः। तस्माद्धियामौत्सर्गिकप्रामाण्येनासति बाधके योगिप्रत्यक्षेणातीतमपि सिद्ध्यति, योगिनामतीतानागतप्रत्यक्षेऽत्र श्रुतिस्मृतीतिहासादिकं प्रमाणमिति॥ १२१॥

[भा०] ननु भवतूत्पत्तेः प्राक् सतो यथाकथञ्चिदुत्पत्तिः। नाशस्त्वनादिभावस्य कथं स्यादित्याकाङ्क्षायामाह—नाशः०।

"लीङ् श्लेषणे" (धा०पा० ९।३२) इत्यनुशासनाल्लयः सूक्ष्मतया कारणेष्वविभागः। स एवातीताख्यो नाश इत्युच्यत इत्यर्थः। अनागताख्यस्तु लयः प्रागभाव इत्युच्यत इति शेषः। लीनकार्यव्यक्तेस्तु पुनरभिव्यक्तिर्नास्ति। प्रत्यभिज्ञाद्यापत्त्या पातञ्जले निराकृतत्वात्। परेषामिवास्माकमप्यनागतावस्थायाः प्रागभावाख्याया अभिव्यक्तिहेतुत्वाच्चेति। नन्वतीतमप्यस्तीत्यत्र किं प्रमाणम्। न ह्यनागतसत्तायामिव श्रुत्यादयोऽतीतसत्तायामपि स्फुटमुपलभ्यन्त इति। मैवम्; योगिप्रत्यक्षत्वान्यथानुपपत्त्याऽनागतातीतयोरुभयोरेव सत्त्वसिद्धेः। प्रत्यक्षसामान्ये विषयस्य हेतुत्वात्। अन्यथा वर्तमानस्यापि प्रत्यक्षेणासिद्ध्यापत्तेः। तस्माद् धियामौत्सर्गिकप्रामाण्येनासति बाधके योगिप्रत्यक्षेणातीतमप्यस्तीति सिद्ध्यति। योगिनामतीतानागतप्रत्यक्षे च श्रुतिस्मृतीतिहासादिकं प्रमाणं योगवार्त्तिके प्रपञ्चितमिति दिक्। तदेवमभिव्यक्तिलयाभ्यां कार्याणामुत्पत्तिनाशव्यवहारावुक्तौ।

नन्वभिव्यक्तिरपि पूर्वं सती वाऽसती वा? आद्ये कारणव्यापारात् प्रागपि कार्यस्याभिव्यक्त्या स्वकार्यजनकत्वापत्तिः, कारणव्यापारश्च विफलः। अन्त्ये चाभिव्यक्तावेव सत्कार्यसिद्धान्तक्षतिः, असत्या एवाभिव्यक्तेरभिव्यक्त्यङ्गीकारादिति।

अत्रोच्यते—कारणव्यापारात् प्राक् सर्वकार्याणां सदा सत्त्वाभ्युपगमेनोक्तविकल्पानवकाशाद् घटवत् तदभिव्यक्तेरपि वर्तमानावस्थया प्रागसत्त्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारापेक्षणात् । अनागतावस्थया च सत्कार्यसिद्धान्तस्याक्षतेः । नन्वेकदा सदसत्त्वयोर्विरोध इति चेत्; प्रकारभेदस्योक्तत्वात् । नन्वेवमपि प्रागभावानङ्गीकारेण प्रागसत्त्वमेव कार्याणां दुर्वचमिति । मैवम्; अवस्थानामेव परस्पराभावरूपत्वादिति ॥ १२१ ॥

[ भा० सा० ] नन्वेवमनादिभावस्य नाशो न स्यादत आह—नाश इति । लयः सूक्ष्मतया कारणेष्वविभागः । 'लीङ् श्लेषणे' इति धात्वनुसारात् । स एवातीतावस्थाख्यो नाश इत्युच्यते, इत्यर्थः । एवमनागतावस्थाख्यो लयः प्रागभाव उच्यत इति बोध्यम् । तस्य चाभिव्यक्तिहेतुत्वान्न लीनव्यक्तेः पुनरुद्भवः । अनागतावस्थानाशश्च वर्तमानाद्यवस्थाप्राप्तिरेव । अतीताद्यवस्थासत्त्वे प्रमाणं तु श्रुत्यादिसम्मतयोगिप्रत्यक्षमेव । प्रत्यक्षसामान्ये विषयस्य हेतुत्वात् । अन्यथा वर्तमानस्यापि प्रत्यक्षेणासिद्ध्यापत्तेः । तस्माद् धियामौत्सर्गिकप्रामाण्येनासति बाधके योगिप्रत्यक्षेणातीतमप्यस्तीति सिद्ध्यति ।

नन्वभिव्यक्तिरपि पूर्वं सती वाऽसती वा ? आद्ये कारणव्यापारवैफल्यम् । कारणव्यापारात्प्रागपि कार्यस्याभिव्यक्त्या स्वकार्यजनकत्वापत्तिश्च । अन्त्येऽभिव्यक्तावेव सत्कार्यवादक्षतिरिति चेन्न; अभिव्यक्तेरपि वर्तमानावस्थायाः प्रागसत्त्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारापेक्षणात् । सर्वकार्याणां च कारणव्यापारात्प्राक् प्रकारभेदेन सदसत्त्वम् । अवस्थानामेव परस्परं परस्पराभावरूपत्वमिति, तस्या अप्यभिव्यक्तिस्वीकारात् ॥ १२१ ॥

## पारम्पर्यतोऽन्वेषणाद् बीजाङ्कुरवत् ॥ १२२ ॥

[ वृ० ] किमभिव्यक्तिः सती असती वा ? सती चेत्, नित्यं कार्योपलब्धिः स्यात्; असती चेत्, सत्कार्यहानिः स्यात् । तस्या अपि अभिव्यक्तिरन्या तस्या अप्यन्या—इत्यनवस्था स्यादित्यत आह—पारम्पर्य० ।

भवत्वभिव्यक्तिसहस्रम्, तथापि न दोषः, अनादित्वाद्बीजाङ्कुरवदिति ॥१२२॥

[ वृ० सा० ] नन्वभिव्यक्तिरपि पूर्वं सती असती वा ? आद्ये कारणव्यापारात्प्रागपि कार्यस्याभिव्यक्त्या स्वकार्यजनकतापत्तिः कारणव्यापारवैयर्थ्यं च, असती चेत्, सत्कार्यवादहानिः । अथ सत्या एवाभिव्यक्तेरभिव्यक्त्यन्तरार्थं कारणव्यापारस्तर्ह्यनवस्थेत्याशङ्क्याह—पारम्पर्येति । परम्परारूपेणाभिव्यक्तेः स्वीकारः कार्यः, बीजाङ्कुरवत् प्रामाणिकत्वात् । बीजाङ्कुराभ्यां चायमेव विशेषो यद् बीजाङ्कुरस्थले क्रमिकपरम्परयानवस्था, अभिव्यक्तौ चैककालिकपरम्परयेति । प्रामाणिकत्वं तु तुल्यमेव । अत्र च बीजाङ्कुरदृष्टान्तो लोकदृष्ट्योपन्यस्तः, वस्तुतो जन्मकर्मादिवदित्यत्रैव तात्पर्यम्, तेन बीजाङ्कुरप्रवाहस्यादिसर्गावधिकत्वेनानवस्थाविरहेऽपि न क्षतिः । आदिसर्गे हि वृक्षं विनैव बीजमुत्पद्यते हिरण्यगर्भसङ्कल्पेन तच्छरीरादिभ्य इति प्रसिद्धं तत्र तत्र । अत एव विष्णुपुराणे—

यथा हि पादपो मूलस्कन्धशाखादिसंयुतः।
आदिबीजात्प्रभवति बीजान्यन्यानि वै ततः॥
( वि० पु० २।७।३२ ) इति ॥ १२२ ॥

[ भा० ] ननु सत्कार्यसिद्धान्तरक्षार्थमभिव्यक्तेरप्यभिव्यक्तिरेष्टव्या। तथा चानवस्थेत्याशङ्क्याह – पारम्पर्यतो०।

पारम्पर्यतः परम्परारूपेणैवाभिव्यक्तेरनुधावनं कर्तव्यम्, बीजाङ्कुरवत् प्रामाणिकत्वेन चास्या अदोषत्वादित्यर्थः। बीजाङ्कुराभ्यां चात्रायमेव विशेषो यद्बीजाङ्कुरस्थले क्रमिकपरम्परयाऽनवस्था, अभिव्यक्तौ चैककालीनपरम्परयेति। प्रामाणिकत्वं तु तुल्यमेवेति। सर्वकार्याणां स्वरूपतो नित्यत्वमवस्थाभिर्विनाशित्वं चेति पातञ्जलभाष्ये ( यो० भा० ३।१३, ४।१२ ) वदद्भिर्व्यासदेवैरपीयमनवस्था प्रामाणिकत्वेन स्वीकृतेति।

अत्र च बीजाङ्कुरदृष्टान्तो लोकदृष्ट्योपन्यस्तः। वस्तुतस्तु जन्मकर्मादिवदित्यत्रैव तात्पर्यम्। तेन बीजाङ्कुरप्रवाहस्यादिसर्गावधिकत्वेनानवस्थाविरहेऽपि न क्षतिः। आदिसर्गे हि वृक्षं विनैव बीजमुत्पद्यते हिरण्यगर्भसङ्कल्पेन तच्छरीरादिभ्य इति श्रुतिस्मृत्योः प्रसिद्धम्—

यथा हि पादपो मूलस्कन्धशाखादिसंयुतः।
आदिबीजात् प्रभवति बीजान्यन्यानि वै ततः॥ ( वि० पु० २।७।३२ )।

इति विष्णुपुराणादिवाक्यैरिति ॥ १२२ ॥

[ भा० सा० ] न चैवमनवस्थेत्यत आह—पारम्पर्येति। पारम्पर्यतः परम्परारूपेणैवाभिव्यक्तेरनुसरणं कर्तव्यम्। अनवस्था च बीजाङ्कुरवत्प्रामाणिकत्वेन न दोषायेत्यर्थः। अत्र बीजशब्देन कर्म, अङ्कुरशब्देन जन्म, एतेन बीजाङ्कुरप्रवाहस्यादिसर्गावधित्वेन तत्र नानवस्था। आदिसर्गे हि वृक्षं विनैव हिरण्यगर्भसंकल्पेन तच्छरीराद् बीजमुत्पद्यते।

यथा हि पादपो मूलस्कन्धशाखादिसंयुतः।
आदिबीजात्प्रभवति बीजान्यन्यानि वै ततः॥ ( वि० पु० २।७।३२ )

इति विष्णुपुराणाद्युक्तेरित्यपास्तम्। इयांस्तु विशेषः—यद्बीजाङ्कुरस्थले क्रमिकपरम्परयाऽनवस्थाभिव्यक्तौ चैककालीनपरम्परया प्रामाणिकत्वं तुल्यमेवेति ॥ १२२ ॥

**उत्पत्तिवद्वाऽदोषः ॥ १२३ ॥**

[ वृ० ] युक्त्यन्तरमाह—उत्पत्ति०। किमुत्पत्तिरुत्पद्यते न वा ? उत्पद्यते चेत्, तर्हि तस्या अप्युत्पत्तिः, तस्या अप्युत्पत्तिरित्यनवस्था। नोत्पद्यते चेत्, किमसत्त्वान्नित्यत्वाद्वा ? यद्यसत्त्वात्, कदाचिदप्युत्पत्तिर्नास्तीति सर्वदानुपलम्भः स्यात्। अथ नित्यत्वात्, सर्वदा कार्योत्पत्तिः स्यात्। अथोत्पत्तेः स्वयमेवोत्पत्तिरूपत्वात् किमुत्पत्त्यन्तरकल्पनयेति चेत् ? तर्हि अभिव्यक्तेरपि अभिव्यक्तिरूपत्वात् किमभिव्यक्त्यन्तरकल्पनयेति तुल्यम्। तत्र यस्तव सिद्धान्तः, सोऽस्माकमपि ॥ १२३ ॥

[ वृ० सा० ] वस्तुतस्त्वनवस्थापि नास्तीत्याह—उत्पत्तीति। यथा घटोत्पत्तेरुत्पत्तिस्वरूपमेव परैः स्वीक्रियते लाघवात्तथा अस्माभिर्घटाभिव्यक्तेरभिव्यक्तिस्तत्स्वरूपैवेष्टव्या। तथा चोत्पत्ताविवाभिव्यक्तावपि नानवस्थादोष इत्यर्थः। अथाभिव्यक्तेरभिव्यक्त्यन्तरानङ्गीकारे कारणव्यापारात्प्राक् तस्यासत्त्वानुपपत्त्या सत्कार्यवादक्षतिरिति चेन्न; सत एवाभिव्यक्तिरित्येव सत्कार्यसिद्धान्तादभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादापत्तिरिति।

नन्वेवं महदादीनामेव प्रागसत्त्वमिष्यताम्, किमभिव्यक्त्याख्यावस्थाकल्पनेनेति चेत्, अत्राहुरभियुक्ताः; तद्धेदमित्यादिश्रुतिभिरव्यक्तावस्थया सतामेव कार्याणामभिव्यक्तिसिद्धिः। अथैवमभिव्यक्तेः प्रागभावादिस्वीकारापत्तिः, न तिसृणामनागताद्यवस्थानामन्योन्यमन्योन्याभावरूपतयोपगमात्, तादृशाभावनिवृत्त्यैव कारणव्यापारसाफल्यादिसंभवात्। अयमेव हि सत्कार्यवादिनामसत्कार्यवादिभ्यो विशेषो यत्तैरुच्यमानौ प्रागभावप्रध्वंसौ कार्यस्यानागतातीतावस्थे भावरूपे उच्येते, वर्तमानताख्या चाभिव्यक्त्यवस्था घटाद् व्यतिरिक्ता घटादेरवस्थात्रयवत्त्वानुभवादिति नाधिक्यमस्मत्कल्पनायामिति ॥ १२३ ॥

[ भा० ] वस्तुतस्त्वनवस्थापि नास्तीत्याह—उत्पत्तिवद्०। यथा घटोत्पत्तेरुत्पत्तिः स्वरूपमेव वैशेषिकादिभिरसदुत्पादवादिभिरिष्यते लाघवात्, तथैवास्माभिर्घटाभिव्यक्तेरप्यभिव्यक्तिः स्वरूपमेवैष्टव्या, लाघवात्। अत उत्पत्ताविवाभिव्यक्तावपि नानवस्थादोष इत्यर्थः। अथैवमभिव्यक्तेरभिव्यक्त्यनङ्गीकारे कारणव्यापारात् प्राक् तस्याः सत्त्वानुपपत्त्या सत्कार्यवादक्षतिरिति चेन्न; अस्मिन् पक्षे सत एवाभिव्यक्तिरित्येव सत्कार्यसिद्धान्त इत्याशयात्। अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिः।

नन्वेवं महदादीनामेव प्रागसत्त्वमिष्यताम्, किमभिव्यक्त्याख्यावस्थाकल्पनेनेति चेन्न; "तद्धेदं तर्ह्यव्याकृतमासीद्" ( बृ० उ० १।४।७ ) इत्यादिश्रुतिभिरव्यक्तावस्थया सतामेव कार्याणामभिव्यक्तिसिद्धेः। तथाप्यभिव्यक्तेः प्रागभावादिस्वीकारापत्तिरिति चेन्न; तिसृणामनागताद्यवस्थानामन्योऽन्यस्याभावरूपतयोक्तत्वात्। तादृशाभावनिवृत्त्यैव च कारणव्यापारसाफल्यादिसम्भवात्। अयमेव हि सत्कार्यवादिनामसत्कार्यवादिभ्यो विशेषो यत् तैरुच्यमानौ प्रागभावध्वंसौ सत्कार्यवादिभिः कार्यस्यानागतातीतावस्थे भावरूपे प्रोच्येते। वर्तमानताख्या चाभिव्यक्त्यवस्था घटाद्व्यतिरिक्तेष्यते, घटादेरवस्थात्रयवत्त्वानुभवादिति। अन्यत् तु सर्वं समानम्। अतो नास्त्यस्मास्वधिकशङ्कावकाश इति दिक् ॥ १२३ ॥

[ भा० सा० ] वस्तुतोऽनवस्थैव नेत्याह—उत्पत्तिवदिति। यथा घटोत्पत्तेरुत्पत्तिस्तत्स्वरूपैव वैशेषिकादिनये इष्यते, लाघवत्वात्, एवमस्या अभिव्यक्तेरभिव्यक्तिस्तत्स्वरूपैवेति नानवस्थादोष इत्यर्थः। अत्र पक्षे सत एवाभिव्यक्तिरिति सत्कार्यवादः। अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिः। न चैवं महदादीनामेव प्रागसत्त्वमिष्यतां किमभिव्यक्त्याख्यव्यवस्थाकल्पनेनेति चेत्; "तद्धेदं तर्ह्यव्याकृतमासीत्" ( बृ० उ०

१।४।७ ) इति श्रुत्याऽव्यक्तावस्थया सतामेव कार्याणामभिव्यक्तिसिद्धेः। न चैवमभिव्यक्तेः प्रागभावादिस्वीकारापत्तिः, तिसृणामनागताद्यवस्थानामन्योन्यस्याभावरूपत्वात्। ताश्चावस्था घटादेर्व्यतिरिक्ताः, तस्यावस्थात्रयवत्त्वानुभवात्। एवं च घटस्य वर्तमानावस्थैवाभिव्यक्तिः। तदभावश्च घटस्यानागतावस्थैवेति दिक् ॥ १२३ ॥

## हेतुमदनित्यं सक्रियमनेकमाश्रितं लिङ्गम् ॥ १२४ ॥

[ वृ० ] प्रकृतिकार्याणामन्योन्यं साधर्म्यमाह—हेतुमद०।

हेतुमत्-कारणवत्। अनित्यम्-विनाशि। सक्रियम्-उपात्तं देहं त्यजत्, पृथिवी शरीरादयश्च स्पन्दन्ते। अनेकं-पुरुषभेदाद् बहु। आश्रितम्-स्वकारणे। लिङ्गम्-स्वकारणे लयं गच्छतीति ॥ १२४ ॥

[ वृ० सा० ] एवं सत्कार्यमुपपाद्य प्रधानात्कार्याणां वैधर्म्यं वदति—हेतुमदिति। अत्र व्यक्तमिति पूरणीयं तच्चोद्दिश्य हेतुमत्त्वादयस्तत्र विधीयन्ते। हेतुमत् कारणवत्। अनित्यं विनाशि तिरोभावीति यावत्। अव्यापि सर्वपरिणामि, न व्याप्नोति। कारणेन हि कार्यमाविष्टं न कार्येण कारणम्, न च बुद्ध्यादयः कार्यं व्याप्नुवन्तीत्यव्यापकं व्यक्तम्। सक्रियं परिस्पन्दवत्। बुद्ध्यादयो ह्युपात्तमुपात्तं देहं त्यजन्ति देहान्तरं चोपाददत इति तेषां परिस्पन्दः। शरीर-पृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव। अनेकं प्रतिपुरुषं बुद्ध्यादीनां भेदात्। पृथिव्याद्यपि हि शरीरघटादिभेदेनानेकमेव। आश्रितं स्वकारणमाश्रितं बुद्ध्यादिकार्यमभेदेऽपि कथंचिद् भेद-विवक्षयाश्रयाश्रयिभाव इत्युक्तम्। लिङ्गं प्रधानस्येति विशेषः। बुद्ध्यादयो हि प्रधानस्य लिङ्गं न तु प्रधानं पुरुषलिङ्गं भवतीति भावः।

ईश्वरकृष्णेन तु सावयवं परतन्त्रमिति वैधर्म्यद्वयमधिकमुक्तम्। अवयवनमवयवः, मिश्रणं संयोगमिति यावत्। अप्राप्तिपूर्विका प्राप्तिः संयोगस्तेन सह वर्तत इति सावयवम्। तथाहि पृथिव्यादयः परस्परं संयुज्यन्ते, एवमन्येऽपि। न तु प्रधानस्य बुद्ध्यादिभिः संयोगः, तादात्म्यात्; नापि सत्त्वरजस्तमसां परस्परं संयोगः, अप्राप्तेरभावात्। परतन्त्रं बुद्ध्या हि स्वकार्येऽहङ्कारे जनयितव्ये प्रकृत्यापूरोऽपेक्षते। अन्यथा तु क्षीणा सती नालमहङ्कारं जनयितुमिति स्थितिः। एवमहङ्कारादिभिरपि स्वकार्यजनन इति सर्वैः स्वकार्ये प्रकृत्यापूरमपेक्ष्यते, तेन प्रकृतिं परामपेक्षमाणं कारणमपि कार्योपजनने परतन्त्रं व्यक्तम्, एतद्विपरीतमव्यक्तमित्यर्थादुक्तं भवति। तदेतदुक्तम्—

"सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" ( सा० का० १० ) ॥ १२४ ॥

[ भा० ] "कार्यदर्शनात् तदुपलब्धेः" ( सां० सू० १।११० ) इति सूत्रेण कार्येण मूलकारणमनुमेयमित्युक्तम्, तत्र कियत्पर्यन्तं कार्यमित्यवधारयितुं सर्वकार्याणां साधर्म्यमाह—हेतुमद०।

कारणानुमापकत्वाल्लयगमनाद्वाऽत्र लिङ्गं कार्यजातम्, न तु महत्तत्त्वमात्रमत्र विवक्षितम्, हेतुमत्त्वादीनामखिलकार्यसाधारण्यात्।

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ ( सां० का० १० ) ।

इति कारिकायामप्यत एव व्यक्ताख्यं सर्वं कार्यमेव लिङ्गमित्युक्तम् । तथा च तल्लिङ्गं हेतुमत्त्वादिधर्मकमिति वाक्यार्थः ।

तत्र हेतुमत्त्वं कारणवत्त्वम् । अनित्यत्वं विनाशिता । प्रधानस्य या व्यापिता पूर्वोक्ता तद्वैपरीत्यमव्यापित्वम् । सक्रियत्वम् —अध्यवसायादिरूपनियतकार्यकारित्वम् । प्रधानस्य तु सर्वक्रियासाधारण्येन कारणत्वान्न कार्यैकदेशमात्रकारित्वम् । न च क्रिया कर्मैव वक्तुं शक्यते, प्रकृतिक्षोभात् सृष्टिश्रवणेन प्रकृतेरपि कर्मवत्तयाऽत्र सक्रियत्वापत्ते-रिति । अनेकत्वं सर्गभेदेन भिन्नत्वम्, सर्गद्वयासाधारण्यमिति यावत् । न पुनः सजातीयानेकव्यक्तिकत्वम्, प्रकृतावतिव्याप्तेः, प्रकृतेरपि सत्त्वाद्यनेकरूपत्वात् । "सत्त्वा-दीनामतद्धर्मत्वं तद्रूपत्वात्" ( सां० सू० ६।३९ ) इत्यागामिसूत्रादिति । आश्रितत्वं चावयवेष्विति ॥ १२४ ॥

[ भा० सा० ] इदानीं सर्वकार्याणां साधर्म्यमाह—हेतुमदिति । कारणानुमापकत्वात् लयगमनाद्वात्र लिङ्गं कार्यजातम्, हेतुमत्त्वादीनामखिलकार्यसाधारण्यात् । एवं च कार्यजातं हेतुमत्त्वादिधर्मकमिति वाक्यार्थः । तत्र हेतुमत्त्वं कारणजन्यत्वम्, अनित्यत्वं विनाशित्वं तिरोभावः । प्रधानस्य या व्यापिता पूर्वमुक्ता तद्वैपरीत्यमव्यापित्वं, सक्रियत्वमध्यवसायादिरूप-प्रतिनियतकार्यकारित्वम्, प्रधानं तु सर्वजनकं न कार्यैकदेशमात्रकारि ।

न च क्रियात्र परिस्पन्दः, प्रकृतिक्षोभात्सृष्टिश्रवणेन प्रकृतेरपि कर्मवत्तया सक्रियत्वापत्तेः । अनेकत्वं सर्गभेदेन भिन्नत्वम् । सर्गद्वयसाधारण्याभाववदिति यावत् । न तु सजातीयानेक-व्यक्तित्वम्, प्रकृतावतिव्याप्तेः, तस्या अपि तत्त्वाद्यनेकरूपत्वात् ।

महान्तं च समावृत्य प्रधानं समवस्थितम् ।
अनन्तस्य न तस्यान्तः संख्या चापि न विद्यते ॥ ( वि० पु० २।७।२५ )

इति विष्णुपुराणेऽसंख्येयत्वोक्त्या प्रधानव्यक्तिबहुत्वसिद्धेश्च ।

आश्रितमवयवेष्वभेदेऽपि कथंचिद्भेदं परिकल्प्याधारतोपपत्तिर्वने तिलका इतिवत् । एवं कार्यजातं परस्परसंयोगवत्, अप्राप्तिपूर्विका हि प्राप्तिः संयोगः । प्रधानस्य तु बुद्ध्यादिभिर्न, तादात्म्यात् । नापि सत्त्वरजस्तमसां परस्परं संयोगः,अप्राप्तेरभावादित्याहुः । स्वकार्ये जननीये प्रधानस्य सहकारित्वेन तत्परतन्त्रं चेत्यपि बोध्यम्, प्रधानसहकारं विना स्वस्वकार्यमेव न, असामर्थ्यादिति दिक् ॥ १२४ ॥

## आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥

[ वृ० ] यदि पञ्चविंशतितत्त्वं तत्, किं ज्ञानसुखादीनां सामान्यकर्मणामभाव एव ? तथा च दृष्टपरित्याग इत्यत आह—आञ्जस्या० ।

आञ्जस्यात्—स्वरूपतः चतुर्विंशतितत्त्वादभेदस्तल्लक्षणयोगात्, गुणसामान्यादीनाम्। तत्सिद्धिः—तेष्वेवान्तर्भावात् सिद्धिः। वाशब्दः पक्षान्तरं सूचयति। 'प्रधानव्यपदेशाद्वा' गुणादीनां पारम्पर्येण प्रधानकार्यत्वेन कार्यकारणयोरभेदात् प्रधानव्यपदेशाद् एव गुणादिसिद्धिः, न त्वभावादननुकीर्तनम् ॥ १२५॥

[ वृ० सा० ] हेतुमत्त्वादिकं कार्यकारणयोर्भेद एव सिद्धयतीत्यतः कार्यस्य कारणाद् भेदे प्रमाणमाह—आञ्जस्यादिति। तत्सिद्धिः कार्यस्य कारणातिरेकेण सिद्धिः। क्वचिदाञ्जस्यात् प्रत्यक्षत एवानायासेन भवति, यथा स्थौल्यादिना तन्त्वादिभ्यः पटादीनाम्। क्वचिच्च गुणसामान्यादेरभेदतः गुणसामान्याद्यात्मकत्वात्। लिङ्गाद्यथाध्यवसायादिगुणात्मकस्वरूपेण कारणवैधर्म्येण महदादीनाम्। यथा वा महापृथिवीत्वादिसामान्यात्मकत्वरूपेण तन्मात्रवैधर्म्येण पृथिव्यादीनाम्। आदिशब्दगृहीतेन कर्मात्मकता वैधर्म्येण स्थिरावयवेभ्यो व्यतिरिक्तस्य चञ्चलावयविनः प्रधानव्यपदेशाच्च। प्रधीयतेऽस्मिन्कार्यमिति हि प्रधानम्। एतच्च कार्यकारणयोर्भेदाभेदौ विना न घटते, अत्यन्ताभेदे स्वस्याधारत्वासम्भवात्। वाशब्दश्चार्थे ॥ १२५ ॥

[ भा० ] कार्यकारणयोर्भेदे हेतुमत्त्वादि सिद्धयतीत्यतः कारणातिरिक्तकार्यसिद्धौ प्रमाणान्याह—आञ्जस्याद०।

तत्सिद्धिर्लिङ्गाख्यकार्यस्य कारणातिरेकतः सिद्धिः क्वचिदाञ्जस्यात् प्रत्यक्षत एवानायासेन भवति। यथा स्थौल्यादिना धर्मेण तन्त्वादिभ्यः पटादीनाम्। क्वचिच्च गुणसामान्यादेरभेदतो गुणसामान्याद्यात्मकत्वेन लिङ्गेनानुमानेन भवति। यथाऽध्यवसायादिगुणात्मकस्वरूपेण तन्मात्रवैधर्म्येण महदादीनाम्। यथा च महापृथिवीत्वादिसामान्यात्मकतारूपेण तन्मात्रवैधर्म्येण पृथिव्यादीनाम्। क्वचित्तु आदिशब्दगृहीतेन कर्माद्यात्मकतावैधर्म्येण। यथा स्थिरावयवेभ्योऽतिरिक्तस्य चञ्चलावयविनः, तथा प्रधानव्यपदेशात् प्रधानश्रुतेरपि कारणातिरिक्तकार्यसिद्धिर्भवति। प्रधीयतेऽस्मिन् हि कार्यजातमिति प्रधानमुच्यते। तच्च कार्यकारणयोर्भेदाभेदौ विना न घटते, अत्यन्ताभेदे स्वस्याधारत्वासम्भवादित्यर्थः। कार्याणां साधर्म्यरूपं लक्षणं कारणातिरिक्तकार्येषु प्रमाणं च सूत्राभ्यां दर्शितम् ॥ १२५ ॥

[ मा० सा० ] एवं च तद्विपरीतमव्यक्तमित्यर्थादुक्तं भवति। कार्यकारणयोर्भेदे हि हेतुमत्त्वं भवतीति तयोर्भेदं साधयति—आञ्जस्यादिति। तत्सिद्धिः कारणातिरिक्तकार्यसिद्धिः क्वचिदाञ्जस्यात् प्रत्यक्षत एव, यथा स्थौल्यादिना धर्मेण तन्त्वादिभ्यः पटादीनाम्। क्वचिद् गुणभेदात्, यथाऽध्यवसायादिगुणात्मकत्वेन कारणवैधर्म्येण प्रधानादितो महदादीनाम्। क्वचित् सामान्याभेदात्, यथा स्थिरावयवेभ्योऽतिरिक्तस्य चञ्चलावयविघटत्वादिसामान्यात्मकतावैधर्म्येण महापृथिवीतो घटादीनाम्। आदिना कर्मभेदः, यथा स्थिरावयवेभ्योऽतिरिक्तस्य चञ्चलावयविनः। यद्वा प्रधानव्यपदेशो व्यवहारः। प्रधीयतेऽस्मिन् कार्यजातमिति हि प्रधानम्। अत्यन्ताभेदे स्वस्य स्वाधारत्वासंभव इत्यर्थः ॥ १२५ ॥

## त्रिगुणाचेतनत्वादि द्वयोः ।। १२६ ।।

[ वृ० ] प्रकृतिकार्ययोः साधर्म्यमाह— त्रिगुणा० । त्रिगुणमचेतनम् । आदिशब्दात् परार्थत्वम् । द्वयोरिति कार्यकारणयोः ।। १२६ ।।

[ वृ० सा० ] इदानीं कार्यसधर्मकतया कारणानुमानाय कार्यकारणयोः साधर्म्यं दर्शयति —त्रिगुणेति । त्रिगुणत्वं सुखदुःखमोहात्मकत्वम् । आदिशब्दग्राह्याणीश्वरकृष्णः संजग्राह—

त्रिगुणमविवेकिविषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ।। ( सां० का० ११ ) इति ।

अविवेकिविषय इत्येकं पदम्, अज्ञैरेव दृश्यमिति तदर्थः । अविवेकविषय इति द्वेधा । अविवेकित्वं सम्भूयकारित्वम्, विषयत्वं भोग्यत्वम्, सामान्यं सर्वपुरुषसाधारणं पुरुषभेदेऽप्यभिन्नमिति यावत् ।। १२६ ।।

[ भा० ] इदानीं कार्यसधर्मकतया कारणानुमानाय कार्यकारणयोरपि साधर्म्यं प्रदर्शयति —त्रिगुणा० ।

द्वयोः कार्यकारणयोरेव त्रिगुणत्वादिसाधर्म्यमित्यर्थः । आदिशब्दग्राह्याश्च कारिकायामुक्ताः—

त्रिगुणविवेकिविषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ।। ( सां० का० ११ ) ।

इति । त्रयः सत्त्वादिद्रव्यरूपा गुणा अत्र सन्तीति त्रिगुणम् । तत्र महदादिषु कारणरूपेण सत्त्वादीनामवस्थानम्, गुणत्रयसमूहरूपेण तु प्रधाने सत्त्वादीनामवस्थानं वने वृक्षवदेवावगन्तव्यम्, अथवा सत्त्वादिशब्देन सुखदुःखमोहानामपि वचनात् कार्यकारणयोस्त्रिगुणत्वं समञ्जसमिति । अविवेकिविषयोऽज्ञैरेव दृश्यम्, भोग्यमिति यावत् । अविवेकि च विषयश्चेति तच्छेदे त्वविवेकित्वं सम्भूयकारित्वम्, विषयत्वं तु भोग्यत्वमेव । सामान्यं सर्वपुरुषसाधारणम्, पुरुषभेदेऽप्यभिन्नमिति यावत् । प्रसवधर्मि परिणामि । व्यक्तं कार्यम् । प्रधानं कारणमित्यर्थः । कार्यकारणयोरन्योऽन्यवैधर्म्यमपि कारिकया दर्शितम्—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ।। ( सां० का० १० )

इति । अत्रैकत्वं सर्गभेदेऽप्यभिन्नत्वम् । अतः प्रकृतेरनेकव्यक्तिकत्वेऽपि नैकत्वक्षतिः ।

महान्तं च समावृत्य प्रधानं समवस्थितम् ।
अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते ।। ( वि० पु० २।७।२५ )

इति विष्णुपुराणेन सङ्ख्येयतावचनात्तु प्रधानस्य व्यक्तिबहुत्वसिद्धिरिति ।। १२६ ।।

[ भा० सा० ] इदानीं कार्यसधर्मकतया कारणानुमानाय कार्यकारणयोः साधर्म्यमाह—त्रिगुणेति । द्वयोः कार्यकारणयोः, तत्र त्रिगुणत्वं द्रव्यरूपसत्त्वादिगुणत्रयवत्त्वम् । तत्र महदादिषु

कारणरूपेण सत्त्वादीनामवस्थानं, प्रधाने तु वने वृक्षवत्। यद्वा गुणशब्देन सुखदुःखमोहाः। अचेतनत्वं स्पष्टम्। आदिनाऽविवेकित्वविषयत्वसामान्यत्वप्रसवधर्मित्वानि। अविवेकित्वं संभूयकारित्वम्। विषयत्वं भोग्यत्वम्। सामान्यत्वं पुरुषभेदेऽप्यभिन्नत्वम्। प्रसवधर्मित्वं परिणामित्वम्। अविवेकिविषयमज्ञैरेव दृश्यत्वरूपमिति च॥ १२६॥

## प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं वैधर्म्यम्॥ १२७॥

[ वृ० ] प्रकृतिभागस्य त्रिगुणस्यान्योन्यवैधर्म्यमाह—प्रीत्यप्रीति०।

प्रीतिः सुखम्। आदिशब्दाल्लघु प्रकाशकञ्च सत्त्वम्। अप्रीतिर्दुःखम्। आदिशब्दादुपष्टम्भकं चलञ्च रजः। विषादो मोहः। आदिशब्दाद् गुरु वरणकञ्च तमः॥१२७॥

[ वृ० सा० ] प्रसवधर्मिपरिणामिप्रधानाख्यानां जगत्कारणगुणानामन्योन्यविवेकाय तेषामवान्तरवैधर्म्यमाह—प्रीतीति। गुणानां सत्त्वादीनामन्योन्यं सुखदुःखमोहाद्यैर्वैधर्म्यम्, कार्येषु तद्दर्शनात्। सुखादिकं च घटादे रूपादिवदेव धर्मोऽन्तःकरणोपादानकत्वादन्यकार्याणामिति प्राङ्निरूपितम्। अत्रादिशब्दग्राह्याः पञ्चशिखाचार्यैरुक्ताः—"सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षा-सन्तोषरूपानन्तभेदं समासतः सुखात्मकम्, एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम्। एवं तमोऽपि निद्रादिनानाभेदं समासतो मोहात्मकम्" ( द्र० म० भा० शा० २१८-२१९ अ० ) इति॥ १२७॥

[ भा० ] प्रधानाख्यानां जगत्कारणगुणानामन्योन्यविवेकाय तेषामवान्तरमपि वैधर्म्यं सिद्धान्तयति, विविधजगत्कारणत्वोपपत्तये च, न ह्येकरूपात् कारणाद्विचित्रकार्याणि संभवन्तीति—प्रीत्यप्रीति०।

गुणानां सत्त्वादिद्रव्यत्रयाणामन्योऽन्यं सुखदुःखाद्यैर्वैधर्म्यं कार्येषु तद्दर्शनादित्यर्थः। सुखादिकं च घटादेरपि रूपादिवदेव धर्मोऽन्तःकरणोपादानत्वादन्यकार्याणामित्युक्तम्। अत्रादिशब्दग्राह्याः पञ्चशिखाचार्यैरुक्ताः, यथा—"सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम्। एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम्। एवं तमोऽपि निद्रादिनानाभेदं समासतो मोहात्मकम्" इति।

अत्र प्रीत्यादीनां गुणधर्मत्ववचनादागामिसूत्रे च लघुत्वादेर्वक्ष्यमाणत्वात् सत्त्वादीनां द्रव्यत्वं सिद्धम्। सुखाद्यात्मकता तु गुणानां मनसः सङ्कल्पात्मकतावद्धर्मधर्म्यभेदादेवोपपद्यते। न वैशेषिकोक्ताः सुखादय एव सत्त्वादिगुणा इति। सत्त्वादित्रयमपि व्यक्तिभेदादनन्तम्। अन्यथा हि विभुमात्रत्वे गुणविमर्दवैचित्र्यात् कार्यवैचित्र्यमिति सिद्धान्तो नोपपद्येत, विमर्देऽवान्तरभेदासम्भवात्॥ १२७॥

[ भा० सा० ] अथ प्रधानाख्यानां जगत्कारणगुणानामन्योन्यविवेकाय तेषामवान्तरवैधर्म्यमाह—प्रीतीति। गुणानां सत्त्वरजस्तमसामन्योन्यं सुखदुःखमोहाद्यैर्वैधर्म्यमित्यर्थः।

आदिपदग्राह्यं च पञ्चशिखाचार्यैरुक्तम्—"सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षितासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम्, रजः शोकादिनानाभेदं समासतो दुःखात्मकम्, तमो निद्रादिनानाभेदं समासतो मोहात्मकमिति।"

अत्र प्रीत्यादीनां गुणधर्मत्वोक्त्या सत्त्वादीनां द्रव्यत्वं सिद्धम्, घटादिवृत्तित्वेन। गुणानां सुखाद्यात्मकत्वव्यवहारस्तु धर्मधर्मिणोरभेदान्मनसः सङ्कल्पात्मकत्वात्। सत्त्वादित्रयमपि प्रत्येकं व्यक्तिभेदादनन्तम्। विभुमात्रत्वे हि गुणविमर्दे वैचित्र्यात् कार्यवैचित्र्यमिति सिद्धान्तानुपपत्तिः, अविमर्दे अधिकसत्त्व-न्यूनसत्त्वादिरूपावान्तरभेदासंभवः॥ १२७॥

## लघ्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यमितरेषाम्॥ १२८॥

[ वृ० ] तेषां वैधर्म्यकथनावसरे साधर्म्यमाह—लघ्वादि०। लघुचलगुरुत्वैः। अनेन वैधर्म्यमुक्तम्। आदिशब्दात् साधर्म्यं सूचितम्। तच्च पुरुषार्थत्वम्, अन्योन्याभिभवजननमिथुनवृत्तित्वम्॥ १२८॥

[ वृ० सा० ] इदानीं तेषामेव साधर्म्यवैधर्म्ये आह—लघ्वादीति। लघ्वादीति भावप्रधानो निर्देशः। लघुत्वादिधर्मेण सर्वासां सत्त्वव्यक्तीनां साधर्म्यं वैधर्म्यं च रजस्तमोभ्याम्, एवं च लघुत्वादिधर्मेण सर्वासां रजोव्यक्तीनां साधर्म्यं सत्त्वतमोभ्यां च वैधर्म्यम्, एवं गुरुत्वादिधर्मेण सर्वासां तमोव्यक्तीनां साधर्म्यं सत्त्वरजोभ्यां वैधर्म्यमिति। अत्र लघुत्वादीनां साधर्म्यत्वकथनात् सत्त्वादीनां करणद्रव्याणां प्रत्येकमनेकव्यक्तिकत्वं भाति, समानानां धर्मस्यैव साधर्म्यत्वात्। एवमेव सिद्धान्त इति केचित्। न च मूलकारणस्यानन्तव्यक्तिकत्वे वैशेषिकमतात् को विशेष इति चेत्; कारणद्रव्यस्य शब्दस्पर्शादिराहित्यमेव।

शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम्।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्॥ ( वि० पु० १।१।२० )

इति विष्णुपुराणाद्यनुसारादिति च त एव समादधुः। अन्ये तु लघुत्वादिधर्मैर्वैधर्म्यं त्वन्योन्याभिभवजननमिथुनवृत्तित्वेनेत्याहुः। अत्रेश्वरकृष्ण आह—

सत्त्वं लघु प्रकाशमिष्टमुपष्टम्भकं चलञ्च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥ ( सां० का० १३ )

अर्थतः पुरुषार्थतः,

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रय जननमिथुनवृत्तयश्च गुणाः॥ (सां०का० १२) इति।

अस्यार्थः—प्रीतिः सुखम्, अप्रीतिः दुःखं, विषादो मोहः। एतदात्मकाः क्रमेण सत्त्वरजस्तम आख्या गुणाः, गुणा इति परार्थाः। एषां प्रयोजनमाह—प्रकाशप्रवृत्तिनियमार्थाः। रजःप्रवर्तकतया सत्त्वं लघु सर्वत्र प्रवर्त्तयेद्यदि तमसा गुरुणा न नियम्येत। तमोनियमितं तु क्वचिदेव प्रवर्त्तयतीति भवति तमो नियमार्थम्।

प्रयोजनमुक्त्वा क्रियामाह—अन्योन्येत्यादि वृत्तय इत्यन्तेन। वृत्तिः क्रिया सा च प्रत्येकमभिसम्बद्ध्यते। अन्योन्याभिभववृत्तयः। एतेषामन्यतमेनार्थवशादुद्भूतेनान्यतमोऽभिभूयते।

तथाहि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते, एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामित्यन्योन्याश्रयवृत्तयः। यदपेक्षया यस्य क्रिया स तस्याश्रय इत्युच्यते। तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति। अन्योन्यजननप्रवृत्तयः। अन्यतमोऽन्यतममपेक्ष्य जनयति। जननं च परिणामः, स च गुणानां साम्यरूपः। अन्योन्यमिथुनवृत्तयः। अन्योन्यसहचराः अविनाभाववर्तिन इति यावत्। च समुच्चये। भवति चात्रागमः—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते॥
नैषामादिः संप्रयोगो विभागो वोपलभ्यते॥ (द्र० दे० भा० ३।८)

इति तत्त्वकौमुद्याम्। अलमधिकेन॥ १२८॥

[भा०] गुणानां सत्त्वादीनामेकैकव्यक्तिमात्रत्वे वृद्धिह्रासादिकं नोपपद्यते। तथा परिच्छिन्नत्वे च तत्समूहरूपस्य प्रधानस्य परिच्छिन्नत्वापत्त्या श्रुतिस्मृतिसिद्धमेकदाऽसङ्ख्यब्रह्माण्डादिकं नोपपद्यते। अतोऽसङ्ख्यत्वे गुणानां त्रित्वसङ्ख्योपपादनाय विवेकाद्यर्थं च तेषां साधर्म्यवैधर्म्ये प्रतिपादयति—लघ्वादि०।

अयमर्थः—लघ्वादीति भावप्रधानो निर्देशः। लघुत्वादिधर्मेण सर्वासां सत्त्वव्यक्तीनां साधर्म्यं वैधर्म्यं च रजस्तमोभ्याम्। पृथिवीव्यक्तीनां पृथिवीत्वेनेव सत्त्वव्यक्तीनामेकजातीयतयैकता सजातीयोपष्टम्भादिना वृद्धिह्रासादिकं च युक्तमित्याशयः। एवं चञ्चलत्वादिधर्मेण सर्वासां रजोव्यक्तीनां साधर्म्यं सत्त्वतमोभ्यां च वैधर्म्यम्। शेषं पूर्ववदिति। वैधर्म्यस्य प्रागेवोक्ततयाऽत्र पुनर्वैधर्म्यकथनं सम्पातायातम्। अत्र वैधर्म्यं वेति पाठः प्रामादिक एवेति।

अत्र सूत्रे सत्त्वादीनां कारणद्रव्याणां प्रत्येकमनेकव्यक्तिकत्वं सिद्धम्। अन्यथा लघुत्वादीनां साधर्म्यत्वानुपपत्तेः, समानानां धर्मस्यैव साधर्म्यत्वात्। न च कार्यसत्त्वादीनामनेकतया लघुत्वादिकं साधर्म्यं स्यादिति वाच्यम्; त्रिगुणात्मकत्वेन घटादीनामपि कार्यसत्त्वादिरूपतया लघुत्वादीनां सत्त्वादिसाधर्म्यत्वानुपपत्तेः। तस्मात् कारणगुणानामेवात्र साधर्म्यादिकमुच्यत इति। सत्त्वादीनां लघुत्वादिकं चोक्तं कारिकया—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥ (सां० का० १३)

इति। अर्थतः पुरुषार्थनिमित्तात्। नन्वेवं मूलकारणस्य परिच्छिन्नासङ्ख्यव्यक्तिकत्वे वैशेषिकमतादत्र को विशेष इति चेत्; कारणद्रव्यस्य शब्दस्पर्शादिराहित्यमेव—

शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम्।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥ ( वि० पु० १।२।२० )

इति विष्णुपुराणादिभ्यः। एतच्च पातञ्जलेऽस्माभिः प्रपञ्चितम् ॥
( यो० वा० २।१८-१९ ) ॥ १२८ ॥

[ भा० सा० ] किं च तेषामेकैकव्यक्तित्वे वृद्धिह्रासाद्यनुपपत्तिः, परिच्छिन्नत्वे च तत्समूहरूपस्य प्रधानस्य परिच्छिन्नत्वापत्त्यैकदाऽसंख्यब्रह्माण्डाद्युत्पत्तिः श्रुत्युक्तानुपपन्ना, अतोऽसंख्यत्वेऽपि तेषां त्रित्वोपपादनाय विवेकार्थं च साधर्म्यवैधर्म्ये आह—लघ्वादीति। लघ्वादीति भावप्रधानम्। लघुत्वप्रकाशकधर्मैः सर्वसत्त्वव्यक्तीनां साधर्म्यम्। रजस्तमोभ्यां च वैधर्म्यम्। एवं च पृथिवीव्यक्तीनां पृथिवीत्वेनेव सत्त्वव्यक्तीनामेकजातीयतयैकता सजातीयोपष्टम्भादिना वृद्धिह्रासादिकं च युक्तम्। लाघवं कार्योद्गमनहेतुर्धर्मः। येनाग्नेरूर्ध्वज्वलनं, वायोस्तिर्यग्गतिः, करणानां वृत्तिपटुत्वम्। चञ्चलत्वोपष्टम्भकत्वाभ्यां सर्वरजोव्यक्तीनां साधर्म्यम्, सत्त्वतमोभ्यां च वैधर्म्यम्। स्वस्वकार्ये सत्त्वतमसोरुत्साहकरत्वमुपष्टम्भकत्वम्।

एवं च रजसः प्रवर्तकत्वम्, गुरुत्वावरकत्वाभ्यां सर्वतमोव्यक्तीनां साधर्म्यम्, रजस्तमोभ्यां वैधर्म्यम्। अनेन हि सत्त्वादीनामनेकव्यक्तिकत्वमुक्तं स्पष्टमेव, अन्यथोक्तानां साधर्म्यत्वानुपपत्तिः।

न च कार्यसत्त्वादीनामेकत्वात्तेषामिदं साधर्म्यम्, त्रिगुणात्मकत्वेन घटादीनामपि कार्यत्वादिरूपतया तेषां सत्त्वादिमात्रसाधर्म्यत्वानुपपत्तेः। तस्मात्कारणभूतानामेव सत्त्वादीनामिदं साधर्म्यमुक्तम्। किं च सत्त्वादीनामेकैकद्रव्यत्वे एकदानेकब्रह्माण्डसृष्टिश्रवणात् तेषां विभुत्वं वाच्यम्, एवं च विभूनां स्वतः संयोगवैचित्र्याभावेन कार्याणामनन्तवैचित्र्यं न स्यात्। तस्मात् प्रत्येकमसंख्यव्यक्तिकानि तानि। त्रित्ववचनं तु सत्त्वत्वादिविभाजकोपाधित्रयेण, तानि च यथाभोगमणुमध्यादिपरिमाणानि। अत एव रजःसत्त्वस्वभावोक्तिः। आकाशकारणानां च विभुत्वम्।

न चैवं प्रकृतेरणुसत्त्वाद्यनेकव्यक्तिरूपत्वेऽपरिच्छिन्नत्वैकत्वाक्रियत्वसिद्धान्तहानिरिति वाच्यम्; कारणद्रव्यत्वरूपप्रकृतित्वेनापरिच्छिन्नत्ववचनात्। गन्धत्वेन गन्धानां पृथिवीत्वव्यापकत्ववत् पुरुषभेदेन सर्गभेदेन च भेदाभावेनैकत्ववचनात्। अध्यवसायाभिमानादिक्रियाराहित्येनाक्रियत्ववचनात्। अन्यथा सृष्टिहेतुतया श्रुत्याद्युक्तप्रकृतिक्षोभस्यानुपपत्तेः। अपरिमाणानि वा रूपादिवदिति दिक्।

न च परस्परविरुद्धगुणानामेषामेककार्यजनकता युक्ता, परस्परविरुद्धैर्वातपित्तश्लेष्मादिभिः शरीरधारणैककार्यकारणवदुपपत्तेः। न च मूलकारणस्यासंख्यव्यक्तिकत्वे वैशेषिकमतादविशेषः, कारणद्रव्ये शब्दस्पर्शादिराहित्यरूपविशेषसत्त्वात्, पृथिवीत्वाद्यभावाच्च।

शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम्।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥ ( वि. पु. १।२।२० )

इति विष्णुपुराणात्।

अन्ये तु सुखदुःखमोहात्मकाः सत्त्वादयो गुणाः। गुणत्वं च परार्थत्वात्। प्रकाशकस्य सत्त्वस्य प्रवर्तकं रजः, तच्च गुरुणा तमसा नियमितं क्वचिदेव प्रवर्तयति। एषामन्यतमेनोद्भूतेन परमभिभूयते, इतीतरेतराभिभावनमेषां क्रिया, परस्परापेक्षक्रियत्वेन च परस्पराश्रयत्वमेषाम्। तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति। एवं रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः। तथा तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोः। एषामन्यतमोऽन्यतममपेक्ष्य परिणामं जनयतीत्यतोऽन्योन्यजननवृत्तित्वमेषाम्। अन्योन्यसहचरत्वेनान्योन्यमिथुनवृत्तित्वमेषामविभागवर्तित्वम्। तदुक्तम्—

अन्योन्यस्यैव मिथुनाः सर्वे सर्वत्र गामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते॥
नैषामादिः संप्रयोगो वियोगो वोपलभ्यते॥ (द्र०दे०भा० ३।८) इति।

तस्मादेषां लघुत्वादिधर्मैर्वैधर्म्यं साधर्म्यं चान्योन्याभिभवजननमिथुनवृत्तित्वेनेत्याहुः, तत्सूत्रस्वरसविरुद्धम्॥ १२८॥

## उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत्॥ १२९॥

[ वृ० ] हेतुमदित्यादिना महदादीनां कार्यत्वमुक्तम्, तत्र प्रमाणमाह—उभया०। प्रकृतिपुरुषयोर्नित्ययोरन्यत्वात्। शेषं व्यक्तम्॥ १२९॥

[ वृ० सा० ] महदादीनां कार्यत्वे प्रमाणमाह—उभयेति। महदादिपञ्चभूतान्तं तावन्न पुरुषो भोग्यत्वात्, नापि प्रकृतिर्मोक्षान्यथानुपपत्त्या विनाशित्वात्। अतः प्रकृतिपुरुषभिन्नं तद्भिन्नत्वाच्च कार्यं घटादिवत्॥ १२९॥

[ भा० ] ननु महदादीनां स्वरूपतः सिद्धावपि तेषां प्रत्यक्षेणोत्पत्त्यदर्शनात् कार्यत्वे नास्ति प्रमाणं येन तेषां हेतुमत्त्वं साधर्म्यं स्यात्, तत्राह—उभया०।

महदादिपञ्चभूतान्तं विवादास्पदं तावन्न पुरुषः, भोग्यत्वात्। नापि प्रकृतिर्मोक्षान्यथानुपपत्त्या विनाशित्वात्। अतः प्रकृतिपुरुषभिन्नं तत्। भिन्नत्वाच्च कार्यं घटादिवदित्यर्थः॥ १२९॥

[ भा० सा० ] महदादीनामनित्यत्वं साधयति—उभयेति। महदादि पञ्चमहाभूतान्तं विवादास्पदं तावन्न पुरुषो भोग्यत्वात्, नापि प्रकृतिः, मोक्षान्यथानुपपत्त्या विनाशित्वात्। अतः प्रकृतिपुरुषोभयभिन्नत्वाद् घटादिवत्कार्यमित्यर्थः॥ १२९॥

## परिमाणात्॥ १३०॥

[ वृ० ] हेत्वन्तरमाह—परि०। परिमितत्वात्॥ १३०॥

[ वृ० सा० ] हेत्वन्तरमाह—परीति। परिच्छिन्नत्वादित्यर्थः॥ १३०॥

[ भा० ] ननु विकारशक्तिदाहादिनैव मोक्षाद्युपपत्तेर्विनाशित्वमपि तेषामसिद्ध-मित्याशङ्कायां कार्यत्वे हेत्वन्तराण्याह—परि० ।

परिच्छिन्नत्वाद् दैशिकाभावप्रतियोगितावच्छेदकजातिमत्त्वादित्यर्थः । तेन गुण-व्यक्तीनां कियतीनां परिच्छिन्नत्वेऽपि न तत्र व्यभिचारः ॥ १३० ॥

[ भा० सा० ] ननु विकारशक्तिदाहादिनैव मोक्षाद्युपपत्तेर्विनाशित्वमसिद्धमित्यरुचे-राह—परीति । परिच्छिन्नत्वाद् दैशिकाभावप्रतियोगितावच्छेदकजातिमत्त्वादित्यर्थः ॥ १३० ॥

## समन्वयात् ॥ १३१ ॥

[ वृ० ] अपरां युक्तिमाह—समन्व० । प्रधानेन सह सम्यगन्वयात् प्रधानगुणानां सर्वपदार्थेषु दर्शनात् ॥ १३१ ॥

[ वृ० सा० ] समन्वयादिति । किं चोपवासादिना क्षीणं बुद्ध्यादि तत्त्वमन्नादिभिः समन्वयेन समनुगमेन पुनरुपचीयते, अतः समन्वयात् कार्यत्वमुन्नीयते, नित्यस्य हि निरवयवतया अवयवानुप्रवेशरूपः समन्वयो नोपपद्यत इति । समन्वये च प्रमाणं श्रुतिरभियुक्तैरुदाहृता—"मनः प्रकृत्य एवं ते सोम्य षोडशानां कलानामेका कलातिशिष्टाभूत् सान्नेनोपसमाहिता प्राज्वालीत् ।" ( छा० उ० ६।७।६ ) इति ॥ १३१ ॥

[भा०] किञ्च—समन्वयात् । उपवासादिना क्षीणं हि बुद्ध्यादितत्त्वमन्नादिभिः सम-न्वयेन समनुगतेन पुनरुपचीयते । अतः समन्वयात् कार्यत्वमुन्नीयत इत्यर्थः । नित्यस्य हि निरवयवतयाऽवयवानुप्रवेशरूपः समन्वयो न घटत इति । समन्वये च श्रुतिः प्रमाणं मनः प्रकृत्य—"एवं ते सोम्य षोडशानां कलानामेका कलाऽतिशिष्टा भूत् । साऽन्नेनोप-समाहिता प्राज्वालीत्" ( छा० उ० ६।७।६ ) इति । योगसूत्रं च—"जात्यन्तरपरिणामः प्रकृत्यापूराद्" ( ४।२ ) इति ॥ १३१ ॥

[ भा० सा० ] समन्वयादिति । उपवासादिना क्षीणं हि बुद्ध्यादितत्त्वमन्नादि-समन्वयेन तदनुगमेन पुनरुपचीयते । नित्यत्वे निरवयवत्वे च नावयवानुप्रवेशरूपः समन्वयः संभवतीति कार्यत्वमुन्नीयत इत्यर्थः । तथा च मनः प्रकृत्य श्रुतिः—"एवं ते सोम्य षोडशकला-नामेककलातिशिष्टाभूत्सान्नेनोपसमाहिता प्राज्वालीदिति" ( छा० उ० ६।७।६ ) ॥ १३१ ॥

## शक्तितश्चेति ॥ १३२ ॥

[ वृ० ] एतदेवाह—कारणशक्त्या कार्यं प्रवर्तत इति महदादयः क्षीणाः सन्तः प्रकृत्यनुपूरणेन कार्यं जनयन्ति, अन्यथा प्रवृत्तिशीलत्वात् सर्वदा कार्यं जनयेयुः ॥१३२॥

[ वृ० सा० ] किं च—शक्तीति । करणतश्चेत्यर्थः । पुरुषस्य यत्करणं चक्षुरादि तत् कार्यमपि महत्तत्त्वमपि कार्यमन्येषां तु सुतरां कार्यत्वमिति । चशब्दः, इतिशब्दश्च हेतुवर्ग-समाप्त्यर्थः ॥ १३२ ॥

[ भा० ] किञ्च—शक्ति० । करणतश्चेत्यर्थः । पुरुषस्य यत् करणं तत् कार्यं चक्षुरादिवदिति भावः । पुरुषे साक्षाद्विषयार्पकत्वं प्रकृतेर्नास्तीति प्रकृतिर्न करणमिति । अतो महत्तत्त्वस्य करणतया कार्यत्वे सिद्धे सुतरामन्येषामपि कार्यत्वम् । इतिशब्दश्च हेतुवर्गसमाप्तिसूचनार्थः ॥ १३२ ॥

[ भा० सा० ] किं च—शक्तीति । इतिर्हेतुवर्गसमाप्तौ करणतश्चेत्यर्थः । पुरुषस्य यत्करणं तत्कार्यं चक्षुरादिवत् । पुरुषे साक्षाद्विषयार्पकत्वाभावात्प्रकृतेर्न करणत्वम् । एवं च महत्तत्त्वस्य करणतया कार्यत्वे सिद्धे सुतरामन्येषामपि कार्यत्वमिति भावः ॥ १३२ ॥

## तद्धाने प्रकृतिः पुरुषो वा ॥ १३३ ॥

[ वृ० ] व्यतिरेकमाह—तद्धाने० । कार्यमकार्यं चेति कोटिद्वयम् । कार्यताहाने प्रकृतौ पुरुषे वा महदादीनां प्रवेश इति ॥ १३३ ॥

[ वृ० सा० ] यदि च महदादिषु मध्ये किञ्चिदकार्यं स्वीक्रियते, तथापि तदेव प्रकृतिः पुरुषो वेति । सिद्धं नः समीहितम् । प्रकृतिपुरुषविवेक एवास्माकं तात्पर्यादित्याह—तद्धान इति । तद्धाने कार्यत्वहाने यदि परिणामी तदा प्रकृतिः, यद्यपरिणामी भोक्ता तदा पुरुषः ॥ १३३ ॥

[ भा० ] यदि च महदादिमध्ये किञ्चिदकार्यं स्वीक्रियते, तदापि तदेव प्रकृतिः पुरुषो वेति सिद्धं नः समीहितम् । प्रकृतिपुरुषौ प्रसाध्य परिणामित्वापरिणामित्वाभ्यां विवेक्तव्यावित्यत्रैवास्माकं तात्पर्यादित्याह—तद्धाने० ।

तद्धाने कार्यत्वहाने यदि परिणामी तदा प्रकृतिः । यदि वाऽपरिणामी भोक्ता तदा पुरुष इत्यर्थः ॥ १३३ ॥

[ भा० सा० ] किं च महदादिमध्ये यदि किंचिदकार्यं स्वीक्रियते, तदा तदेव प्रकृतिः पुरुषो वेत्याह—तदिति । कार्यत्वहाने यदि परिणामी तदा प्रकृतिः, यद्यपरिणामी तदा तदेव भोक्ता तदा पुरुष इत्यर्थः ॥ १३३ ॥

## तयोरन्यत्वे तुच्छत्वम् ॥ १३४ ॥

[ वृ० ] उभयकोटिविनिर्मुक्ता एव महदादयो भविष्यन्तीत्यत आह—तयोरन्यत्वे० । तयोः कार्याकार्ययोः, अन्यत्वे महदादीनां तुच्छरूपत्वम्-अभावरूपत्वम् ॥१३४॥

[ वृ० सा० ] नन्वकार्यमप्युभयभिन्नं स्यात्तत्राह—तयोरिति । अकार्यं हि कारणतया भोक्तृतया वा सिद्ध्यति नान्यथेत्यर्थः ॥ १३४ ॥

[ भा० ] ननु नित्यमप्युभयभिन्नं स्यात्, तत्राह—तयोरन्यत्वे० ।

अकार्यस्य प्रकृतिपुरुषभिन्नत्वे तुच्छत्वं शशशृङ्गादिवत् प्रमाणाभावात् । अकार्यं हि कारणतया वा भोक्तृतया वा सिद्ध्यति, नान्यथेत्यर्थः ॥ १३४ ॥

[ भा० सा० ] ननु नित्यमप्युभयभिन्नं स्यादत आह—तयोरिति। शशशृङ्गादिवत् प्रमाणाभावादित्यर्थः। अकार्यं हि कारणतया वा भोक्तृतया वा सिद्ध्यति नान्यथेत्यर्थः ॥१३४॥

## कार्यात् कारणानुमानं तत्साहित्यात् ॥ १३५ ॥

[ वृ० ] किमर्थं महदादयः कार्यत्वेन प्रकृतेर्लिङ्गम्, अविनाभावादेव लिङ्गं भविष्यन्तीत्यत्राह—कार्यात्०।

भवत्वेवं यत्र कारणरूपं कार्ये न दृश्यते, यथा चन्द्रोदयात् समुद्रवृद्ध्यनुमानम्। अत्र तु प्रधानरूपस्य महदादौ दर्शनात् कार्यात् कारणानुमानमेव, तत्साहित्यात् प्रकृतिरूपस्य महदादौ दर्शनात् ॥ १३५ ॥

[ वृ० सा० ] प्रकृत्यनुमानेऽनुक्तं विशेषमाह—कार्यादिति। तत्साहित्यात् कार्यसाहित्यात्, महदादिकं स्वोपहितत्रिगुणात्मकवस्तूपादानकम्, कार्यत्वात् शिलामध्यस्थप्रतिमादिवत् तैलादिवच्चेति कार्यविशिष्टतयैव कारणानुमानं न तु ताटस्थ्येन परेषामिवेति भावः ॥ १३५ ॥

[ भा० ] तदेवं महदादिषु कार्यत्वं प्रसाध्य साम्प्रतं तैः प्रकृत्यनुमानेऽनुक्तं विशेषमाह—कार्यात्०।

कार्यान्महत्तत्त्वादेर्लिङ्गात् सामान्यतोदृष्टं कारणानुमानं यदुक्तं तत् ताटस्थ्यनिवृत्तये तत्साहित्यात् कार्यसाहित्येनैव कर्तव्यम्। "सदेव सौम्येदमग्र आसीत्" ( छा० उ० ६।२।१ ), "तम एवेदमग्र आसीद्" ( मै० आ० ५।२ ) इत्यादि श्रुत्यनुसारात्। तद् यथा—महदादिकं स्वोपहितत्रिगुणात्मकवस्तूपादानकम्, कार्यत्वात्, शिलामध्यस्थप्रतिमावत्, तैलादिवच्चेत्यर्थः। अत्रानुकूलस्तर्कः प्रागेव ( सां० सू० १।६१-६५ भा० ) दर्शितः ॥ १३५ ॥

[ भा० सा० ] अथ प्रकृत्यनुमानेऽनुक्तं विशेषमाह—कार्यादिति। "सदेव सौम्येदमग्र आसीद्" ( छा० उ० ६।२।१ ) इति श्रुतेः महदादिकं स्वोपहितत्रिगुणात्मकवस्तूपादानकं कार्यत्वाद्, तिलमध्यस्थतैलवदित्यर्थः। एवं च कार्यसाहित्येनैव कारणानुमानं न तु ताटस्थ्येन परेषामिवेति भावः ॥ १३५ ॥

## अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३६ ॥

[ वृ० ] एवं चेन्महत्तत्त्वमेव जगत्कारणमस्तु, किं प्रधानेनेत्यत आह–अव्यक्तं०। त्रिगुणाल्लिङ्गात्—लयं गच्छतीति, महत्तत्त्वात् प्रधानमनुमातव्यम्। महत्तत्त्वञ्चाध्यवसायरूपं व्यक्तं विनाशि प्रत्यक्षसिद्धम्; तेन लिङ्ग्यनुमानम् ॥ १३६ ॥

[ वृ० सा० ] प्रकृतेः कार्याद्विवेकार्थं वैधर्म्यमाह—अव्यक्तमिति। अभिव्यक्ताव् त्रिगुणात् कार्याद् महत्तत्त्वादेरपि प्रधानमव्यक्तं सूक्ष्मं तदीयो गुणोऽपि सुखादिर्न साक्षात्क्रियते इति भावः ॥ १३६ ॥

[ भा० ] तस्याः प्रकृतेः कार्याद्वैधर्म्यं विवेकार्थमाह—अव्यक्तं० ।

अभिव्यक्तात् त्रिगुणान्महत्तत्त्वादपि मूलकारणमव्यक्तं सूक्ष्मम् । महत्तत्त्वस्य हि सुखादिर्गुणः साक्षात् क्रियते, प्रकृतेश्च गुणोऽपि न साक्षात् क्रियत इति प्रधानं परमाव्यक्तं, महत्तत्त्वं तु तदपेक्षया व्यक्तमित्यर्थः ॥ १३६ ॥

[ भा० सा० ] इदानीं प्रकृतेः कार्याद् वैधर्म्यं विवेकार्थमाह—अव्यक्तेति । अभिव्यक्तात् त्रिगुणान्महत्तत्त्वादपि मूलकारणमव्यक्तं सूक्ष्मम्, तद्गुणस्यासाक्षात्करणात् । महत्तत्त्वस्य हि सुखादिर्गुणः साक्षात्क्रियत इति भावः । तस्मात्प्रधानमव्यक्तं महत्तत्त्वं तु तदपेक्षया व्यक्तमिति तात्पर्यम् ॥ १३६ ॥

## तत्कार्यतस्तत्सिद्धेर्नापलापः ॥ १३७ ॥

[ वृ० ] तथाप्यन्यदेव कारणं भविष्यति, किं प्रकृत्येत्यत्राह—तत्कार्यं० । तत् कारणं कार्यमकार्यं वा ? कार्यत्वे तत्कारणस्यापि तथात्वे सति अनवस्था । मूलकार्यत्वे तदेव सेति । तत्कार्यत इति प्रकृतिकार्यतः प्रकृतिसिद्धेर्नापलापः ॥ १३७ ॥

[ वृ० सा० ] न च सूक्ष्मत्वात्तस्यापलाप एवोचित इत्याह—तत्कार्यत इति । स्पष्टम् ॥ १३७ ॥

[ भा० ] ननु परमसूक्ष्मं चेत् तर्हि तस्यापलाप एवोचित इत्याकाङ्क्षायां पूर्वोक्तं स्मारयति—तत्कार्यत० । सुगमम् ॥ १३७ ॥

[ भा० सा० ] ननु परमसूक्ष्मत्वेऽपलाप एवोचितोऽत आह—तदिति । स्पष्टम् ॥ १३७ ॥

## सामान्येन विवादाभावाद् धर्मवन्न तत्साधनम् ॥ १३८ ॥

[ वृ० ] भवतु प्रकृतिसिद्धिः, पुरुषसिद्धिस्तु न स्यादेव । न हि तस्य कार्यमस्तीत्यत आह—सामान्येन० । सामान्येन तावदात्मनि विवादो नास्ति । विशेषे हि विवादः—अनेकः, एकः, व्यापकः, अव्यापक इत्यादिः । यथा सर्वस्मिन् दर्शने धर्म इत्यविवादः, धर्मविशेषे हि विप्रतिपत्तिः । न तत्साधनं—नहि तत्र कार्यकारणभावः साधनम् । अन्यन्न् साधनं वक्ष्यामीत्यभिसन्धिः ॥ १३८ ॥

[ वृ० सा० ] एवं प्रकृत्यनुमानगता विशेषा विचारिताः, अतः परं पुरुषानुमानगतान् विशेषान् दर्शयति, आ अध्यायसमाप्तेः—सामान्येनेति । यत्र वस्तुनि सामान्यतो विवादो नास्ति न तस्य स्वरूपतः साधनमपेक्ष्यते धर्मस्येव । अयं भावः—चेतनापलापे जगदान्ध्यप्रसङ्गादिना भोक्तर्यहंपदार्थे न कस्यापि विवादस्तस्मात् पुरुषस्य देहादिव्यतिरेकनित्यत्वादिसिद्ध्यर्थमेव प्रमाणापेक्षा न स्वरूपसिद्ध्यर्थम्, तस्य सर्ववादिपामरसिद्धत्वात् । यथा धर्मसामान्ये न कस्यापि विवादः, बौद्धैरपि तप्तशिलारोहणादिषु धर्मत्वाभ्युपगमात् । किं तु विशेषसिद्ध्यर्थमेव प्रमाणापेक्षेति ॥ १३८ ॥

[ भा० ] प्रकृत्यनुमानगता विशेषा विस्तरतो विचारिताः । इतः परमध्यायसमाप्तिपर्यन्तं पुरुषानुमानगता विशेषा विचार्याः, तत्र कञ्चनादौ विशेषमाह—सामान्येन०।

यत्र वस्तुनि सामान्यतो विवादो नास्ति न तस्य स्वरूपतः साधनमपेक्ष्यते, धर्मस्येवेत्यर्थः। अयं भावः—यथा प्रकृतेः सामान्येनापि साधनमपेक्षितं धर्मिण्यपि विवादात्, नैवं पुरुषस्य साधनमपेक्षितम्। चेतनापलापे जगदान्ध्यप्रसङ्गतो भोक्तर्यहं-पदार्थे सामान्यतो बौद्धानामप्यविवादाद् धर्म इव। धर्मो हि सामान्यतो बौद्धैरपि स्वीक्रियते तप्तशिलारोहणादिषु धर्मत्वाभ्युपगमात्। अतः पुरुषे विवेकनित्यत्वादिसाधन-मात्रमनुमानं कार्यमिति॥ १३८॥

[ भा० सा० ] इदानीं पुरुषानुमाने विशेषमाह—सामान्येनेति। यत्र वस्तुनि सामान्यतो विवादो नास्ति, न तस्य स्वरूपतः साधनमपेक्षितं धर्मस्येवेत्यर्थः। बौद्धैरपि तप्तशिलारोहणादेर्धर्मस्येव। चेतनापलापे जगदान्ध्यप्रसङ्गभिया भोक्तर्यहंपदार्थे तेषामप्यविवादान्न विवादास्पदायाः प्रकृतेरिव पुरुषस्य धर्मिणः साधनमपेक्षितम्। किं तु पुरुषे विवेकफलक-नित्यत्वादिसाधनमात्रमनुमानेन कार्यमिति भावः॥ १३८॥

## शरीरादिव्यतिरिक्तः पुमान्॥ १३९॥

[ वृ० ] देहेन्द्रियादय एवात्मानः, किमन्यकल्पनयेत्यत आह—शरीरादि०। व्यक्तम्॥ १३९॥

[ वृ० सा० ] तथैवाह—शरीरेति। पुमान् द्रष्टा शरीरादिव्यतिरिक्त इति साध्यम्॥ १३९॥

[भा०] "संहतपरार्थत्वात् पुरुषस्य" (१।६६) इत्युक्तसूत्रेणापि विवेकानुमान-मेवाभिप्रेतम्। न तु तत्र पुरुषस्य सर्वथैवाप्रत्यक्षत्वमभिप्रेतमिति। तत्र चादौ विवेक-प्रतिज्ञासूत्रम्—शरीरादि०। शरीरादिप्रकृत्यन्तं यच्चतुर्विंशतितत्त्वात्मकं वस्तु ततोऽति-रिक्त पुमान् भोक्तेत्यर्थः। भोक्तृत्वं च द्रष्टृत्वमिति॥ १३९॥

[भा० सा०] "संहतपरार्थत्वात् पुरुषस्य" (१।६६) इत्युक्तसूत्रेऽपि विवेकानुमानमेवाभि-प्रेतमित्युक्तम्, तत्रादौ विवेकं प्रतिजानीते—शरीरादीति। शरीरादिप्रकृत्यन्ततत्त्वेभ्योऽतिरिक्तः पुमान् भोक्तेत्यर्थः। भोक्तृत्वं च द्रष्टृत्वम्॥ १३९॥

## संहतपरार्थत्वात्॥ १४०॥

[ वृ० ] अत्र न्यायमाह—संहत०। यत् संहतं तदसंहतपरार्थम्। संहतपरार्थत्वेऽ-नवस्था स्यात्। संहतत्वञ्च गुणानामन्योन्यमिथुनभावेन कार्यकरणम्। अथवा द्रवकठिनतादिमत्त्वं संहतत्वम्। तच्च प्रकृत्यादौ तिरोभूतमस्ति, अन्यथा तत्कार्येषु संहतताया अदर्शनप्रसङ्गात्॥ १४०॥

[ वृ० सा० ] अत्र हेतूनाह सूत्रैः—संहत इति। उक्तार्थमेतत्सूत्रमुक्तस्यापि हेतोर्हेतु-वर्गसंकलनार्थः पुनरुपन्यासः॥ १४०॥

[भा०] हेतूनाह सूत्रैः—संहत०। यतः सर्वं संहतं प्रकृत्यादिकं परार्थं भवति शय्यादिवत्। अतोऽसंहतः संहतदेहादिभ्यः परः पुरुषः सिद्ध्यतीत्यर्थः। अयं च हेतुः

"संहतपरार्थत्वात् पुरुषस्य" ( सां० सू० १।६६ ) इत्यत्र व्याख्यातः। उक्तस्यापि हेतोः पुनरुपन्यासो हेतुवर्गसङ्कलनार्थः ॥१४०॥

[ भा० सा० ] तत्र हेतूनाह—संहतेति। संहतानां प्रकृत्यादिशरीरान्तानां पदार्थत्वादित्यर्थः। व्याख्यातमिदं प्राक् ॥ १४० ॥

## त्रिगुणादिविपर्ययात् ॥ १४१ ॥

[ वृ० ] एतदेव स्पष्टयति—त्रिगुणादि०। पुरुषे त्रिगुणादिविपर्ययात्। तददर्शनात्। आदिशब्दादन्येषां प्रकृतिधर्माणामप्यदर्शनादिति ॥ १४१ ॥

[ वृ० सा० ] त्रिगुणादीति। सुखदुःखमोहात्मकत्वादिविपर्ययादित्यर्थः। आदिशब्दादचेतनत्वादिग्रहणम् ॥ १४१ ॥

[भा०] किञ्च। त्रिगुणादि०। सुखदुःखमोहात्मकत्वादिवैपरीत्यादित्यर्थः। शरीरादीनां हि यः सुखाद्यात्मकत्वं धर्मः स सुखादिभोक्तरि न सम्भवति। स्वयं सुखादिग्रहणे कर्मकर्तृविरोधात्। धर्मिपुरस्कारेणैव सुखाद्यनुभवादिति।

ननु बुद्धिवृत्तिप्रतिबिम्बितं स्वसुखादिकं पुरुषेण गृह्यतां स्ववदिति चेन्न; एवं सति बुद्धेरेव सुखादिकल्पनौचित्यात्, पुरुषगतसुखादेर्बुद्धौ प्रतिबिम्बकल्पने गौरवात्। अहं सुखी, दुःखी, मूढ इत्यादिप्रत्ययास्तु न पुरुषे सुखादिसाधकाः, तत्स्वामित्वेनाप्युपपत्तेः। बुद्धेः सुखादिमत्त्वेनाप्युपपत्तेश्च। लौकिक्यां ह्यहंबुद्धावश्यं बुद्धिरपि विषयो मिथ्याज्ञानवासनादिरूपदोषानुवृत्तेस्तत्प्रतिबिम्बकल्पनायां च गौरवादिति। आदिशब्देन चात्र "त्रिगुणमविवेकि विषयः" ( सां० का० ११ ) इति कारिकोक्ताऽविवेकित्वादयो ग्राह्याः। तथा रूपादयः शरीरादिधर्मा ग्राह्याः ॥१४१॥

[ भा० सा० ] किं च—त्रिगुणादीति। सुखदुःखमोहात्मकत्वादिवैपरीत्यादित्यर्थः। सुखादिभोक्तरि कर्तृकर्मविरोधेन सुखाद्यात्मकत्वासंभवादित्यर्थः। धर्मिपुरस्कारेणैव सुखाद्यनुभवादिति भावः। न च बुद्धिवृत्तिप्रतिबिम्बितस्वसुखादेः पुरुषेण ग्रहणमस्तु, स्ववदिति वाच्यम्; बुद्धेरेव सुखादिकल्पनयोपपत्तौ प्रतिबिम्बकल्पने गौरवात्। अहं सुखीत्यादिप्रत्ययास्तु तत्स्वामित्वेनाप्युपपन्नाः, किं च मिथ्याज्ञानवासनारूपदोषेणाहंबुद्धौ बुद्धेरपि विषयतया बुद्धेः सुखादिमत्त्वेनाप्युपपन्नाः। आदिना अविवेकित्वाभोग्यत्व-रूपादिरहितत्वादयः ॥ १४१ ॥

## अधिष्ठानाच्चेति ॥ १४२ ॥

[ वृ० ] न्यायान्तरमाह—अधि०। चेतनो ह्यधिष्ठाता भवति, प्रकृतिश्च जडेत्यर्थः ॥ १४२ ॥

[ वृ० सा० ] अधीति। अधिष्ठातृत्वाच्चेत्यर्थः। संयोगविशेषेण परिणामहेतुत्वमधिष्ठातृत्वम्। संयोगश्च भिन्नयोरेवेति भावः। इति हेतुसमाप्तौ ॥ १४२ ॥

[भा०] किञ्च—अधि०। भोक्तुरधिष्ठातृत्वाच्चाधिष्ठेयेभ्यः प्रकृत्यन्तेभ्योऽतिरिक्ततेत्यर्थः। अधिष्ठानं हि भोक्तुः संयोगः, स च प्रकृत्यादीनां भोगहेतुपरिणामेषु कारणम्।

"भोक्तुरधिष्ठानाद् भोगायतननिर्माणम्" (सां० सू० ५।११४) इति वक्ष्यमाणसूत्रात्। संयोगश्च भेदे सत्येव भवतीति भावः। इतिशब्दो हेतुसमाप्तौ ॥१४२॥

[ भा० सा० ] किंच—अधिष्ठानादिति। इतिर्हेतुसमाप्तौ। भोक्तुरधिष्ठातृत्वादधिष्ठेयेभ्यः प्रकृत्यादिभ्योऽतिरिक्ततेत्यर्थः। अधिष्ठानं भोक्तुः संयोगः, स च भेदे सत्येवेति भावः। तत्संयोग एव प्रकृत्यादीनां भोगहेतुपरिणामेषु कारणमिति बोध्यम् ॥ १४२ ॥

## भोक्तृभावात् ॥ १४३ ॥

[ वृ० ] युक्त्यन्तरमाह—भोक्तृ०। भोग्या प्रकृतिः, भोक्ता पुरुषः। यद्यपि कूटस्थत्वादात्मनो भोक्तृत्वं नास्ति, तथापि बुद्धिच्छायापत्त्या एव भोक्तृत्वोक्तिरिति ॥ १४३ ॥

[ वृ० सा० ] उक्तानुमानेऽनुकूलं तर्कं प्रदर्शयति सूत्राभ्याम्—भोक्त्रिति। यदि शरीरादिस्वरूप एव भोक्ता स्याद्भोक्तृत्वमेव व्याहन्येत, स्वस्य साक्षात् स्वभोक्तृत्वानुपपत्तेः ॥ १४३ ॥

[भा०] उक्तानुमानेऽनुकूलतर्कं प्रदर्शयति सूत्राभ्याम्। भोक्तृ०। यदि हि शरीरादिस्वरूप एव भोक्ता स्यात् तदा भोक्तृत्वमेव व्याहन्येत, कर्मकर्तृविरोधात्। स्वस्य साक्षात् स्वभोक्तृत्वानुपपत्तेरित्यर्थः। अनुपपत्तिश्च पूर्वमेव (१।९९ भाष्ये) व्याख्याता। अत्र सूत्रे पुरुषस्य भोगः स्वीकृत इति स्मर्तव्यम्। अपरिणामिनश्च पुरुषस्य भोगः "चिदवसानो भोगः" ( सां० सू० १।१०४ ) इत्यत्र व्याख्यातः ॥१४३॥

[ भा० सा० ] उक्तानुमानेऽनुकूलतर्कमाह सूत्राभ्याम्—भोक्त्रिति। तदभेदे हि कर्तृकर्मविरोधात् साक्षात् स्वस्य स्वभोक्तृत्वानुपपत्तेरित्यर्थः। पुरुषस्य भोगश्चिदवसानतारूप इत्युक्तम् ॥ १४३ ॥

## कैवल्यार्थं प्रवृत्तेः ॥ १४४ ॥

[ वृ० ] मोक्षार्थं प्रवृत्तिः, सा किमात्मनः प्रकृतेर्वा ? इत्यत आह—कैवल्या०। त्रिगुणस्वभावत्वात् प्रकृतेर्न स्वभावप्रच्यवः, अनित्यत्वप्रसङ्गाच्च। यस्यौपाधिका एव गुणास्तस्यैव कैवल्यं सम्भवति। स चात्मेति ॥ १४४ ॥

[ वृ० सा० ] कैवल्यार्थमिति—किं च शरीरादिकमेव चेत् भोक्तृ स्यात्तदा भोक्तुः कैवल्यार्थं दुःखात्यन्तोच्छेदार्थं कस्यापि प्रवृत्तिर्नोपपद्येत, शरीरादीनां विनाशित्वात्। प्रकृतेश्च धर्मिग्राहकमानेन दुःखादिस्वभावत्वात् कैवल्यानुपपत्तेः ॥ १४४ ॥

[भा०] किञ्च—कैवल्यार्थं०। शरीरादिकमेव चेद्भोक्ता स्यात् तदा भोक्तुः कैवल्यार्थं दुःखात्यन्तोच्छेदार्थं कस्यापि प्रवृत्तिर्नोपपद्येत। शरीरादीनां विनाशित्वात्, प्रकृतेश्च धर्मिग्राहकमानेन दुःखस्वाभाव्यसिद्ध्या कैवल्यासम्भवात्। न हि स्वभावस्यात्यन्तोच्छेदो घटत इत्यर्थः। अत्र "कैवल्यार्थं प्रकृतेः" इति सूत्रपाठः प्रामादिकत्वादुपेक्षणीयः।

सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ ( सां० का० १७ )

इति कारिकातः कैवल्यार्थं प्रवृत्तेश्चेति पाठात्, अर्थासङ्गतेश्चेति ॥१४४॥

[ भा० सा० ] किं च—कैवल्येति । शरीरादीनां भोक्तृत्वेन तेषां विनाशित्वात् प्रकृतेश्च धर्मिग्राहकमानेन दुःखस्वभावत्वेन कैवल्यासंभवाद् दुःखात्यन्तोच्छेदरूपकैवल्यार्थं कस्यापि प्रवृत्तिर्न स्यादित्यर्थः । स्वभावस्यात्यन्तदुरुच्छेद्यत्वादिति भावः ॥ १४४ ॥

## जडप्रकाशायोगात् प्रकाशः ॥ १४५ ॥

[ वृ० ] स किंरूप इत्यत आह—जड० । जडो न प्रकाशत इति सिद्धम् । यद्यात्मापि जडः स्यात्, तस्याप्यन्येन प्रकाशेन भवितव्यम् । लाघवाच्चात्मैव प्रकाशरूपोऽस्तु । श्रुतिश्च "येनेदं सर्वं विजानाति तत् केन विजानीयात्, विज्ञातारमरे केन विजानीयात्" ( बृ० उ० २।४।१४ ) इति ॥ १४५ ॥

[ वृ० सा० ] किं च—जडेति । लोके जडस्याप्रकाशस्य लोष्टादेः प्रकाशोत्पत्त्यदर्शनेन सूर्यादिवत्प्रकाशरूप एव पुरुषः । स्मर्यते हि—

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥ ( कू० पु० २।२।११ ) इति ॥१४५॥

[भा०] चतुर्विंशतितत्त्वातिरिक्ततया पुरुषः साधितः, इदानीं पुरुषगतो विशेषो विवेकस्फुटीकरणायानुमीयते— जडप्रकाशा० ।

वैशेषिका आहुः—प्रागप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगाज्ज्ञानाख्यः प्रकाशो जायत इति, तन्न; लोके जडस्याप्रकाशस्य लोष्टादेः प्रकाशोत्पत्त्यदर्शनेन तदयोगात् । अतः सूर्यादिवत् प्रकाशस्वरूप एव पुरुष इत्यर्थः । तथा च स्मृतिः—

यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते ।
तद्वदैक्यं न शंसध्वं प्रपञ्चपरमात्मनोः ॥ ( कू० पु० २।२।१० ) इति,

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥ ( कू० पु० २।२।११ )

इति च । प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिः, अनुगतव्यवहारादिति ॥१४५॥

[ भा० सा० ] अथ विवेकस्फुटीकरणाय पुरुषगतं विशेषमनुमिमीते—जडेति । आत्मा जडस्तत्र मनःसंयोगाज्ज्ञानाख्यप्रकाशोत्पत्तिरिति तार्किकमतं न युक्तम्, जडे तमोरूपे लोष्टादौ प्रकाशोत्पत्त्यदर्शनेन तदयोगात् । अतः सूर्यादिवत्प्रकाशस्वरूप एव पुरुष इत्यर्थः । प्रकाशद्वयकल्पने गौरवमिति भावः । प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वखण्डोपाधिः; अनुगतव्यवहारात् ॥ १४५ ॥

## निर्गुणत्वाद् न चिद्धर्मा ॥ १४६ ॥

[ वृ० ] जडोऽप्यात्माऽस्तु चिद्धर्मा, तेन जगत् प्रकाशयति, न तु स चिद्रूप इत्यत्राह—निर्गुण० । यद्यात्मनो धर्मयोगः स्यात्, तर्हि परिणामित्वमपि स्यात् । ततश्चानिर्मोक्ष इति ॥ १४६ ॥

[वृ० सा०] ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मिधर्मभावोऽस्तु, तत्राह—निर्गुणेति। चिद्धर्मा प्रकाशधर्मा न, किन्तु प्रकाश एव, कुतः ? निर्गुणत्वाद् गुणरहितत्वात् । प्रतीयमानास्त्विच्छादयो बुद्धेरेवेति भावः । किञ्च पुरुषस्य प्रकाशरूपस्य सम्बन्धमात्रेण सर्वव्यवहारोपपत्तौ प्रकाशरूप-धर्मकल्पनायां गौरवमपि, तेजसस्तु प्रकाशाख्यरूपविशेषाग्रहेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाश-तेजसोर्भेदः सिद्धयति । आत्मनस्तु ज्ञानाख्यप्रकाशाग्रहकाले ग्रहणं नास्तीत्यतो धर्मिधर्मभावशून्यं प्रकाशरूपमेवात्मद्रव्यं कल्प्यते । तथा च स्मृतिः—

ज्ञानं नैवात्मनो धर्मो न गुणो वा कथंचन ।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः ॥ (सौ० पु० ११।२६) इति ॥ १४६ ॥

[भा०] ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावोऽस्ति न वा, तत्राह—निर्गुण० । सुगमम् । पुरुषस्य प्रकाशरूपत्वे सिद्धे तत्सम्बन्धमात्रेणान्यव्यवहारोपपत्तौ प्रकाशात्मक-धर्मकल्पनागौरवमित्यपि वोद्धव्यम्। तेजसश्च प्रकाशाख्यरूपविशेषग्रहेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाश-तेजसोर्भेदः सिद्धयति । आत्मनस्तु ज्ञानाख्यप्रकाशाग्रहकाले ग्रहणं नास्ती-त्यतो लाघवाद्धर्मधर्मिभावशून्यं प्रकाशरूपमेवात्मद्रव्यं कल्प्यते । न च गुणत्वम्, संयोगा-दिमत्त्वात्, अनाश्रितत्वाच्चेति । तथा च स्मर्यते—

ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन ।
ज्ञानस्वरूप एवात्मा नित्यः पूर्णः सदा शिवः ॥ (सौ० पु० ११।२६) इति।

ननु निर्गुणत्वे एव का युक्तिरिति चेत्, उच्यते; पुरुषस्येच्छाद्यास्तावन्नित्या न सम्भवन्ति, जन्यताप्रत्यक्षात् । जन्यगुणाङ्गीकारे परिणामित्वापत्तिः । तथा चोभयो-रेव प्रकृतिपुरुषयोः परिणामहेतुत्वकल्पने गौरवम् । आन्ध्यपरिणामेन कदाचिदज्ञत्वस्या-पत्त्या ज्ञानेच्छादिगोचरसंशयापत्तिश्च । तथा जडप्रकाशायोगस्योक्तत्वादपि न नित्यस्या-नित्यज्ञानसम्भव इति । इच्छादिकमन्वयव्यतिरेकाभ्यां मनस्येव लाघवात् सिद्धयति, मनःसंयोगस्यात्मनश्चोभयोस्तद्धेतुत्वे गौरवात् । गुणशब्दश्च विशेषगुणवाचीत्युक्तमेव । अत आत्मा निर्गुणः ।

अपि च ये तार्किका आत्मनः कर्तृत्वमिच्छन्ति तेषां मोक्षानुपपत्तिः । अहं कर्तेति बुद्धेरेव गीतादिष्वदृष्टोत्पत्तिहेतुतयोक्तत्वात् । तस्याश्च तन्मते मिथ्याज्ञानत्वाभावेन तत्त्वज्ञाननिवर्त्यत्वासम्भवात् । अतः श्रुत्युक्तमोक्षानुपपत्त्यात्मनोऽकर्तृत्वमस्माभिरिष्यते । अकर्तृत्वाच्चादृष्टसुखाद्यभावः । ततश्च मनसः कृत्यादिहेतुत्वे कल्पनीये लाघवादन्त-र्दृश्यगुणत्वावच्छेदेनैतत् कल्प्यते । अत आत्मा निर्गुण इति । यथोक्तस्य च परमसूक्ष्म-स्यात्मनः स्वरूपं वासिष्ठे करामलकवत् प्रोक्तम्, विविच्य प्रतिपादितम्, यथा—

असम्भवति सर्वत्र दिग्भूम्याकाशरूपिणि ।
प्रकाश्ये यादृशं रूपं प्रकाशस्यामलं भवेत् ॥
त्रिजगत् त्वमहं चेति दृश्येऽसत्तामुपागते ।
द्रष्टुः स्यात् केवलीभावस्तादृशो विमलात्मनः ॥
( यो० वा० ३।४।५५-५६ ) इति ॥१४६॥

[ भा० सा० ] प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभाव इत्याह—निर्गुणत्वादिति । तेजसः प्रकाशत्वग्रहेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाशतेजसोर्भेदसिद्धावप्यात्मनो ज्ञानाख्य-प्रकाशग्रहकाले ग्रहणाभावेन लाघवाच्च तत्सरूपमेवात्मद्रव्यं कल्प्यते, न तु तस्य गुरुत्वम्; संयोगादिमत्त्वादनाश्रितत्वाच्च । गुणशब्देनात्र विशेषगुणः । तद्राहित्ये युक्तिस्तूच्यते—पुरुष-स्येच्छादि न नित्यम्, जन्यताप्रत्यक्षात् । जन्यगुणाङ्गीकारे परिणामित्वापत्तिः । उक्तयुक्त्या जडं प्रकाशायोगरूपम् । प्रकृतिपुरुषयोः परिणामहेतुत्वकल्पने गौरवम्; आन्ध्यपरिणामेन कदाचिज्ज्ञत्वापत्तेः, ज्ञानेच्छागोचरसंशयापत्तेश्च । जडप्रकाशायोगरूपया उक्तयुक्त्या अनित्यज्ञानस्यासंभवाच्च । तस्मादिच्छादिकमन्वयव्यतिरेकाभ्यां मनोधर्म एव । मनः-संयोगात्मनोरुभयोर्हेतुत्वे गौरवादिति ।

किं चात्मनः कर्तृत्वमिति तार्किकनये मोक्षानुपपत्तिः; अहं कर्तेति बुद्धेरेव गीतादिष्व-दृष्टहेतुतयोक्तत्वात् । तस्य तन्मते मिथ्याज्ञानत्वाभावेन तत्त्वज्ञाननिवर्त्यत्वासंभवात् । अतो मोक्षानुपपत्त्याऽकर्तृत्वमेष्टव्यम् । अकर्तृत्वाच्चादृष्टसुखाद्यभावः । एवं च मनसः कृत्यादि-हेतुत्वेऽवश्यकल्पनीये लाघवादन्तर्दृश्यगुणत्वावच्छेदेनैव तत् कल्प्यते ।

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥ ( कू० पु० २।२।११ )
ज्ञानं नैवात्मनो धर्मो न गुणो वा कथंचन ।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः ॥ ( सौ० पु० ११।२६ )
इति स्मृतेः ॥ १४६ ॥

## श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ॥ १४७ ॥

[ वृ० ] अत्र श्रुतिविरोधमाह—श्रुत्या० । "असङ्गो ह्ययं पुरुषः" ( बृ० उ० ४।३।१६ ) इत्यादिश्रुतिः । गुणयोगे सा बाधिता स्यात् ॥ १४७ ॥

[ वृ० सा० ] नत्वहं जानामीति धर्मिधर्मभावानुभवः कथम् ? तत्राह-श्रुत्येति । भवेदेवं यदि केवलतर्केणास्माभिर्निर्गुणत्वादचिद्धर्मा प्रसाध्येत, न चैवं; किंतु "साक्षी चेता केवलो निर्गुणश्च" ( श्वे० उ० ६।११।३ ), "चिन्मात्रोऽहं सदाशिवः" इति श्रुतिसिद्धं तत्, तथा च श्रुतिसिद्धस्य नापलाप; संभवति, किंतु तत्प्रत्यक्षस्य धर्मधर्मिभावविषयकप्रत्यक्षस्य बाधाद् निर्गुणत्वादि सुस्थिरमिति शेषः ॥ १४७ ॥

[भा०] नन्वहं जानामीति धर्मधर्मिभावानुभवात् पुरुषस्य चिद्धर्मकत्वं सिद्धयति, गौरवस्य प्रामाणिकत्वेनादोषत्वादिति, तत्राह—श्रुत्या० ।

भवेदेवं यदि केवलतर्केणास्माभिर्निर्गुणत्वाच्चिद्धर्मत्वादिकं प्रसाध्यते, किन्तु श्रुत्यापि। अतः श्रुत्या सिद्धस्य निर्गुणत्वादेर्नापलापः सम्भवति, तत्प्रत्यक्षस्य गुणादिप्रत्यक्षस्य श्रुत्यैव बाधात्। अहं गौर इत्यादिप्रत्यक्षवदित्यर्थः। अन्यथा हि गौरोऽहमिति प्रत्यक्षबलेन देहातिरिक्तात्मसाधिका अपि युक्तयो बाधिताः स्युरिति जितं नास्तिकैः।

निर्गुणत्वे च श्रुतयः—"साक्षी चेताः केवलो निर्गुणश्च" ( श्वे० उ० ६।११ ) इत्याद्याः। चिन्मात्रत्वे तु श्रुतयः "अकर्ता चैतन्यं चिन्मात्रं सच्चिदेकरसो ह्ययमात्मा" इत्याद्या इति। सर्वज्ञत्वादिश्रुतयस्तु राहोः शिर इतिवल्लौकिकविकल्पानुवादमात्राः, विधिनिषेधश्रुतिमध्ये निषेधश्रुतेरेव बलवत्त्वात्। "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति" (बृ०उ० २।३।६) इति श्रुतेः। किञ्चाज्ञानमहं जानामीति प्रत्यये प्रमात्वकल्पनायामेव गौरवम्। अनाद्यविद्यादोषस्यानुवर्तमानतया भ्रमत्वस्यैवौत्सर्गिकत्वात्। अतो भ्रमशतान्तःपातित्वेनाप्रामाण्यशङ्कास्कन्दितत्वाच्चैतत्प्रत्यक्षबाधने लाघवतर्काद्यनुगृहीतमनुमानमपि समर्थमिति।

नन्वात्मनो नित्यज्ञानस्वरूपत्वे कीदृशं लाघवमिति चेत्; उच्यते—नैयायिकादिभिरन्तःकरणं व्यवसायानुव्यवसायौ तदाश्रयश्चेति चत्वारः पदार्थाः कल्प्यन्ते। अस्माभिस्त्वन्तःकरणम्, व्यवसायस्थानीया च तद्वृत्तिरनन्तानुव्यवसायस्थानीयश्च नित्यैकज्ञानरूप आत्मेति त्रयः पदार्थाः कल्प्यन्त इति ॥१४७॥

[ भा० सा० ] नन्वहं जानामीति धर्मधर्मिभावानुभवाद् गौरवं प्रामाणिकम्, अत आह—श्रुत्येति। "साक्षी चेता केवलो निर्गुणश्च" ( श्वे० उ० ६।११ ) इति श्रुतिः, तत्सिद्धस्य च नापलापः। अहं जानामीति प्रत्यक्षं तु अहं गौर इति प्रत्यक्षवत् श्रुत्यैव बाधितम्, अन्यथा अहं गौर इति प्रत्यक्षेण नास्तिकजय एव स्यात्। चिन्मात्रत्वे तु "चिदेकरसो ह्ययमात्मा" ( बृ० उ० २।३।६ ) इत्यादिश्रुतिर्मानम्। सर्वज्ञत्वादिश्रुतयस्तु राहोः शिर इत्यादिवन्नेयाः।

किं चानाद्यविद्यादोषस्यानुवर्तमानतया लोकज्ञानेषु भ्रमत्वस्यौत्सर्गिकतयाहं जानामीति प्रत्ययेऽपि भ्रमशतान्तःपातित्वेनाप्रामाण्यशङ्काकलङ्कितताया तत्प्रत्यक्षबाधेन लाघवतर्कानुगृहीतमनुमानमपि निर्गुणत्वसाधने समर्थमिति।

तथाहि तार्किकैरन्तःकरणं व्यवसायानुव्यवसायौ तदाश्रय आत्मेति चत्वारः पदार्थाः कल्प्याः, अस्माभिस्त्वन्तःकरणम्, व्यवसायस्थानीया तद्वृत्तिः, अनन्तानुव्यवसायस्थानीयो नित्यैकज्ञानरूप आत्मेति पदार्थत्रयवृत्त्याश्रयान्तःकरणेन विवेकाग्रहाच्च ममापि जानामीति प्रत्ययोपपत्तिरिति दिक् ॥ १४७ ॥

## सुषुप्त्याद्यसाक्षित्वम् ॥ १४८ ॥

[ वृ० ] दूषणान्तरमाह—सुषु०। यद्यात्मा जडः स्यात्, सुषुप्त्यादौ असाक्षित्वमज्ञातृत्वं स्यात्, न चैवम्, सुखमहमस्वाप्समिति प्रतिभासनात्। आदिशब्दात् स्वप्नग्रहणम् ॥ १४८ ॥

[ वृ० सा० ] ननु यदि प्रकाशस्वरूप एवात्मा तदा सुषुप्त्याद्यवस्थाभेदस्तस्य न स्यात्, प्रकाशानपायात्तत्राह—सुषुप्त्यादीति । सुषुप्त्याद्यस्यावस्थात्रयस्य बुद्धिनिष्ठस्य साक्षित्वमेव पुंसि, अत एवोक्तम्—

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥ इति ।

तासां बुद्धीनां साक्षित्वेन विलक्षणो जाग्रदाद्यवस्थारहितो निर्णीत इत्यर्थः ॥ १४८ ॥

[भा०] ननु यदि प्रकाशरूप एवात्मा तदा सुषुप्त्याद्यवस्थाभेदो नोपपद्यते, सदा प्रकाशनापायादिति, तत्राह—सुषुप्त्या० । सुषुप्त्याद्यस्यावस्थात्रयस्य बुद्धिनिष्ठस्य साक्षित्वमेव पुंसीत्यर्थः । तदुक्तम्—

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥ (भाग० ११।१३।२७)

इति । तत्र तासां बुद्धिवृत्तीनां साक्षित्वेन तद्विलक्षणो जाग्रदाद्यवस्थारहितो निर्णीत इत्यर्थः । जाग्रन्नामावस्था इन्द्रियद्वारा बुद्धेर्विषयाकारः परिणामः । स्वप्नावस्था च संस्कारमात्रजन्यस्तादृशः परिणामः । सुषुप्त्यवस्था च द्विविधा—अर्द्धसमग्रलयभेदेन । तत्रार्धलये विषयाकारा वृत्तिर्न भवति, किन्तु स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति, अन्यथोत्थितस्य 'सुखमहमस्वाप्सम्' इत्यादिरूपसुषुप्तिकालीनसुखादिस्मरणानुपपत्तेः । तदुक्तं व्याससूत्रेण—"मुग्धेऽर्द्धसम्पत्तिः परिशेषात्" (ब्र० सू० ३।२।१०) इति । समग्रलये तु बुद्धेर्वृत्तिसामान्याभावो मरणादाविव भवति । अन्यथा "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" ( सां० सू० ५।११६ ) इत्यागामिसूत्रानुपपत्तेरिति । सा च समग्रसुषुप्तिर्वृत्त्यभावरूपेति पुरुषस्तत्साक्षी न भवति, पुरुषस्य वृत्तिमात्रसाक्षित्वात्, अन्यथा संस्कारादेरपि बुद्धिधर्मस्य साक्षिभास्यत्तापत्तेः । सुषुप्त्यादिसाक्षित्वं तु तादृशबुद्धिवृत्तीनां स्वप्रतिबिम्बितानां प्रकाशनमिति वक्ष्यामः ( सां० सू० १।१६१ भा० ) । अतो ज्ञानार्थं पुरुषस्य न परिणामापेक्षेति ।

स्यादेतत्—सुषुप्ते यदि सुखदुःखादिगोचरा बुद्धिवृत्तिरिष्यते तर्हि जाग्रदादावप्यखिलवृत्तीनां वृत्तिग्राह्यत्वस्वीकार एव युक्त इति व्यर्था तत्साक्षिपुरुषकल्पना, स्वगोचरवृत्तित्वेनैव स्वव्यवहारहेतुतायाः सामान्यतः सुवचत्वादिति । मैवम्; नियमेन स्वगोचरवृत्तिकल्पनेऽनवस्थापत्तिर्गौरवं च स्यात् । किञ्चाहं सुखीत्यादिवृत्तिषु सुखादीनां विशेषणतया निर्विकल्पकं तज्ज्ञानमादावपेक्ष्यते । तत्र चानन्तनिर्विकल्पकवृत्त्यपेक्षया लाघवेन नित्यमेकमेवात्मस्वरूपं ज्ञानं कल्प्यते । अहं सुखीत्यादिविशिष्टज्ञानार्थं बुद्धिवृत्तेरेव तादृशाकारत्वम्, पुरुषे वृत्तिसारूप्यमात्रस्वीकारेण वृत्त्याकारातिरिक्ताकाराभ्युपगमात् स्वतन्त्राकारेण परिणामापत्तेरिति ॥१४८॥

[ भा० सा० ] ननु प्रकाशरूपत्वे सत्स्वरूपानपायात् सुषुप्त्याद्यवस्थाभेदानुपपत्तिरत आह—सुषुप्त्यादीति । बुद्धिनिष्ठस्य सुषुप्त्याद्यवस्थात्रयस्य साक्षित्वमेव पुंसीत्यर्थः ।

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥ इति स्मृतेः ।

तत्र जाग्रदवस्था इन्द्रियद्वारा बुद्धेर्विषयाकारः परिणामः । स्वप्नावस्था च संस्कारमात्रजन्यस्तादृशः परिणामः । सुषुप्त्यवस्था च द्विधा--अर्धसमग्रलयभेदात् । तत्रार्धलये विषयाकारा वृत्तिर्न भवति, किन्तु स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति । अत एवोत्थितस्य सुखमहमस्वाप्समित्यादिरूपेण सुषुप्तिकालीनसुखादिस्मरणम् । समग्रलये वृत्तिसामान्याभावः । तदुक्तम्-"समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" (सां० सू० ५।११६) इति । अत एव तत्साक्षी पुरुषो न; तस्य वृत्तिमात्रसाक्षित्वात् । अन्यथा बुद्धिधर्मादृष्टादेरपि साक्षिभास्यतापत्तेः । सुषुप्त्यादिसाक्षित्वं च तादृशबुद्धिवृत्तीनां स्वप्रतिबिम्बितानां प्रकाशनमेव । अतो न ज्ञानार्थं पुरुषस्य परिणामापेक्षेति ॥ १४८ ॥

जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥ १४९ ॥

[ वृ० ] एक एवात्मेति वेदान्तिनः । तथा च --

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जित; ।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥ (अन्न० उ० ५।७६)

अत्राह—जन्मादि० । यद्येक आत्मा, एकस्मिन् जायमाने सर्वे जायेरन् ॥ १४९ ॥

[ वृ० सा० ] लाघवादात्मैक्यमिति केचित्, तन्मतं दूषयति--जन्मादीति । अपूर्वदेहेन्द्रियादिसंघातसंयोगो जन्म, मरणं तद्वियोगः, जन्ममरणसुखदुःखबन्धमोक्षव्यवस्थातः श्रुत्युक्ताया हेतोः पुरुषा बहवः । "पुण्यः पुण्येन पापः पापेन" इति जन्मव्यवस्थया "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति ( बृ० उ० ४।४।१४ ) इति बन्धमोक्षव्यवस्था ॥ १४९ ॥

[भा०] अथैवं पुरुषस्य सुषुप्त्यादिसाक्षिमात्रत्वेन पुरुषैक्यस्याप्युपपत्तौ स किमेकोऽनेको वेति संशयः । तत्रायं पूर्वपक्षः—लाघवतर्कसहकारेण बलवतीभ्योऽभेदश्रुतिभ्य एक एवात्मा सिद्ध्यति, जाग्रदाद्यवस्थारूपाणां वैधर्म्याणां बुद्धिधर्मत्वात् । यद्यप्येकस्यात्मनः सर्वबुद्धिसाक्षित्वं तथापि यस्या बुद्धेर्या वृत्तिः सैव बुद्धिस्तद्वृत्तिविशिष्टतया साक्षिणं गृह्णाति घटं जानामीत्यादिरूपैः । अत एकस्या बुद्धेरयं घट इति वृत्तौ सत्यामन्यबुद्धिवृत्तिद्वारा नानुभवो घटमहं जानामीति । तत्र सिद्धान्तमाह —जन्मादि० ।

पुण्यवान् स्वर्गे जायते, पापी नरके, अज्ञो बध्यते, ज्ञानी मुच्यते-इत्यादेः श्रुतिस्मृतिव्यवस्थाया विभागस्यान्यथानुपपत्त्या पुरुषा बहव इत्यर्थः । जन्ममरणे चात्र नोत्पत्तिविनाशौ पुरुषनिष्ठत्वाभावात्, किन्त्वपूर्वदेहेन्द्रियादिसङ्घातविशेषेण संयोगश्च वियोगश्च भोगतदभावनियामकाविति । जन्मादिव्यवस्थायां च श्रुतिः—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । (श्वे० उ० ४। )
"ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति (बृ० उ० ४।४।१४) ।
इत्यादिरिति ॥१४९॥

[ भा० सा० ] न च बुद्धिवृत्तीनां वृत्तिग्राह्यत्वमेवास्तु, किं साक्षिपुरुषकल्पनया ? नियमेन वृत्तिगोचरवृत्तिकल्पनेऽनवस्थापत्तेः। किं चाहं सुखीत्यादिवृत्तिषु सुखादीनां विशेषणतया आदौ निर्विकल्पकं तज्ज्ञानपेक्ष्यते, तत्रानन्तनिर्विकल्पकवृत्तिकल्पनापेक्षया लाघवेन नित्यमेकमेवात्मस्वरूपं ज्ञानं कल्प्यत इति कश्चित्।

नन्वस्तु पुरुषः साक्षी, स त्वेक एव सर्वत्र लाघवादभेदश्रुतेश्च। जाग्रदाद्यवस्थावैधर्म्यं तु बुद्धिधर्मत्वान्न भेदसाधकम्। यस्य बुद्धेर्या वृत्तिः सैव बुद्धिस्तद्वृत्ति विशिष्टतया तत्साक्षिणं गृह्णाति। अतो नान्यबुद्धिवृत्तिद्वारा नान्यस्यानुभवो घटं जानामीत्यादिरत आ—जन्मादीति। पुण्यवान् स्वर्गे जायते तीर्थे म्रियते, पापी नरके जायते कुस्थले म्रियते। अज्ञो बध्यते, ज्ञानी मुच्यते, इत्यादिश्रुतिस्मृतिसिद्धव्यवस्थानुपपत्त्या पुरुषा बहव इत्यर्थः। जन्ममरणे चात्र नोत्पत्तिविनाशौ, पुरुषनिष्ठत्वाभावात्। किंतु देहेन्द्रियादिसंघातविशेषेण संयोगो वियोगश्च भोगतदभावनियामकौ। तथा च श्रुतिः —

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥ ( श्वे० उ० ४।५ )
"ये तद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति॥" ( बृ० उ० ४।४।१४ )

इत्यादि॥ १४९॥

## उपाधिभेदेऽप्येकस्य नानायोगः, आकाशस्येव घटादिभिः॥ १५०॥

परमतमाशङ्कते—उपाधि०। यथैकमाकाशं घटाद्युपाधिभेदाद् घटे नष्टे घटाकाशं नष्टमिति व्यपदिश्यते, तथैकात्मपक्षेऽपि देहावच्छेदात्तन्नाशे आत्मा नष्ट इति व्यपदेशमात्रं नानात्मपक्षेऽपि; अन्यथात्मनो नित्यत्वात् कथं जन्ममरणव्यवस्थेति॥ १५०॥

[ वृ० सा० ] ननु पुरुषैक्येऽपि उपाधिरूपावच्छेदेन जन्मादिव्यवस्था स्यात्तत्राह—उपाधीति। उपाधिभेदेऽप्येकस्य पुंसो नानोपाधियोगोऽस्त्येव, आकाशस्य घटपटादिभिरिव। तथा च कायव्यूहादाविवैकस्य नानोपाध्यवच्छेदेन सुखदुःखादियोगः स्यादित्यर्थः॥ १५०॥

[भा०] ननु पुरुषैक्येऽप्युपाधिरूपावच्छेदकभेदेन जन्मादिव्यवस्था भवेत्, तत्राह-उपाधिभेदे०। उपाधिभेदेऽप्येकस्यैव पुरुषस्य नानोपाधियोगोऽस्त्येव, यथैकस्यैवाकाशस्य घटकुड्यादिनानायोगः। अतोऽवच्छेदकभेदेनैकस्यात्मन एव विविधजन्ममरणाद्यापत्तिः कायव्यूहादाविवेति न सम्भवति व्यवस्था, एकः पुरुषो जायते नापर इत्यादिरित्यर्थः। न ह्यवच्छेदकभेदेन कपिसंयोगतदभाववत्येकस्मिन्नेव वृक्षे व्यवस्था घटते—एको वृक्षः कपिसंयोगी, अन्यश्च नेति।

किञ्चैकोपाधितो मुक्तस्याप्यात्मप्रदेशस्योपाध्यन्तरैः पुनर्बन्धापत्त्या बन्धमोक्षाव्यवस्था तदवस्थैव, यथैकघटमुक्तस्याकाशप्रदेशस्यान्यघटयोगाद् घटाकाशव्यवस्था तद्वदिति। न च बन्धमोक्षव्यवस्थाश्रुतिरपि लौकिकभ्रमानुवादमात्रमिति वाच्यम्; मोक्षस्यालौकिकत्वात्। मिथ्यापुरुषार्थप्रतिपादनेन श्रुतेः प्रतारकत्वाद्यापत्तेश्च॥१५०॥

[ भा० सा० ] ननु पुरुषैक्येऽपि उपाधिरूपावच्छेदकभेदेन जन्मादिव्यवस्थाऽस्त्वत आह—उपाधीति। उपाधिभेदेऽप्येकस्यैव नानाजन्ममरणादियोगा इत्येको बद्धोऽपरो मुक्त इति व्यवस्थानुपपत्तिरेव। न ह्यवच्छेदकभेदेन कपिसंयोगतदभाववत्येकस्मिन् वृक्षे एको वृक्षः कपिसंयोगी, अन्यो नेति व्यवहारो भवति। यथा वा घटे नष्टे एक आकाशो नष्टोऽपरोऽस्तीति व्यवहारो भवतीति भावः।

किं चैकोपाधितो मुक्तस्याप्यात्मप्रदेशस्योपाध्यन्तरैः पुनर्बन्धापत्त्या बन्धमोक्षाव्यवस्था। न च बन्धमोक्षश्रुतिर्लौकिकभ्रमानुवादमात्रम्; मोक्षस्यालौकिकत्वात्। मिथ्यापुरुषार्थप्रतिपादनेन श्रुतेः प्रतारकत्वापत्तेश्चेति दिक् ॥ १५० ॥

## उपाधिर्भिद्यते न तु तद्वान् ॥ १५१ ॥

[ वृ० ] समाधानमाह—उपाधि०। उपाधिर्भिद्यते। न चान्यनाशादन्यत्र नाशव्यवहारः, अतिप्रसङ्गात्। एकात्मपक्षे च व्यक्त एव विरुद्धधर्माध्यासः, एकस्य बन्धमोक्षाभावात्। आकाशस्य तु धूमादियोगायोगावविरुद्धौ, संयोगस्य व्याप्यवृत्तित्वात् ॥ १५१ ॥

[ वृ० सा० ] अतिरिक्त एवोपाधिविशिष्टोऽस्तु तत्राह—उपाधिरिति। विशिष्टस्यातिरिक्तत्वे हि विशेषणनाशेन तन्नाश एव स्यादिति भावः ॥ १५१ ॥

[भा०] ननु चैतन्यैक्येऽपि तत्तदुपाधिविशिष्टस्यातिरिक्ततामभ्युपगम्य व्यवस्थोपपादनीया, तत्राह—उपाधि०।

उपाधिरेव नाना, न तु तद्वानुपाधिविशिष्टोऽपि नानाऽभ्युपेयो विशिष्टस्यातिरिक्तत्वे नानात्मताया एव शास्त्रान्तरेऽप्यभ्युपगमापत्तेरित्यर्थः। बन्धभागिनो विशिष्टत्वे विशेषणवियोगेन विशिष्टनाशान्न मोक्षोपपत्तिरित्यादीन्यपि दूषणानि।

ननु "विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्" (सां० सू० ६.६१) इति षष्ठाध्याये स्वयमेवाहङ्कारविशिष्टस्यैव जीवत्वं वक्ष्यतीति चेन्न; प्राणधारकत्वरूपजीवत्वस्यैव विशिष्टाधेयत्ववचनात्। न तु बन्धमोक्षव्यवस्थाया विशिष्टाश्रितत्वं वक्ष्यते, मोक्षकाले विशिष्टासत्त्वादिति। यदपि केचिन्नवीना वेदान्तिब्रुवा आहुः—एकस्यैवात्मनः कार्यकारणोपाधिषु प्रतिबिम्बानि जीवेश्वराः, प्रतिबिम्बानां चान्योन्यं भेदाज्जन्माद्यखिलव्यवस्थोपपत्तिरिति। तदप्यसत्, भेदाभेदविकल्पासहत्वात्। बिम्बप्रतिबिम्बयोर्भेदे प्रतिबिम्बस्याचेतनतया भोक्तृत्वबन्धमोक्षाद्यनुपपत्तिः, जीवब्रह्माभेदरूपतत्सिद्धान्तक्षतिश्च। जीवेश्वरभिन्नस्यात्मनोऽप्रामाणिकत्वं च। अभेदे तु साङ्कर्यापरिहारः। भेदाभेदाभ्युपगमे तु तत्सिद्धान्तहानिः, भेदाभेदविरोधश्च। अस्मन्मते त्वभेदोऽविभागलक्षणो भेदश्चान्योऽन्याभाव इत्यविरोध इति। अवच्छेदप्रतिबिम्बादिदृष्टान्तवाक्यानि त्वग्रे ( सां० सू० भा० १५३-१५४ ) व्याख्यास्यामः।

स्यादेतत्, बिम्बप्रतिबिम्बादिभेदं परिकल्प्य श्रुत्या बन्धमोक्षव्यवस्था कल्पितेत्येवास्माभिरुच्यते, न तु परमार्थतो बिम्बप्रतिबिम्बभावस्तयोर्भेदो बन्धमोक्षादिकं

चेष्यत इति। मैवम्; एवं सति बन्धमोक्षादिश्रुतिगणस्य भेदश्रुतिगणस्य चोभयोर्बाधापेक्षया केवलाभेदश्रुतिगणस्यैवाविभागपरतयैव सङ्कोचो लाघवाद्युक्तः, श्रुतिस्मृत्यन्तरैरविभागस्य सिद्धत्वाच्चेति ॥१५१॥

[ भा० सा० ] ननु तत्तदुपाधिविशिष्टस्यातिरिक्तत्वान्न दोषोऽत आह—उपाधिरिति। विशिष्टस्यानतिरिक्तत्वादिति भावः। तस्यातिरिक्तत्वे तु शब्दान्तरेण नानात्वाभ्युपगम एवेत्याशयः। किंच बन्धभागिनो विशिष्टत्वे विशेषणवियोगे विशिष्टनाशान्न बन्धमोक्षयोः सामानाधिकरण्यं स्यादित्यपि बोध्यम्।

यत्तु षष्ठेऽहङ्कारविशिष्टस्यैव जीवत्वं वक्ष्यति सूत्रकृत्, तत्तु प्राणधारकत्वरूपजीवत्वस्याविशिष्टवृत्तित्वाभिप्रायम्, न तु बन्धमोक्षौ विशिष्टाश्रिताविप्यभिप्रायम्। केचित्तु एकस्यैवात्मनः कार्यकारणोपाधिषु प्रतिबिम्बानि जीवेश्वराः। प्रतिबिम्बानां चान्योन्यभेदाद् जन्माद्यखिलव्यवस्थोपपत्तेः। चेतनप्रतिबिम्बोऽपि चेतन एव। उपाधिविलयेन बिम्बापगम एव मोक्षः। बिम्बप्रतिबिम्बयोश्च भेदः क्लृप्तः, वास्तवोऽभेद एव। अत एव जीवब्रह्माभेदरूपसिद्धान्ताद्धानिः, बन्धमोक्षयोः सामानाधिकरण्यं च; यस्यैव प्रतिबिम्बरूपेण बन्धस्तस्यैव तदपगमेन मोक्ष इत्यभ्युपगमात्। इदमेव वेदान्तिमतम्। अस्माकं त्वविभागलक्षणोऽभेदः वैधर्म्यत्वलक्षणो भेदश्चेति मन्तव्यम् ॥ १५१ ॥

## एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः ॥ १५२ ॥

[ वृ० ] एतेन किं स्यादित्यत आह—एवमेक०। न विरुद्धधर्माध्यासो भवति ॥ १५२ ॥

[ वृं० सा० ] उपसंहरति—एवमिति। एकत्वेन सर्वतो वर्तमानस्य यो विरुद्धः सुखदुःखाध्यासस्तदापत्तिः, सैवं सति पुरुषबहुत्वे सति नेत्यर्थः ॥ १५२ ॥

[ भा० ] आत्मैक्यवादिषूक्तं दूषणमुपसंहरति—एवमेकत्वेन०। एवंरीत्यैकत्वेन सर्वतो वर्तमानस्यात्मनो जन्ममरणादिरूपविरुद्धधर्मप्रसङ्गो न युक्त इत्यर्थः। यद्वैकत्व इति च्छेदः। एकत्वेऽभ्युपगम्यमाने परितः सर्वतो वर्तमानस्य सर्वोपाधिष्वनुगतस्य विरुद्धधर्माध्यासो नेति न, किन्तु सर्वथा विरुद्धधर्मसङ्करोऽपरिहार्य इत्यर्थः।

ननु पुरुषो निर्धर्मकस्तत्र कथं जन्ममरणबन्धमोक्षादिविरुद्धधर्मसाङ्कर्यमापद्यते, भवद्भिरपि सर्वेषां धर्माणामुपाधिनिष्ठत्वाभ्युपगमादिति चेन्न; उक्तधर्माणां संयोगवियोगभोगरूपतया पुरुषे स्वीकारात्। परिणामरूपधर्माणामेव पुरुषे प्रतिषेधस्योक्तत्वादिति।

यथा स्फटिकेषु लौहित्यनीलिमादिधर्माणामारोपितानामपि व्यवस्थाऽस्ति, तथा पुरुषेष्वपि बुद्धिधर्माणां सुखदुःखादीनां शरीरादिधर्माणां च ब्राह्मण्यक्षत्रियत्वादीनामारोपितानामपि व्यवस्थाऽस्ति शास्त्रेषु; यथा विष्णुपुराणे—

यथैकस्मिन् घटाकाशे रजोधूमादिभिर्वृते।
न च सर्वे प्रयुज्यन्त एवं जीवाः सुखादिभिः ॥ इति ॥१५२॥

[ भा० सा० ] आत्मैक्यवादे उक्तं दूषणमुपसंहरति—एवमिति । एकत्वेन परितः सर्वतो वर्तमानस्य जन्ममरणादिरूपविरुद्धधर्मप्रसङ्गो न युक्त इत्यर्थः । यद्यपि पुरुषो निर्धर्मकस्तथापि संयोगवियोगभोगाभोगरूपाणां जन्ममरणादिबन्धमोक्षाणां पुरुषे स्वीकाराददोषः, परिणामरूपधर्माणामेव पुरुषे प्रतिषेधात् ॥ १५२ ॥

## अन्यधर्मत्वेऽपि नारोपात्तत्सिद्धिरेकत्वात् ॥ १५३ ॥

[ वृ० ] अन्यधर्मस्याप्यन्यत्रारोपो दृष्टः, यथा प्रकृतेः कर्तृत्वं पुरुषे । अत्राह—अन्यधर्म० । तत्र पुरुषकर्तृत्वं भ्रान्तम्, पुरुषाकर्तृत्वस्य सत्यत्वादारोपस्यासत्यत्वात् । न च सत्यासत्ययोः सम्बन्धस्तात्त्विको भवति । असङ्गित्वात् । आत्मनस्तु न जन्ममरणादि सम्भवति ॥ १५३ ॥

[ वृ० सा० ] नन्वात्मनो निर्धर्मकत्वात् सुखादीनां बुद्ध्यादिधर्मत्वाच्च न सांकर्यमत आह—अन्येति । बुद्धिधर्मत्वेऽपि सुखादीनामारोपात् पुरुषे व्यवस्था न संभवति; आरोपाधिष्ठानस्यैकत्वात् । नहि स्फटिकैक्ये आरोपितानां नीलपीतादीनां नीलोऽयं पीतोऽयमिति व्यवस्था संभवति । घटाकाशादीनां तूपाधिभेदेन भिन्नानामौपाधिकधर्मव्यवस्था घटत इति भावः ॥ १५३ ॥

[ भा० ] सापि व्यवस्थैकात्म्ये सति जन्मादिव्यवस्थावदेव नोपपद्यत इत्याह—अन्यधर्मत्वे० । अन्यधर्मत्वेऽपि धर्माणां सुखादीनामारोपात् पुरुषे व्यवस्था न सिद्ध्यति । आरोपाधिष्ठानपुरुषस्यैकत्वादित्यर्थः । आकाशस्यैकत्वेऽपि घटावच्छिन्नाकाशानां घटभेदेन भिन्नतयौपाधिकधर्मव्यवस्था घटते । आत्मत्वजीवत्वादिकं तु नोपाध्यवच्छिन्नस्य । उपाधिवियोगे घटाकाशनाशवत् तन्नाशेन जीवो न म्रियत इत्यादिश्रुति (क० उ० १।३।१८)-विरोधप्रसङ्गात् । किन्तु केवलचैतन्यस्येति प्रागेवोक्तम् ।

इमां बन्धमोक्षादिव्यवस्थानुपपत्तिं सूक्ष्मामबुद्ध्वैवाधुनिका वेदान्तिब्रुवा उपाधिभेदेन बन्धमोक्षव्यवस्थामैकात्म्येऽप्याहुः । तेऽप्येतेन निरस्ताः । येऽपि तदेकदेशिन इमामेवानुपपत्तिं पश्यन्त उपाधिगतचित्प्रतिबिम्बानामेव बन्धादीन्याहुस्ते त्वतीव भ्रान्ताः, उक्ताद्भेदाभेदादिविकल्पासहत्वादिदोषात् । "अन्तःकरणस्य तदुज्ज्वलितत्वात्०" ( सां० सू० १।९९ ) इत्यत्रोक्तदोषाच्च । किञ्च वेदान्तसूत्रे क्वापि सर्वात्मनामत्यन्तैक्यं नोक्तमस्ति, प्रत्युत "भेदव्यपदेशाच्चान्यः" (ब्र० सू० १।१।२१), "अधिकं तु भेदनिर्देशात्" (ब्र० सू० २।१।२२), "अंशो नानाव्यपदेशात्" (ब्र० सू० २।३।४३) इत्यादिसूत्रैर्भेद उक्तः । अत आधुनिकानामवच्छेदप्रतिबिम्बादिवादा अपसिद्धान्ता एव । स्वशास्त्रानुक्तसन्दिग्धार्थेषु समानतन्त्रसिद्धान्तस्यैव सिद्धान्तत्वाच्चेत्यादिकं ब्रह्ममीमांसाभाष्ये (अध्या० २) प्रतिपादितमस्माभिः ॥ १५३ ॥

[ भा० सा० ] यथा च स्फटिकेषु लौहित्यनीलादिधर्माणामारोपितानामपि व्यवस्थास्ति, तथा पुरुषेषु बुद्धिधर्माणां सुखदुःखादीनां शरीरधर्माणां च विप्रत्वक्षत्रियत्वादीनामस्ति

व्यवस्था शास्त्रेषु। सापि व्यवस्था जन्मादिव्यवस्थावदेव आत्मन एकत्वेनोपपद्यत इत्याह— अन्येति।

सुखादीनामन्यधर्मत्वेऽपि तेषामारोपात् पुरुषे व्यवस्था न सिद्धयति। आरोपाधिष्ठानपुरुषस्यैकत्वादित्यर्थः। आकाशस्यैकत्वेऽपि घटाकाशादीनां घटादिभेदेन भिन्नतया सिद्धयत्यौपाधिकधर्मव्यवस्था। आत्मत्वजीवत्वादिकं नोपाध्यवच्छिन्नस्य, उपाधिनाशे घटाकाशवत्तन्नाशेन जीवनाशापत्त्या "न जीवो म्रियते" (क० १।२।१९) इत्यादि श्रुतिविरोधापत्तेरिति दिक्॥ १५३॥

## नाद्वैतश्रुतिविरोधो जातिपरत्वात्॥ १५४॥

[वृ०] एवं चेत्, श्रुतिविरोधः स्यात्। तथा च "एकमेवाद्वितीयं ब्रह्म" (छा० उ० ६।२।१), "नेह नानास्ति किञ्चन" (बृ० उ० ४।४।१९), "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (क० उ० २।१।१०) अत्राह—नाद्वैत०। व्यक्तम्॥ १५४॥

[वृ० सा०] ननु—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ (ब्र० बि० उ० १२)

इत्यादीनां का गतिस्तत्राह—नेति। नास्मन्मतेऽप्यैक्यश्रुतिविरोधः। कुतः? जातिपरत्वात्तासाम्। जातिः सामान्यमेकरूपतेति यावत्। जातिपदस्यैकरूपताप्रतिपादकत्वमग्रिमसूत्राल्लभ्यते॥ १५४॥

[भा०] नन्वेवं पुरुषनानात्वे सति—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ (ब्र० बि० उ० १२)
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः॥ (अन्न० उ० ५।७५-७६)

इत्याद्याः श्रुतिस्मृतय आत्मैकत्वप्रतिपादिका नोपपद्यन्त इति तत्राह—नाद्वैत०। आत्मैक्यश्रुतीनां विरोधस्तु नास्ति, तासां जातिपरत्वात्। जातिः सामान्यमेकरूपत्वं तत्रैवाद्वैतश्रुतीनां तात्पर्यात्, नत्वखण्डत्वे, प्रयोजनाभावादित्यर्थः। जातिशब्दस्य चैकरूपतार्थकत्वमुत्तरसूत्राल्लभ्यते। यथाश्रुतजातिशब्दस्यादरे "आत्मा वा इदमेक एवाग्र आसीत्" (ऐ० उ० १।१।१), 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' (छा० उ० ६।२।१) इत्याद्यद्वैतश्रुत्युपपादकतयैव सूत्रं व्याख्येयम्, जातिपरत्वात्, विजातीयद्वैतनिषेधपरत्वादित्यर्थः।

तत्राद्यव्याख्यायामयं भावः—आत्मैक्यश्रुतिस्मृतिष्वेकादिशब्दाश्चिदेकरूपतामात्रपराः, भेदादिशब्दाश्च वैधर्म्यलक्षणभेदपराः।

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ (ब्र० बि० उ० ११)

इत्यादिवाक्येष्वेकरूपार्थत्वावश्यकत्वात् । अन्यथाऽवस्थात्रयेऽप्यात्मन एकतामात्रज्ञानेन स्थानत्रयव्यतीतशब्दोक्ताया अवस्थात्रयाभिमाननिवृत्तेरसम्भवात् । तथैकरूपताप्रतिपादनेनैव निखिलोपाधिविवेकेन सर्वात्मनां स्वरूपबोधनसम्भवाच्च । न ह्यन्यथा निर्धर्मकमात्मस्वरूपं विशिष्य ब्रह्मणापि शब्देन साक्षात्प्रतिपादयितुं शक्यते, शब्दानां सामान्यमात्रगोचरत्वात् । आब्रह्मस्तम्बपर्यन्तेष्वात्मन एकरूपत्वे तु प्रतिपादिते तदुपपत्त्यर्थं शिष्यः स्वयमेव तावद्विवेचयति यावन्निर्विशेषे शब्दगोचरे स्वरूपे पर्यवस्यतीति । ततश्च निःशेषाभिमाननिवृत्त्या कृतकृत्यो भवति ।

यदि पुनरद्वैतवाक्यान्यखण्डतामात्रपराणि स्युस्तर्हि तेभ्यो नाभिमाननिवृत्तिः सम्भवति । आकाशे विविधशब्दवदखण्डेऽप्यात्मनि सुखदुःखतदभावादीनामवच्छेदकभेदैरुपपत्तेः । एकस्यैव वाक्यस्याखण्डत्वावैधर्म्योभयपरत्वे च वाक्यभेदोऽखण्डतापरकल्पनायां फलाभावश्च, अवैधर्म्यज्ञानादेव सर्वाभिमाननिवृत्तेः । अतोऽद्वैतवाक्यानि नाखण्डतापराणि । न्यायानुग्रहेण बलवतीभिर्भेदग्राहकश्रुतिस्मृतिभिर्विरोधाच्च । किन्त्ववैधर्म्यलक्षणाभेदपराण्येव साम्यबोधकश्रुतिस्मृतिभिरेकवाक्यत्वात्, "सामान्यात्तु" (ब्र० सू० ३।२।३२) इति ब्रह्मसूत्राच्चेति । तत्र साम्ये श्रुतयः—"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम" (क० उ० ४।१।५), "निरञ्जनः परमं साम्यमुपैति" (मु० उ० ३।१।३) इत्याद्याः ।

स्मृतयश्च—

ज्योतिरात्मनि नान्यत्र सर्वभूतेषु तत् समम् ।
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा ॥
यावानात्मनि बोधात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद जनस्थोऽपि न मुह्यति ॥

इत्याद्याः । उक्तश्रुतौ मोक्षदशायामपि भेदघटितसाम्यवचनात् स्वरूपभेदोऽप्यात्मनामस्तीति सिद्धम् । अवैधर्म्याभेदपरत्वं चास्मन्मते विष्णुरहं शिवोऽहमित्यादिवाक्यानां मन्तव्यम्, न तु तत्त्वमसि, अहं ब्रह्मास्मीत्यादिवाक्यानामपि ।

तत्र साङ्ख्यमते प्रलयकालीनस्य पूर्णात्मन एव तदादिपदार्थतया नित्यशुद्धमुक्तस्त्वमसीत्यादियथाश्रुतस्य तादृशवाक्यार्थत्वात् । यदि तु सर्गाद्युत्पन्नपुरुषो नारायणाख्य एव तत्पदार्थस्तदा तत्त्वमसीत्यादिवाक्यानामप्यवैधर्म्यार्थकतैवास्तु । ननु प्रयोजनाभावान्न भेदपरत्वं श्रुतीनां सम्भवतीति चेन्न; मोक्षोपपादनस्यैव प्रयोजनत्वात् । सृष्टिसंहारयोः प्रवाहरूपेणानुच्छेदात् तस्यैक्ये मोक्षानुपपत्तेः । अथैवमात्मभेदस्य लोकसिद्धतया न तत्परत्वं श्रुतीनां घटत इति । मैवम्; लाघवतर्केणाकाशवदात्मन्येकत्वस्या-

नुमानतः प्रसक्तस्य श्रुत्यादिभिर्निषेधात्, स्वपरचैतन्ययोर्भेदस्य चाप्रत्यक्षत्वात्, देहादिष्वेवानुभवात्। "य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति" (तै० उ० २।७) इत्यादिभेदनिन्दा तु वैधर्म्यविभागान्यतरलक्षणभेदपरेति।

नन्वेवं मुक्तानां प्रतिबिम्बावच्छेदकश्रुतीनां का गतिरिति चेद्, उच्यते; अनेकतेजोमयादित्यमण्डलवद् अनेकात्ममयमपि चिदादित्यमण्डलमेकरसमविभक्तमेकपिण्डीकृत्य तस्य किरणवत् स्वांशभूतैरसङ्ख्यपुरुषैरसङ्ख्योपाधिष्वसङ्ख्यविभाग एव प्रतिबिम्बादिदृष्टान्तैः प्रतिपाद्यते, विभागलक्षणान्यत्वस्य वाचारम्भणमात्रत्वं बोधयितुं न पुनरखण्डत्वम्। "वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव" (क० उ० १।५।१०) इत्यादिसांशदृष्टान्तश्रुतीनां न्यायानुग्रहेण बलवत्त्वादिति; यथा च स्मर्यते—

"यस्य सर्वात्मकत्वेऽपि खण्डयते नैकपिण्डता" इति।

ब्रह्ममीमांसायां तु नित्याभिव्यक्ते परमेश्वरचैतन्येऽन्येषां लव ( य ) रूपाविभागेनाप्यद्वैतमुक्तम् "अविभागो वचनाद्" (ब्र० सू० ४।२।१६) इति सूत्रेणेति। अधिकं तु ब्रह्ममीमांसाभाष्ये (वि० भा० ४।२।१६) प्रोक्तमस्माभिरिति दिक्।

सूत्रस्य द्वितीयव्याख्यायां त्वयं भावः—प्रलयकाले पुरुषविजातीयं सर्वमेवासत्, अर्थक्रियाकारित्वाभावात्। पुरुषाणां कूटस्थत्वेनार्थक्रियैवाप्रसिद्धेति। अतः सर्गकाल इव प्रलयेऽपि सत्त्वम्। अतस्तदात्मनां विजातीयद्वैतराहित्यम्। तथा सर्गकालेऽपि कूटस्थत्वरूपपारमार्थिकसत्त्वं नान्यत्रेति विजातीयद्वैतराहित्यात् सर्गकालीनाद्वैतश्रुतयोऽप्युपपन्ना इति ॥ १५४ ॥

[ भा० सा० ] ननु पुरुषनानात्वे—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्। ( ब्र० वि० उ० १२ )
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः॥ ( अन्न० उ० ५।७५ )

इत्यादिश्रुतिविरोधोऽत आह नेति। जातिः सामान्यमेकरूपत्वम्; तत्रैव श्रुतीनां तात्पर्यं नाखण्डत्वे, प्रयोजनाभावादित्यर्थः। यच्च जातिपदं यथाश्रुतमेव "एकमेवाद्वितीयं ब्रह्म" ( छा० उ० ६।२।१ ) इत्यादि श्रुतिर्जातिपरा, विजातीयद्वैतनिषेधपरत्वादित्यर्थः।

आद्यव्याख्यानेऽयं भावः—श्रुतावेकशब्दश्चिदेकरूपतामात्रपरः, भेदशब्दश्च वैधर्म्यलक्षणभेदपरः। जाग्रदाद्यवस्थात्रयाद्यभिमानवत्तद्राहित्ये च वैधर्म्ये एकरूपताप्रतिपादनं च निखिलोपाधिविवेकेन सर्वात्मना स्वरूपबोधनाय। न ह्यन्यथा निर्धर्मकमात्मस्वरूपं विशिष्य ब्रह्मणापि शब्देन साक्षात्प्रतिपादयितुं शक्यम्, शब्दानां सामान्यमात्रगोचरत्वात्। आब्रह्मस्तम्बपर्यन्तमात्मनामेकरूपत्वे तु गुरुणोक्ते शिष्य एवं विवेचयति यावन्निर्विशेषशब्दागोचरे स्वरूपे पर्यवस्यतीति। ततश्च निर्विशेषाभिमाननिवृत्त्या कृतकृत्यतेति।

अद्वैतवाक्यान्यपि अवैधर्म्यलक्षणाभेदपराण्येव। अवैधर्म्यज्ञानाच्च सर्वाभिमाननिवृत्तिः। अद्वैतवाक्यानामखण्डतामात्रपरत्वेन तेभ्योऽभिमाननिवृत्तिः स्यात्। आकाशे विविधशब्दवदखण्डेऽप्यात्मनि सुखादीनामवच्छेदकभेदैरुपपत्तेः। भेदप्रतिपादकश्रुतिविरोधश्च, साम्यबोधकश्रुतिविरोधश्च।

किं च, "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतम" (क० उ० ४।१।१५), "निरञ्जनः परमं साम्यमुपैति" (मु० उ० ३।१।३) इत्यादिश्रुत्या मोक्षदशायामपि भेदघटितसाम्योक्तेरात्मनां स्वरूपभेदसिद्धिः। शिवोऽहं विष्णुरहमित्यादिवाक्यानां चावैधर्म्याभेदपरत्वम्। तत्त्वमसीत्यादीनामपि सर्गाद्युत्पन्ननारायणस्य तत्पदार्थत्वे तत्परत्वमेव। प्रलयकालीनस्य पूर्णात्मनस्तत्पदार्थत्वे तु नित्यशुद्धबुद्धमुक्तस्त्वमसीति यथाश्रुत एव वाक्यार्थः। किं च, तदैक्ये सृष्टिसंहारयोः प्रवाहरूपेणानुच्छेदान्मोक्षानुपपत्तिः। इदमेव श्रुतौ भेदकथनस्य प्रयोजनम्। भेदनिन्दापरश्रुतयस्तु वास्तववैधर्म्यलक्षणभेदनिन्दापराः।

प्रतिबिम्बादिश्रुतेस्त्वयमाशयः—अनेकतेजोमयादिमण्डलवदनेकात्ममयमपि चिन्मण्डलमेकरसमविभक्तमेकपिण्डीकृतम्। तस्य किरणवत् स्वांशभूतैरसंख्योपाधिष्वसंख्यो विभाग इति। इदमेव प्रतिबिम्बादिदृष्टान्तैरुच्यते। विभागस्य वाचारम्भणमात्रत्वं बोधयितुं "यस्य सर्वात्मकत्वेऽपि खण्डयते नैकपिण्डता" इति स्मृतिः। "वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव" (क० उ० १।५।१०) इत्यंशदृष्टान्तश्रुतिश्च।

सूत्रस्य द्वितीयव्याख्याने त्वयं भावः—प्रलयकाले पुरुषविजातीयं सर्वमेवासत्, अर्थक्रियाकारिताभावात्। पुरुषाणां तु कूटस्थत्वेनार्थक्रियैवाप्रसिद्धा। अत आत्मनां विजातीयद्वितीयराहित्यम्। सर्गकालेऽपि कूटस्थत्वरूपपारमार्थिकसत्त्वं नान्यत्रेति विजातीयद्वैतराहित्याद सर्गकालीनाद्वैतश्रुतयोऽप्युपपन्ना इति ॥ १५४ ॥

## विदितबन्धकारणस्य दृष्टया तद्रूपम् ॥ १५५ ॥

[ वृ० ] नन्वनेकात्मवादिनोऽपि एकस्यात्मनो बन्धमोक्षौ विरुद्धौ, इत्यत्राह—विदित०। विदितं बन्धकारणं प्रकृतिपुरुषविवेकादर्शनं यस्य, तस्य दृष्टया विवेकज्ञानेन तद्रूपं कैवल्यरूपम् ॥ १५५ ॥

[ वृ० सा० ] नन्वेकरूपत्वमपि प्रत्यक्षविरुद्धं तत्कथमुक्तं जातिपरत्वादिति ? तत्राह—विदितेति। विदितः स्पष्टबन्धकारणविवेको यत्र तस्य पुरुषस्य दृष्टयैव पुरुषेषु तद्रूपं रूपभेद इत्यर्थः ॥ १५५ ॥

[भा०] नन्वात्मन एकत्ववदेकरूपत्वमपि नानारूपताप्रत्यक्षेण विरुद्धम्, तत् कथमुक्तं जातिपरत्वादिति, तत्राह—विदित०। विदितं स्पष्टं बन्धकारणमविवेको यत्र तस्य दृष्टयैव पुरुषेष्वतद्रूपं रूपभेद इत्यर्थः। अतो भ्रान्तदृष्ट्या न रूपभेदसिद्धिरिति ॥ १५५ ॥

[ भा० सा० ] नन्वात्मन एकत्ववदेकरूपत्वमपि नानारूपताप्रत्यक्षेण विरुद्धम्, तत्कथमुक्तं जातिपरत्वादिति, तत्राह—विदितेति । विदितं प्रसिद्धं बन्धकारणमविवेको यत्र तादृशभ्रान्तदृष्ट्यैव पुरुषेष्वतद्रूपत्वं नानारूपत्वं तन्नार्थंकारीति भावः ॥ १५५ ॥

नान्धादृष्टचा चक्षुष्मतामनुपलम्भः ॥ १५६ ॥

[ वृ० ] विवेकादर्शननिमित्तो बन्धो न तात्त्विकः । दर्शनादर्शनं निवर्तत इति युक्तिः । एवं चैकात्मपक्ष एव न्यायं पश्यामः, न नानात्मपक्षे, इत्यत आह—नान्धा० ।

अन्धो न पश्यतीति चक्षुष्मानपि किं नोपलभते ? नानात्मवादिनामनेके न्यायाः सन्तीत्यर्थः ॥ १५६ ॥

[ वृ० सा० ] तथाप्यनुपलम्भादेकरूपताया एवाभावस्तत्राह—नान्धेति । अनुपलम्भ एवासिद्धः । अज्ञैरदर्शनेऽपि ज्ञानिभिरेकरूपत्वदर्शनात् ॥ १५६ ॥

[भा०] ननु तथाप्यनुपलम्भादेकरूपत्वाभावः सेत्स्यति, तत्राह - नान्धादृष्ट्या० । अनुपलम्भ एवासिद्धः । अज्ञैरदर्शनेऽपि ज्ञानिभिरेकरूपत्वस्य दर्शनादित्यर्थः ॥ १५६ ॥

[ भा० सा ] ननु तथाप्यनुपलम्भादेकरूपत्वाभावः स्यादत आह—नान्धेति । अनुपलम्भ एव न, अज्ञैरनुपलम्भेऽपि ज्ञानिभिरेकरूपत्वदर्शनादित्यर्थः ॥ १५६ ॥

वामदेवादिर्मुक्तो नाद्वैतम् ॥ १५७ ॥

[ वृ० ] इतोऽपि नानात्मान इत्याह—वामदेवा० । पुराणादौ श्रुतम्—"वामदेवो मुक्तः शुको मुक्तः" ( बृ० उ० १।४।१० ) इत्यादि । यद्येक एवात्मा एकमुक्तौ सर्वमुक्तेर्भेदश्रुतिबाधः स्यात् ॥ १५७ ॥

[ वृ० सा० ] एकात्मवादे बाधकान्तरमाह—वामदेवादिरिति । यद्यपि वामदेवादिर्मुक्तस्तथापि बन्धोऽनुभूयतेऽतोऽपि नात्मैक्यम् ॥ १५७ ॥

[भा०] अद्वैतश्रुत्यनुपपत्तिं समाधायाखण्डाद्वैते बाधकान्तरमाह—वामदेवा० । वामदेवादिर्मुक्तोऽस्ति तथापीदानीं बन्धः स्वस्मिन्ननुभवसिद्धः । अतो नाखण्डात्माऽद्वैतमित्यर्थः । "स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप" इत्यादिवाक्यशतविरोधश्चेति शेषः । न चैवं बन्धमोक्षावुपाधेरेवेत्यवगन्तव्यम्, श्रुतिस्मृतिसिद्धान्तविरोधात् । दुःखं मा भुञ्जीयेति कामनादर्शनेन पुरुषमोक्षस्यैव मोक्षाख्यपरमपुरुषार्थत्वाच्च । उपाधेर्दुःखहानस्य च तादर्थ्येन परमपुरुषार्थत्वात्, पुत्रादिवदिति । यदप्याधुनिकैर्मायावादिभिरुच्यते—अद्वैतश्रुतिविरोधाद् बन्धमोक्षसृष्टिसंहारादिश्रुतयो बाध्यन्त इति, तदप्यसत्; मोक्षाख्यफलस्यापि श्रवणकाल एवाभावनिश्चये श्रवणोत्तरं मननादिविधेरननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्, प्रपञ्चान्तर्गतस्य वेदान्तस्याप्यद्वैतश्रुत्या बाधे वेदान्तावगतेऽप्यद्वैते पुनः संशयापत्तेश्च । स्वाप्नवाक्यस्य जाग्रति बाधे तद्वाक्यार्थे पुनः संशयवत् । किञ्च, "मिथ्याबुद्धिर्नास्तिकता" ( अ०को० १।४।४ ) इत्यनुशासनाद्धर्मादिषु स्वापवन्मिथ्यादृष्टयो बौद्धप्रभेदा एव, सांवृतिकशब्देन प्रपञ्चस्याविद्यकतायाश्च तैरभ्युपगमादिति दिक् ॥ १५७ ॥

[ भा० सा० ] इदानीमखण्डाद्वैते बाधकमाह—वामदेवादीति । वामदेवादेर्मुक्तत्वेऽपि इदानीन्तनैः स्वस्मिन् बन्धानुभवात् । अतो नाऽखण्डाद्वैतमित्यर्थः । न च बन्धमोक्षावुपाधेरेव, श्रुतिसिद्धान्तविरोधात्, दुःखं मा भुञ्जीयेति कामनादर्शनेन पुरुषमोक्षस्यैव पुरुषार्थत्वाच्च ॥१५७॥

## अनादावद्ययावदभावाद् भविष्यदप्येवम् ॥ १५८ ॥

नानात्मपक्षेऽप्यनादौ संसारे कदापि कोऽपि मुच्यते, इति क्रमेण सर्वमुक्तौ सर्वशून्यता स्यात् । एकात्मपक्षे तु उपाधिविगम एव मोक्ष इत्यत्राह—अनादा० ।

अनादौ संसारे अद्ययावच्छून्यताया अदर्शनाद् भविष्यति मुक्तिरिति पक्षे नास्ति प्रमाणम् ॥ १५८ ॥

[ वृ० सा० ] वामदेवादेः परममोक्षो न जात इति शङ्कायामाह—अनादाविति । अनादौ कालेऽद्ययावच्चेन्मोक्षो न जातः कस्यापि, तर्हि भविष्यत्कालोऽपि मोक्षशून्यः स्यात् ॥ १५८ ॥

[ भा० ] ननु वामदेवादेरपि परममोक्षो न जात इत्यभ्युपेयम्, तत्राह—अनादावद्य० । अनादौ कालेऽद्ययावच्चेन्मोक्षो न जातः कस्यापि, तर्हि भविष्यत्कालोऽप्येवं मोक्षशून्य एव स्यात्, सम्यक्साधनानुष्ठानस्याविशेषादित्यर्थः ॥ १५८ ॥

[ भा० सा० ] ननु वामदेवादेः परममोक्षो न जात एवेत्यत आह—अनादाविति । अनादौ कालेऽद्ययावच्चेन्मोक्षो न जातः कस्यापि, तर्हि भविष्यत्कालेऽप्येवं मोक्षशून्यतैव स्यादित्यर्थः ॥ १५८ ॥

## इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥

[ वृ० ] समाधानान्तरमाह—इदानी० । अनन्तत्वादात्मनां क्रमेण मुक्तिरपि स्यात्, संसारोच्छेदोऽपि न स्यात् । इदानीमिव सर्वत्र भविष्यत्कालेऽपि मुक्तिर्भविष्यतीति नात्यन्तोच्छेदः स्यात्, प्रवाहनित्यत्वात् । उपाधिविगमो मोक्ष इति पक्षेऽपि सर्वशून्यताप्रसङ्ग इति तुल्योऽनुयोगः । यथा नानात्मनां क्रमेण मुक्तौ सर्वोच्छेदः, तथा सर्वकर्मोच्छेदे सर्वोपाधिनाशाज्जगच्छून्यं स्यात् । अथोपाधीनामनन्तत्वान्न शून्यता, इति नानात्मपक्षेऽपि तुल्यत्वम् । तथाच—

अत एष हि विद्वत्सु मुच्यमानेषु संततम् ।
ब्रह्माण्डजीवलोकानामनन्तत्वादशून्यता ॥
( म. भा. शा. ३३३ अ. ) ॥ १५९ ॥

[ वृ० सा० ] तत्रानुमानमाह—इदानीमिति । सर्वकालो बन्धात्यन्तोच्छेदाभाववान्, कालत्वात्, वर्तमानकालवदिति प्रयोगः ॥ १५९ ॥

[ भा० ] तत्र प्रयोगमाह—इदानीमिव० । सर्वत्र काले बन्धस्यात्यन्तोच्छेदः कस्यापि पुंसो नास्ति, वर्तमानकालवदित्यनुमानं संभवेदित्यर्थः ॥ १५९ ॥

[ भा० सा० ] तत्र प्रयोगमाह—इदानीमिति । सर्वत्र काले बन्धस्यात्यन्तोच्छेदः कस्यापि पुंसो नास्ति वर्तमानकालवदित्यनुमानसंभवादित्यर्थः ॥ १५९ ॥

**व्यावृत्तोभयरूपः ॥ १६० ॥**

[ वृ० ] किमात्मा बद्धो मुक्तो वा ? बद्धत्वे स्वरूपस्याप्रच्यवनादनिर्मोक्षः, प्रच्यवेऽनित्यत्वम् । मुक्तत्वे व्यर्थं ध्यानादि । इत्यत आह—व्यावृत्तो० ।

न बद्धः, नायं मुच्यते, किन्तु नित्यमुक्तः । अज्ञाननाशस्तु ध्यानादिना क्रियत इति ॥ १६० ॥

[ वृ० सा० ] पुरुषस्य यदेकरूपत्वं तत् किं मोक्षकाले उत सर्वदेत्याकाङ्क्षायामाह—व्यावृत्तेति । श्रुतिस्मृतिन्यायेभ्यो व्यावृत्ते नित्यनिवृत्ते उभयरूपे रूपभेद इति यावत्, यस्मात्तथा ॥ १६० ॥

[ भा० ] पुरुषाणां यदेकरूपमेकत्वप्रतिपादकश्रुत्यर्थावधारितं तत् किं मोक्षकाले, किं सर्वदैवेत्याकाङ्क्षायामाह—व्यावृत्तो० ।

स च पुरुषो व्यावृत्तोभयरूपो व्यावृत्तो निवृत्तो रूपभेदो यस्मात् तथेत्यर्थः । श्रुतिस्मृतिन्यायेभ्यः सदैकरूपतासिद्धेरिति शेषः । तदुक्तम्—

बहुरूप इवाभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति बध्यते ॥ इति,

जगदाख्यमहास्वप्ने स्वप्नात् स्वप्नान्तरं व्रजत् ।
रूपं त्यजति नो शान्तं ब्रह्म शान्तत्वबृंहितम् ॥ (यो.वा. ६।७२।२-३)

इति च ॥ १६० ॥

[ भा० सा० ] पुरुषाणां चैवंरूपत्वं मोक्षकाल इव सर्वदेत्याह—व्यावृत्तेति । पुरुषो व्यावृत्तो नित्यव्यावृत्त उभयरूपभेदो यस्मात्तथेत्यर्थः । श्रुतिस्मृतिन्यायेभ्यः सदैकरूपतासिद्धेरिति शेषः । तदुक्तम्—

बहुरूप इवाभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति बध्यते ॥ इति,
जगदाख्यमहास्वप्ने स्वप्नात्स्वप्नान्तरं व्रजत् ।
रूपं त्यजति नो शान्तं ब्रह्म शान्तत्वबृंहितम् ॥ (यो० वा० ६।७२।२-३ )

इति च ॥ १६० ॥

**साक्षात्सम्बन्धात् साक्षित्वम् ॥ १६१ ॥**

[ वृ० ] आत्मनः साक्षित्वमुक्तम् । प्राप्तविवेकस्यापि साक्षित्वेऽनिर्मोक्ष इत्यत आह—साक्षात्० । अक्षमिन्द्रियम्, तत्सम्बन्धात् साक्षित्वम् । विवेके च क्वेन्द्रियसम्बन्ध इति ॥ १६१ ॥

[ वृ० सा० ] ननु साक्षित्वस्यानित्यत्वात् कथं सदैकरूपत्वम्, तत्राह—साक्षादिति। पुरुषस्य यत्साक्षित्वमुक्तं तत्साक्षात्सम्बन्धात्, न तु परिणामत इत्यर्थः। "साक्षाद्द्रष्टरि संज्ञायाम्" इति साक्षिशब्दव्युत्पत्तेः। सम्बन्धश्च प्रतिविम्ब एव न तु संयोगमात्रमतिप्रसङ्गात्। स च स्वबुद्धावेवास्तीति स्वबुद्धेरेव साक्षी, अन्येषां तु द्रष्टेति बोध्यम्। अक्षसम्बन्धात् साक्षित्वमिति पाठे अक्षं बुद्धिः करणत्वसामान्यात् ॥ १६१ ॥

[ भा० ] ननु साक्षित्वस्यानित्यत्वात् पुरुषाणां कथं सदैकरूपत्वम्, तत्राह—साक्षात्०।

पुरुषस्य यत् साक्षित्वमुक्तं तत् साक्षात्सम्बन्धमात्रात्, न तु परिणामत इत्यर्थः। साक्षात्सम्बन्धेन बुद्धिमात्रसाक्षिताऽवगम्यते, "साक्षाद्द्रष्टरि संज्ञायाम्" ( पा० सू० ५।२।९१ ) इति साक्षिशब्दव्युत्पादनात्। साक्षाद्द्रष्टृत्वं चाव्यवधानेन द्रष्टृत्वम्। पुरुषे च साक्षात्सम्बन्धः स्वबुद्धिवृत्तेरेव भवति। अतो बुद्धेरेव साक्षी पुरुषोऽन्येषां तु द्रष्टृमात्रमिति शास्त्रीयो विभागः। ज्ञाननियामकश्चार्थाकारतास्थानीयः प्रतिबिम्बरूप एव सम्बन्धो न तु संयोगमात्रमतिप्रसङ्गादित्यसकृदावेदितम्। विष्ण्वादेः सर्वसाक्षित्वं त्विन्द्रियादिव्यवधानाभावमात्रेण गौणम्। अक्षसम्बन्धात् साक्षित्वमिति पाठे त्वक्षमत्र बुद्धिः, करणत्वसामान्यात्, तस्या यथोक्तात् प्रतिविम्बरूपात् सम्बन्धादित्यर्थः ॥ १६१ ॥

[ मा० सा० ] ननु साक्षित्वस्यानित्यत्वात् पुरुषाणां कथं सदैकरूपता, इत्यत आह—साक्षादिति। पुरुषस्य यत्साक्षित्वं तत्साक्षात्संबन्धमात्रान्न तु परिणामादित्यर्थः। साक्षात्संबन्धश्च प्रतिबिम्बरूपः स्वबुद्धिवृत्तेरेव भवतीति बुद्धेरेव साक्षी पुरुषः, अन्येषां तु द्रष्टृमात्रमिति सिद्धान्तः। विष्ण्वादेः सर्वसाक्षित्वं त्विन्द्रियादिव्यवधानाभावमात्रेण गौणमिति बोध्यम्। अक्षसंबन्धादिति पाठे करणत्वसामान्यादक्षमत्र बुद्धिस्तत्संबन्धात्प्रतिबिम्बरूपादित्यर्थः ॥

## नित्यमुक्तत्वम् ॥ १६२ ॥

[ वृ० ] सर्वदा किंस्वरूप आत्मा, इत्यत्राह—नित्य०। स्पष्टम् ॥ १६२ ॥

[ वृ० सा० ] विशेषान्तरमाह सूत्राभ्याम्—नित्येति। सदैव पुरुषस्य दुःखाख्यबन्धशून्यत्वम्, दुःखादेर्बुद्धिपरिणामत्वात् ॥ १६२ ॥

[भा०] उभयरूपत्वाभावसिद्ध्यर्थं पुरुषस्यापरौ विशेषावाह सूत्राभ्याम्— नित्य०। सदैव पुरुषस्य दुःखाख्यबन्धशून्यत्वम्। दुःखादेर्बुद्धिपरिणामत्वादित्यर्थः। पुरुषार्थस्तु दुःखभोगनिवृत्तिः प्रतिबिम्बरूपदुःखनिवृत्तिर्वेत्युक्तमेव ॥ १६२ ॥

[ मा० सा० ] उभयरूपत्वाभावसिद्ध्यर्थं पुरुषस्यापरौ विशेषावाह—नित्यमिति। सदैव पुरुषस्य दुःखाख्यबन्धशून्यत्वम्, तस्य बुद्धिपरिणामित्वादित्यर्थः। पुरुषार्थस्तु दुःखभोगनिवृत्तिरित्युक्तम् ॥ १६२ ॥

## औदासीन्यं चेति ॥ १६३ ॥

[ वृ० ] औदा० । व्यक्तम् ॥ १६३ ॥

[ वृ० सा० ] औदासीन्यमिति । औदासीन्यमकर्तृत्वं चेति निष्कामत्वादिकम् । "कामः सङ्कल्पः" इत्यादि श्रुतेः । इति पुरुषधर्मसमाप्त्यर्थः ॥ १६३ ॥

[भा०] औदासीन्यं० । औदासीन्यमकर्तृत्वं तेन चान्येऽपि निष्कामत्वादय उपलक्षणीयाः । "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" ( बृ० उ० १।५।३ ) इति श्रुतेः । इतिशब्दः पुरुषधर्मप्रतिपादनसमाप्तौ ॥ १६३ ॥

[ भा० सा० ] औदासीन्यमिति । औदासीन्यमकर्तृत्वम् । इदं च निष्कामत्वादीनामुपलक्षणम् । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" ( बृ० उ० १।५।३ ) इति श्रुतेः । इतिः पुरुषधर्मप्रतिपादनसमाप्तौ ॥ १६३ ॥

## उपरागात् कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् ॥ १६४ ॥

[ वृ० ] आत्मनः कर्तृत्वं श्रूयते, तत् कथमित्यत आह—उपरागात्० । चित्सान्निध्येन प्रकृत्युपरागादात्मनः कर्तृत्वं कर्तृत्वाभिमानः । चित्सान्निध्यादिति वीप्साऽध्यायपरिसमाप्तौ, श्रुतौ तथा दृष्टत्वादिति ॥ ११४ ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ विषयाध्यायः प्रथमः ॥

[ वृ० सा० ] नन्वेवं प्रकृतिपुरुषयोरन्योन्यं वैधर्म्येण विवेके सिद्धे पुरुषस्य कर्तृत्वं बुद्धेर्ज्ञातृत्वं च कथं व्यवह्रियते, इत्याशङ्क्याह—उपरागादिति । अत्र यथायोग्यमन्वयः । पुरुषस्य यत्कर्तृत्वं तद्बुद्ध्युपरागात्, बुद्धेश्च या चित् सा पुरुषसान्निध्यात् । एतदुभयं न वास्तवं यथाग्न्ययसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिकः, यथा वा जलसूर्ययोः संयोगात्परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः । अत एवेश्वरकृष्ण आह—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ ( सां० का० २० ) इति ।

वीप्सा अध्यायसमाप्त्यर्था ।

अत्र मामकसन्दर्भे नास्ति कापि स्वतन्त्रता ।
इति विज्ञापयितुं वृत्तिसार इत्यभिधा कृता ॥
परवाक्यानि लिखितानि तेषामर्थो विभावितः ।
कृता सन्दर्भशुद्धिश्चेत्येवं मे नाफलश्रमः ॥ १६४ ॥

इति श्रीस्वयंप्रकाशतीर्थाङ्घ्रिलब्धवेदान्तिसत्पदेन महादेवेनोन्नीते सांख्यवृत्तिसारे प्रथमोऽध्यायः ॥ १ ॥

[ भा० ] नन्वेवं प्रकृतिपुरुषयोरन्योन्यं वैधर्म्येण विवेके सिद्धे पुरुषस्य कर्तृत्वं बुद्धेरपि च ज्ञातृत्वं श्रुतिस्मृत्योरुच्यमानं कथमुपपद्येयाताम्, तत्राह—उपरागात्० । अत्र यथायोग्यमन्वयः । पुरुषस्य यत् कर्तृत्वं तद् बुद्धयुपरागात् । बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात् । एतदुभयं न वास्तवमित्यर्थः । यथाऽन्ययसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिको यथा वा जलसूर्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः । एतच्च कारिकयाप्युक्तम्—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ ( सां० का० २० )

इति । चित्सान्निध्यादिति द्विःपाठोऽध्यायसमाप्तिसूचनार्थः ॥ १६४ ॥

हेयहाने तयोर्हेतू इति व्यूहा यथाक्रमम् ।
चत्वारः शास्त्रमुख्यार्था अध्यायेऽस्मिन् प्रपञ्चिताः ॥ १ ॥

सङ्क्षिप्तसाङ्ख्यसूत्राणामर्थस्यात्र प्रपञ्चनात् ।
शास्त्रं योगवदेवेदं साङ्ख्यप्रवचनाभिधम् ॥ २ ॥

इति विज्ञानाचार्यनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये विषयाध्यायः प्रथमः ॥

[ भा० सा० ] नन्वेवं पुरुषस्य कर्तृत्वम्, बुद्धेर्ज्ञातृत्वम्, श्रुत्यादावुच्यमानमनुपपन्नमत आह—उपरागादिति । पुरुषस्य यत्कर्तृत्वं तदबुद्धयुपरागात्, बुद्धेश्च पुरुषसांनिध्यात्, एतदुभयं न वास्तवमित्यर्थः । यथा जलसूर्ययोः संयोगात्परस्परधर्मारोपस्तथा बुद्धिपुरुषयोरिति भावः । द्विःपाठोऽध्यायसमाप्तिसूचनार्थः ॥ १६४ ॥

इति प्रथमोऽध्यायः

# द्वितीयोऽध्यायः

## विमुक्तविमोक्षार्थं स्वार्थं वा प्रधानस्य ।। १ ।।

[ वृ० ] अथ विषयनिरूपणानन्तरं प्रधानकार्यनिरूपणार्थं द्वितीयाध्यायारम्भः। विमुक्त०। स्वभावविमुक्त आत्मा, तस्याभिमानिकबन्धविमोक्षार्थं प्रधानस्य प्रवृत्तिः, जगत्कर्तृत्वमित्यर्थः। अयं भावः—दुःखसृष्टौ स्वभावादेव वैराग्यान्मोक्षे वै पुरुषः प्रवर्तते। सुखसृष्टौ च दुःखशबलत्वात् सुखस्यापि दुःखपक्षनिक्षेपाद्वैराग्यमेवोपजायते। तच्च चतुर्विधम्—यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति। तथा हि—"हेयं दुःखमनागतम्" ( यो० सू० २।१६ )। एकविंशतिप्रकारं शरीरम्, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं दुःखञ्चेति। तत्र शरीरं दुःखायतनत्वाद् दुःखम्, इन्द्रियाणि विषयाः बुद्धयश्च तत्साधनभावाद् दुःखम्, सुखं दुःखानुषङ्गात्, दुःखं यातनापीडासन्तापात्मकं मुख्यत एवेति। तस्य निर्वर्तकमसाधारणकारणमविद्यातृष्णे धर्माधर्माविति। अविद्या विपरीतज्ञानम्, तत्संस्कारश्च विद्वद्भिरुक्तस्तृष्णादीनामसाधारणो हेतुः। दुःखहानं च दुखोत्पत्तिनिवृत्तिरात्यन्तिकी, तस्योपायस्तत्त्वज्ञानमात्मविषयम्, ततोऽविद्याया निवृत्तेः। तथा चोक्तम्—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृ० उ० २।४।५; ४।५।६ ), "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः" (बृ० भा० वा० १०८), "तरति शोकमात्मवित्" ( छा० उ० ७।१।३ ) इति च। स द्विविधः—परश्चापरश्चेति। तथा चोक्तम्—"द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च" ( वि० पु० ६।५।६४ ) इति। विद्यैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंसृष्टः परो भगवान् महेश्वरः सर्वज्ञः सकलजनानां विधाता। स कथं ज्ञातव्यः? अनुमानाद्वा, आगमाद्वा? तथा हि—'विवादाध्यासितमुपलब्धं सकारणकम्, अभूत्वा भावित्वात्, चित्रवत्' इत्यनुमानम्। ततः सामान्येनावगतस्य योगेन विशेषतो ज्ञानम्। अपरस्य च जीवस्य स्वानुभवादेव सिद्धिः। तयोश्च परापरयोर्विवेकेन ज्ञानाय प्रकृतेः प्रवृत्तिः। तत्र परार्थता वक्ष्यते। स्वार्थता च सा, यं पुरुषं प्रत्यात्मानं विवेकेन दर्शितवती, तं प्रत्युदास्ते। अचेतनायाः प्रकृतेः कथं प्रवृत्तिः? दृष्टा अचेतनानामपि वृक्षाणां फलादिद्वारेण प्रवृत्तिरिति ॥ १ ॥

[ वृ० सा० ] एवं प्रथमेनाध्यायेन शास्त्रस्य विषयो निरूपितः, अथो पुरुषस्यापरिणामित्वोपपादनाय तु प्रकृतितः सृष्टिप्रक्रियाभिधास्यते विस्तरेण द्वितीये। तत्रैव च प्रकृतिकार्याणां स्वरूपमपि वक्तव्यं तेभ्योऽपि पुरुषस्य स्फुटं विवेकाय। अत एव च—

विकारं प्रकृतिं चैव पुरुषं च सनातनम्।
यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥ ( म० भा० शा० २१७।३७ )

इति मोक्षधर्मेषु त्रयाणां ज्ञेयत्वोक्तिः, तत्रादावचेतनायाः प्रकृतेर्निष्प्रयोजनस्रष्टृत्वे मुक्तस्यापि बन्धप्रसङ्ग इत्याशङ्क्य जगत्सृष्टौ प्रयोजनमाह—विमुक्तेति । कर्तृत्वमिति पूर्वाध्यायान्तसूत्रादनुषज्यते । स्वभावतो दुःखबन्धाद्विमुक्तस्य पुरुषस्य प्रतिविम्बरूपदुःखमोक्षार्थमथवा स्वार्थे स्वस्य पारमार्थिकदुःखमोक्षार्थं प्रधानस्य जगत्कर्तृत्वमित्यर्थः । यद्यपि मोक्ष इव भोगोऽपि सृष्टेः प्रयोजनं तथापि मुख्यत्वान्मोक्ष एवोक्तः ॥ १ ॥

[ भा० ] शास्त्रस्य विषयो निरूपितः । साम्प्रतं पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिप्रक्रियामतिविस्तरेण द्वितीयाध्याये वक्ष्यति । तत्रैव प्रधानकार्याणां स्वरूपं विस्तरतो वक्तव्यं तेभ्योऽपि पुरुषस्यातिस्फुटविवेकाय । अत एव—

विकारं प्रकृतिं चैव पुरुषं च सनातनम् ।
यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥ ( म० भा० शा० २१७।३७ )

इति मोक्षधर्मादिषु त्रयाणामेव ज्ञेयत्ववचनम् । तत्रादावचेतनायाः प्रकृतेर्निष्प्रयोजनस्रष्टृत्वे मुक्तस्यापि बन्धप्रसङ्गः, इत्याशयेन जगत्सर्जने प्रयोजनमाह—विमुक्तमोक्षार्थं० ।

कर्तृत्वमिति पूर्वाध्यायशेषसूत्रादनुषज्यते । स्वभावतो दुःखबन्धाद्विमुक्तस्य पुरुषस्य प्रतिविम्बरूपदुःखमोक्षार्थं प्रतिबिम्बसम्बन्धेन दुःखमोक्षार्थं वा प्रधानस्य जगत्कर्तृत्वम् । अथवा स्वार्थम्—स्वस्य पारमार्थिकदुःखमोक्षार्थमित्यर्थः । यद्यपि मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनम्, तथापि मुख्यत्वान्मोक्ष एवोक्तः ॥ १ ॥

[ भा० सा० ] अथ पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिं विस्तरेण वक्तुमचेतनायाः प्रकृतेर्निष्प्रयोजनस्रष्टृत्वे मुक्तस्यापि बन्धप्रसङ्गः, इत्याशयेन जगत्सृष्टौ प्रयोजनमाह—विमुक्तेति । कर्तृत्वमित्यनुषज्यते । स्वभावतो दुःखबन्धविमुक्तस्य पुरुषस्य प्रतिबिम्बरूपदुःखभोगमोक्षार्थं प्रधानस्य जगत्कर्तृत्वम् । अथवा स्वार्थं—स्वस्य पारमार्थिकदुःखमोक्षार्थमित्यर्थः । यद्यपि मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनम्, तथापि मुख्यत्वान्मोक्ष एवोक्तः ॥ १ ॥

## विरक्तस्य तत्सिद्धेः ॥ २ ॥

[ वृ० ] अथ के मोक्षाधिकारिणः ? इत्यत्राह—विरक्तस्य० । तथा च श्रुतिः—"पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" ( बृ० उ० ४।४।२२ ) इति, "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" ( बृ० उ० ४।४।२३ ) इति च ॥ २ ॥

[ वृ० सा० ] ननु मोक्षार्थं चेत् सृष्टिः, तर्हि सकृत्सृष्ट्यैव सर्वेषां मोक्षसंभवे पुनः पुनः सृष्टिर्न स्यात्, तत्राह—विरक्तस्येति । नैकदा सृष्टेर्मोक्षः, किन्तु बहुशो जन्ममरणव्याध्यादिदुःखेन भृशं सन्तप्तस्य ततश्च प्रकृतिपुरुषयोर्विवेकख्यात्योत्पन्नपरवैराग्यस्यैव मोक्षोत्पत्तेरित्यर्थः ॥ २ ॥

[ भा० ] ननु मोक्षार्थं चेत् सृष्टिस्तर्हि सकृत् सृष्ट्यैव मोक्षसम्भवे पुनः पुनः सृष्टिर्न स्यादिति, तत्राह—विरक्तस्य० ।

नैकदा सृष्टेर्मोक्षः, किन्तु बहुशो जन्ममरणव्याध्यादिविविधदुःखेन भृशं तप्तस्य ततश्च प्रकृतिपुरुषयोर्विवेकख्यात्योत्पन्नपरवैराग्यस्यैव मोक्षोत्पत्तिसिद्धेरित्यर्थः ॥ २ ॥

[ भा० सा० ] ननु मोक्षार्थं सृष्टौ सकृत्सृष्टयैव मोक्षे जाते पुनः सृष्टिर्व्यर्थेत्यत आह—विरक्तस्येति । नैकसृष्ट्या मोक्षः, किन्तु बहुशो जन्ममरणव्याध्यादिविविधदुःखेन भृशं तप्तस्य प्रकृतिपुरुषविवेकज्ञानोत्पन्नवैराग्यस्यैव मोक्षोत्पत्तेरित्यर्थः ॥ २ ॥

## न श्रवणमात्रात् तत्सिद्धिरनादिवासनापटुत्वात् ॥ ३ ॥

[ वृ० ] यदि वैराग्यात् श्रवणानन्तरं मोक्षः, तदा सर्वेषां गुरूपदेशानन्तरं मोक्षः स्यात्, न चैवं दृश्यत इत्यत्राह - न श्रवण० । न श्रवणानन्तरं मोक्षः, किन्तु यस्य नानादिवासनापाटव्यम्, अनिविडा वासनेतियावत्, तस्य क्षिप्रं मुक्तिः, अन्यत्र च चिरात् ॥ ३ ॥

[ वृ० सा० ] सकृत्सृष्ट्या वैराग्यासिद्धौ हेतुमाह—नेति । श्रवणमपि बहुजन्मकृतपुण्येन भवति । तत्रापि श्रवणमात्रान्न वैराग्यसिद्धिः, किन्तु साक्षात्कारात् । साक्षात्कारश्च न झटिति भवति, अनादिमिथ्याज्ञानवासनाया बलवत्त्वात्, किन्तु योगनिष्पत्त्या । योगे च विघ्नबाहुल्यमतो बहुजन्मभिरेव वैराग्यं मोक्षश्च कस्यचित्कदाचिदेव भवतीति भावः ॥ ३ ॥

[ भा० ] सकृत्सृष्ट्या वैराग्यासिद्धौ हेतुमाह—न श्रवण० । श्रवणमपि बहुजन्मकृतपुण्येन भवति । तत्रापि श्रवणमात्रान्न वैराग्यसिद्धिः, किन्तु साक्षात्कारात् । साक्षात्कारश्च झटिति न भवति, अनादिमिथ्यावासनाया बलवत्त्वात्, किन्तु योगनिष्पत्त्या । योगे च प्रतिबन्धबाहुल्यमित्यतो बहुजन्मभिरेव वैराग्यं मोक्षश्च कदाचित् कस्यचिदेव सिद्धयतीत्यर्थः ॥ ३ ॥

[ भा० सा० ] सकृत्सृष्ट्या वैराग्यासिद्धौ हेतुमाह—नेति । श्रवणमेव बहुजन्मकृतपुण्येन भवति । तत्रापि श्रवणमात्रान्न वैराग्यसिद्धिः, किन्तु साक्षात्कारात् । साक्षात्कारश्चानादिमिथ्याज्ञानजन्यवासनाया बलवत्त्वान्न झटिति भवति, किन्तु योगनिष्पत्त्या । योगे च प्रतिबन्धबाहुल्यमिति बहुजन्मभिरेव वैराग्यं मोक्षश्च कदाचिदेव कस्यचिदेवेत्यर्थः ॥ ३ ॥

## बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥

[ वृ० ] युक्त्यन्तरमाह—बहुभृत्य० । यथैकस्य बहवो भृत्या आराधनाऽपराधाभ्यां केचिन्मुच्यन्ते, केचित् प्रसादभाजः, केचिद् बध्यन्ते, तथा प्रकृतिरेका पुरुषाश्च बहव इवि । येषां स्पष्टं विवेकज्ञानं तेषां शीघ्रम्, येषामुपासनामात्रं तेषां क्रमेण, अन्येषां तु नास्त्येव ॥ ४ ॥

[ वृ० सा० ] सृष्टिप्रवाहे हेत्वन्तरमाह—बह्विति । यथा गृहस्थानां बहवो भर्तव्या भवन्ति, एवं प्रधानस्यापि असंख्याः पुरुषा विमोचनीयाः । अतः कियतां मोक्षेऽप्यन्येषां मोक्षार्थं सृष्टिप्रवाहः, पुरुषाणामानन्त्यात् । अत एव योगसूत्रकृता—"अर्थं प्रति नष्टमप्यनष्टम्, तदन्यसाधारणत्वात्" ( सू० २।२२ ) इति ॥ ४ ॥

[ भा० ] सृष्टिप्रवाहे हेत्वन्तरमाह—बहुभृत्य०। यथा गृहस्थानां प्रत्येकं बहवो भर्तव्या भवन्ति स्त्रीपुत्रादिभेदेन, एवं सत्त्वादिगुणानामपि प्रत्येकमसङ्ख्यपुरुषा विमोचनीया भवन्ति। अतः कियत्पुरुषमोक्षेऽपि पुरुषान्तरमोचनार्थं सृष्टिप्रवाहो घटते। पुरुषाणामानन्त्यादित्यर्थः। तथा च योगसूत्रम्—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" ( सू० २।२२ ) इति ॥ ४ ॥

[ भा० सा० ] सृष्टिप्रवाहे हेत्वन्तरमाह—बहुभृत्यवदिति। यथा गृहस्थानां स्त्रीपुत्रादिभेदेन बहुभर्तव्यानामनेकव्यापारवत् सत्त्वादिगुणानामप्यसङ्ख्यपुरुषाणां मोचनीयत्वेन कियत्पुरुषमोक्षेऽपि पुरुषान्तरमोचनार्थं सृष्टिप्रवाहः। पुरुषाणामानन्त्यादित्यर्थः ॥ ४ ॥

**प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥ ५ ॥**

[ वृ० ] कूटस्थत्वादात्मनो बन्धो नास्त्येव, इत्यत्राह—प्रकृतिवास्तवे०। प्रकृतिः यं प्रत्यात्मानं विवेकेन दर्शितवती, तं प्रति प्रकृतेरप्रवर्तनं मोक्षः, यं प्रति प्रवर्तते तं प्रति पुरुषच्छायापत्तिरेवाध्यासः, न तात्त्विकः। तथा च—

"यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात्स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥"
( कू० पु० २।२।१२-१३ ) ॥ ५ ॥

[वृ० सा०] ननु कथं प्रकृतेरेव स्रष्टृत्वम्, "आत्मन आकाशः संभूतः" (तै० उ० २।१) इति पुरुषस्यापि स्रष्टृत्वोक्तेस्तत्राह—प्रकृतीति। प्रकृतौ वास्तवे स्रष्टृत्वे सिद्धे सति पुरुषस्य स्रष्टृत्वाध्याससिद्धिः, "अजामेकाम्" ( श्वे० उ० ४।५ ) इत्यादिश्रुतेः, पुंसां कूटस्थचिन्मात्रताबोधकश्रुतेश्च। पुरुषस्य स्रष्टृत्वमुपासनार्थमेव श्रुतावुच्यते। अत एव कौर्मे—

शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ ( कू० पु० १।१२।२८ ) इति।

भेदमन्योन्याभावम्, अभेदं स्वविभागरूपं प्रकृत्यादितत्त्वोपासकाः पश्यन्तीत्यर्थः। तथा च प्रकृतिपुरुषयोरुपासनीयाभेदाभिप्रायेणैव श्रुतेर्योजनेति भावः ॥ ५ ॥

[ भा० ] ननु प्रकृतेरेव स्रष्टृत्वं कथमुच्यते? "एतस्मादात्मन आकाशः सम्भूतः" ( तै० उ० २।१ ) इति श्रुत्या पुरुषस्यापि स्रष्टृत्वसिद्धेरिति, तत्राह-प्रकृति०।

प्रकृतौ स्रष्टृत्वस्य वस्तुत्वे च सिद्धे पुरुषस्य स्रष्टृत्वाध्यास एव श्रुतिषु सिद्ध्यति, उपासनायामेव श्रुतेस्तात्पर्यात्। "अजामेकाम्" ( श्वे० उ० ४।५ ) इत्यादि श्रुत्यन्तरेण प्रकृतेः स्रष्टृत्वसिद्धेः, पुंसां कूटस्थचिन्मात्रताबोधकश्रुत्यन्तरविरोधाच्चेत्यर्थः। अयं चाध्यास उपचाररूपो लोके सिद्ध एवास्ति। यथा स्वशक्तिषु योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते, तथा स्वशक्तौ प्रकृतौ वर्तमानं स्रष्टृत्वादिकं शक्तिमत्सु पुरुषेषूपचर्यते, शक्तिशक्तिमदभेदात्। तदुक्तं कौर्मे—

शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ ( कू० पु० १।१२।२८ )

इति। भेदमन्योन्याभावभेदं चाविभागरूपं प्रकृत्यादितत्त्वोपासकाः पश्यन्तीत्यर्थः। तयोश्चोदाहरणम्—"अथात आदेशो नेति नेति" ( बृ० उ० २।३।६ ) इत्यादिश्रुतिः, "आत्मैवेदं सर्वम्" ( छा० उ० ७।२५।२ ) इत्यादिश्रुतिश्चेति भावः ॥ ५ ॥

[ भा० सा० ] ननु प्रकृतेरेव स्रष्टृत्वे 'आत्मन आकाशः सम्भूतः" ( तै० उ० ३।१ ) इत्यादिश्रुतिविरोधोऽस्त आह—प्रकृतिवास्तव इति। प्रकृतौ स्रष्टृत्वस्य वस्तुत्वसिद्धेः पुरुषस्य स्रष्टृत्वाध्यास एव श्रुतिषु सिद्ध्यति, उपासनायां श्रुतेस्तात्पर्यात्। 'अजामेकाम्' ( श्वे० उ० ४।५ ) इत्यादिश्रुत्यन्तरे प्रकृतेः स्रष्टृत्वासिद्धेः, पुंसां कूटस्थचिन्मात्रताबोधकश्रुतिविरोधाच्चेत्यर्थः। यथा स्वशक्तिषु योधेषु वर्तमानौ जयपराजयौ राज्ञि उपचर्येते, तथा स्वशक्तौ प्रकृतौ वर्तमानं स्रष्टृत्वादिकं शक्तिमत्सु पुरुषेषूपचर्यते। शक्ति-शक्तिमतोरभेदादिति भावः। तयोरभेदश्चाविभागरूपः। "अथात आदेशो नेति नेति" ( बृ० उ० २।३।६ ) श्रुतिर्भेदबोधिका, "आत्मैवेदं सर्वमिति" ( छा० उ० ७।२५।२ ) चाविभागबोधिकेति बोध्यम्। तदुक्तं कौर्मे—

शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ (कू० पु० १।१२।२८) इति।

भेदमन्योन्याभावम्, अभेदमविभागरूपम् ॥ ५ ॥

## कार्यतस्तत्सिद्धिः ॥ ६ ॥

[ वृ० ] अत्र प्रमाणं दर्शयति—कार्यतः०। प्रकृतिकार्याणां महदादीनामविच्छेददर्शनात् प्रकृतेर्बन्धसिद्धिः ॥ ६ ॥

[ वृ० सा० ] ननु प्रकृतेरपि वास्तवं स्रष्टृत्वं कुतः? सृष्टेः स्वप्नतुल्यत्वस्य तत्र तत्रावगमादित्यत आह—कार्यत इति। अर्थे क्रियासामर्थ्यादित्यादिः, अर्थक्रियाकारित्वेन कार्याणां वास्तवत्वात् स्रष्टृत्वमपि वास्तवं सिद्ध्यति। स्वप्नादितुल्यताश्रुतिस्तु अनित्यत्वपरेति भावः ॥ ६ ॥

[भा०] नन्वेवं प्रकृतावपि स्रष्टृत्वं वास्तवमिति कुतोऽवधृतम्? सृष्टेः स्वप्नादितुल्यताया अपि श्रवणादिति, तत्राह—कार्यतः०।

कार्याणामर्थक्रियाकारितया वास्तवत्वेन कार्यत एव धर्मिग्राहकप्रमाणेन प्रकृतेर्वास्तवस्रष्टृत्वसिद्धेरित्यर्थः। स्वप्नादितुल्यताश्रुतयस्त्वनित्यतारूपाः सत्त्वांशमात्रे पुरुषाध्यस्तत्वांशे वा बोध्याः; अन्यथा सृष्टिप्रतिपादकश्रुतिविरोधात्, स्वप्नपदार्थानामपि मनःपरिणामत्वेनात्यन्तासत्ताविरहाच्चेति ॥ ६ ॥

[ भा० सा० ] ननु सृष्टेः स्वप्नतुल्यताश्रवणात् प्रकृतावपि वास्तवस्रष्टृत्वमनुपपन्नमत आह—कार्यत इति। कार्याणामर्थक्रियाकारित्वेन वास्तवत्वात्, कार्यरूपधर्मिग्राहकमानेन

प्रकृतेर्वास्तवस्रष्टृत्वसिद्धेरित्यर्थः । स्वप्नादितुल्यताश्रुतयस्तु अनित्यतारूपाः सत्त्वांशमादाय । अन्यथा सृष्टिप्रतिपादकश्रुतिविरोधः । स्वाप्नपदार्थानामपि मनःपरिणामत्वेनात्यन्तासत्ताविरहाच्चेति भावः ॥ ६ ॥

**चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥ ७ ॥**

[ वृ० ] प्रकृतिः प्रवृत्तिस्वभावत्वात् सर्वपुरुषान् प्रवर्तयेत्, किं विवेकाविवेकदर्शनेनेत्याह—चेतनो० । यथा कण्टकं दृष्ट्वा कश्चित् कश्चिन्निषेधति 'अनेन वर्त्मना मा गाः', न सर्वान् प्रति, तथाधिकाराच्चेतनविशेषोद्देशात् प्रवर्तनं न सर्वान् प्रतीति नियमः ॥ ७ ॥

[ वृ० सा० ] ननु प्रकृतेः स्वार्थत्वपक्षे मुक्तपुरुषं प्रत्यपि प्रवृत्तिः स्यादत आह—चेतनेति । चेतत इति चेतनः, विवेकसाक्षात्कारवानित्यर्थः । तस्योद्देशात् तं प्रतीत्यर्थः । प्रकृतेर्नियमः प्रवृत्त्यभावः, यथा कण्टकस्याभिज्ञं प्रति मोक्षो दुःखप्रयोजकत्वाभावः । प्रकृतेर्हि स्वनिष्ठदुःखमोक्षार्थं प्रवृत्तिर्वाच्या, स च विवेकिपुरुषसम्बन्धे सति जात एव । इदमेव हि प्रकृतेर्दुःखरूपत्वं यद्दुःखात्मकबुद्धिप्रतिबिम्बरूपदुःखभोगस्य पुरुषनिष्ठस्य प्रयोजकत्वम् । तच्च विवेकिपुरुषस्य दुःखभोगाभावे सति गतमेवेति स्वनिष्ठप्रयोजनवत्त्वाभावान्मुक्तपुरुषं प्रति न प्रवर्तते, किन्त्वमुक्तपुरुषं प्रत्येवेति भावः ॥ ७ ॥

[ भा० ] ननु प्रकृतेः स्वार्थत्वपक्षे मुक्तपुरुषं प्रत्यपि सा प्रवर्तेत, तत्राह—चेतनो० । 'चिती संज्ञाने' इति व्युत्पत्त्या चेतनोऽत्राभिज्ञः । यथैकमेव कण्टकं यश्चेतनोऽभिज्ञस्तस्मादेव मुच्यते, तं प्रत्येव दुःखात्मकं न भवत्यन्यान् प्रति तु भवत्येव । तथा प्रकृतिरपि चेतनादभिज्ञात् कृतार्थादेव मुच्यते । तं प्रत्येव दुःखात्मिका न भवति । अन्याननभिज्ञान् प्रति तु दुःखात्मिका भवत्येवेति नियमो व्यवस्थेत्यर्थः । एतेन स्वभावतो बद्धाया अपि प्रकृतेः स्वमोक्षो घटत इत्यतो न मुक्तपुरुषं प्रति प्रवर्तते ॥ ७ ॥

[ भा० सा० ] ननु प्रकृतेः स्वार्थत्वपक्षे मुक्तं प्रत्यपि सा प्रवर्तेत, तत्राह—चेतनेति । चेतनोऽभिज्ञः । तस्मादुद्देशो मुक्तिः । यथैक एव कण्टको यश्चेतनोऽभिज्ञस्तस्मादेव मुच्यते, तं प्रत्येव दुःखात्मको न भवति, अन्यान् प्रति भवत्येव । तथा प्रकृतिरपि चेतनादभिज्ञादेव कृतार्थान्मुच्यते, तं प्रति दुःखात्मिका न भवति । अन्यानभिज्ञान् प्रति तु भवत्येव दुःखात्मिकेत्यर्थः । अयं भावः—प्रकृतेर्हि स्वनिष्ठदुःखमोक्षार्थं प्रवृत्तिर्वाच्या, स च विवेकिपुरुषसंबन्धे सति जात एव । इदमेव हि प्रकृतेर्दुःखरूपत्वं यद् दुःखात्मकबुद्धिप्रतिबिम्बरूपदुःखभोगस्य पुरुषनिष्ठस्य प्रयोजकत्वम् । तच्च विवेकिपुरुषस्य दुःखभोगाभावे सति गतमेवेति स्वनिष्ठप्रयोजनस्यापि लाभान्मुक्तं प्रति न प्रवर्तते । किन्त्वमुक्तं प्रत्येवेति ॥ ७ ॥

**अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥**

[ वृ० ] नात्मनो बन्ध इत्युक्तम्, तत्राह—अन्ययोगे० । प्रवर्तकत्वमेव प्रकृते-

बन्धाय; अतः प्रकृतियोगेऽपि तच्छायापत्त्या पुरुषस्य बन्धाभिमानसिद्धिः, नाञ्जस्येन न तत्त्वतः। अयोदाहवदिति, यथा तप्तलौहयोगात् लौहो दहतीति मन्यते, न च लौहस्य दाहकत्वम्, किन्तु संयोगादग्नेरेव तदिति ॥ ८ ॥

[ वृ० सा० ] ननु पुरुषस्य स्रष्टृत्वमध्यस्तमित्युक्तम्, तन्न युक्तम्; प्रकृतिसंयोगेन पुरुषस्य परिणामौचित्यात्। दृष्टो हि पृथिव्यादियोगेन काष्ठादेः पृथिव्यादिसदृशः परिणामस्तत्राह—अन्ययोगेति। प्रकृतियोगेऽपि पुरुषस्य आञ्जस्येनानध्यस्ततया न स्रष्टृत्वस्य सिद्धिः, यथाग्निसंयुक्तायसो दग्धृत्वस्य, किन्तु स्वसंयुक्तप्रकृतिद्वारकमध्यस्तमेव स्रष्टृत्वम्। स्वसंयुक्ताग्निद्वारकमयस इव दग्धृत्वदृष्टान्ते तूभयोः परिणामः प्रत्यक्षसिद्धत्वादिष्यते। संदिग्धे त्वेकस्यैव परिणामेनोपपत्तावुभयोः परिणामकल्पनागौरवमिति भावः ॥ ८ ॥

[ भा० ] ननु पुरुषे स्रष्टृत्वमध्यस्तमात्रमिति यदुक्तं ( सा० सू० २१५ ) तन्न युक्तम्; प्रकृतिसंयोगेन पुरुषस्यापि महदादिपरिणामौचित्यात्। दृष्टो हि पृथिव्यादियोगेन काष्ठादेः पृथिव्यादिसदृशः परिणाम इति, तत्राह—अन्ययोगे०।

प्रकृतियोगेऽपि पुरुषस्य न स्रष्टृत्वसिद्धिराञ्जस्येन साक्षात्। तत्र दृष्टान्तोऽयोदाहवत्। यथायसो न दग्धृत्वं साक्षादस्ति, किन्तु स्वसंयुक्ताग्निद्वारकमध्यस्तमेवेत्यर्थः। उक्तदृष्टान्ते तूभयोः परिणामः प्रत्यक्षसिद्धत्वादिष्यते। सन्दिग्धस्थले त्वेकस्यैव परिणामेनोपपत्तावुभयोः परिणामकल्पने गौरवम्। अन्यथा जपासंयोगात् स्फटिकस्य रागपरिणामापत्तेरिति ॥ ८ ॥

[ भा० सा० ] ननु प्रकृतिसंयोगेन पुरुषस्य वास्तवमेव स्रष्टृत्वमस्तु ? अत आह—अन्येति। प्रकृतियोगेऽपि पुरुषस्य आञ्जस्येन साक्षान्न वास्तवस्रष्टृत्वसिद्धिः। यथा अयसो न साक्षाद्दग्धृत्वम्, किन्तु स्वसंसक्ताग्निद्वारकमध्यस्तमेव, तद्वदित्यर्थः। यद्यपि दृष्टान्ते उभयोः परिणामः प्रत्यक्षसिद्धत्वादिष्यते, तथापि प्रकृते एकस्य परिणामेनोपपत्तावुभयोः परिणामकल्पने गौरवम्। अन्यथा जपासंयोगात् स्फटिकस्य रागपरिणामापत्तिरिति भावः ॥ ८ ॥

## रागविरागयोर्योगः सृष्टिः ॥ ९ ॥

[ वृ० ] किमर्थं सृष्टिरित्यत्राह—रागवि०। रागाद् भुक्तिः वैराग्यान्मुक्तिः। परमार्थतस्तु रागादपि भोगे विषयदोषदर्शनाद्वैराग्यमेवेति ॥ ९ ॥

[ वृ० सा० ] सृष्टेर्मुख्यं निमित्तकारणमाह—रागेति। रागे सृष्टिः, विरागे वैराग्ये योगः स्वरूपेऽवस्थानं मुक्तिरिति यावत्। तथा चान्वयव्यतिरेकाभ्यां सृष्टौ राग एव कारणम्, रागवैराग्ये अपि प्रकृतिधर्मविव न पुरुषस्येति बोध्यम् ॥ ९ ॥

[ भा० ] सृष्टेः फलं मोक्ष इति प्रागुक्तम्। इदानीं सृष्टेर्मुख्यं निमित्तकारणमाह—रागवि०। रागे सृष्टिर्वैराग्ये च योगः स्वरूपेऽवस्थानम्। मुक्तिरिति यावत्। अथवा चित्तवृत्तिनिरोध इत्यर्थः। तथा चान्वयव्यतिरेकाभ्यां रागः सृष्टिकारणमित्याशयः। तथा च श्रुतिरपि ब्रह्मादिरूपां विविधकर्मगतिमुक्त्वाह—

"इवि नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" ( बृ० उ० ४।४।६ ) इति । रागवैराग्ये अपि प्रकृतिधर्मावेव ॥ ९ ॥

[ भा० सा० ] इदानीं सृष्टेर्निमित्तकारणमाह—रागेति । रागे सृष्टिः । विरागे योगः । स्वरूपेऽवस्थानं मुक्तिः । एवं चान्वयव्यतिरेकाभ्यां रागः सृष्टिकारणमिति भावः । रागवैराग्ये अपि प्रकृतिधर्मावेव न तु पुरुषस्येति ॥ ९ ॥

## महदादिक्रमेण पञ्चभूतानाम् ॥ १० ॥

[ वृ० ] प्रथमाध्याये 'सत्त्वरजस्तमः' इत्यादिसूत्रे ( १।६१ ) पञ्चविंशतितत्त्वमुक्तम्; इदानीं सप्रपञ्चं क्रममाह—महदादि० । सृष्टिरित्यनुवर्तते । क्रमं च वक्ष्यति ॥ १० ॥

[ वृ० सा० ] महदादीति । सृष्टिरिति पूर्वसूत्रादनुवर्तते । क्रमस्तूक्त एव, प्रकृतिनिष्ठस्रष्टृत्वान्महदादीति ॥ १० ॥

[ भा० ] इतः परं सृष्टिप्रक्रियां वक्तुमारभते—महदादि० । सृष्टिरिति पूर्वसूत्रादनुवर्तते । यद्यपि "एतस्मादात्मन आकाशः सम्भूतः" ( तै० उ० २।१ ) इत्यादिश्रुतावादावेव पञ्चभूतानां सृष्टिः श्रूयते, तथापि महदादिक्रमेणैव पञ्चभूतानां सृष्टिरिष्टेत्यर्थः । तेजआदिसृष्टिश्रुतौ गगनवायुसृष्टेरापूरणवदुक्तश्रुतावप्यादौ महदादिसृष्टिः पूरणीयेति भावः । अत्र च प्रमाणं घटसृष्टिवदन्तःकरणातिरिक्ताखिलसृष्टेरन्तःकरणवृत्तिपूर्वकत्वानुमानम् । किञ्च—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥ ( मु० उ० २।१।३ )

इति श्रुत्यन्तरस्थपाठक्रमानुरोधेन "स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुम्" ( प्र० उ० ६।३।४ ) इत्यादिश्रुत्यन्तरेण च पञ्चभूतसृष्टेः प्राङ्महदादिसृष्टिरवधार्यत इति प्राणश्चान्तःकरणस्य वृत्तिभेद इति वक्ष्यति (सू० २।३१ ) । अतोऽस्यां श्रुतौ प्राण एव महत्तत्त्वमिति । तथा वेदान्तसूत्रमपि महदादिक्रमेणैव सृष्टिं वक्ति—"अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गात्" ( ब्र० सू० २।३।१५ ) इति । सदाकाशयोर्मध्ये बुद्धिमनसी उत्पाद्ये इति क्रमेणेत्यर्थः । मनसि चाहङ्कारस्य प्रवेश इति ॥ १० ॥

[ भा० सा० ] इतः परं सृष्टिप्रक्रियामाह—महदादीति । सृष्टिरिति प्रवर्तते । यत्रापि श्रुतावादावेव पञ्चभूतसृष्टिः श्रूयते, तत्रापि महदादिक्रमेणैव तत्सृष्टिरिष्टेति भावः । तेजआदिसृष्टिश्रुतौ गगनवायुसृष्टिपूरणवत् तत्रापि महदादिसृष्टिः पूरणीयेत्याशयः । अन्तःकरणातिरिक्ताखिलसृष्टिरन्तःकरणवृत्तिपूर्विका, अन्तःकरणवृत्तिकार्यसृष्टित्वात्, घटादिसृष्टिवद् इत्यनुमानं चात्र प्रमाणम् । श्रुतिरपि—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ।। (मु० उ० २।१।३) इति ।
अत्र प्राणो महत्तत्त्वम् । प्राणस्यान्तःकरणवृत्तिभेदताया वक्ष्यमाणत्वात् ।। १० ।।

## आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः ।। ११ ।।

[ वृ० ] तत् किं स्वार्थे परार्थे वेत्यत्राह—आत्मार्थ० । पुरुषार्थत्वात् सृष्टेर्नैषां महदादीनामात्मार्थे स्वार्थे आरम्भः । नित्यत्वात् प्रकृतेः स्वार्थारम्भो युक्तः, महदादीनां तु कारणलयेन नाशात् सृष्टिमात्रमिति ।। ११ ।।

[ वृ० सा० ] स्रष्टृत्वस्य विशेषमाह—आत्मेति । एषां महदादीनां सृष्टेः स्रष्टृत्वस्यात्मार्थत्वात्, पुरुषमोक्षार्थत्वात्, न स्वार्थं आरम्भः स्रष्टृत्वं विनाशित्वेन मोक्षायोगात् ।। ११ ।।

[ भा० ] प्रकृतेरेव स्रष्टृत्वं स्वमोक्षार्थं तस्या नित्यत्वात् । महदादीनां तु स्वस्वविकारस्रष्टृत्वं न स्वमोक्षार्थमनित्यत्वादिति विशेषमाह—आत्मार्थत्वात्० ।

एषां महदादीनां स्रष्टृत्वस्यात्मार्थत्वात् पुरुषमोक्षार्थत्वान्न स्वार्थं आरम्भः स्रष्टृत्वं विनाशित्वेन मोक्षायोगादित्यर्थः । परमोक्षार्थकत्वे चावश्यके पुरुषमोक्षार्थकत्वमेव युक्तम्, न प्रकृतिमोक्षार्थकत्वम्, तस्याः पुरुषगुणत्वादिति ।। ११ ।।

[ भा० सा० ] महदादीनां स्रष्टृत्वं तु पुरुषविमोक्षार्थमेवेत्याह—आत्मेति । एषां महदादीनां स्रष्टृत्वस्य आत्मार्थत्वात्, पुरुषमोक्षार्थत्वान्न स्वार्थं आरम्भः स्रष्टृत्वं विनाशित्वेन मोक्षायोगादित्यर्थः । परमोक्षार्थत्वे चावश्यके पुरुषमोक्षार्थत्वमेव युक्तम्, न प्रकृतिमोक्षार्थत्वम्, तस्याः पुरुषगुणत्वादिति भावः ।। ११ ।।

## दिक्कालावाकाशादिभ्यः ।। १२ ।।

दिक्कालौ सिद्धौ, तौ कथं गणनायां न श्रुतौ ? इत्याह—दिक्काला० । तत्तदुपाधिभेदादाकाशमेव दिक्कालशब्दवाच्यम् । तस्मादाकाशेऽन्तर्भूतौ । आदिशब्दश्च संपातायातः, सप्तम्यर्थे पञ्चमी ।। १२ ।।

[ वृ० सा० ] ननु दिक्कालौ सकलव्यवहारसिद्धौ कुतो न गणितौ, तत्राह—दिक्कालाविति । आदिशब्देनोपाधयो गृह्यन्ते । तथा च तदुपाधिभ्य आकाशाच्च दिक्कालावुत्पद्येते इत्यर्थः । यद्यप्युपाधिविशिष्टाकाश एव दिक्कालौ, तथापि विशिष्टस्यातिरेकं विशेषणविशेष्योभयजन्यत्वं चाभ्युपेत्यायं जन्यत्वव्यवहारः ।। १२ ।।

[ भा० ] खण्डदिक्कालयोः सृष्टिमाह—दिक्काला० । नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव । अतो दिक्कालयोर्विभुत्वोपपत्तिः । "आकाशवत् सर्वगतश्च नित्यम्" ( छा० उ० भा० ६।३।२ ) इत्यादिश्रुत्युक्तं विभुत्वं चाकाशस्योपपन्नम् । यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः । आदिशब्देनोपाधिग्रहणादिति । यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्ड-

दिक्कालौ, तथापि विशिष्टस्यातिरिक्तताभ्युपगमवादेन वैशेषिकनये श्रोत्रस्य कार्यतावत् तत्कार्यत्वमत्रोक्तम् ॥ १२ ॥

[ भा० सा० ] खण्डदिक्कालयोः सृष्टिमाह—दिगिति । खण्डदिक्कालौ तत्तदुपाधि-संयुक्तादाकाशादुत्पद्येते इत्यर्थः । आदिनोपाधीनां ग्रहणम् । यद्यप्युपाधिविशिष्टाकाशमेव खण्डदिक्कालौ, तथापि विशिष्टस्यातिरेकं विशेषणविशेष्योभयजन्यत्वं चाभ्युपेत्य श्रोत्रस्य कार्यत्ववत्तत्कार्यत्वमुक्तम् । "आकाशवत्सर्वगतश्च नित्यः" इति श्रुत्युक्ते विभुत्वनित्यत्वे दिक्कालयोर्देशिकाभावप्रतियोगितावच्छेदकधर्मवत्त्वरूपं विभुत्वेन प्रवाहाविच्छेदरूपनित्यत्वेन चोपात्ते । इमे एव चाकाशस्य ते इति बोध्यम् । अनित्यदिक्कालसत्त्वे तु न मानमाकाशस्यैव वा नामान्तरम् ॥ १२ ॥

## अध्यवसायो बुद्धिः ॥ १३ ॥

[ वृ० ] महतो बुद्धेर्लक्षणमाह—अध्यव० । एवमेवेति निश्चयोऽध्यवसायः ॥१३॥

[ वृ० सा० ] अथ महदादीन् दर्शयति—अध्यवसाय इति । महत्तत्त्वस्य पर्यायो बुद्धिरिति । अध्यवसायश्च निश्चयाख्यः, तस्यासाधारणी वृत्तिरित्यर्थः ॥ १३ ॥

[ भा० ] इदानीं "महदादिक्रमेण०" ( सां० सू० २।१० ) इत्युक्तान् स्वरूपतो धर्मतश्च क्रमेण दर्शयति—अध्यव० ।

महत्तत्त्वस्य पर्यायो बुद्धिरिति । अध्यवसायश्च निश्चयाख्यस्तस्यासाधारणी वृत्तिरित्यर्थः । अभेदनिर्देशस्तु धर्मधर्म्यभेदात् । अस्याश्च बुद्धेर्महत्त्वं स्वेतरसकलकार्य-व्यापकत्वान्महैश्वर्याच्च मन्तव्यम्—

सविकारात् प्रधानात् तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ ( म० पु० ३।१७ )

इति स्मृतेः । "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" (बृ० उ० २।४।१०) इत्यादिश्रुतिस्मृतिषु च हिरण्यगर्भे चेतनेऽपि महानिति शब्दो बुद्ध्यभिमानित्वेनैव । यथा पृथिव्यभिमानिचेतने पृथिवीशब्दस्तद्वत् । एवमेव रुद्रादिष्वहङ्कारादिशब्दोऽपि बोध्यः । प्रकृत्यभिमानिदेवतामारभ्य सर्वेषामेव भूताभिमानिपर्यन्तानां स्वस्वबुद्धि-रूपाश्च प्रतिनियतोपाधयो महत्तत्त्वस्यैवांशा इति ॥ १३ ॥

[ भा० सा० ] महदादीनां स्वरूपमाह—अध्यवसाय इति । महत्तत्त्वस्य पर्यायो बुद्धिरिति । अध्यवसायश्च निश्चयः । स तस्यासाधारणी वृत्तिरित्यर्थः । अभेदनिर्देशस्तु धर्मधर्मिणोरभेदात् । अस्याश्च बुद्धेर्महत्त्वं स्वेतरसकलकार्यव्यापकत्वात् तदभिमानिनो महैश्वर्याच्च बोध्यम् ।

सविकारात् प्रधानात्तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ ( म० पु० ३।१७ )

इति स्मृतेः। "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" ( बृ० उ० २।४।१० ) इत्यादिश्रुतौ चेतने हिरण्यगर्भे महानिति शब्दो बुद्ध्यभिमानित्वेनैव, यथा पृथिव्यभिमानिदेवतायां पृथिवीशब्दस्तद्वत्। एवं रुद्रादिष्वहङ्कारादिशब्दा अपि। प्रकृत्यभिमानिदेवतामारभ्य सर्वेषामेव भूताभिमानिपर्यन्तानां देवानां स्वस्वबुद्धिरूपाश्च प्रतिनियतोपाधयो महत्तत्त्वस्यैवांशाः। महत्तत्त्वस्यानेकबुद्धिमण्डलरूपत्वादिति बोध्यम्। महत्तत्त्वं च देवतात्रयोपाधिः। "सर्वतः पाणिपदम्" ( गी० १३।१३ ) इत्यादिना चैतदुपाधिकदेवताया एव कथनम्। अत एव महत्तत्त्वस्यैवोपाध्युपाधिमतोरविवेकात् स्मृतिषु ब्रह्मविष्णुशिवत्ववचनम्। तत्र सात्त्विकः शिवोपाधिः, राजसो ब्रह्मोपाधिः, तामसो विष्णूपाधिः। तदुक्तम्—"गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवाभिजज्ञिरे।" इति। 'एकमूर्तिस्त्रयो देवाः' इत्युक्तेः। सात्त्विकस्य विष्णूपाधित्वमपि पुराणेषूक्तम्। एकमूर्तित्वं च एकोपाधिकत्वमेव। इदमेव महत्तत्त्वमंशतो रजस्तमःसंभेदेन परिणतं सद् व्यष्टिजीवानामुपाधिरधर्मयुक्तमपि भवति। महदहङ्कारमनोरूपान्तःकरणत्रयस्य महत्तत्त्वं बीजावस्थेत्युच्यते। अत्र महदादिक्रमेणैव सृष्टिरित्यत्र शास्त्रमेव प्रमाणम्, इति बोध्यम् ॥ १३ ॥

## तत्कार्यं धर्मादिः ॥ १४ ॥

[ वृ० ] धर्मादीनां क्वान्तर्भाव इत्यत्राह—तत्कार्यं०। धर्मज्ञानवैराग्यैश्वर्य्याणि। तत्कार्यत्वेनात्मधर्मत्वं तेषां निरस्तम्। कार्यकारणयोरभेदादन्तर्भावो दर्शितः ॥ १४ ॥

[ वृ० सा० ] महत्तत्त्वस्यापरानपि धर्मानाह—तत्कार्यमिति। धर्मज्ञानवैराग्यैश्वर्याण्यपि बुद्ध्युपादानकानि नाहङ्काराद्युपादानकानि, बुद्धेरेव निरतिशयसत्त्वकार्यत्वात् ॥ १४ ॥

[ भा० ] महत्तत्त्वस्यापरानपि धर्मानाह—तत्कार्यं०। धर्मज्ञानवैराग्यैश्वर्याण्यपि बुद्ध्युपादानकानि नाहङ्काराद्युपादानकानि बुद्धेरेव निरतिशयसत्त्वकार्यत्वादित्यर्थः ॥ १४ ॥

[ भा० सा० ] महत्तत्त्वस्यापरान् धर्मानाह—तदिति। धर्मज्ञानवैराग्यैश्वर्याणि बुद्ध्युपादानकानि नाहङ्काराद्युपादानकानि, नाप्यात्मधर्माः, बुद्धेरेव निरतिशयसत्त्वकार्यत्वादित्यर्थः ॥ १४ ॥

## महदुपरागाद्विपरीतम् ॥ १५ ॥

[ वृ० ] तस्य विशेषमाह—महदुप०। अधर्माज्ञानावैराग्यानैश्वर्याणि। दृष्टो हि सहकारिभेदात् कार्यभेदः। यथा वेत्रबीजस्य वेत्राङ्कुरजनकत्वं वह्निसंयोगसहकारिणः कदलीकाण्डजनकत्वम्, तथा सत्त्वसहकारिणो महतो धर्मादिजनकत्वम्, तमःसहकारिणोऽधर्मादिजनकत्वमिति ॥ १५ ॥

[ वृ० सा० ] नन्वेवं नरपश्वादिगतानां बुद्ध्यंशानामधर्मप्राबल्यं कथम्; तत्राह—महदिति। तदेव महत्तत्त्वं रजस्तमोभ्यामुपरागाद् विपरीतं क्षुद्रम्। अधर्माज्ञानावैराग्यानैश्वर्य-

धर्मकमपि भवति । नन्वेवं धर्माद्यवस्थानार्थं बुद्धेरपि नित्यत्वात् कथं कार्यतेति चेत्; अत्राहुरभियुक्ताः—प्रकृत्यंशरूपे वीजावस्थे महत्तत्त्वे सत्त्वविशेषकर्मवासनादीनामवस्थानात्, तस्यैव ज्ञानकारणावस्थया अङ्कुरवदुत्पत्त्यङ्गीकारात् । तथा च नित्यानित्योभयरूपा बुद्धिः, तत्रापि कारणावस्थाबुद्धौ प्रकृतिव्यवहार एव, न तु बुद्धिव्यवहारो बुद्धिलिङ्गाध्यवसायाद्यभावादिति ॥ १५ ॥

[ भा० ] नन्वेवं कथं नरपश्वादिगतानां बुद्धचंशानामधर्मप्राबल्यमुपपद्यताम्, तत्राह—महदुप० । तदेव महन्महत्तत्त्वं रजस्तमोभ्यामुपरागाद्विपरीतं क्षुद्रधर्माज्ञानावैराग्यानैश्वर्यधर्मकमपि भवतीत्यर्थः । एतेन सर्व एव पुरुषा ईश्वरा इति श्रुतिस्मृतिप्रवादोऽप्युपपादितः, सर्वोपाधीनां स्वाभाविकैश्वर्यस्य रजस्तमोभ्यामेवावरणादिति ।

नन्वेवं धर्माद्यवस्थानार्थं बुद्धेरपि नित्यत्वात् कथं कार्यतेति चेन्न; प्रकृत्यंशरूपे वीजावस्थमहत्तत्त्वे सत्त्वविशेषे कर्मवासनादीनामवस्थानात् तस्यैव ज्ञानकारणावस्थायामङ्कुरवदुपपत्त्यङ्गीकारात् । तथा चाऽऽकाशवदेव नित्यानित्योभयरूपा बुद्धिः । यथाकरणं स्वाकारः प्रकृतिप्रभावादिति ॥ १५ ॥

[ भा० सा० ] नन्वेवं नरपश्वादीनामधर्मप्राबल्यं कथमत आह—महदिति । महत् महत्तत्त्वम्, उपरागात् रजस्तमोभ्यामुपरागाद्विपरीतम्, क्षुद्रधर्माज्ञानावैराग्यानैश्वर्यधर्ममित्यर्थः । एवं च "सर्वे पुरुषा ईश्वराः" इति स्मृतिप्रवादोऽप्युपपादितः, सर्वोपाधीनां स्वाभाविकैश्वर्यस्य रजस्तमोभ्यामेवावरणादिति दिक् । धर्मादिवासनानां च प्रकृत्यंशरूपे वीजावस्थे महत्तत्त्वे सत्त्वविशेषरूपेऽवस्थानमिति न तदवस्थितये बुद्ध्यादेर्नित्यत्वापत्तिः । तस्यैव ज्ञानकारणावस्थस्याङ्कुरवदुत्पत्त्यङ्गीकारः । एवं चाकाशवदेव नित्यानित्योभयरूपा बुद्धिः । यथा च कारणावस्थाकाशे प्रकृतिव्यवहार एव नाकाशव्यवहारः, तल्लिङ्गशब्दाद्यभावात् । तथा कारणावस्थाबुद्धावपि प्रकृतिव्यवहार एव, बुद्धिलिङ्गाध्यवसायाद्यभावात् ॥ १५ ॥

## अभिमानोऽहङ्कारः ॥ १६ ॥

[वृ०] क्रमप्राप्तमहङ्कारादिलक्षणमाह—अभिमानो० । अहमिति अभिमानः ॥१६॥

[ वृ० सा० ] महतः कार्यमहङ्कारं लक्षयति—अभिमान इति । अहं करोतीत्यहंकारो धर्मः, तस्याभिमानोऽसाधारणवृत्तिः । असाधारणतासूचनायैव धर्मधर्मिणोरभेदोक्तिः । बुद्ध्या निश्चित एवार्थेऽहंकारममकारौ जायेते । अतो वृत्त्योः कार्यकारणभावानुसारेण वृत्तिवृत्तिमतोरपि कार्यकारणभाव उन्नीयत इत्यभियुक्ताः । अन्तःकरणमेकमेव बीजाङ्कुरमहावृक्षादिवदवस्थात्रयमात्रभेदात् कार्यकारणभावमापद्यते । अत एव च वायुमत्स्यपुराणयोः "मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः" ( वा० पु० ४।२५ ) इति मनोबुद्ध्योः पर्यायत्वमुक्तमिति ॥ १६ ॥

[ भा० ] महत्तत्त्वं लक्षयित्वा तत्कार्यमहङ्कारं लक्षयति—अभिमानो० । अहङ्करोतीत्यहङ्कारः कुम्भकारवद् अन्तःकरणद्रव्यम्, स च धर्मधर्म्यभेदादभिमान इत्युक्तोऽसाधारणवृत्तितासूचनाय । बूद्धया निश्चित एवार्थेऽहङ्कार-ममकारौ जायेते ।

अतो वृत्त्योः कार्यकारणभावानुसारेण वृत्तिमतोरपि कार्यकारणभाव उन्नीयत इति प्रागेवोक्तम् । अन्तःकरणमेकमेव बीजाङ्कुरमहावृक्षादिवदवस्थात्रयमात्रभेदात् कार्यकारणभावमापद्यत इति च प्रागेवोक्तम् । अत एव वायुमत्स्ययोः 'मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः" ( वा० पु० ४।२५ ) इति मनोबुद्धयोरेकपर्यायत्वमुक्तमिति ॥ १६ ॥

[ भा० सा० ] इदानीं महत्कार्यमहङ्कारं लक्षयति—अमीति। अहङ्करोतीत्यहङ्कारोऽन्तःकरणद्रव्यम्, तदभिमानवृत्तिकमित्यर्थः। वृत्तिवृत्तिमतोरभेदनिर्देशोऽसाधारणवृत्तिसूचनाय। बुद्धया निश्चित एवार्थे अहङ्कारममकारौ जायेते, अतो वृत्त्योः कार्यकारणभावानुसारेण वृत्तिमतोरपि स उन्नीयते । अन्तःकरणमेकमेव बीजाङ्कुरमहावृक्षादिवदवस्थात्रयभेदात् कार्यकारणभावमापद्यते । अत एव—

"मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ।" ( वा० पु० ४।२५ ) इति मनोबुद्धयोः पर्यायत्वमुक्तम् । कुम्भकारवदहङ्कार इति संज्ञा ।

अहङ्कारोऽभिमानश्च कर्ता मन्ता च सः स्मृतः ।
आत्मा च प्राकृतो जीवो यतः सर्वाः प्रवृत्तयः ॥ ( कू० पु० १।४।१ )

इति कौर्मोक्तेः ॥ १६ ॥

## एकादश पञ्चतन्मात्रं तत्कार्यम् ॥ १७ ॥

[ वृ० ] तस्य कार्यमाह—एकादश० । एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेति षोडशकं तत्कार्यम् ॥ १७ ॥

[ वृ० सा० ] अहङ्कारस्य कार्यमाह—एकादशेति । एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्यम्, तत्रापि "रूपरागादभूच्चक्षुः" ( म० भा० शा० २१३।१६ ) इत्याद्युक्तेः । रागधर्मकं मन एवादावहङ्कारादुत्पद्यत इति[वि]शेषः, तन्मात्रादीनां रागकार्यत्वादित्यभियुक्ताः ॥ १७ ॥

[ भा० ] क्रमागतमहङ्कारस्य कार्यमाह—एकादश० । एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्यमित्यर्थः । मयाऽनेनेन्द्रियेणेदं रूपादिकं भोक्तव्यमिदमेव सुखसाधनमित्याद्यभिमानादेवादिसर्गेष्विन्द्रिय-तद्विषयोत्पत्त्याऽहङ्कार इन्द्रियादिहेतुः, लोके भोगाभिमानिनैव रागद्वारा भोगोपकरणकरणदर्शनात्, "रूपरागादभूच्चक्षुः" ( म० भा० शा० २१३।१६ ) इत्यादिना मोक्षधर्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुराद्युत्पत्तिस्मरणाच्चेति भावः । अतश्च भूतेन्द्रिययोर्मध्ये रागधर्मकं न एवादावहङ्कारादुत्पद्यत इति विशेषस्तन्मात्रादीनां रागकार्यत्वादिति ॥ १७ ॥

[ भा० सा० ] अथाहङ्कारकार्यमाह—एकादशेति । एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्यमित्यर्थः । मया अनेनेन्द्रियेण रूपादि भोक्तव्यम्, इदं मे सुखसाधनमित्याद्यभिमानादेवादिसर्गेषु इन्द्रियविषययोरुत्पत्त्या अहङ्कार इन्द्रियादिहेतुः । लोके

भोगाभिमानिनैव रागद्वारा भोगोपकरणनिर्माणदर्शनात्। तत्रादौ रागधर्मकं मनः, ततस्तद्द्वारा अन्यत्, तन्मात्रादीनां रागकार्यत्वात्, मोक्षधर्मे—"रूपरागादभूच्चक्षुः" इत्यादिना हिरण्यगर्भरागात् समष्टिचक्षुराद्युत्पत्त्युक्तेः, इति बोध्यम् ॥ १७ ॥

**सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् ॥ १८ ॥**

[ वृ० ] कथमेकस्मात् कारणाज्जडप्रकाशौ भवत इत्यत्राह—सात्त्विक०। महद्विकारादहङ्कारात् सात्त्विकं सत्त्वसहकृतमेकादशकम् एकादशेन्द्रियं प्रवर्तते। तमःसहकृतं तन्मात्रम् ॥ १८ ॥

[ वृ० सा० ] अत्रापि विशेषमाह—सात्त्विकमिति। एकादशानां पूरणमेकादशम्, तदेवैकादशकं षोडशात्मकगणमध्ये सात्त्विकम्, अतस्तद् वैकृतात् सात्त्विकादहङ्काराज्जायते। राजसाद्दशेन्द्रियाणि, तामसात्पञ्चतन्मात्राणीत्यवगन्तव्यम् ॥ १८ ॥

[ भा० ] तत्रापि विशेषमाह—सात्त्विक०। एकादशानां पूरणमेकादशकं मनः षोडशात्मगणमध्ये सात्त्विकम्। अतस्तद्वैकृतात् सात्त्विकाहङ्काराज्जायत इत्यर्थः। अतश्च राजसाहङ्काराद् दशेन्द्रियाणि, तामसाहङ्काराच्च तन्मात्राणीत्यवगन्तव्यम्।

वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा।
अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत्।
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः॥
तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च।
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः॥ (भा० ३।५।३०-३१)

इत्यादिस्मृतिभ्य एव निर्णयात्। अत एव पुराणाद्यनुसारेण कारिकायामप्येतदुक्तम्—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ ( सां का० २५ )

इति। तैजसो राजसः। उभयं ज्ञानकर्मेन्द्रिये। ननु "देवतालयश्रुतेः" (सां०सू० २।२१ ) इत्यागामिसूत्रे करणानां देवान् वक्ष्यति, तत् कथं कारिकयापि देवानां सात्त्विकाहङ्कारकार्यत्वं नोक्तमिति ? उच्यते; समष्टिचक्षुरादिशरीरिणः सूर्यादिचेतना एव चक्षुरादिदेवताः श्रूयन्ते। अतश्च व्यष्टिकरणानां समष्टिकरणानि देवतेत्येव पर्यवस्यति। तथा च व्यष्टिसमष्ट्योरेकताऽऽशयेनात्र शास्त्रे देवाः करणेभ्यो न पृथङ् निर्दिश्यन्ते। अतः समष्टीन्द्रियाणि मनोऽपेक्षयाऽल्पसत्त्वत्वेन राजसाहङ्कारकार्यत्वेनैव निर्दिष्टानि। स्मृतिषु च व्यष्टीन्द्रियापेक्षयाऽधिकसत्त्वत्वेन सात्त्विकाहङ्कारकार्यतयोक्तानीत्यविरोध इति मन्तव्यम्। तदेवमहङ्कारस्य त्रैविध्यान्महतोऽपि तत्कारणस्य त्रैविध्यं मन्तव्यम्, "सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्" (मा० पु० ४५।३८) इति स्मरणात्। त्रैविध्यं चानयोर्व्यक्तिभेदादंशभेदाद्वेत्यन्यदेतत् ॥ १८॥

[ भा० सा० ] अत्र विशेषमाह—सात्त्विकमिति । एकादशानां पूरणमेकादशकं मनः; तत्सात्त्विकम्, अतस्तद्वैकृतात् सात्त्विकादहङ्काराज्जायते इत्यर्थः । एवं च तैजसाख्याद्राजसादहङ्काराद् दशेन्द्रियाणि, तामसाख्यात्तामसाहङ्काराच्च तन्मात्राणीत्यवगन्तव्यम् । ननु—

अहङ्काराद्विकुर्वाणान्मनो वैकारिकादभूत् ।
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ॥ ( भा० ३।५।३१ )

इत्यादिस्मृतौ करणानां ये देवास्तेषामपि सात्त्विकाहङ्कारकार्यत्वमुक्तम्, तदत्र कुतो नोक्तमिति चेत्, न; समष्टिचक्षुरादिशरीरिणः सूर्यादिचेतनानामेव चक्षुरादिदेवतात्वश्रवणात् । समष्टिकरणानि देवतेत्येव पर्यवसानेन व्यष्टिसमष्टयोरेकताशयेन करणेभ्यो देवानां पृथगनिर्देशात् । यद्यपि समष्टीन्द्रियाण्यपि मनोऽपेक्षयाल्पसत्त्वरूपत्वेन राजसाहङ्कारकार्यत्वेनात्रोक्तानि, तथापि व्यष्टीन्द्रियापेक्षयाधिकसत्त्वरूपत्वेन सात्त्विकाहङ्कारकार्यतयोक्तानि स्मृतिष्वित्यविरोधः । तदेवमहङ्कारस्य त्रैविध्यान्महतोऽपि तत्कारणस्य त्रैविध्यं बोध्यम् । "सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्" ( मा० पु० ४५।३८ ) इति स्मृतेः । त्रैविध्यं चानयोर्व्यक्तिभेदादंशभेदाद्वा ॥ १८ ॥

## कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥ १९ ॥

[ वृ० ] इन्द्रियत्रैविध्यमाह—कर्मेन्द्रिय० । कर्मेन्द्रियैर्वागादिभिः पञ्चभिर्बुद्धीन्द्रियैर्घ्राणादिभिः पञ्चभिः सहाऽऽन्तरं मन इत्येकादशकमिन्द्रियम् ॥ १९ ॥

[ वृ० सा० ] एकादशेन्द्रियाणि दर्शयति—कर्मेति । वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि, चक्षुःश्रोत्रत्वग्रसनघ्राणानि ज्ञानेन्द्रियाणि, एतैः सह आन्तरं मन इत्येकादशकमेकादशेन्द्रियाणि ॥ १९ ॥

[ भा० ] एकादशेन्द्रियाणि दर्शयति—कर्मेन्द्रिय० । कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि च चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च । एतैर्दशभिः सहाऽऽन्तरं मन एकादशकमेकादशेन्द्रियमित्यर्थः । इन्द्रस्य सङ्घातेश्वरस्य करणमिन्द्रियम् । तथा चाहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वमिति ॥ १९ ॥

[ भा० सा० ] एकादशेन्द्रियाण्याह—कर्मेति । कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च । एतैर्दशभिः सहान्तरं मन इत्येकादशेत्यर्थः । स्वार्थे कः । इन्द्रस्य संघातेश्वरस्य करणमिन्द्रियम्, एवं चाहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वम् ॥ १९ ॥

## आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥ २० ॥

[ वृ० ] भौतिकानीन्द्रियाणीति, तत्प्रतिषेधार्थमाह—आहङ्कारिक० । तत्र च श्रुतिबाधादित्यर्थः ॥ २० ॥

[ बृ० सा० ] इन्द्रियाणां भौतिकत्व प्रत्याचष्टे—आहङ्कारिक० इति । इन्द्रियाणीति शेषः । आहङ्कारिकत्वश्रुतिश्च कालेन लुप्ताप्याचार्यवाक्यादस्तीत्यनुमीयते । अन्नमयत्वादिश्रुतिस्तु अन्नकृतपटुत्वाद् बोध्या ॥ २० ॥

[ भा० ] इन्द्रियाणां भौतिकत्वमतं निराकरोति—आहङ्कारिक० । इन्द्रियाणीति शेषः । आहङ्कारिकत्वे च प्रमाणभूता श्रुतिः काललुप्ताप्याचार्यवाक्यान्मन्वाद्यखिलस्मृतिभ्यश्चानुमीयते । प्रत्यक्षा श्रुतिः—"अहं बहु स्याम्" ( छा० उ० ६।२।३ ) इत्यादिः । ननु "अन्नमयं हि सौम्य मनः" ( छा० उ० ६।५।४ ) इत्यादिभौतिकत्वेऽपि श्रुतिरस्तीति चेन्न; प्रकाशकत्वसाम्येनान्तःकरणोपादानत्वस्यैवोचिततयाऽऽहङ्कारिकत्वश्रुतेरेव मुख्यत्वात् । भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतयाऽन्नस्य मनोजन्यत्वाच्च । व्यष्टिमनआदीनां भूतसंसृष्टतयैव तिष्ठतां भूतेभ्योऽभिव्यक्तिमात्रेण तु भौतिकश्रुतिगौंणीति ॥ २० ॥

[ मा० सा० ] इन्द्रियाणां भौतिकत्वं निरस्यति—आहङ्कारिकेति । इन्द्रियाणीति शेषः । सा श्रुतिर्लुप्ताप्याचार्यवचनान्मन्वादिस्मृतिभ्यश्चानुमेया ।

ननु "अन्नमयं हि सौम्य मनः" ( छा० उ० ६।५।४ ) इत्यादि भौतिकत्वपरकश्रुतिविरोध इति चेन्न; प्रकाशत्वसाम्येनाहङ्कारस्यान्तःकरणोपादानत्वस्यैवौचित्यात्, भूतानामपि हिरण्यगर्भसंकल्पजन्यतयान्नस्य मनोजन्यत्वाच्च व्यष्टिभूतमनआदीनां भूतसृष्टितयैव स्थितेः । भूतेभ्यः पुष्टिरूपाभिव्यक्तिमात्रेण तु भौतिकत्वश्रुतिर्गौणीति ॥ २० ॥

## देवतालयश्रुतेर्नारम्भकस्य ॥ २१ ॥

[वृ०] युक्त्यन्तरमाह—देवतालय० । कारणे कार्यलय इति स्थितम् । "आदित्यं वै चक्षुर्गच्छति" इति देवे लयः श्रूयते । तस्मान्नारम्भकस्य नारम्भकाभिमतस्य भूतस्य कारणत्वमिति ॥ २१ ॥

[ बृ० सा० ] तथापि "अग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" (बृ० उ० ३।२।१३) इत्यादिश्रुतिषु देवतास्विन्द्रियलयोक्तेर्लयस्य च कारण एवौचित्याद् देवतोपादानकत्वं स्यात्, तत्राह—देवतेति । सा च श्रुतिर्नारम्भकविषयिणी । अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात् ॥ २१ ॥

[ भा० ] ननु तथाप्याहङ्कारिकत्वनिर्णयो न घटते, "अस्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" ( बृ० उ० ३।२।१३ ) इत्यादिश्रुतौ देवतास्विन्द्रियाणां लयकथनेन देवतोपादानकत्वस्याप्यवगमात्, कारण एव हि कार्यस्य लय इत्याशङ्क्याह—देवतालय० ।

देवतासु या लयश्रुतिः सा नारम्भकस्य; नारम्भकविषयिणीत्यर्थः । अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात् । अनारम्भकेष्वपि भूतेष्वात्मनो

लयश्रवणाच्च। "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" (बृ० उ० २।४।१२) इत्यादिश्रुताविति भावः ॥ २१ ॥

[ भा० सा० ] ननु—"अस्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" ( बृ० उ० ३।२।१३ ) इत्यादिश्रुतौ देवतास्विन्द्रियाणां लयकथनेन कारण एव च कार्य-लयौचित्येन देवतोपादानत्वमयुक्तमित्याह—देवतेति। देवतासु या लयश्रुतिः सा नारम्भकस्य, नारम्भकविषयिणीत्यर्थः। अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनादिति भावः। तद्देवाश्च दिग्वातार्कप्रचेताश्विवह्नीन्द्रोपेन्द्रमित्रकाश्चेति ॥ २१ ॥

## तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च ॥ २२ ॥

[वृ०] नित्यानीन्द्रियाणीति केचित्, तत्परिहारार्थमाह—तदुत्पत्ति०। अहङ्कारात्तदुत्पत्तिः श्रूयते। उत्पन्नस्य विनाशोऽप्यवश्यं भावीति ॥ २२ ॥

[ वृ० सा० ] मनो नित्यमिति केचित्, तान् प्रत्याह—तदिति। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मु० उ० २।१।३ ) इत्युत्पत्तिश्रुतेः, वृद्धाद्यवस्थासु चक्षुरादीनामिव मनसोऽप्यपचयादिना विनाशनिर्णयाच्च मनोऽनित्यमिति शेषः ॥ २२ ॥

[ भा० ] इन्द्रियान्तर्गतं मनो नित्यमिति केचित्, तत् परिहरति—तदुत्पत्ति०। तेषां सर्वेषामेवेन्द्रियाणामुत्पत्तिरस्ति, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मु० उ० २।१।३ ) इत्यादिश्रुतेः। वृद्धाद्यवस्थासु चक्षुरादीनामिव मनसोऽप्यपचयादिना विनाशनिर्णयाच्चेत्यर्थः। तथा चोक्तम्—"दशकेन निवर्तन्ते मनः सर्वेन्द्रियाणि च" इति। मनसो नित्यत्ववचनानि च प्रकृत्याख्यबीजपराणीति ॥ २२ ॥

[ भा० सा० ] इन्द्रियान्तर्गतं मनो नित्यमिति केचित्, तन्नेत्याह—तदुत्पत्तीति। तेषां सर्वेषामेवेन्द्रियाणामुत्पत्तिश्रुतेरुत्पत्तिरावश्यकी। श्रुतिश्च—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मु० उ० २।१।३ ) इति। वृद्धाद्यवस्थासु चक्षुरादीनामिव मनसोऽप्यपचयादिना विनाशदर्शनाच्च। मनसो नित्यत्ववचनानि प्रकृत्याख्यबीजपराणि ॥ २२ ॥

## अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठाने ॥ २३ ॥

[ वृ० ] चक्षुरादीनां शक्तिभेददर्शनादैन्द्रियकाणीन्द्रियाणीति, तन्निषेधति—अतीन्द्रिय०। भ्रान्तानामधिष्ठाने चक्षुर्गोलकादाविन्द्रियज्ञानम्। अन्यथा छिन्नकर्णस्य श्रवणानुपपत्तिः, उत्पाटितचक्षुषो रूपग्रहणप्रसङ्गश्चेति ॥ २३ ॥

[ वृ० सा० ] "गोलकमेवेन्द्रियम्" इति नास्तिकमतमपाकरोति—अतीन्द्रियमिति। सर्वमिन्द्रियमतीन्द्रियं भ्रान्तानामेव त्वधिष्ठाने गोलके इन्द्रियमिति बुद्धिः। क्वचिदधिष्ठानमिति पाठः ॥ २३ ॥

[ भा० ] गोलकजातमेवेन्द्रियमिति नास्तिकमतमपाकरोति—अतीन्द्रिय०। इन्द्रियं सर्वमतीन्द्रियं न तु प्रत्यक्षम्, भ्रान्तानामेव त्वधिष्ठाने गोलके तादात्म्येनेन्द्रिय[त्व]मित्यर्थः। अधिष्ठानमित्येव पाठः ॥ २३ ॥

[ भा० सा० ] "गोलकसमूहमेवेन्द्रियम्" इति नास्तिकमतं दूषयति—अतीन्द्रियमिति। अतीन्द्रियं सर्वमिन्द्रियम् भ्रान्तानां त्वधिष्ठाने(नं)गोलकमिन्द्रियत्वेनाभिमतमित्यर्थः ॥ २३ ॥

## शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥

[ वृ० ] एकमिन्द्रियम्, उपाधिभेदान्नानात्वमित्यत्राह—शक्तिभेदे०। भवतूपाधिभेदः, शक्तिभेदस्त्ववश्यं वक्तव्यः, स च सत्यः, इति नानात्वमपि सत्यम् ॥ २४ ॥

[ वृ० सा० ] एकमेवेन्द्रियं शक्तिभेदाद्विलक्षणकार्यकारीतिमतं प्रत्याह—शक्तिभेद इति। एकस्येन्द्रियस्य शक्तिभेदस्वीकारेऽपीन्द्रियभेदः सिद्धयत्येव, शक्तीनामपीन्द्रियत्वात्। अतो नैकत्वमिन्द्रियस्य ॥ २४ ॥

[ भा० ] एकमेवेन्द्रियं शक्तिभेदाद्विलक्षणकार्यकारीति मतमपाकरोति—शक्तिभेदे०। एकस्यैवेन्द्रियस्य शक्तिभेदस्वीकारेऽपीन्द्रियभेदः सिद्धयति, शक्तीनामपीन्द्रियत्वात्। अतो नैकत्वमिन्द्रियस्येत्यर्थः ॥ २४ ॥

[ भा० सा० ] एकमेवेन्द्रियं शक्तिभेदाद्विलक्षणं कार्यकारीति मतं दूषयति—शक्तीति। एकस्य शक्तिभेदस्वीकारेऽपीन्द्रियभेदः सिद्ध एव, शक्तीनामपीन्द्रियत्वात्, अतो नैकत्वमित्यर्थः ॥ २४ ॥

## न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥

[वृ०] एकत्वेनैवोपपत्तौ बहुत्वकल्पना गुर्वीत्यत्राह—न कल्पना०। स्पष्टम् ॥२५॥

[ वृ० सा० ] न च नानेन्द्रियकल्पना गुर्वीत्याह—नेति। स्पष्टम् ॥ २५ ॥

[भा० ] नन्वेकस्मादहङ्कारान्नानाविधेन्द्रियोत्पत्तिकल्पनायां न्यायविरोधस्तत्राह—न कल्पना०। सुगमम् ॥ २५ ॥

[ भा० सा० ] नन्वेकस्मादहङ्कारान्नानाविधेन्द्रियोत्पत्तौ न्यायविरोधः; अत आह—नेति। स्पष्टम्। उपष्टम्भकभेदाच्च कार्यवैजात्योपपत्तिरिति बोध्यम् ॥ २५ ॥

## उभयात्मकं मनः ॥ २६ ॥

[ वृ० ] मनसो लक्षणमाह—उभया०। बुद्धीन्द्रियात्मकं कर्मेन्द्रियात्मकं मनः अधिष्ठानादुभयप्रवृत्तेः ॥ २६ ॥

[ वृ० सा० ] मनसो विशेषमाह—उभयेति। मनोऽवधानं विना इन्द्रियाणां स्वव्यापाराक्षमत्वान्मन एव ज्ञानेन्द्रियं कर्मेन्द्रियमिति चोच्यते ॥ २६ ॥

[ भा० ] एकस्यैव मुख्येन्द्रियस्य मनसोऽन्ये दश शक्तिभेदाः, इत्याह—उभया०। ज्ञानकर्मेन्द्रियात्मकं मन इत्यर्थः ॥ २६ ॥

[ भा० सा० ] एकस्यैव मुख्येन्द्रियस्य मनसोऽन्ये दश शक्तिभेदाः, इत्याह—उभयेति। कर्मज्ञानोभयेन्द्रियात्मकं मन इत्यर्थः। तत्सहकारित्वेन ॥ २६ ॥

## गुणपरिणामभेदान्नानात्वमवस्थावत् ॥ २७ ॥

[ वृ० ] कथमेकस्मादहङ्कारादनेकानीन्द्रियाणीत्यत आह—गुणपरि० । धर्माधर्मसहकारिसत्त्वादिगुणपरिणामभेदादनेकानि तानि । अवस्थावदिति, यथैकस्य देहस्य बाल्ययौवनवार्द्धक्यानीति ॥ २७ ॥

[ वृ० सा० ] "नाद्राक्षमन्यत्रमना अभूवं नाश्रौषम्" ( बृ० उ० १।५।३ ) इत्यादिश्रुतेरेकमनःपरिणामरूपे ज्ञाने कथं नानात्वमत आह—गुणेति । गुणानां सत्त्वादीनां परिणामाश्चक्षुरादयः, तेषां भेदान्नानात्वं नानाविधत्वम्, ज्ञाने चाक्षुष्यादिवृत्तिप्रयुक्तचाक्षुषत्वादिकमादाय मनःपरिणामभूत एव ज्ञाने चाक्षुषं श्रौतमित्यादि व्यवहारः । यथा एकस्मिन्नेव देहे तत्तदन्नोपयोगानुपयोगप्रयुक्ताः कृशत्वपुष्टत्वादयोऽवस्था इत्यर्थः ॥ २७ ॥

[ भा० ] उभयात्मकमित्यस्यार्थं स्वयं विवृणोति—गुणपरि० । यथैक एव नरः सङ्गवशान्नानात्वं भजते, कामिनीसङ्गात् कामुको विरक्तसङ्गाद्विरक्तोऽन्यसङ्गाच्चान्यः, एवं मनोऽपि चक्षुरादिसङ्गाच्चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नाना भवति । तत्र हेतुर्गुणेत्यादि । गुणानां सत्त्वादीनां परिणामभेदेषु सामर्थ्यादित्यर्थः । एतच्च "अन्यत्रमना अभूवं नाश्रौषम्" ( बृ० उ० १।५।३ ) इत्यादिश्रुतिसिद्धाच्चक्षुरादीनां मनःसंयोगं विना व्यापाराक्षमत्वादनुमीयते ॥ २७ ॥

[ भा० सा० ] उभयात्मकत्वं विवृणोति—गुणेति । यथैक एव नरः सङ्गवशान्नानात्वं भजते, कामिनीसङ्गात् कामुको विरक्तसङ्गाच्चान्यः, एवं मनोऽपि चक्षुरादिसङ्गाच्चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नाना भवति । तत्र हेतुर्गुणेत्यादि । गुणानां सत्त्वादीनां परिणामभेदेषु सामर्थ्यादित्यर्थः । एतच्च "अन्यत्रमना अभूवं नाश्रौषम्" ( बृ० उ० १।५।३ ) इतिश्रुतिसिद्धाच्चक्षुरादीनां मनःसंयोगं विना व्यापाराक्षमत्वादनुमीयते ॥ २७ ॥

## रूपादिरसमलान्त उभयोः ॥ २८ ॥

[ वृ० ] उभयेन्द्रियविषयमाह—रूपादि० । उभयोर्बुद्धीन्द्रियकर्मेन्द्रिययोः । बुद्धीन्द्रियस्य विषया रूपरसगन्धस्पर्शशब्दाः, कर्मेन्द्रियस्य विषया वचनविहरणादानाऽऽनन्दरसमलाः । रसमलो नाम मलः, तदन्तः ॥ २८ ॥

[ वृ० सा० ] ज्ञानकर्मेन्द्रिययोर्विषयमाह—रूपादिति । अन्नरसानां मलः पुरीषादिः । तथा च रूपरसगन्धस्पर्शशब्दाः, वक्तव्यादातव्यगन्तव्यानन्दयितव्योत्स्रष्टव्याश्च क्रमेणोभयोर्विषयाः । आनन्दयितव्यं चोपस्थस्योपस्थान्तरमिति केचित् ॥ २८ ॥

[ भा० ] ज्ञानकर्मेन्द्रिययोर्विषयमाह रूपादि० । अन्नरसानां मलः पुरीषादिः । तथा रूपरसगन्धस्पर्शशब्दा वक्तव्याऽऽदातव्य-गन्तव्याऽऽनन्दयितव्योत्स्रष्टव्याश्चोभयोर्ज्ञानकर्मेन्द्रिययोर्दश विषया इत्यर्थः । आनन्दयितव्यं चोपस्थस्योपस्थान्तरम्, उपस्थस्य हि उपस्थान्तरं विषय इति ॥ २८ ॥

[ भा० सा० ] ज्ञानकर्मेन्द्रिययोर्विषयमाह—रूपादीति । रसानामन्नरसानां मलः पुरीषादिः । रूपरसगन्धस्पर्शशब्दा वक्तव्य-आदातव्य-गन्तव्य-आनन्दयितव्योत्सृष्टव्याश्च उभयोर्ज्ञानकर्मेन्द्रिययोर्दश विषया इत्यर्थः । आनन्दयितव्यं चोपस्थस्योपस्थान्तरम् ॥ २८ ॥

**द्रष्टृत्वादिरात्मनः, करणत्वमिन्द्रियाणाम् ॥ २९ ॥**

[ वृ० ] आत्मेन्द्रिययोर्वैधर्म्यमाह—द्रष्टृत्वादि० । व्यक्तम् ॥ २९ ॥

[ वृ० सा० ] इन्द्रियाणि कस्योपकारकाणीत्यपेक्षायामाह—द्रष्टृत्वेति । द्रष्टृत्वादिपञ्चकं वक्तृत्वादिपञ्चकं संकल्पयितृत्वं चात्मनः पुरुषस्य, दर्शनादिवृत्तौ करणत्वं त्विन्द्रियाणामित्यर्थः ॥ २९ ॥

[ भा० ] यस्येन्द्रियस्य येनोपकारेणैतानीन्द्रियाणीत्युच्यते, तदुभयमाह—द्रष्टृत्वा० । द्रष्टृत्वादिपञ्चकं वक्तृत्वादिपञ्चकं सङ्कल्पयितृत्वं चात्मनः पुरुषस्य, दर्शनादिवृत्तौ करणत्वं त्विन्द्रियाणामित्यर्थः ।

ननु द्रष्टृत्वश्रोतृत्वादिकं कदाचिदनुभवे पर्यवसानात् पुरुषस्याविकारिणोऽपि घटताम्, वक्तृत्वादिकं क्रियामात्रम्, तत् कथं कूटस्थस्य घटतामिति चेन्न; अयस्कान्तवत् सान्निध्यमात्रेण दर्शनादिवृत्तिकर्तृत्वस्यैवात्र द्रष्टृत्वादिशब्दार्थत्वात् । यथा हि महाराजः स्वयमव्याप्रियमाणोऽपि सैन्येन करणेन योद्धा भवत्याज्ञामात्रेण प्रेरकत्वात्, तथा कूटस्थोऽपि पुरुषश्चक्षुराद्यखिलकरणैर्द्रष्टा वक्ता सङ्कल्पयिता चेत्येवमादिर्भवति, संयोगाख्यसान्निध्यमात्रेणैव तेषां प्रेरकत्वादयस्कान्तमणिवदिति । कर्तृत्वं चात्र कारकचक्रप्रयोक्तृत्वम्, करणत्वं क्रियाहेतुव्यापारवत्त्वं तत्साधकतमत्वं वा कुठारादिवत् । यत्तु शास्त्रेषु दर्शनादिकर्तृत्वं निषिध्यते, तदनुकूलकृतिमत्त्वं तत्तत्क्रियावत्त्वं वा । तथा चोक्तम्—

अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्तासौ कर्ता सन्निधिमात्रतः ॥

( यो० वा० ४।५६।३१ ) इति ।

अत एव कारकचक्रप्रयोक्तृताशक्तेरात्मस्वरूपतया द्रष्टृत्ववक्तृत्वादिकमात्मनो नित्यमिति श्रूयते—"न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" ( बृ० उ० ४।३।२३ ) "न हि वक्तुर्वक्तेर्विपरिलोपो विद्यते" ( बृ० उ० ४।३।२६ ) इत्यादिनेति । ननु प्रमाणविभागे प्रत्यक्षादिवृत्तीनामेव करणत्वमुक्तमत्र कथमिन्द्रियस्योच्यत इति चेन्न; अत्र दर्शनादिरूपासु चक्षुरादिद्वारकबुद्धिवृत्तिष्वेवेन्द्रियाणां करणत्ववचनात् । तत्र पुरुषनिष्ठे बोधाख्यफले वृत्तीनां करणत्वस्योक्तत्वादिति ॥ २९ ॥

[ भा० सा० ] यस्योपकरणेन्द्रियत्वं तदाह—द्रष्टृत्वादिरिति । द्रष्टृत्वादिपञ्चकं, वक्तृत्वादिपञ्चकं सङ्कल्पयितृत्वं चात्मनः पुरुषस्य, दर्शनादिवृत्तौ करणत्वं त्विन्द्रियाणामित्यर्थः ।

ननु द्रष्टृत्वादिपञ्चकमनुभवे पर्यवसानादस्तु पुरुषस्य, वक्तृत्वादिकं क्रियारूपम्, कथं कूटस्थस्येति चेन्न; अयस्कान्तवत्सान्निध्यमात्रेण दर्शनादिवृत्तिकर्तृत्वस्यैवात्र द्रष्टृत्वादिशब्दार्थ-

त्वात् । यथा महाराजः स्वयमव्याप्रियमाणोऽपि योद्धृभिः करणैर्योद्धा भवति, आज्ञामात्रेण प्रेरकत्वात्, तथा कूटस्थोऽपि पुरुषश्चक्षुराद्यखिलकरणैर्द्रष्टा वक्ता सङ्कल्पयिता चेत्येवमादिर्भवति, संयोगाख्यसान्निध्यमात्रेण तेषां प्रेरकत्वात् । पुरुषे दर्शनादिकर्तृत्वनिषेधस्तु तदनुकूलकृतिमत्त्व-तत्तत्क्रियावत्त्वादिनिषेधाभिप्रायः । अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम्, "निरिच्छत्वादकर्तासौ कर्ता सन्निधिमात्रतः" ( यो० वा० ४।५६।३१ ) इति स्मृतेः । कारकचक्रप्रयोक्तृतारूपकर्तृत्वशक्तिरात्मस्वरूपैवेति "न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते । न वक्तुर्वक्तेर्विपरिलोपो विद्यते" ( बृ० उ० ४।३।२३,२६ ) इत्यादिना श्रूयमाणं द्रष्टृत्ववक्तृत्वादेर्नित्यत्वमपि नानुपपन्नम् । पूर्वं पुरुषनिष्ठबोधाख्ये फले वृत्तीनां करणत्वमुक्तम्, अत्र चक्षुरादिद्वारा बुद्धिवृत्तिष्विन्द्रियाणां करणत्वमुच्यत इति न विरोध इति दिक् ।। २९ ।।

## त्रयाणां स्वालक्षण्यम् ।। ३० ।।

[ वृ० ] अन्तःकरणत्रयाणामन्योन्यवैधर्म्यमाह—त्रयाणां० । महदहङ्कारमनसां स्वालक्षण्यं स्वं स्वं लक्षणम् । महतोऽध्यवसायः, अहङ्कारस्य अभिमानः, मनसः सङ्कल्प इति ।। ३० ।।

[ वृ० सा० ] इदानीमन्तःकरणत्रयस्यासाधारणवृत्तीराह—त्रयाणामिति । स्वं लक्षणमेव लक्षणमसाधारणी वृत्तिर्येषां तेषां भावः स्वालक्षण्यम् । मध्यमपदलोपी समासः । तथा चाध्यवसायो बुद्धेः, अभिमानोऽहङ्कारस्य, संकल्पाद्या मनसोऽसाधारणवृत्तय इति भावः ।। ३० ।।

[ भा० ] इदानीमन्तःकरणत्रयस्यासाधारणवृत्तीराह—त्रयाणां० । त्रयाणां महदहङ्कारमनसां स्वालक्षण्यं स्वं स्वं लक्षणमसाधारणी वृत्तिर्येषामिति मध्यमपदलोपो विग्रहस्तस्य भावस्तत्त्वमित्यर्थः । लोके च महतो लक्षणमध्यवसायादिप्रकृष्टगुणवत्त्वम् । अहङ्कृतस्य चात्मन्यविद्यमानगुणारोपः, मनसश्चेदमस्त्वित्यङ्गीकरणमिति । तथा च बुद्धेर्वृत्तिरध्यवसायोऽभिमानोऽहङ्कारस्य सङ्कल्पविकल्पौ मनस इत्यायातम् । सङ्कल्पश्चिकीर्षा, "सङ्कल्पः कर्म मानसम्" ( अ० को० १।४।११ ) इत्यनुशासनात् । विकल्पश्च संशयो योगोक्तभ्रमविशेषो वा । न तु विशिष्टज्ञानम्, तस्य बुद्धिवृत्तित्वादिति ।। ३० ।।

[ भा० सा० ] अथान्तःकरणत्रयस्यासाधारणवृत्तीराह—त्रयाणामिति । त्रयाणां महदहङ्कारमनसाम्, स्वालक्ष्यण्यं स्वं स्वं लक्षणमेव लक्षणमसाधारणी वृत्तिर्येषां तद्भाव इत्यर्थः । लोकेऽपि महतो लक्षणमध्यवसायादिप्रकृष्टगुणवत्त्वम्, अहंकृतस्यात्मन्यविद्यमानगुणारोपः, मन्तुश्च इदं मेऽस्त्वित्यङ्गीकरणं च । एवं च बुद्धेर्वृत्तिरध्यवसायः, अहं ममेत्यभिमानोऽहङ्कारस्य, सङ्कल्पविकल्पौ मनस इति भावः । सङ्कल्पश्चिकीर्षा, विकल्पः संशयो योगोक्तभ्रमविशेषो वा । न तु विशिष्टं ज्ञानम्, तस्य बुद्धिवृत्तित्वादिति बोध्यम् ।। ३० ।।

## सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ।। ३१ ।।

[ वृ० ] एषां साधर्म्यमाह—सामान्य० । पञ्च प्राणाद्या वायवस्त्रिभिः करणैर्धार्यन्ते ।। ३१ ।।

[ वृ० सा० ] त्रयस्य साधारणीं वृत्तिमाह—सामान्येति । प्राणादिरूपाः पञ्च वायुवत्संचाराद् वायव इति प्रसिद्धास्ते सामान्या साधारणी करणस्यान्तःकरणत्रयस्य वृत्तिः परिणामभेदा इत्यर्थः ॥ ३१ ॥

[ भा० ] त्रयाणां साधारणीं वृत्तिमप्याह—सामान्य० । प्राणादिरूपाः पञ्च वायुवत् सञ्चारात् वायवो ये प्रसिद्धास्ते सामान्या साधारणी करणस्यान्तःकरणत्रयस्य वृत्तिः परिणामभेदा इत्यर्थः । तदेतत् कारिकयोक्तम्—

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ ( सां० का० ३७ ) इति ।

अत्र कश्चित्—प्राणाद्या वायुविशेषा एव, ते चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूप[त]या व्याप्रियन्त इति कृत्वा प्राणाद्याः करणवृत्तिरित्यभेदनिर्देश इत्याह, तन्न; "न वायुक्रिये पृथगुपदेशाद्" ( ब्र० सू० २।४।९ ) इति वेदान्तसूत्रेण प्राणस्य वायुत्ववायुपरिणामत्वयोः स्फुटं प्रतिषेधादत्रापि तदेकवाक्यतौचित्यात्, मनोधर्मस्य कामादेः प्राणक्षोभकतया सामानाधिकरण्येनैवौचित्याच्च । वायुप्राणयोः पृथगुपदेशश्रुतयस्तु—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥ ( मु० उ० २।१।३ )

इत्याद्या इति । अत एव लिङ्गशरीरमध्ये प्राणानामगणनेऽपि न न्यूनता, बुद्धेरेव क्रियाशक्त्या सूत्रात्मप्राणादिनामकत्वादिति । अन्तःकरणपरिणामेऽपि वायुतुल्यसञ्चारविशेषाद्वायुदेवताधिष्ठितत्वाच्च वायुव्यवहारोपपत्तिरिति ॥ ३१ ॥

[ भा० सा० ] त्रयाणां साधारणीं वृत्तिमाह—सामान्येति । प्राणादिरूपाः पञ्च वायुवत्सञ्चाराद् वायवो ये प्रसिद्धास्ते सामान्या साधारणी करणत्रयस्य वृत्तिः, परिणामभेदा इत्यर्थः । अत एव प्राणानां वायुत्वं वायुपरिणामित्वं च वेदान्तसूत्रे—"न वायुक्रिये पृथगुपदेशाद्" ( ब्र० सू० २।४।९ ) इति प्रतिषिद्धम् । मनोधर्मस्य कामादेः प्राणक्षोभकतया सामानाधिकरण्यस्यैवौचित्याच्च । अत एव वायुप्राणयोः पृथगुपदेशः श्रुतिषु—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः" ( मु० उ० २।१।३ ) इत्यादि । अत एव लिङ्गशरीरमध्ये प्राणानामगणनेऽपि न न्यूनता; बुद्धेरेव क्रियाशक्त्या सूत्रात्मप्राणादिनामकत्वात् । वायुतुल्यसञ्चाराद् वायुदैवत्यत्वाच्च वायुत्वव्यवहारोऽपि तेष्विति बोध्यम् ॥ ३१ ॥

## क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥ ३२ ॥

[ वृ० ] करणानां वृत्तीराह—क्रमशो० । 'क्रमशः' यथा मन्दालोके चौरं दृष्ट्वा इन्द्रियेण वस्तु विचारयति, ततश्चौरोऽयमिति मनसा सङ्कल्पयति, ततोऽसौ धनं गृह्णातीति अहङ्कारेणाभिमन्यते, ततश्चौरं गृह्णामीति बुद्धयाऽध्यवस्यति । 'अक्रमशश्च' रात्रौ विद्युदालोके व्याघ्रं दृष्ट्वा झटिति अपसरति; तत्र चतुर्णामेकदा वृत्तिः । यद्यपि वृत्तीनामेकदाऽसम्भवात्तत्रापि क्रम एव, तथाप्युत्पलशतपत्रव्यतिभेदवद[न]वभासनादक्रम इत्युक्तमिति ॥ ३२ ॥

[ वृ० सा० ] किं च वैशेषिकाणामिवास्माकं नायं नियमो यदिन्द्रियवृत्तिः क्रमेणैव भवति, नैकदेत्याह—क्रमश इति। जातिसांकर्यस्यास्माकं मतेऽदोषत्वात्सामग्रीसमवधाने सत्यनेकैरपीन्द्रियैरेकदैकवृत्त्युत्पादने बाधकं नास्तीति भावः ॥ ३२ ॥

[ भा० ] वैशेषिकाणामिवास्माकं नायं नियमो यदिन्द्रियवृत्तिः क्रमेणैव भवति नैकदेत्याह—क्रमशो०। सुगमम्। जातिसाङ्कर्यस्यास्माकमदोषत्वात् सामग्रीसमवधाने सत्यनेकैरपीन्द्रियैरेकदैकवृत्त्युत्पादने बाधकं नास्तीति भावः। इन्द्रियवृत्तीनां विभागश्च कारिकया व्याख्यातः—

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ ( सां० का० २८ )

आलोचनं च पूर्वाचार्यैर्व्याख्यातम्—

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।
परं पुनस्तथा वस्तु धर्मैर्जात्यादिभिस्तथा ॥ (श्लो० वा० प्र० ११२,१२०)

इति। परमुत्तरकालीनं च पुनर्वस्तुधर्मैर्द्रव्यरूपधर्मैस्तथा जात्यादिभिर्ज्ञानं सविकल्पकं तथाऽऽलोचनाख्यं भवतीत्यर्थः। तथा च निर्विकल्पकसविकल्पकरूपं द्विविधमप्यैन्द्रियकं ज्ञानमालोचनसंज्ञमिति लब्धम्।

कश्चित् तु निर्विकल्पकं ज्ञानमेवालोचनमिन्द्रियजन्यं च भवति, सविकल्पकं तु मनोमात्रजन्यमिति श्लोकार्थमाह। तन्न; योगभाष्ये व्यासदेवैर्विशिष्टज्ञानस्याप्यैन्द्रियकत्वस्य व्यवस्थापितत्वात्, इन्द्रियैर्विशिष्टज्ञाने बाधकाभावाच्च। स एव सूत्रार्थमप्येवं व्याचष्टे—बाह्येन्द्रियमारभ्य बुद्धिपर्यन्तस्य वृत्तिरुत्सर्गतः क्रमेण भवति, कदाचित् तु व्याघ्रादिदर्शनकाले भयविशेषाद्विद्युल्लतेव सर्वकरणेष्वेकदैव वृत्तिर्भवतीत्यर्थ इति। तदप्यसत्; सूत्र इन्द्रियवृत्तीनामेव क्रमिकाक्रमिकत्ववचनात्, न बुद्ध्यहङ्कारवृत्त्योः प्रसङ्गोऽप्यस्ति। किञ्चैकदाऽनेकेन्द्रियवृत्तावेव वादिविप्रतिपत्त्या तन्निर्णयपरत्वमेव सूत्रस्योचितं मनोऽणुत्वप्रतिषेधाय, न तु काकदन्तान्वेषणपरत्वमिति ॥ ३२ ॥

[भा० सा० ] तार्किकाणामिवेन्द्रियवृत्तिः क्रमेणैवेति नियमो नास्माकमित्याह—क्रमश इति। स्पष्टम्। जातिसाङ्कर्यस्यादोषत्वात्सामग्रीसमवधाने सत्यनेकैरपीन्द्रियैरेकवृत्त्युत्पादने न बाधकमिति भावः। तत्र ज्ञानेन्द्रियाणां सविकल्पकं निर्विकल्पकं वस्त्विदमिति किंचिदिदमिति वा ज्ञानम्। वचनादानविहरणानन्दोत्सर्गाश्च कर्मेन्द्रियाणामिति बोध्यम्। एतेन मनसोऽणुत्वं प्रतिषिद्धम् ॥ ३२ ॥

## वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाश्च ॥ ३३ ॥

[ वृ० ] कति वृत्तयस्तत्राह—वृत्तयः०। प्रमाणविपर्ययविकल्पनिद्रास्मृतयः। प्रत्यक्षानुमानशब्दाः प्रमाणानि। विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्। विकल्प उभय-

स्पृग् ज्ञानम्। निद्रा तमोऽवलम्बि ज्ञानम्। स्मृतिरतीतज्ञानम्। क्लिष्टाः क्लेशयुक्ता रजस्तमोमय्यः। अक्लिष्टाः सत्त्वमय्यो दग्धक्लेशाः ॥ ३३ ॥

[ वृ० सा० ] बुद्धिवृत्तीनामेव संसारनिदानताप्रतिपादनार्थमादौ संकलय्य बुद्धिवृत्तीर्दर्शयति—वृत्तय इति। क्लिष्टा अक्लिष्टा वा भवन्तु वृत्तयः, परन्तु पञ्चतय्यः पञ्चप्रकारा एव नाधिकाः। क्लिष्टा दुःखदाः सांसारिकवृत्तयः, अक्लिष्टाश्च तद्विपरीता योगकालोद्भवाः। वृत्तीनां पञ्चप्रकारत्वं पातञ्जले उक्तम्—"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति ॥ ३३ ॥

[ भा० ] पिण्डीकृत्य बुद्धिवृत्तीः संसारनिदानताप्रतिपादनार्थमादौ दर्शयति—वृत्तयः०। क्लिष्टा अक्लिष्टा वा भवन्तु वृत्तयः पञ्चतय्यः पञ्चप्रकारा एव नाधिका इत्यर्थः। क्लिष्टा दुःखदाः सांसारिकवृत्तयोऽक्लिष्टाश्च तद्विपरीता योगकालीनवृत्तयः। वृत्तीनां पञ्चप्रकारत्वं पातञ्जलसूत्रेणोक्तम्—"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" ( यो०सू० १।६ ) इति। तत्र प्रमाणवृत्तिरत्राप्युक्ता। विपर्ययस्त्वस्माकं विवेकाग्रह एवान्यथाख्यातेर्निरास्यत्वात्। विकल्पस्तु विशेषदर्शनकालेऽपि राहोः शिरः, पुरुषस्य चैतन्यमित्यादिज्ञानम्। निद्रा च सुषुप्तिकालीना बुद्धिवृत्तिः। स्मृतिश्च संस्कारजन्यं ज्ञानमिति। एतत् सर्वं पातञ्जले (सू० १।७-११) सूत्रितम् ॥ ३३ ॥

[ भा० सा० ] बुद्धिवृत्तिं पिण्डीकृत्य दर्शयति—वृत्तय इति। क्लिष्टा दुःखदाः संसारकर्त्र्यः, अक्लिष्टास्तद्विपरीता योगकालीनाः। सर्वथा पञ्चप्रकारा वृत्तयो नाधिका इत्यर्थः। तदुक्तं योगशास्त्रे—"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति। प्रमाणवृत्तिरत्राप्युक्ता। विपर्ययस्त्वस्माकं विवेकाग्रह एव, अन्यथाख्यातेरभावात्। विकल्पस्तु विशेषदर्शनसत्त्वेऽपि राहोः शिरः, पुरुषस्य चैतन्यमित्यादि ज्ञानम्। निद्रा सुषुप्तिकालीना बुद्धिवृत्तिः। स्मृतिः संस्कारजन्यं ज्ञानमिति ॥ ३२ ॥

## तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥ ३४ ॥

[ वृ० ] वृत्तिनिवृत्तौ मुक्तिरित्याह—तन्निवृत्ता०। वृत्तिनिवृत्तौ क्षपिताविद्यास्मितारागद्वेषाभिनिवेशः स्वस्थः स्वरूपं लभत इत्यर्थः ॥ ३४ ॥

[ वृ० सा० ] उक्तवृत्तिनिवृत्त्यापि पुरुषस्वरूपं परिचाययति—तदिति। तासां वृत्तीनां विरामदशायां शान्ततत्प्रतिबिम्बकः स्वस्थो भवति कैवल्य इवान्यदापीत्यर्थः। तथा च योगसूत्राणि 'योगश्चित्तवृत्तिनिरोधः' 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' 'वृत्तिसारूप्यमितरत्र' इति ॥ ३४ ॥

[ भा० ] या एता बुद्धिवृत्तय उक्ता एतदौपाधिक्येव पुरुषस्यान्यरूपता न स्वतः, एतन्निवृत्तौ च पुरुषः स्वरूपेऽवस्थितो भवतीत्यनयाऽपि दिशा पुरुषस्य स्वरूपं परिचाययति—तन्निवृत्ता०।

तासां वृत्तीनां विरामदशायां शान्ततत्प्रतिबिम्बकः स्वस्थो भवति कैवल्य इवान्यदापीत्यर्थः। तथा च योगसूत्रत्रयम्—"योगश्चित्तवृत्तिनिरोधः" (१।२), "तदा द्रष्टुः स्वरूपेऽवस्थानम्" ( १।३ ), "वृत्तिसारूप्यमितरत्र" ( १।४ ) इति। इदमेव च

पुरुषस्य स्वस्थत्वं यदुपाधिवृत्तेः प्रतिबिम्बस्य निवृत्तिरिति। एतादृशी चावस्था पुरुषस्य वासिष्ठे दृष्टान्तेन प्रदर्शिता। यथा—

अनाप्ताखिलशैलादिप्रतिबिम्बे हि यादृशी।
स्यादृर्पणे दर्पणता केवलात्मस्वरूपिणो॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे।
स्यात् तादृशी केवलया स्थिते द्रष्टर्यवीक्षणे॥
( यो० वा० ३।४।५७-५८ ) इति॥ ३४॥

[ भा० सा० ] एतदौपाधिक्येव पुरुषस्यान्यरूपता न स्वत इत्याह—तदिति। तासां वृत्तीनां विगमे उपशान्तोपरागः शान्ततत्प्रतिबिम्बकः स्वस्थो भवतीत्यर्थः। इदमेव च तस्य स्वस्थत्वं तदुपाधिवृत्तेः प्रतिबिम्बस्य निवृत्तिरिति॥ ३४॥

## कुसुमवच्च मणिः॥ ३५॥

[ वृ० ] दृष्टान्तमाह—कुसुम०। यथा जपाकुसुमसंसर्गात् स्फटिके लौहित्यम्, तदपगमात् स्फटिकः स्वरूपेणावतिष्ठते, तथा सोऽपीति॥ ३५॥

[ वृ० सा० ] एतदेव दृष्टान्तेनाह—कुसुमवच्चेति। यथा जपाकुसुमे सति मणिरस्वस्थो भवति तन्निवृत्तौ च रागशून्यः स्वस्थो भवति, तद्वत्। उक्तम्—

यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः।
रञ्जकाद्युपधानेन तद्वत्परमपुरुषः॥ इति॥ ३५॥

[ भा० ] एतदेव दृष्टान्तेन विवृणोति—कुसुमवच्च०। चकारो हेतौ कुसुमेनेव मणिरित्यर्थः। यथा जपाकुसुमेन स्फटिकमणी रक्तोऽस्वस्थो भवति तन्निवृत्तौ च रागशून्यः स्वस्थो भवति तद्वदिति। तदेतदुक्तं कौर्मे—

यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः॥ (कू० पु० २।२।२८ ) इति॥ ३५॥

[ भा० सा० ] तत्र दृष्टान्तमाह—कुसुमवदिति। कुसुमेन मणिरिवेत्यर्थः। यथा जपाकुसुमेन स्फटिको रक्तोऽस्वच्छः, तन्निवृत्तौ रागशून्यः स्वस्थो भवति तद्वत्॥ ३५॥

## पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात्॥ ३६॥

[ वृ० ] करणानां तुल्यत्वात् सर्वदा तुल्यरूपता स्यादित्यत्राह—पुरुषार्थं०। न तुल्यता करणोद्भवानुद्भवाभ्यां विशेषात्, विशेषश्चादृष्टोल्लासाद् बलवत्तरत्वात्॥३६॥

[ वृ० सा० ] ननु कस्य यत्नेन करणानि प्रवर्तन्ते, न पुरुषस्य कूटस्थत्वात्तस्य, नेश्वरस्य तस्यानभ्युपगमात्तत्राह—पुरुषार्थमिति। प्रधानप्रवृत्तिवत् पुरुषार्थं करणानामुद्भवः। प्रवृत्तिरपि पुरुषस्यादृष्टाऽभिव्यक्तेरेव भवति, अदृष्टं चोपाधेरेवेति बोध्यम्॥ ३६॥

[भा०] ननु कस्य प्रयत्नेन करणजातं प्रवर्तताम्, पुरुषस्य कूटस्थत्वादीश्वरस्य च प्रतिषिद्धत्वादिति, तत्राह -पुरुषार्थं०। प्रधानप्रवृत्तिवत् पुरुषार्थं करणोद्भवः करणानां प्रवृत्तिरपि पुरुषस्यादृष्टाभिव्यक्तेरेव भवतीत्यर्थः। अदृष्टं चोपाधेरेव॥ ३६॥

[ भा० सा० ] ननु कस्य प्रयत्नेन करणजातं प्रवर्ततां पुरुषस्य कूटस्थत्वादीश्वरस्य प्रतिषेधादत आह—पुरुषार्थमिति । प्रधानप्रवृत्तिवत्करणोद्भवः, करणानां प्रवृत्तिरपि स्वत एव पुरुषार्थं पुरुषभोगार्थमित्यर्थः । भोगापवर्गलक्षणपुरुषार्थं एव [अ]नागतावस्थः करणप्रवर्तक इति यावत् । विशेषस्त्वदृष्टोल्लासादित्यर्थः । अदृष्टं चोपाधिनिष्ठं परार्थम् ।। ३६ ।।

## धेनुवद् वत्साय ।। ३७ ।।

[ वृ० ] दृष्टान्तमाह—धेनुवद्० । यथा धेनुत्वेन तुल्यत्वेऽपि या क्षीरिणी, सा वत्सं पुष्णाति, तथेति ।। ३७ ।।

[ वृ० सा० ] परार्थं स्वतः प्रवृत्तौ दृष्टान्तमाह—धेनुवदिति । यथा वत्सार्थं धेनुः पयोऽचेतनमपि स्वयमेव स्रवति नान्यद्यत्नमपेक्ष्यते तथैव पुरुषस्य कृते करणानि । दृश्यते च सुषुप्तात्स्वयमेव बुद्धेरुत्थानमिति । ईश्वरकृष्णोऽप्याह—"पुरुषार्थं एव हेतुर्न केनचित् कार्यते करणम्" इति ।। ३७ ।।

[ भा० ] परार्थं स्वतः प्रवृत्तौ दृष्टान्तमाह— धेनुवद्० । यथा वत्सार्थं धेनुः स्वयमेव क्षीरं स्रवति नान्यं यत्नमपेक्षते तथैव स्वामिनः पुरुषस्य कृते स्वयमेव करणानि प्रवर्तन्त इत्यर्थः । दृश्यते च सुषुप्तात् स्वयमेव बुद्धेरुत्थानमिति । एतदेव कारिकयाऽप्युक्तम्—

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम् ।। (सां० का० ३१) इति ।

[ भा० सा० ] स्वतः प्रवृत्तौ दृष्टान्तमाह—धेनुवदिति । यथा वत्सार्थं धेनुः स्वयमेव क्षीरं स्रवति । यद्वा धेनुर्लक्षणया तत्पयोऽचेतनमपि स्वयं स्रवति, नान्यमपेक्षते तथा पुरुषकृते स्वयमेव करणानि प्रवर्तन्ते इत्यर्थः । दृश्यते च सुषुप्तात्स्वयमेव बुद्धेरुत्थानम् ।। ३७ ।।

## करणं त्रयोदशविधमवान्तरभेदात् ।। ३८ ।।

[ वृ० ] बाह्यान्तरभेदात् करणानीत्यत्राह—करणं० । अन्तर्बुद्ध्यहङ्कारमनांसि । बाह्यानि दशेन्द्रियाणि ।। ३८ ।।

[ वृ० सा० ] करणानि कियन्तीत्याकाङ्क्षायामाह—करणमिति । मनोऽहङ्कारौ बुद्धिरित्यन्तःकरणत्रयम्, बाह्यानि च दशेति त्रयोदश करणानि । तत्रापि व्यक्तिभेदेनानन्त्यं प्रतिपादयितुं विधमित्युक्तम् ।। ३८ ।।

[ भा० ] बाह्याभ्यन्तरैर्मिलित्वा कियन्ति करणानीत्याकाङ्क्षायामाह—करणं० ।

अन्तःकरणत्रयं दश बाह्यकरणानि मिलित्वा त्रयोदश, तेष्वपि व्यक्तिभेदेनानन्त्यं प्रतिपादयितुं विधमित्युक्तम् । बुद्धिरेव मुख्यं करणमित्याशयेनोक्तमवान्तरभेदादिति । एकस्यैव बुद्ध्याख्यकरणस्य करणानामनेकत्वादित्यर्थः ।। ३८ ।।

[ भा० सा० ] बाह्यान्तर्मिलित्वा कियन्ति करणानीत्याह—करणमिति । अन्तःकरणत्रयं बाह्यानि दशेति त्रयोदश, तेषामपि व्यक्तिभेदेनानन्त्यं विधमित्यनेनोक्तम् । बुद्धिरेव मुख्यं करणमित्याशयेनावान्तरभेदादिति, तस्या एव पुरुषेऽर्थसमर्पकत्वात् ॥ २८ ॥

## इन्द्रियेषु साधकतमत्वगुणयोगात् कुठारवत् ॥ २९ ॥

[ वृ० ] इन्द्रियेषु कथं करणत्वमित्यत्राह— इन्द्रियेषु० । यथा साधकतमत्वेन कुठारे करणत्वम्, तथेन्द्रियेष्वपीति ॥ २९ ॥

[ वृ० सा० ] ननु बुद्धेरन्येषां च समानमेव करणत्वमुतास्ति कश्चिद्विशेषः ? अस्तीत्याह—इन्द्रियेष्विति । फलायोगव्यवच्छिन्नस्यैव करणत्वात् प्रहार एव छिदां प्रति मुख्यकरणत्वम्, कुठारे तु प्रकृष्टसाधनत्वम्, गुणयोगादमुख्यं तत् । एवं बुद्धावेव पुरुषार्थं प्रति फलायोगव्यवच्छिन्नत्वान्मुख्यं करणत्वम्, अन्येषु तु पुरुषार्थसाधकतमत्वगुणयोगादमुख्यं करणत्वमित्येतयोरध्याहारः । अर्थात् बुद्धावेव मुख्यं करणत्वमिति भावः ॥ २९ ॥

[ भा० ] ननु बुद्धिरेव पुरुषेऽर्थसमर्पकत्वान्मुख्यं करणम्, अन्येषां च करणत्वं गौणम्, तत्र को गुण इत्याकाङ्क्षायामाह—इद्रियेषु० । इन्द्रियेषु पुरुषार्थसाधकतमत्वरूपः करणस्य बुद्धेर्गुणः परम्परयास्ति । अतस्त्रयोदशविधं करणमुपपद्यत इति पूर्वसूत्रेणान्वयः। कुठारवदिति । यथा फलायोगव्यवच्छिन्नतया प्रहारस्यैव छिदायां मुख्यकरणत्वेऽपि प्रकृष्टसाधनत्वगुणयोगात् कुठारस्यापि करणत्वं तथेत्यर्थः । अन्तःकरणस्यैकत्वमभिप्रेत्याहङ्कारस्य गौणकरणत्वमत्र नोक्तम् ॥ २९ ॥

[ भा० सा० ] नन्वेषां गौणत्वे को गुण इत्यत आह—इन्द्रियेष्विति । इन्द्रियेषु पुरुषार्थसाधकतमत्वरूपः करणस्य बुद्धेर्गुणः परम्परयाऽस्ति, अतस्त्रयोदशविधं करणमुपपद्यत इति पूर्वसूत्रेणान्वयः । यथा छिदायां प्रहारस्य कुठारदारुसंयोगरूपस्य प्रकृष्टसाधनत्वरूपमुख्यकारणत्वेऽपि परम्परया प्रकृष्टसाधनत्वरूपगुणयोगात् कुठारस्य करणत्वं तथेत्यर्थः ॥ २९ ॥

## द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु ॥ ४० ॥

[ वृ० ] त्रयोदशकरणानां कार्यमाह—द्वयोः० । द्वयोर्बुद्धीन्द्रियकर्मेन्द्रिययोः प्रधानं मनः, तदधिष्ठानादेवैषां प्रवृत्तेः । यथा लोके भृत्येषु स्वामीति ॥ ४० ॥

[ वृ० सा० ] नन्विन्द्रियान्वयत्वादहङ्कारोऽपि मुख्यं करणं स्यान्न बुद्धिरेवेत्यत आह—द्वयोरिति । द्वयोर्बुद्ध्यहङ्कारयोर्मध्ये मनो बुद्धिरेव प्रधानं मुख्यं करणम्, पुरुषेऽर्थसमर्पकत्वात् । यथा भृत्यवर्गेषु कश्चिदेव लोकः प्रधानो भवति राज्ञोऽन्ये तु तदुपसर्जनभूता ग्रामाध्यक्षादयस्तथा ॥ ४० ॥

[ भा० ] गौणमुख्यभावे व्यवस्थां विशिष्याह—द्वयोः० । द्वयोर्बाह्यान्तरयोर्मध्ये मनो बुद्धिरेव प्रधानं मुख्यम्, साक्षात्करणमिति यावत्, पुरुषेऽर्थसमर्पकत्वात् । यथा

भृत्यवर्गेषु मध्ये कश्चिदेव लोको राज्ञः प्रधानो भवत्यन्ये च तदुपसर्जनीभूता ग्रामाध्यक्षादयस्तद्वदित्यर्थः। अत्र मनःशब्दो न तृतीयान्तःकरणवाची। वक्ष्यमाणस्याखिलसंस्काराधारत्वस्य बुद्धयतिरिक्तेष्वसम्भवात्, सम्भवे वा बुद्धिकल्पनवैयर्थ्यादिति ॥४०॥

[ भा० सा० ] तदेवाह—द्वयोर्बाह्याभ्यन्तरयोर्मध्ये मनो बुद्धिरेव प्रधानं साक्षात्करणं पुरुषेऽर्थसमर्पकत्वात्। यथा भृत्यवर्गाणां मध्ये कश्चिदेव लोको राज्ञः प्रधानं भवति, अन्ये च तदुपसर्जनीभूताः ग्रामाध्यक्षादयस्तद्वदित्यर्थः। अत्र मनःशब्देन बुद्धिः, वक्ष्यमाणस्याखिलसंस्काराधारत्वस्य बुद्धयतिरिक्तेष्वसंभवात् ॥ ४० ॥

## अव्यभिचारात् ॥ ४१ ॥

[ वृ० ] युक्तिमाह—अव्यभि०। व्यक्तम् ॥ ४१ ॥

[ वृ० सा० ] बुद्धेः प्रधानत्वे हेतूनाह—अव्यमीति। सर्वकरणव्यापकत्वात् फलाव्यभिचाराद्वा ॥ ४१ ॥

[ भा० ] बुद्धेः प्रधानत्वे हेतूनाह त्रिभिः सूत्रैः—अव्यभि०। सर्वकरणव्यापकत्वात् फलाव्यभिचाराद्वेत्यर्थः ॥ ४१ ॥

[ भा० सा० ] बुद्धेः प्रधानहेतूनाह—अव्यमीति। सर्वकरणव्यापकत्वात् फलाव्यभिचाराच्चेत्यर्थः ॥ ४१ ॥

## तथाऽशेषसंस्काराधारत्वात् ॥ ४२ ॥

[ वृ० ] युक्त्यन्तरमाह—तथाशेष०। नष्टेन्द्रियाणामपि संस्कारदर्शनादिति ॥४२॥

[ वृ० सा० ] तथेति। बुद्धिरेव ह्यखिलसंस्काराणामाधारो न चक्षुरादिः, पूर्वदृष्टश्रुताद्यर्थानामन्धबधिरादिभिः स्मरणानुपपत्तेः। नाप्यहङ्कारमनसी, तत्त्वज्ञानेनाहङ्कारमनसोर्लयेऽपि स्मरणदर्शनात्। अतो बुद्धिरेव प्रधानम् ॥ ४२ ॥

[ भा० ] बुद्धेरेवाखिलसंस्काराधारता न तु चक्षुरादेरहङ्कारमनसोर्वा, पूर्वदृष्टश्रुताद्यर्थानामन्धबधिरादिभिः स्मरणानुपपत्तेः, तत्त्वज्ञानेनाहङ्कारमनसोर्लयेऽपि स्मरणदर्शनाच्च। अतोऽशेषसंस्काराधारतयापि बुद्धेरेव सर्वेभ्यः प्रधानत्वमित्यर्थः ॥ ४२ ॥

[ भा० सा० ] तथेति। बुद्धेरेवाखिलसंस्काराधारता न तु चक्षुरादेरहङ्कारमनसोर्वा, पूर्वदृष्टश्रुतानामन्धबधिरादिभिः स्मरणानुपपत्तेः, तत्त्वज्ञानेनाहङ्कारमनसोर्लयेऽपि स्मरणाच्च। अतोऽशेषसंस्काराधारतया बुद्धिरेव प्रधानमित्यर्थः ॥ ४२ ॥

## स्मृत्याऽनुमानाच्च ॥ ४३ ॥

[ वृ० ] न्यायमाह—स्मृत्या०। इन्द्रियं विनाऽपि स्मृतिदर्शनान्मनोऽनुमीयते॥ ४३॥

[ वृ० सा० ] स्मृत्येति। स्मृत्या चिन्तनरूपया वृत्त्या प्राधान्यानुमानात्। चिन्तावृत्तिर्हि ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा, तदाश्रयतयापि चिन्तापरनाम्नी बुद्धिः श्रेष्ठेत्यवगम्यते ॥ ४३ ॥

[ भा० ] स्मृत्या० । स्मृत्या चिन्तनरूपया वृत्त्या प्राधान्यानुमानाच्चेत्यर्थः। चिन्तावृत्तिर्हि ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा, तदाश्रयतया च चिन्तापरनाम्नी बुद्धिरेव श्रेष्ठाऽन्यवृत्तिकरणेभ्य इत्यर्थः ॥ ४३ ॥

[ भा० सा० ] स्मृत्येति । स्मृत्या चिन्तनरूपया ध्यानाख्यवृत्त्या सर्वतः श्रेष्ठया स्वाश्रयरूपा चिन्तापरनाम्नी बुद्धिरेव श्रेष्ठाऽन्यवृत्तिकरणेभ्य इत्यनुमीयत इत्यर्थः ॥ ४३ ॥

## सम्भवेन्न स्वतः ॥ ४४ ॥

[ वृ० ] आत्माधारः संस्कार इत्यत्राह—सम्भवेन्न० । स्वत आत्मनो न सम्भवेत्, कूटस्थनिर्गुणत्वादिति ॥ ४४ ॥

[ वृ० सा० ] ननु चिन्तावृत्तिः पुरुषस्यैवास्तु ? नेत्याह—सम्भवेदिति । स्वतः स्मृतिर्न सम्भवेत्, कूटस्थत्वात् ॥ ४४ ॥

[ भा० ] ननु चिन्तावृत्तिः पुरुषस्यैवास्तु ? तत्राह—सम्भवेन्न० । स्वतः पुरुषस्य स्मृतिर्न सम्भवेत्, कूटस्थत्वादित्यर्थः। इत्थं वा व्याख्येयम्—नन्वेवं बुद्धिरेव करणमस्तु, कृतमवान्तरकरणैरित्याशङ्कायामाह—सम्भवेन्न स्वत इति। चक्षुरादिद्वारतां विनाऽखिलव्यापारेषु बुद्धेः स्वतः करणत्वं न सम्भवेदन्धादेरपि रूपादिदर्शनापत्तेरित्यर्थः ॥४४॥

[ भा० सा० ] नन्वेवं बुद्धिरेव करणमस्तु कृतमन्यैरित्यर्थतयाऽऽह—संभवेदिति। चक्षुरादिद्वारतां विनाऽखिलव्यापारेषु बुद्धेः स्वतः करणत्वं न सम्भवेत्, अन्धादेरपि रूपादिदर्शनापत्तेरित्यर्थः । पुरुषस्य तु न साक्षाच्चिन्तावृत्तिः, कूटस्थत्वादिति बोध्यम् ॥ ४४ ॥

## आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥ ४५ ॥

[ वृ० ] करणत्वे तुल्ये किंनिबन्धनो गुणप्रधानभावः ? इत्यत्राह—आपेक्षिको०। स्पष्टम् ॥ ४५ ॥

[ वृ० सा० ] ननु बुद्धेरेव प्राधान्ये मनसस्तृतीयान्तःकरणस्य प्राधान्यं पूर्वं कथमुक्तम् ? अत आह—आपेक्षिक इति । क्रियाविशेषं प्रति करणानामापेक्षिको गुणप्रधानभावः । चक्षुरादिव्यापारेषु मनः प्रधानम्, मनोव्यापारेऽहङ्कारोऽहङ्कारव्यापारे च बुद्धिरित्यर्थः ॥ ४५ ॥

[ भा० ] नन्वेवं बुद्धेरेव प्राधान्ये कथं मनस उभयात्मकत्वं प्रागुक्तम् ? तत्राह—आपेक्षिको० । क्रियाविशेषं प्रति करणानामापेक्षिको गुणप्रधानभावः; चक्षुरादिव्यापारेषु मनः प्रधानम्, मनोव्यापारे चाहङ्कारोऽहङ्कारव्यापारे च बुद्धिः प्रधानम् ॥ ४५ ॥

[ भा० सा० ] नन्वेवं बुद्धेरेव प्राधान्ये कथं मनस उभयात्मकत्वमुक्तमत आह—आपेक्षिक इति । क्रियाविशेषं प्रति करणानामापेक्षिको गुणप्रधानभावः । चक्षुरादिव्यापारेषु मनः प्रधानम्, मनोव्यापारेऽहङ्कारस्तद्व्यापारे च बुद्धिरित्यर्थः ॥ ४५ ॥

## तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत् ॥ ४६ ॥

[ वृ० ] निरभिसन्धानान्नापरः परार्थं प्रवर्तते, इत्यत्राह—तत्कर्मा०। बुद्धिप्रतिबिम्बितपुरुषकर्मार्जितत्वात् पुरुषार्थमभिचेष्टा प्रवर्तनं बुद्ध्यादीनाम्। यथा लोके येन अर्जितो भृत्यस्तत्कर्म करोति ॥ ४६ ॥

[ वृ० सा० ] अस्य पुरुषस्येदमेव बुद्ध्यादिकरणं नान्यदिति व्यवस्थामुपपादयति—तदिति। यत्पुरुषकर्मार्जितं यत्करणं तदर्थं तस्य प्रवृत्तिः। यथा लोके यत्पुरुषकर्मणा क्रियादिना जितो यो दासादिस्तस्य तत्पुरुषार्था प्रवृत्तिः। यद्यपि पुरुषस्य कर्मापि नास्ति, तथापि पुरुषभोगसाधनतया पुरुषस्वामिकत्वेन राज्ञो जयादिवत्पुरुषस्य कर्माभ्युपगन्तव्यमेव। कर्मणस्तत्पुरुषीयत्वे किं नियामकमिति चेत्; तथाविधं कर्मान्तरमेव। अनादित्वात्तु नानवस्था दोषायेत्यभियुक्ताः ॥ ४६ ॥

[ भा० ] नन्वस्य पुरुषस्येयं बुद्धिरेव करणम्, न बुद्ध्यन्तरमित्येवं व्यवस्था किन्निमित्तिकेत्याकाङ्क्षायामाह—तत्कर्मा०। तत्पुरुषीयकर्मजत्वात् करणस्य तत्पुरुषार्थमभिचेष्टा सर्वव्यापारो भवति लोकवत्। यथा लोके येन पुरुषेण क्रयादिकर्मणाऽर्जितो यः कुठारादिस्तत्पुरुषार्थमेव तस्य च्छिदादिव्यापार इत्यर्थः। अतः करणव्यवस्थेति भावः। यद्यपि कूटस्थतया पुरुषे कर्म नास्ति, तथापि भोगसाधनतया पुरुषस्वामिकत्वेन राज्ञो जयादिवदेव पुरुषस्य कर्मोच्यते। ननु कर्मण एव तत्पुरुषीयत्वे किं नियामकमिति चेत्; तथाविधं कर्मान्तरमेव। अनादित्वात् तु नाऽनवस्था दोषायेति।

यत्तु कश्चिदविवेकी वदति—बुद्धिप्रतिबिम्बितपुरुषस्य कर्मेति; तन्न, योगभाष्ये ( यो० वा० १।२४, २।२० ) अस्मदुक्तप्रकारस्यैवोक्तत्वेनान्यप्रकारस्याप्रामाणिकत्वात्, प्रतिबिम्बस्यावस्तुत्वेन कर्माद्यसम्भवाच्च। अन्यथा प्रतिबिम्बस्य कर्मतद्भोगाद्यङ्गीकारे बिम्बत्वाभिमतपुरुषकल्पनावैय्यर्थ्यस्य पूर्वं प्रतिपादितत्वादिति ॥४६॥

[ भा० सा० ] नन्वस्य पुरुषस्येयमेव बुद्धिः करणं नान्येत्यत्र किं विनिगमकमत आह—तदिति। तत्पुरुषीयकर्मजत्वात्करणस्य तत्पुरुषभोगार्थं चेष्टा व्यापारः, लोकवत्। यथा लोके येन पुरुषेण क्रयादिकर्मणार्जितो यः कुठारादिः स तत्पुरुषार्थमेव छिदादि जनयतीत्यर्थः। अतः करणव्यवस्थेति भावः। यद्यपि कूटस्थतया न पुरुषस्य कर्म, तथापि पुरुषभोगसाधनरूपा ( रूपतया ) पुरुषस्वामिकत्वेन राज्ञो जयादिवदेव पुरुषकर्मोच्यते। ननु कर्मण एव तत्पुरुषीयत्वे किं नियामकमिति चेत्; तथाविधं कर्मान्तरमेव। अनादित्वात्तु नानवस्था दोषाय। प्रलये च कर्मवासनाः प्रकृतौ तिष्ठन्ति, सवासनस्यान्तःकरणस्य तत्र लयात्। स्पष्टं चेदं योगभाष्ये ॥ ४६ ॥

## समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥ ४७ ॥

[ वृ० ] सर्वत्र बुद्धेः प्राधान्यमित्याह—समान०। यथा लोके ग्रामाध्यक्षाद् राज्याध्यक्षः श्रेष्ठः, तस्मादपि राजेति, तथा मनो बुद्ध्यर्थं प्रवर्तत, इति सर्वप्रधाना

बुद्धिरिति। समानकर्मयोगे पुरुषार्थतुल्यक्रियायोगेऽपि सर्वेषामिति। लोकवदिति वीप्साऽध्यायसमाप्तौ ॥ ४७॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ प्रधानकार्याध्यायो द्वितीयः ॥

[ वृ० सा० ] बुद्धेः प्राधान्यमुपसंहरति—समानेति। सर्वेषां करणानां सामान्येऽपि कर्मजन्यत्वे उक्तप्राधान्यहेतुभिर्बुद्धेरेव प्राधान्यम्, यथा लोके विवाहादिक्रियायोगसाम्येऽपि काचिदेव नायिका प्रधानं प्राधान्यप्रयोजकगुणैर्नान्यास्तद्वत्। वीप्साध्यायसमाप्तौ ॥ ४७ ॥

[ भा० ] बुद्धेः प्राधान्यं प्रकटीकर्तुमुपसंहरति—समान०। यद्यपि पुरुषार्थत्वेन समान एव सर्वेषां करणानां व्यापारस्तथापि बुद्धेरेव प्राधान्यं लोकवत्। लोके हि राजार्थकत्वाविशेषेऽपि ग्रामाध्यक्षादिषु मध्ये मन्त्रिण एव प्राधान्यं तद्वदित्यर्थः। अत एव बुद्धिरेव महानिति सर्वशास्त्रेषु गीयत इति। वीप्साऽध्यायसमाप्तौ ॥ ४७ ॥

लिङ्गदेहस्य घटकं यत् सप्तदशसङ्ख्यकम्।
प्रधानकार्यं तत् सूक्ष्ममत्राध्यायेऽनुवर्णितम् ॥

इति श्रीविज्ञानाचार्यनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये
प्रधानकार्याध्यायो द्वितीयः ॥

[ भा० सा० ] पुनरपि बुद्धेः प्राधान्यं दृष्टान्तेनाह—समानेति। यद्यपि पुरुषार्थत्वेन समान एव सर्वकरणानां व्यापारस्तथापि बुद्धेरेव प्राधान्यं लोकवत्। लोके राजार्थकत्वाऽविशेषेऽपि ग्रामाध्यक्षादिमध्ये मन्त्रिण एव प्राधान्यं तद्वदित्यर्थः ॥ अत एव बुद्धिरेव महानिति सर्वशास्त्रेषु गीयते। वीप्साध्यायसमाप्तौ। लिङ्गदेहघटकं सूक्ष्मसप्तदशसंख्याकं प्रधानकार्यमत्राध्याये निरूपितम् ॥

॥ इति द्वितीयोऽध्यायः ॥

# तृतीयो वैराग्याध्यायः

## अविशेषाद्विशेषारम्भः ॥ १ ॥

[ वृ० ] प्रधानकार्यनिरूपणानन्तरं वैराग्यार्थं तृतीयाध्यायारम्भः—अविशे०। अविशेषाद् भूतसूक्ष्माद्विशेषस्य महाभूतस्यारम्भः ॥ १ ॥

[ वृ० सा० ] प्रधानकार्यनिरूपणानन्तरं वैराग्यार्थं तृतीयाध्यायारम्भः। अविशेषादिति। अविशेषाद् भूतसूक्ष्माद् विशेषस्य महाभूतस्यारम्भः ॥ १ ॥

[ भा० ] इतः परं प्रधानस्य स्थूलकार्यं महाभूतानि शरीरद्वयं च वक्तव्यम्; ततश्च विविधयोनिगत्यादयो ज्ञानसाधनानुष्ठानहेत्वपरवैराग्यार्थम्; ततश्च परवैराग्याय ज्ञान-साधनान्यखिलानि वक्तव्यानीति तृतीयारम्भः।

अविशेषाद्०। नास्ति विशेषः शान्तघोरमूढत्वादिरूपो यत्रेत्यविशेषो भूतसूक्ष्मं पञ्चतन्मात्राख्यम्। तस्माच्छान्तादिरूपविशेषवत्त्वेन विशेषाणां स्थूलानां महाभूतानामारम्भ इत्यर्थः। सुखाद्यात्मकता हि शान्तादिरूपा स्थूलभूतेष्वेव तारतम्यादिभिरभिव्यज्यते न सूक्ष्मेषु, तेषां शान्तैकरूपतयैव योगिष्वभिव्यक्तेरिति ॥ १ ॥

[ भा० स० ] इदानीं महाभूतानां शरीरद्वयस्य चोत्पत्तिं वैराग्यायाह—अविशेषादिति। शान्तघोरमूढत्वादिविशेषरहिताद् भूतसूक्ष्मात् पञ्चतन्मात्राख्यात् शान्तादिविशेषवत्त्वेन विशेषाणां स्थूलानां महाभूतानामारम्भ इत्यर्थः। सुखाद्यात्मकता हि शान्ततादिरूपा स्थूलभूतत्वेन, सूक्ष्मेषु तेषां शान्त्येकरूपतयैव योगिष्वभिव्यक्तेरिति भावः ॥ १ ॥

## तस्माच्छरीरस्य ॥ २ ॥

[ वृ० ] तस्मा०। तस्य मांसादिमयविचारान्निर्विद्यते ॥ २ ॥

[ वृ० सा० ] तस्मादिति। मांसादिमयस्यारम्भ इत्यनुषज्यते ॥ २ ॥

[ भा० ] तदेवं पूर्वाध्यायमारभ्य त्रयोविंशतितत्त्वानामुत्पत्तिमुक्त्वा तस्माच्छरीर-द्वयोत्पत्तिमाह—तस्मात्०। तस्मात् त्रयोविंशतितत्त्वात् स्थूलसूक्ष्मशरीरद्वयस्यारम्भ इत्यर्थः ॥ २ ॥

[ भा० सा० ] तस्मादिति। तस्मात् प्रागुक्तत्रयोविंषतितत्त्वात् स्थूलसूक्ष्मशरीर-द्वयस्यारम्भ इत्यर्थः ॥ २ ॥

## तद्बीजात् संसृतिः ॥ ३ ॥

[ वृ० ] उत्पत्तिर्दर्शिता, नाशः कुतः? इत्यत आह—तद्बीजात्०। तस्य भूतारम्भस्य कारणाद् धर्मात् संसरणं नाशः ॥ ३ ॥

[ वृ० सा० ] शरीरारम्भे कारणमाह—तद्बीजादिति । तस्य शरीरस्य बीजात् कर्मणः सूक्ष्मदेहाद्वा संसृतिस्तत्तद्देहावच्छिन्नसुखदुःखोपभोगादिरूपा ॥ ३ ॥

[ भा० ] सम्प्रति त्रयोविंशतितत्त्वे संसारान्यथानुपपत्ति प्रमाणयति—तद्बीजात्० । तस्य शरीरस्य बीजात् त्रयोविंशतितत्त्वरूपात् सूक्ष्माद्धेतोः पुरुषस्य संसृतिर्गताऽगते भवतः । कूटस्थस्य विभुतया स्वतो गत्याद्यसम्भवादित्यर्थः । त्रयोविंशतितत्त्वेऽवस्थितो हि पुरुषस्तेनैवोपाधिना पूर्वकृतकर्मभोगार्थं देहाद्देहं संसरति,

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।
वाचा वाचा कृतं कर्म कायेनैव तु कायिकम् ॥ ( मनु० १२।८ )

इत्यादिस्मृतिभिः पूर्वसर्गीयकरणैरेवोत्सर्गतः सर्गान्तरेषूपभोगसिद्धेः । अत एव ब्रह्मसूत्रमुपसंहरति—"सम्परिष्वक्त" ( ३।१।१ ) इति ॥ ३ ॥

[ भा० सा० ] सम्प्रति त्रयोविंशतितत्त्वे संसारानुपपत्ति प्रमाणयति—तदिति । तस्य शरीरस्य बीजात् त्रयोविंशतितत्त्वरूपात् पुरुषस्य संसृतिर्गतागते भवतः; कूटस्थविभोः स्वतो गत्याद्यसम्भवात् । त्रयोविंशतितत्त्ववेष्टितो हि पुरुषस्तेनैवोपाधिना पूर्वकृतकर्मभोगार्थं देहाद् देहं संसरति,

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।
वाचा वाचा कृतं कर्म कायेनैव तु कायिकम् ॥ ( मनु० १२।८ )

इति स्मृतेः पूर्वसर्गीयकर्मोपयोगिकरणैरेवोत्सर्गः, सर्गान्तरेषूपभोगसिद्धेः ॥ ३ ॥

## आविवेकाच्च प्रवर्तनमविशेषाणाम् ॥ ४ ॥

[ वृ० ] भूतानामारम्भकस्वभावत्वे सर्वदाऽऽरम्भादनिर्मोक्ष इत्याह—आविवेका० । विवेकज्ञानपर्यन्तम् आरम्भकस्वभावत्वं भूततन्मात्राणामिति ॥ ४ ॥

[ वृ० सा० ] ननु भूतसूक्ष्माणामारम्भकत्वे सर्वदा बन्धप्रसङ्गः इत्यतोऽवधिमाह—आ विवेकादिति । विवेकज्ञानपर्यन्तमारम्भकत्वं भूतसूक्ष्माणामित्यर्थः ॥ ४ ॥

[ भा० ] संसृतेरवधिमप्याह—आविवेका० । ईश्वरानीश्वरत्वादिविशेषरहितानां सर्वेषामेव पुंसां विवेकपर्यन्तमेव प्रवर्तनं संसृतिरावश्यकी, विवेकोत्तरं च न सेत्यर्थः ॥४॥

[ भा० सा० ] संसृतेरवधिमाह—आ विवेकादिति । ईश्वरानीश्वरत्वादिविशेषरहितानां सर्वेषामेव पुंसां विवेकपर्यन्तमेव प्रवर्तनं संसृतिर्न तदुत्तरमित्यर्थः । यद्वा विवेकज्ञानपर्यन्तमारम्भकत्वं भूतसूक्ष्माणामित्यर्थः ॥ ४ ॥

## उपभोगादितरस्य ॥ ५ ॥

[ वृ० ] अविवेकिनं प्रत्यारम्भकत्वे महाप्रलयेऽपि तं प्रत्यारम्भकत्वं स्यादित्याह—उपभोगा० । अविवेकिन उपभोगाद् महाप्रलये शरीराभावात् कुत उपभोगः, इति न तं प्रत्यारम्भकत्वम् ॥ ५ ॥

[ वृ० सा० ] नन्वविवेकिनं प्रत्यारम्भकत्वे महाप्रलयेऽपि तं प्रत्यारम्भकत्वं कुतो नेत्यत आह—उपभोगादिति । इतरस्याविवेकिन उपभोगाद् उपभोगसमाप्तेः पूर्वस्य भोगप्रदकर्मणो नाशे प्रलय इति भोगाभावे किमर्थं शरीरमिति भावः ॥ ५ ॥

[ भा० ] तत्र हेतुमाह—उपभोगा० । इतरस्याविवेकिन एव स्वीयकर्मफलभोगावश्यम्भावादित्यर्थः ॥ ५ ॥

[ भा० सा० ] तत्र हेतुमाह—उपभोगादिति । इतरस्याविवेकिन एव स्वीयकर्मफलभोगावश्यम्भावादित्यर्थः ॥ ५ ॥

## सम्प्रति परिमुक्तो द्वाभ्याम् ॥ ६ ॥

[ वृ० ] अनारम्भकत्वे तु कुतो विशेषादविवेकिनं प्रति पुनरारम्भकत्वमित्यत्राह—सम्प्रति० । सम्प्रति संसृतिकाले द्वाभ्यां धर्माधर्माभ्यां परिष्वक्तो गमागमपरिष्वङ्गी, प्रलयेऽपि धर्माधर्मानुबद्ध आत्मेति तं प्रति पुनरारम्भः, मुक्तौ न तथेति ॥ ६ ॥

[ वृ० सा० ] सृष्टौ पुनरारम्भकत्वं कथं तत्राह—संप्रतीति । संप्रति सृष्टिकाले द्वाभ्यां धर्माधर्माभ्यां परिमुक्तो बद्ध इत्यर्थः, आङ्पूर्वस्येव परिपूर्वस्यापि मुचेर्बन्धनार्थत्वात् । प्रलये सुषुप्तयोः धर्माधर्मयोः सृष्टिकाले फलोन्मुखयोः सतोः शरीरमारभ्यते, मुक्तौ तु धर्माधर्मयोर्नाश एवेति भावः ॥ ६ ॥

[ भा० ] देहसत्त्वेऽपि संसृतिकाले भोगो नास्तीत्याह—सम्प्रति० । सम्प्रति संसृतिकाले पुरुषो द्वाभ्यां शीतोष्णसुखदुःखादिद्वन्द्वैः परिमुक्तो भवतीत्यर्थः । तदेतत् कारिकयोक्तम्—

संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् । ( सां० का० ४० ) इति । भावाः धर्माधर्मवासनादयः ॥ ६ ॥

[ भा० सा० ] लिङ्गदेहसत्त्वेऽपि गतागतिरूपसंसृतिकाले भोगो नास्तीत्याह—सम्प्रतीति । सम्प्रति संसृतिकाले द्वाभ्यां सुखदुःखाभ्यां परिमुक्तो भवतीत्यर्थः । तदेतत्कारिकयोक्तम्—"संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" ( सां० का० ४० ) इति । भावा धर्माधर्मादिवासनाः ॥ ६ ॥

## मातापितृजं स्थूलं प्रायश इतरन्न तथा ॥ ७ ॥

[ वृ० ] नित्यत्वे तु मुक्तेः कथं पारतन्त्र्यम्, इत्यत्राह—मातापितृ० । प्रायश इति दृश्यत्वात् । इतरत् सूक्ष्मशरीरं न तथा, दुरूहत्वात् ॥ ७ ॥

[ वृ० सा० ] स्थूलसूक्ष्मशरीरयोर्वैलक्षण्यमाह—मातेति । स्थूलमपि किञ्चन मातापितृजं न भवतीति प्रायश इत्युक्तम् । न तथा न मातापितृजम् ॥ ७ ॥

[ भा० ] अतः परं शरीरद्वयं विशिष्य वक्तुमुपक्रमते—मातापितृजं० ।

स्थूलं मातापितृजं प्रायशो बाहुल्येनायोनिजस्यापि स्थूलशरीरस्य स्मरणात् । इतरच्च सूक्ष्मशरीरं न तथा, न मातापितृजं सर्गाद्युत्पन्नत्वादित्यर्थः । तदुक्तं कारिकया—

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ( सां० का० ४० ) इति ।

नियतं नित्यं द्विपरार्धस्थायि, गौणनित्यम्, प्रतिशरीरं लिङ्गोत्पत्तिकल्पने गौरवात्। प्रलये तु तन्नाशः श्रुतिस्मृतिप्रामाण्यादिष्यते । गतिकाले भोगाभाववचनमुत्सर्गाभिप्रायेण । कदाचित् तु वायवीयशरीरप्रवेशतो गमनकालेऽपि भोगो भवति। अतो यममार्गे दुःखभोगवाक्यान्युपपद्यन्ते ॥ ७ ॥

[ भा० सा० ] अतः परं शरीरद्वयं विशिष्याह— मातेति । स्थूलं प्रायशो बाहुल्येन मातापितृजम् । अयोनिजस्यापि स्थूलशरीरस्य श्रवणम् । इतरत् सूक्ष्मशरीरं न तथा न मातापितृजं सर्गाद्युत्पन्नत्वादित्यर्थः। प्रलये तु तन्नाशे श्रुतिस्मृतिप्रामाण्यात्, द्विपरार्धस्थायित्वेन गौणनित्यत्वव्यवहारोऽप्यस्मिन् । गतिकाले भोगाभावोऽप्युत्सर्गः । कदाचित्तु वायवीयशरीरप्रवेशतो गमनकालेऽपि भोगो भवति । अत एव यमलोकमार्गे दुःखवाक्यान्युपपद्यन्ते । वस्तुतस्तु स्थूलशरीरप्रवेशपर्यन्तं संसृतौ न भोग इति तत्तात्पर्यम् ॥ ७ ॥

## पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य, नेतरस्य ॥ ८ ॥

[ वृ० ] द्वयोर्देहयोः कस्य भोग इत्यत्राह—पूर्वोत्पत्ते० । पूर्वोत्पत्तेः सूक्ष्मशरीरस्य भोगादेकस्य तस्य, नेतरस्य स्थूलस्य तत्कार्यत्वम्, स्थूलशरीरस्य तु गौणो भोगः, मृतशरीरे भोगादर्शनात् ॥ ८॥

[ वृ० सा० ] तयोरेव पौर्वापर्यभोगव्यवस्थां चाह—पूर्वेति । पूर्वोत्पत्तेः सूक्ष्मशरीरस्य तत्कार्यत्वं स्थूलशरीरस्य भोगादिति । पञ्चमी प्रथमार्थे । भोग एकस्य सूक्ष्मस्य नेतरस्य स्थूलस्य, मृतशरीरे भोगादर्शनादित्यर्थः ॥ ८ ॥

[ भा० ] स्थूलसूक्ष्मशरीरयोर्मध्ये किमुपाधिकः पुरुषस्य द्वन्द्वयोगः ? तदवधारयति—पूर्वोत्पत्ते० । पूर्वं सर्गादावुत्पत्तिर्यस्य लिङ्गशरीरस्य तस्यैव तत्कार्यत्वं सुखदुःखकार्यकत्वम्। कुतः ? एकस्य लिङ्गदेहस्यैव सुखदुःखाख्यभोगात्, न त्वितरस्य स्थूलशरीरस्य । मृतशरीरे सुखदुःखाद्यभावस्य सर्वसम्मतत्वादित्यर्थ; ॥ ८ ॥

[ भा० सा० ] लिङ्गदेहस्यैव द्वन्द्वयोग इत्याह—पूर्वेति । पूर्वं सर्गादावुत्पत्तेः श्रवणाद लिङ्गदेहस्यैव तत्कार्यत्वम्, सुखदुःखादिकार्यत्वे सुखदुःखाद्यभावस्य सर्वसम्मतत्वादित्यर्थः ॥ ८ ॥

## सप्तदशैकं लिङ्गम् ॥ ९ ॥

[ वृ० ] कतिभिस्तत्त्वैः सूक्ष्मशरीरारम्भ इत्यत्राह—सप्त० । सप्तदश च एकं च अष्टादश, तैर्लिङ्गं सूक्ष्मदेह उत्पद्यते । बुद्ध्यहङ्कारमनांसि, पञ्च सूक्ष्मभूतानि, दशेन्द्रियाणि चेति ॥ ९ ॥

[ वृ० सा० ] लिङ्गशरीरस्वरूपमाह—सप्तदशेति । सप्तदश एकं चेति समाहारद्वन्द्वः । बुद्ध्यहङ्कारमनांसि, पञ्च सूक्ष्मभूतानि, दशेन्द्रियाणीति सूक्ष्मं लिङ्गमिति चोच्यते ॥ ९ ॥

[ भा० ] उक्तस्य सूक्ष्मशरीरस्य स्वरूपमाह—सप्तदश०। सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति। तत्र सप्तदश मिलित्वा लिङ्गशरीरम्। तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः। एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश। अहङ्कारस्य बुद्धावेवान्तर्भावः। चतुर्थसूत्रे वक्ष्यमाणप्रमाणादेतान्येव सप्तदश लिङ्गं मन्तव्यम्, न तु सप्तदशमेकं चेत्यष्टादशतया व्याख्येयम्, उत्तरसूत्रेण व्यक्तिभेदस्योपपाद्यतयाऽत्र लिङ्गैकत्व एकशब्दस्य तात्पर्यावधारणाच्च,

कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते।
स सप्तदशकेनापि राशिना युज्यते च वै॥
( म० भा० शा० ३५१।१५-१६ )

इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वसिद्धेश्च। सप्तदशावयवा अत्र सन्तीति सप्तदशको राशिरित्यर्थः। राशिशब्देन स्थूलदेहवल्लिङ्गदेहस्यावयवित्वं निराकृतम्, अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात्। स्थूलदेहस्य चावयवित्वमेकतादिप्रत्यक्षानुरोधेन कल्प्यत इति।

अत्र च लिङ्गदेहे बुद्धिरेव प्रधानेत्याशयेन लिङ्गदेहस्य भोगः प्रागुक्तः (सू० ३।८)। प्राणश्चान्तःकरणस्यैव वृत्तिभेदः। अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भाव इत्यस्य सप्तदशावयवकस्य शरीरत्वं स्वयं वक्ष्यति—"लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः" ( सां० सू० ६।६९ ) इति सूत्रेण। अतो भोगायतनत्वमेव मुख्यं शरीरलक्षणम्। तदाश्रयतया त्वन्यत्र शरीरत्वमिति पश्चाद् व्यक्तीभविष्यति। "चेष्टेन्द्रियार्थाश्रयः शरीरम्" ( न्या० सू० १।१।११ ) इति तु न्यायेऽपि तस्यैव लक्षणं कृतमिति॥ ९॥

[ भा० सा० ] सूक्ष्मशरीरस्वरूपमाह—सप्तेति। सप्तदश मिलित्वा लिङ्गशरीरम्, तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः। "स सप्तदशकेनापि राशिना युज्यते च वै" ( म० भा० शा० ३५१।१६ ) इति स्मृतेर्लिङ्गस्य सप्तदशावयवत्वं बोध्यम्। एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश। अहङ्कारस्य बुद्धावन्तर्भावः, प्राणाश्चान्तःकरणस्यैव वृत्तिभेद इति तस्यापि लिङ्गदेहेऽन्तर्भावः। अस्यैव भोगायतनत्वं प्रागुक्तम्, अत्र देहबुद्धेः प्रधानत्वात्। अतोऽस्यापि शरीरत्वम्, भोगायतनत्वस्यैव शरीरत्वात्, वह्नेरिन्धनवत्। आत्मनोऽभिव्यक्तिस्थानत्वाच्चास्य लिङ्गदेहत्वम्। अनेनैव चेहलोकपरलोकयोः संसरणं जीवानाम्। तदन्तर्गतपञ्चतन्मात्राणि तस्याश्रयः, चित्रवदाश्रयं विना लोकान्तरगमनासम्भवात्। तच्च सर्गादौ स्वयंभुव उपाधिभूतमेकमेव। तस्यैव विराडाख्यवक्ष्यमाणस्थूलशरीरवद् व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तस्यैवांशभूतानि ततो विभजन्ते, पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत्॥ ९॥

## व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥

[ वृ० ] सूक्ष्मदेहस्य सर्वत्र तुल्यत्वात् कथं पुत्तिकाहस्तिदेहानां विसदृशानां तस्मादुत्पत्तिरित्यत्राह—व्यक्ति० । व्यक्तम् ॥ १० ॥

[ वृ० सा० ] सूक्ष्मदेहस्य सर्वत्र तुल्यत्वात् स्थूलवैसादृश्यं कुत इत्यत आह—व्यक्तीति । व्यक्तयः स्थूलदेहाः, भेदो वैलक्षण्यम् ॥ १० ॥

[ भा० ] ननु लिङ्गं चेदेकं तर्हि कथं पुरुषभेदेन विलक्षणा भोगाः स्युस्तत्राह—व्यक्तिभेद० । यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गम्, तथापि तस्य पश्चाद् व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति । यथेदानीमेकस्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति पुत्रकन्यादिलिङ्गदेहरूपेण । तत्र कारणमाह—कर्मविशेषादिति । जीवान्तराणां भोगहेतुकर्मादेरित्यर्थः । अत्र विशेषवचनात् समष्टिसृष्टिर्जीवानां साधारणैः कर्मभिर्भवतीत्यायातम् ।

अयं च व्यक्तिभेदो मन्वादिष्वप्युक्तः । यथा मनौ समष्टिपुरुषस्य षडिन्द्रियोत्पत्त्यनन्तरम्—

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ (मनु० १।१६) इति ।

षण्णामिति समस्तलिङ्गशरीरोपलक्षणम् । आत्ममात्रासु चिदंशेषु संयोज्येत्यर्थः । तथा च तत्रैव वाक्यान्तरम्—

तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह ।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः ॥
( पद्म पु० ५।३।१५६ ) इति ॥ १० ॥

[ भा० सा० ] ननु यद्येकं तर्हि कथं पुरुषभेदेन भोगभेदोऽत आह—व्यक्तीति । यद्यपि सर्गादौ हिरण्यगर्भोपाधिकमेकमेव लिङ्गम्, तथापि पश्चाद् व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वं जीवान्तराणां भोगहेतुः कर्मभेदादित्यर्थः । अत्र विशेष इत्युक्तेः समष्टिसृष्टिर्जीवानां साधारणैः कर्मभिरिति लभ्यते । तदुक्तं मनुना समष्टिपुरुषषडिन्द्रियोत्पत्त्यनन्तरम्—

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ ( मनु० १।१६ ) इति ।

षण्णामिन्द्रियाणाम्, इदं समस्तलिङ्गशरीरोपलक्षणम् । स्वयम्भूः स्वलिङ्गशरीरावयवान् सूक्ष्मानल्पानल्पमात्रासु स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेत्यर्थः ॥ १० ॥

## तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः ॥ ११ ॥

[ वृ० ] यद्यात्मा अन्यः, कथं देहेऽहमित्यभिमानः ? इत्यत्राह—तदधि० । आत्माधिष्ठानाश्रये देहे भोगादात्मवादाद् देहेऽहमित्यभिमानवादः ॥ ११ ॥

[ वृ० सा० ] देहेऽहमिति वादः कथम्? तत्राह—तदिति। तदित्यात्मपरामर्शः। पूर्वस्मात् पूर्वस्मादहमिति वादात् उत्तर उत्तरोऽहमिति वादः। वाद इत्यभेदेन देहेऽहमिति ज्ञानस्य भ्रमत्वमाह—आत्मनो देहातिरिक्तत्वात्॥ ११॥

[ भा० ] नन्वेवं भोगायतनतया लिङ्गस्यैव शरीरत्वे स्थूले कथं शरीरव्यवहारस्तत्राह—तदधिष्ठाना०। तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तस्याश्रये षाट्कौशिकदेहे तद्वादो देहवादस्तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहवादादित्यर्थः। लिङ्गसम्बन्धादधिष्ठानस्य देहत्वमधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति पर्यवसितोऽर्थः। अधिष्ठानं च सूक्ष्मं पञ्चभूतात्मकं वक्ष्यते। तथा च शरीरत्रयं सिद्धम्। यत् तु—

आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः।
सर्वासां भूतजातीनां ब्रह्मणस्त्वेक एव किम्॥

इत्यादिशास्त्रेषु शरीरद्वयमेव श्रूयते तल्लिङ्गशरीराधिष्ठानशरीयोरन्योन्यनियतत्वेन सूक्ष्मत्वेन चैकताभिप्रायादिति॥ ११॥

[ भा० सा० ] ननु लिङ्गस्यैव भोगायतनत्वे स्थूले कथं शरीरव्यवहारोऽत आह—तदिति। तद्रूपं यद्भोगाधिष्ठानं लिङ्गम्, तस्याश्रये षाट्कौशिके देहे तद्वादो देहवादस्तद्वादात्तस्मिन्नधिष्ठाने देहवादादित्यर्थः। देहाश्रयत्वेन गौणं देहत्वमिति भावः। अत एव—

आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः।
सर्वासां भूतजातीनां ब्रह्मणोऽस्यैक एव किम्॥ इत्युक्तम्॥ ११॥

**न स्वातन्त्र्यात्तदृते च्छायावच्चित्रवच्च॥ १२॥**

[ वृ० ] अत्र दृष्टान्तान्तरमाह—न स्वातन्त्र्या०। यद्यात्मना विना देहेऽहमिति प्रत्ययः, तदा मृतदेहेऽहमिति प्रत्ययः स्यात्? न चैवम्; यथा आवरकेण विना न च्छाया, भित्ति विना न चित्रम्, तथात्रापीति॥ १२॥

[ वृ० सा० ] देह एवाहंप्रत्ययविषयोऽस्तु तस्यैवात्मत्वादिति निरस्यति—नेति। तदृते आत्मसत्त्वं विना स्वयमेव देहो नाहंप्रतीतिविषयः, मृतदेहेऽप्यहमिति प्रत्ययापत्तेः। यथावरकं विना न छाया, भित्ति विना न चित्रमिति॥ १२॥

[ भा० ] ननु षाट्कौशिकातिरिक्ते लिङ्गशरीराधिष्ठानभूते शरीरान्तरे किं प्रमाणमित्याकाङ्क्षायामाह—न स्वातन्त्र्यात्०। तल्लिङ्गशरीरं तदृतेऽधिष्ठानं विना स्वातन्त्र्यान्न तिष्ठति। यथा छाया निराधारा न तिष्ठति, यथा वा चित्रमित्यर्थः। तथा च स्थूलदेहं त्यक्त्वा लोकान्तरगमनाय लिङ्गदेहस्याधारभूतं शरीरान्तरं सिद्ध्यतीति भावः। तस्य च स्वरूपं कारिकायामुक्तम्—

सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते॥ ( सां० का० ३९ )

इति। अत्र तन्मात्रकार्यं मातापितृजशरीरापेक्षया सूक्ष्मं यद्भूतपञ्चकं यावल्लिङ्गस्थायि प्रोक्तम्, तदेव लिङ्गाधिष्ठानं शरीरमिति लब्धं कारिकान्तरेण—

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्॥ ( सां० का० ४१ )

इति। विशेषैः स्थूलभूतैः सूक्ष्माख्यैः, स्थूलावान्तरभेदैरिति यावत्। अस्यां कारिकायां सूक्ष्माख्यानां स्थूलभूतानां लिङ्गशरीराद्भेदावगमेन 'पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्' ( सां० का० ४० ) इत्यादिपूर्वोदाहृतकारिकायां सूक्ष्मभूतपर्यन्तस्य लिङ्गत्वं नार्थः, किन्तु महदादिरूपं यल्लिङ्गं तत् स्वाधारसूक्ष्मपर्यन्तं संसरति, तेन सह संसरतीत्यर्थः।

नन्वेवं लिङ्गघटकपदार्थाः कियन्त इति कथमवधार्यमिति चेत्—

वासना भूतसूक्ष्मं च कर्मविद्ये तथैव च।
दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः॥
( यो० वा० ६।१२८।१८ )

इति वासिष्ठादिवाक्येभ्यः। अत्र लिङ्गशरीरप्रतिपादनेनैव पुर्यष्टकमपि व्याख्येयमित्याशयेन बुद्धिधर्माणामपि वासनाकर्मविद्यानां पृथगुपन्यासः। भूतसूक्ष्मं चात्र तन्मात्रा दशेन्द्रियाणि च ज्ञानकर्मेन्द्रियभेदेन पुरद्वयमित्याशयः। यत् तु मायावादिनो लिङ्गशरीरस्य तन्मात्रस्थाने प्राणादिपञ्चकं प्रक्षिपन्ति, पुर्यष्टकं चान्यथा कल्पयन्ति, तदप्रामाणिकमिति॥ १२॥

[ भा० सा० ] ननु लिङ्गशरीरस्यावयवित्वे मानाभावः, सप्तदशकराशेरेव लिङ्गत्वौचित्यात् ? अत आह—नेति। तल्लिङ्गं बुद्धयादिराशिरूपं तद्दते अधिष्ठानेनावयविना विना स्वातन्त्र्यान्न तिष्ठति। यथा छाया चित्रं वा निराधारं न तिष्ठति तद्वदित्यर्थः। एवं च स्थूलदेहं त्यक्त्वा लोकान्तरगमनाय बुद्धयादिरूपस्य लिङ्गस्याधारभूतं तद्रूपावयवाख्यमवयविशरीरं सिद्धयतीत्यर्थः। लिङ्गघटकाः पदार्थास्तु—

वासना भूतसूक्ष्मं च कर्मविद्ये तथैव च।
दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः॥ ( यो० वा० ६।१२८।१८ )

इति वाशिष्ठे उक्ताः। एतदेव पुर्यष्टकम्, दशेन्द्रियैः ज्ञानकर्मेन्द्रियभेदेन पुरद्वयसत्त्वात्। पुर्यष्टकप्रदर्शनायात्र बुद्धिधर्माणामपि वासनाकर्मविद्यानां पृथगुपन्यासः॥ १२॥

## मूर्तत्वेऽपि न सङ्घातयोगात्तरणिवत्॥ १३॥

[ वृ० ] सूक्ष्मदेह एवात्मा भविष्यतीत्यत्राह—मूर्तत्वे०। सङ्घातत्वान्मूर्तः, मूर्तत्वात् परार्थः। तरणिवदिति, यथा प्रकाशत्वेऽपि मूर्तत्वान्नादित्यस्यात्मत्वम्॥ १३॥

[ वृ० सा० ] सूक्ष्मदेहस्यात्मत्वं दूषयति—मूर्तत्व इति। मूर्तत्वेऽपि सक्रियत्वेऽपि नात्मा सङ्घातयोगात् संहतत्वात्। संहतत्वस्य परार्थत्वव्याप्यत्वात्तदतिरिक्त आत्मेत्यर्थः। तरणिप्रकाशः प्रत्यक्षोऽपि परार्थः ॥ १३ ॥

[ भा० ] ननु मूर्तद्रव्यतया वाय्वादेरिव लिङ्गस्याकाशमेवासङ्गेनाधारोऽस्तु, व्यर्थमन्यत्र सङ्गकल्पनमिति, तत्राह—मूर्तत्वेऽपि०। मूर्तत्वेऽपि न स्वातन्त्र्यादसङ्गतयाऽवस्थानं प्रकाशरूपत्वेन सूर्यस्येव सङ्घातसङ्गानुमानादित्यर्थः। सूर्यादीनि सर्वाणि तेजांसि पार्थिवद्रव्यसङ्गेनैवावस्थितानि दृश्यन्ते। लिङ्गं च सत्त्वप्रकाशमयमतो भूतसङ्गतमिति ॥

[ भा० सा० ] तस्यावयविद्रव्यत्वमाह—मूर्तेति। भूतसूक्ष्मास्तन्मात्राः, मूर्तत्वेऽपि तेषां नावयविनं विनाऽवस्थानम्, किन्तु सङ्घातरूपावयवियोगादेवावस्थानम्। यथा बहूनां तेजसामवयवी सूर्य इत्यर्थः ॥ १३ ॥

## अणुपरिमाणं तत्कृतिश्रुतेः ॥ १४ ॥

[ वृ० ] मन आत्मा भविष्यतीत्यत्राह—अणु०। मनोऽणुपरिमाणम्, तत्क्रियायां श्रुतिदर्शनात्। अथ व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। यदि कर्णशष्कुलीवन्नियतावयवस्योपाधित्वम्, तदा तावन्मात्रे वृत्तिलाभो नान्यत्रेति श्रोत्रवत् प्रसज्येत। ततश्च देहमात्रमुपाधिर्वक्तव्यः। तथा च तदवच्छेदेन वृत्तिलाभे 'शिरसि मे वेदना', 'पादे मे सुखम्' इत्यव्याप्यवृत्तित्वप्रतीतिविरोधः। युगपज्ज्ञानानुत्पत्तेरपि मनसोऽणुत्वम्। न्यायश्चान्यत्र प्रपञ्चित इति ॥ १४ ॥

[ वृ० सा० ] मनस आत्मत्वं निरस्यति—अण्विति। तत् मनः, अणुपरिमाणमल्पं कृतिश्रुतेः क्रियाश्रवणात्, आत्मनश्च व्यापकत्वात् ॥ १४ ॥

[ भा० ] लिङ्गस्य परिमाणमवधारयति—अणु०। तल्लिङ्गमणुपरिमाणं परिच्छिन्नम्, न त्वत्यन्तमेवाणु, सावयवस्योक्तत्वात्। कुतः? कृतश्रुतेः क्रियाश्रुतेः, "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" ( तै० उ० २।५ ) इत्यादिश्रुतेर्विज्ञानाख्यबुद्धिप्रधानतया विज्ञानस्य लिङ्गस्याखिलकर्मश्रवणादित्यर्थः। विभुत्वे सति क्रिया न सम्भवति। तद्गतिश्रुतेरिति पाठस्तु समीचीनः। लिङ्गशरीरस्य च गतिश्रुतिः—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति" ( बृ० उ० ४।४।२ ) इति। सविज्ञानो बुद्धिसहित एव जायते सविज्ञानं यथा स्यात् तथा संसरति चेत्यर्थः ॥ १४ ॥

[ भा० सा० ] लिङ्गशरीरस्य परिमाणमाह—अण्विति। तल्लिङ्गमणुपरिमाणं परिच्छिन्नं न विभु, तद्गतिश्रवणात्। "तमुत्क्रामन्तं प्राणोऽनुक्रामति" ( बृ० उ० ४।४।२ ) इत्यादि श्रुतेरित्यर्थः। नात्यन्तमणु, सावयवत्वश्रुतेरिति बोध्यम् ॥ १४ ॥

## तदन्नमयत्वश्रुतेः ॥ १५ ॥

[ वृ० ] हेत्वन्तरमाह—तदन्न० । तस्य मनसोऽन्नमयत्वे श्रुतिरस्ति । अन्नमयत्वेन च सौम्यत्वं दर्शितम् । सौम्यत्वञ्च चन्द्ररूपत्वमिति । न चात्मा चन्द्रः । श्रुतिश्च "अन्नं वै प्राणाः" । प्राणश्च चन्द्रमयो ज्ञेयः । "चन्द्रमा मनसो जातः" ( ऋग्० १०।९०।१३ ) इति । तस्मादणु मनो नात्मेति ॥ १५ ॥

[ वृ० सा० ] मनसोऽन्नमयत्वश्रुतेरपि नात्मत्वमित्याह—तदिति । 'अन्नमयं हि सौम्य मनः" ( छा० उ० ६।५।४ ) इति श्रुतिः ॥ १५ ॥

[ भा० ] परिच्छिन्नत्वे युक्त्यन्तरमाह—तदन्न० । तस्य लिङ्गस्यैकदेशतोऽन्नमयत्वश्रुतेर्न विभुत्वं सम्भवतीति । विभुत्वे सति नित्यतापत्तेरित्यर्थः । सा च श्रुतिर्हि "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाग्" ( छा० उ० ६।५।४ ) इत्यादिः । यद्यपि मनआदीनि न भौतिकानि तथाप्यन्नसंसृष्टिसजातीयांशपूरणादन्नमयत्वादिव्यवहारो बोध्यः ॥ १५ ॥

[ भा० सा० ] परिच्छिन्नत्वे युक्त्यन्तरमाह—अन्नेति । तस्य लिङ्गस्यैकदेशतोऽन्नमयत्वश्रुतेर्न विभुत्वम्, विभुत्वे नित्यतापत्तेरिति भावः । "अन्नमयं सोम्य मन आपोमयः प्राणस्तेजोमयी वाग् ( छा० उ० ६।५।४ ) इत्यादिः । यद्यपि मनआदीनि न भौतिकानि तथाप्यन्नसंसर्गेण सजातीयांशपूरणादन्नमयत्वादिव्यवहारः ॥ १५ ॥

## पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः ॥ १६ ॥

[ वृ० ] पुरुषार्थं महदादीनां प्रवृत्तिः, संसृतिः किमर्थमित्यत्राह—पुरुषार्थं० । यथा प्रवृत्तिस्तथा संसृतिः, संसृतौ च मरणदुःखमिति निर्विण्णो भवति । सूपकारवदिति परार्थमेव प्रवृत्तिः ॥ १६ ॥

[ वृ० सा० ] प्रधानस्येव भूतसूक्ष्माणामपि प्रवृत्तिः पुरुषार्थैवेत्याह—पुरुषार्थमिति । संसृतिः प्रवृत्तिः लिङ्गानां भूतसूक्ष्माणाम् ॥ १६ ॥

[ भा० ] अचेतनानां लिङ्गानां किमर्थं संसृतिर्देहाद्देहान्तरसञ्चारः ? इत्याशङ्कायामाह—पुरुषार्थं० । यथा राज्ञः सूपकाराणां पाकशालासु संचारो राजार्थम्, तथा लिङ्गशरीराणां संसृतिः पुरुषार्थमित्यर्थः ॥ १६ ॥

[ भा० सा० ] अचेतनलिङ्गस्य देहाद् देहान्तरसञ्चारः किमर्थोऽत आह—पुरुषार्थमिति । संसृतिः=यथा राज्ञः सूपकाराणां पाकशालादौ संचारो राजार्थं तथा लिङ्गशरीराणां संसृतिः पुरुषस्य भोगार्थमित्यर्थः ॥ १६ ॥

## पाञ्चभौतिको देहः ॥ १७ ॥

[ वृ० ] विप्रतिपत्तौ सत्यां स्वपक्षमाह—पाञ्च० । स्पष्टम् ॥ १७ ॥

[ वृ० सा० ] स्पष्टानि । उत्तरयोः शरीरं विशेष्यम् ॥ १७-१९ ॥

[ भा० ] लिङ्गशरीरमशेषविशेषतो विचारितम्, इदानीं स्थूलशरीरमपि तथा विचारयति—पाञ्च० । पञ्चानां भूतानां मिलितानां परिणामो देह इत्यर्थः ॥ १७ ॥

[ भा० सा० ] अथ स्थूलशरीरमाह—पाञ्चेति । पञ्चानां भूतानां मिलितानां परिणामो देह इत्यर्थः ॥ १७ ॥

## चातुर्भौतिकमित्यन्ये ॥ १८ ॥

[ वृ० ] का विप्रतिपत्तिरित्यत्राह—चातुर्भौ० । आकाशपरित्यागेन चातुर्भौतिकं शरीरमित्यन्ये ॥ १८ ॥

[ भा० ] मतान्तरमाह—चातु० । अकाशस्यानारम्भकत्वमभिप्रेत्येदम् ॥ १८ ॥

[ भा० सा० ] चातुर्भौतिकमिति । आकाशस्यानारम्भकत्वादित्यर्थः ॥ १८ ॥

## ऐकभौतिकमित्यपरे ॥ १९ ॥

[ वृ० ] मतान्तरमाह—ऐक० । पार्थिवं शरीरमिति ॥ १९ ॥

[ भा० ] ऐक० । पार्थिवमेव शरीरमन्यानि च भूतान्युपष्टम्भकमात्राणीति भावः । अथवैकभौतिकमेकैकभौतिकमित्यर्थः । मनुष्यादिशरीरे पार्थिवांशाधिक्येन पार्थिवता सूर्यादिलोकेषु च तेजआद्याधिक्येन तैजसादिता शरीराणां सुवर्णादीनामिवेतीममेव पक्षं पञ्चमाध्यायेऽपि सिद्धान्तयिष्यति ॥ १९ ॥

[ भा० सा० ] एकेति । मनुष्यादिशरीरं पार्थिवांशाधिक्येन पार्थिवम्, सूर्यादिलोकेषु तेजोंऽशाद्याधिक्येन तैजसादित्यर्थः । एकभौतिकमित्यस्य प्राधान्येनैकैकं भौतिकमित्यर्थः । अत्रेदं तत्त्वम्—दशगुणितमहत्तत्त्वस्य मध्येऽहङ्कारः, तस्यापि दशगुणितस्य मध्ये व्योम, व्योम्नोऽपि दशगुणितस्य मध्ये वायुस्तस्यापि दशगुणितस्य मध्ये तेजस्तेजसो दशगुणितस्य मध्ये जलम्, तस्य दशगुणितस्य मध्ये पृथिवी । सा स्थूलशरीरस्य बीजम्, तदेव पृथिवीरूपं बीजमण्डरूपेण परिणमते, तस्यापि दशगुणितस्याण्डरूपस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्संकल्पादेव जायते । स एव स्वयम्भूर्नारायणः । तत एव चादिपुरुषाद् व्यष्टिरूपपुरुषाणां विभागोऽन्तेऽचलयदिति स एवैक आत्मा श्रुतिस्मृत्योर्गीयते । स च नारायणो विराट् शरीरी स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्यं स्वयम्भुवं सृष्ट्वा तद्द्वारान्यान्यपि व्यष्टिशरीराणि स्थावरान्तानि ससर्ज । यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखाद्याविर्भावः श्रूयते, स दैनन्दिनसर्गेषु कल्पभेदेनेति बोध्यम् । तेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाविर्भावो न त्वादिसर्गेषु । दैनन्दिनप्रलय एव लीलाविग्रहेण शयनादिति । यद् यस्माज्जायते तस्य तदापूरणेनैव स्थितिः । ततः संहारोऽपि तत्रैव प्रतिलोमयोः क्रमेण । एते सृष्टिस्थितिसंहाररूपाः स्थूलाः परिणामाः, अन्ये सूक्ष्माः प्रतिक्षणपरिणामा एषां भावानां स्मर्यन्ते—

नित्यमादाद्यङ्गभूतानि भवन्ति न भवन्ति च।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ॥ इति।

अतः सर्वं जडवस्तु परमार्थतः सदेवासदित्युच्यत इति ॥ १९ ॥

**न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥ २० ॥**

[ वृ० ] देहचैतन्यं निरस्यति—न सांसिद्धिकं०। पृथक् पृथक्कृतेषु चैतन्यादर्शनान्न भौतिकस्य देहस्य स्वभावचैतन्यम्; अत एव मिलितानां च चैतन्यं नाशङ्कनीयम्। जन्तवो हि प्रत्येकं क्षुद्रजन्तुसंयमनशक्तिमन्तः, मिलितास्ते हस्तिनमपि संयमयन्ति, न चैवं भूतानीति न देहचैतन्यम् ॥ २० ॥

[ वृ० सा० ] देहाकारपरिणतानां भूतानां चैतन्यं धर्म इति निरस्यति—नेति। स्वाभाविकं धर्मभूतं मिलितानां हि तदा भवेत्, यदि प्रत्येकं किंचिद् दृश्येत ॥ २० ॥

[ भा० ] देहस्य भौतिकत्वेन यत् सिद्ध्यति, तदाह—न सांसिद्धिकं। भूतेषु पृथक्कृतेषु चैतन्यादर्शनाद्भौतिकस्य देहस्य न स्वाभाविकं चैतन्यम्, किन्त्वौपाधिकमित्यर्थः ॥ २० ॥

[ भा० सा० ] बौद्धमतं निराकरोति—नेति। भूतेषु पृथक्कृतेषु चैतन्यादर्शनाद् भौतिकस्य देहस्य न स्वाभाविकं चैतन्यम्, किन्तु पुरुषसम्बन्धायाधिकमित्यर्थः ॥ २० ॥

**प्रपञ्चमरणाद्यभावश्च ॥ २१ ॥**

[ वृ० ] दूषणान्तरमाह—प्रपञ्च०। देहस्य चेतनत्वे प्रपञ्चत्वस्य मरणस्याभावः, चेतनस्य नित्यत्वात् ॥ २१ ॥

[ वृ० सा० ] प्रपञ्चेति। देहस्य चैतन्ये तस्यैवात्मत्वे च प्रपञ्चस्य धर्माधर्मयोः, मरणस्य देहवियोगरूपस्य, आदिशब्दाद् देहान्तरसंयोगस्य चाभावः प्रसज्येत। न चेष्टापत्तिः, सर्वस्य प्रामाणिकत्वात् ॥ २१ ॥

[ भा० ] बाधकान्तरमाह—प्रपञ्च०। प्रपञ्चस्य सर्वस्यैव मरणसुषुप्त्याद्यभावश्च देहस्य स्वाभाविकचैतन्ये सति स्यादित्यर्थः। मरणसुषुप्त्यादिकं हि देहस्याचेतनता। सा च स्वाभाविकचैतन्ये सति नोपपद्यते, स्वभावस्य यावद्द्रव्यभावित्वादिति ॥ २१ ॥

[ भा० सा० ] बाधकान्तरमाह—प्रपञ्चेति। प्रपञ्चस्य सर्वस्य मरणसुषुप्त्याद्यभावो देहस्य स्वाभाविकचैतन्ये स्यादित्यर्थः। मरणादिकं हि देहस्याचेतनता, सा च स्वाभाविकचैतन्येऽनुपपन्ना, स्वभावस्य यावद्द्रव्यभावित्वादिति भावः ॥ २१ ॥

**मदशक्तिवच्चेत्; प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः ॥ २२ ॥**

[ वृ० ] अथ चेतनस्यापि मरणं मुक्तिरिति दूषणान्तरमाह—मदशक्ति०। यथा मदशक्तिः प्रतिपुरुषे सूक्ष्मत्वेन दृष्टा, सांहत्ये महच्छक्त्युद्भवाद् बृहच्छिलामपि वहति। न च भूतेष्वपि प्रत्येकं सूक्ष्मं चैतन्यं दृष्टम्, येन सांहत्ये देहे चैतन्यं स्यात्। "न

सांसिद्धिकम्"( ३।२० ) इति सूत्रे निषेधमुखेन दर्शितं भवति । इह सूत्रे विधिमुखेनेति न पुनरुक्तम् ॥ २२ ॥

[ वृ॰ सा॰ ] यथा प्रत्येकमशक्ता अपि बह्वो मादकपदार्था मदशक्तिमुद्वहन्ति, तथा भूतानि मिलितानि चेतयन्ते, इत्यत आह—मदशक्तिवदिति । तत्र प्रत्येकपरिदृष्टे सूक्ष्मसामर्थ्ये सति सांहत्ये समुदाये सति मदशक्तेरुद्भव आधिक्यम् ॥ २२ ॥

[ भा॰ ] प्रत्येकादृष्टेरिति यदुक्तम्, तत्राशङ्क्य परिहरति—मदशक्ति॰ । ननु यथा मादकता शक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितद्रव्ये वर्तते, एवं चैतन्यमपि स्यादिति चेन्न; प्रत्येकपरिदृष्टे सति सांहत्ये तदुद्भवः सम्भवेत् । प्रकृते तु प्रत्येकपरिदृष्टत्वं नास्ति । अतो दृष्टान्ते प्रत्येकं शास्त्रादिभिः सूक्ष्मतया मादकत्वे सिद्धे संहतभावकाले मादकत्वाविर्भावमात्रं सिद्ध्यति । दार्ष्टान्तिके तु प्रत्येकभूतेषु सूक्ष्मतया न केनापि प्रमाणेन चैतन्यं सिद्धमित्यर्थः ।

ननु समुच्चिते चैतन्यदर्शनेन प्रत्येकभूते सूक्ष्मचैतन्यशक्तिरनुमेयेति चेन्न; अनेकभूतेष्वनेकचैतन्यशक्तिकल्पनायां गौरवेण लाघवादेकस्यैव नित्यचित्स्वरूपस्य कल्पनौचित्यात् । ननु यथाऽवयवेऽवर्तमानमपि परिमाणजलाहरणादिकार्यं घटादौ दृश्यते, एवमेव शरीरे चैतन्यं स्यादिति । मैवम्; भूतगतविशेषगुणानां सजातीयकारणगुणजन्यतया कारणे चैतन्यं विना देहे चैतन्यासम्भवादिति ॥ २२ ॥

[ भा॰ सा॰ ] प्रत्येकादृष्टेरिति यदुक्तम्, तत्र शङ्कते—मदेति । मादकताशक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलिते द्रव्ये वर्तते । एवं चैतन्यमपीति चेन्न; दृष्टान्ते प्रत्येकं शास्त्रादिभिः सूक्ष्मतया मादकत्वे सिद्धे सांहत्ये संहतभावकाले मादकत्वाविर्भावः सिद्ध्यति । प्रकृते तु प्रत्येकभूतेषु सूक्ष्मतया चैतन्यं न केनापि प्रमाणेन सिद्धमिति भावः । न च समुदिते चैतन्ये दर्शनात् प्रत्येकभूते सूक्ष्मचैतन्यशक्तिरनुमेयेति वाच्यम्; अनेकभूतेष्वनेकचैतन्यशक्तिकल्पने गौरवेण लाघवादेकस्यैव चित्स्वरूपस्य कल्पनात् । न चावयवेऽवर्तमानस्यापि परिमाणजलाहरणादिकार्यस्य घटादौ सत्त्ववत् शरीरे चैतन्यं स्यात्, भूतविशेषगुणानां सजातीयकारणजन्यतया कारणे चैतन्यं विना देहकार्ये चैतन्यासम्भवात् ॥ २२ ॥

## ज्ञानान्मुक्तिः ॥ २३ ॥

[ वृ॰ ] वैराग्यादीनां पारम्पर्येण मुक्तिसाधनत्वमुक्तम्, इदानीं साक्षान्मुक्तिसाधनमाह—ज्ञानान्मुक्तिः । व्यक्तम् ॥ २३ ॥

[ वृ॰ सा॰ ] मुक्तिसाधनमाह—ज्ञानादिति ॥ २३ ॥

[ भा॰ ] "पुरुषार्थं संसृतिर्लिङ्गानाम्" ( सां॰ सू॰ ३।१६ ) इत्युक्तम्; तत्र लिङ्गानां स्थूलदेहसञ्चाराख्यजन्मनो यो यः पुरुषार्थो येन येन व्यापारेण सिद्ध्यति, तदाह सूत्राभ्याम्—ज्ञानात्॰ । लिङ्गसंसृतितो जन्मद्वारा विवेकसाक्षात्कारस्तस्माद् मुक्तिरूपः पुरुषार्थो भवतीत्यर्थः । ज्ञानादिकं च प्रत्ययसर्गतया कारिकायां परि-

भाषितम्—'एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्धचाख्यः' ( सां० का० ४६ ) इति। विपर्ययादयो व्याख्यास्यन्ते। अत्र च स एव बुद्धिसर्गः प्रयोजनयोगेन सूत्रैरुच्यत इति विशेषः ॥ २३ ॥

[ भा० सा० ] लिङ्गसंसृतिर्यथा पुरुषार्थस्तदाह—ज्ञानादिति। लिङ्गसंसृतितो जन्मद्वारा विवेकसाक्षात्कारेण मुक्तिरूपः पुरुषार्थो भवतीत्यर्थः ॥ २३ ॥

## बन्धो विपर्ययात् ॥ २४ ॥

[ वृ० ] व्यतिरेकमाह—बन्धो०। विपर्ययाद् अज्ञानात् ॥ २४ ॥

[ वृ० सा० ] बन्धहेतुमाह—बन्ध इति। विपर्ययात् अज्ञानात् ॥ २४ ॥

[ भा० ] बन्धो०। विपर्ययात् सुखदुःखात्मको बन्धरूपः पुरुषार्थो लिङ्गसंसृतितो भवतीत्यर्थः ॥ २४ ॥

[ भा० सा० ] बन्ध इति। विपर्ययाद् अविवेकाद् बन्धः सुखदुःखात्मको भोगः पुरुषार्थो लिङ्गसंसृतितो भवतीत्यर्थः ॥ २४ ॥

## नियतकारणत्वान्न समुच्चयविकल्पौ ॥ २५ ॥

[ वृ० ] न ज्ञानमात्रान्मुक्तिः, कर्मणोऽपि मुक्तिसाधनत्वात्। तथा च श्रुतिः—"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" (बृ० उ० ४।४।२) इति। अत्राह—नियत०।

नियतमेव कारणं ज्ञानान्मुक्तिः, कर्मणो भुक्तिरिति। यत्राप्यकामकर्मणः समुच्चयः श्रूयते, तत्रापि ज्ञानार्थम्। तस्मान्न समुच्चयः। नापि कदाचिज्ज्ञानात् कदाचित् कर्मण इति विकल्पः। श्रुतिश्च—

"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥" (श्वे० उ० ३।८)॥२५॥

[ वृ० सा० ] नियतेति। ज्ञानं मुक्तिहेतुः, अतो मुक्तौ न ज्ञानकर्मणोः समुच्चयो न वा विकल्पः ॥ २५ ॥

[ भा० ] ज्ञानविपर्ययाभ्यां मुक्तिबन्धावुक्तौ, तत्रादौ ज्ञानान्मुक्तिं विचारयति—नियत०। यद्यपि "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" ( ई० उ० ११ ) इत्यादि श्रूयते, तथाप्यविवेकनिवृत्तौ लोकसिद्धतया ज्ञानस्य नियतकारणत्वादविद्याख्यकर्मणा सह ज्ञानस्य मोक्षजनने समुच्चयो विकल्पो वा नास्तीत्यर्थः। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( श्वे० उ० ३।८ ), "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ( तै० आ० १०।१०) इत्यादिश्रुतिभ्योऽपि कर्मणो न साक्षान्मोक्षहेतुत्वम्; समुच्चयानुष्ठानश्रुतिस्त्वङ्गाङ्गिभावादिभिरभ्युपपद्यत इति ॥ २५ ॥

[ भा० सा० ] तत्र ज्ञानादेव मुक्तिरित्याह—नियतेति। यद्यपि "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" ( ई० उ० ११ ) इत्यादि श्रूयते, तथाप्यविवेकनिवृत्तौ लोकसिद्धतया

ज्ञानस्य नियतकारणत्वादविद्याख्यकर्मणा सह ज्ञानस्य मोक्षजनने समुच्चयो विकल्पो वा न, किन्तु ज्ञानाङ्गमेव काम्यकर्मेत्यर्थः । "नान्यः पन्था विद्यतेऽयनाय" ( श्वे० उ० ३।८ ) इति श्रुतेरिति भावः ॥ २५ ॥

## स्वप्नजागराभ्यामिव मायिकाऽमायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ॥ २६ ॥

[ वृ० ] दूषणान्तरमाह—स्वप्न० । मायिकः स्वप्नः, अमायिको जागरः । स्वप्नवत् कर्म, जागरवज्ज्ञानम् । तुल्यकालयोर्हि समुच्चयः, न तु स्वप्नजागरयोस्तुल्यकालत्वम् । तस्मान्न ज्ञानकर्मसमुच्चयः ॥ २६ ॥

[ वृ० सा० ] ननु मास्तु काम्यकर्मणां समुच्चयो नित्येन स्यादत आह—स्वप्नेति । मायिकं कर्म, अमायिकं ज्ञानम् । स्वप्नजागराभ्यामिव भिन्नकालाभ्यां ताभ्यां न मुक्तिः, नोभयोरेककालत्वं येन समुच्चयः स्यात् ॥ २६ ॥

[ भा० ] समुच्चयविकल्पयोरभावे दृष्टान्तमाह—स्वप्न० । यथा मायिकामायिकाभ्यां स्वप्नजागरपदार्थाभ्यामन्योन्यसहकारिभावेनैकः पुरुषार्थो न सम्भवति, एवमुभयोर्मायिकामायिकयोरनुष्ठितयोः कर्मज्ञानयोः पुरुषस्य मुक्तिरपि न युक्तेत्यर्थः । मायिकत्वं चासत्यत्वम्, अस्थिरत्वमिति यावत् । तच्च स्वाप्नेऽर्थेऽस्ति । जाग्रत्पदार्थस्तु स्वाप्नापेक्षया सत्य एव कूटस्थपुरुषापेक्षयैवास्थिरत्वेनासत्यत्वादतः स्वप्नविलक्षणस्नानादिकार्यकरः । एवं कर्माप्यस्थिरत्वात् प्रकृतिकार्यत्वाच्च मायिकम् । आत्मा तु स्थिरत्वादकार्यत्वाच्चामायिकः । अतस्तयोरनुष्ठितकर्मज्ञानयोः समानफलदातृत्वमयौक्तिकमिति विलक्षणमेव कार्यं युक्तम् ॥ २६ ॥

[ भा० सा० ] तत्र दृष्टान्तमाह—स्वप्नेति । मायिकत्वमस्थिरत्वम्, तच्च स्वाप्नेऽर्थे, जाग्रत्पदार्थस्तु कूटस्थपुरुषापेक्षयाऽस्थिरोऽपि स्वाप्नापेक्षया स्थिर इत्यमायिकः । ताभ्यां तथा सम्भूय नैकः पुरुषार्थो जन्यतेऽयौगपद्यात् । एवं कर्मास्थिरत्वात्प्रकृतिकार्यत्वाच्च मायिकम् । ज्ञानं त्वात्मरूपतया स्थिरत्वादकार्यत्वादमायिकम् । अतस्तयोः पुरुषस्य मुक्तिजनकता न युक्ताऽयौगपद्यादित्यर्थः । यथा वा स्वप्नजलस्य स्नानादिकार्ये विकल्पो नास्थिरत्वादेव मुक्तौ कर्मणोऽपीत्यर्थः ॥ २६ ॥

## इतरस्यापि नात्यन्तिकम् ॥ २७ ॥

[ वृ० ] प्रत्ययत्वात्स्वप्नप्रत्ययवज्जाग्रत्प्रत्ययस्यापि मिथ्यात्वमित्यत्राह—इतरस्यापि० । स्वप्नप्रत्ययस्यापि नात्यन्तिकं मिथ्यात्वम्, खपुष्पवत् । न च स्वात्मन्यपि मिथ्यात्वम्, अन्यथा स्वप्न इत्येव न स्यात् । न चात्यन्तादृष्टे स्वप्नः, किन्तु जाग्रद्दृष्टेऽर्थे ॥ २७ ॥

[ वृ० सा० ] नित्यकर्माणि चित्तशुद्धावेवोपयुज्यन्ते न तु मुक्ताविति कर्मणो मायिकत्वं मिथ्यात्वं न, किन्त्वनात्यन्तिकफलत्वमित्याह—इतरस्येति । इतरस्यापि कर्मणोऽपि नात्यन्तिकं फलमतो मायिकत्वमुक्तम् । एतेन ज्ञानस्यामायिकत्वं व्याख्यातम् ॥ २७ ॥

[ भा० ] नन्वेवमप्यात्मोपासनाख्यज्ञानेन सह तत्त्वज्ञानस्य समुच्चयविकल्पौ स्यातामुपास्यस्यामायिकत्वादिति, तत्राह—इतरस्या०। इतरस्याप्युपास्यस्य नात्यन्तिकममायिकत्वमुपास्यात्मन्यध्यस्तपदार्थानामपि प्रवेशादित्यर्थः ॥ २७ ॥

[ भा० सा० ] नन्वेवमप्यात्मोपासनाख्यज्ञानेन तत्त्वज्ञानस्य तौ स्यातामुपास्यस्याप्रामाणिकत्वात्तत्राह—इतरस्येति। इतरस्याप्युपास्यस्य नात्यन्तिकममायिकत्वमुपास्यात्मन्यध्यस्तपदार्थानामपि प्रवेशादित्यर्थः ॥ २७ ॥

सङ्कल्पितेऽप्येवम् ॥ २८ ॥

[ वृ० ] दृष्टकारणाभावात् सङ्कल्पमात्रेण योगिनां न सर्वसिद्धिरित्यत्राह—सङ्कल्पिते०। नास्मदादीनां सङ्कल्पात् सिद्धिरिति योगजधर्मोपगृहीतानां सिद्धानामपि न भवितव्यम्। तस्मान्न मिथ्येति ॥ २८ ॥

[ वृ० सा० ] योगिनः सङ्कल्पमात्रेण सिद्धे पदार्थेऽपि न मिथ्यात्वमित्याह—सङ्कल्पित इति। न मिथ्यात्वमिति बुद्धिस्थम् ॥ २८ ॥

[ भा० ] उपासनस्य मायिकत्वं यस्मिन्नंशे तदाह—सङ्कल्पिते०। मनःसङ्कल्पिते ध्येयांशे, एवमपि मायिकत्वमपीत्यर्थः। "सर्वं खल्विदं ब्रह्म" ( छा० उ० ३।१४।१ ) इत्यादिश्रुत्युक्ते ह्युपास्ये प्रपञ्चांशस्य मायिकत्वमेवेति ॥ २८ ॥

[ भा० सा० ] तदुपपादयति—सङ्कल्पित इति। मनःकल्पिते ध्येयांशे, एवमपि मायिकत्वमपीत्यर्थः। "सर्वं खल्विदं ब्रह्म" ( छा० उ० ३।१४।१ ) इति श्रुत्युक्ते उपास्ये प्रपञ्चांशस्य मायिकत्वमेवेति भावः ॥ २८ ॥

भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥ २९ ॥

[ वृ० ] एतदेवाह—भावनो०। यथा महदादीनां पूर्वमपेक्ष्य कार्यकरणम्, प्रकृतेस्तु न कार्यकरणे कस्याप्यपेक्षा, तथा दृष्टकारणाभावादपि योगिनां भावनोपचयात् सर्वं संपद्यते ॥ २९ ॥

[ वृ० सा० ] ननु क्लृप्तदृष्टकारणाभावे जायमानस्य कथं न मिथ्यात्वम्? तत्राह—भावनेति। शुद्धस्य प्राणायामादिभिर्योगिनो भावनाया ध्यानस्योपचयादाधिक्यादेव सर्वं सम्पद्यते, न तत्र दृष्टकारणापेक्षा। नास्मदादिवद्धि तथासङ्कल्पो योगीति भावः। प्रकृतिवत् प्रकृतिर्यथाऽनपेक्ष्यैव पूर्वं कारणं महदादि कार्यं करोति तद्वत् ॥ २९ ॥

[ भा० ] तर्ह्युपासनस्य किं फलमित्याकाङ्क्षायामाह—भावनो०। भावनाख्योपासनानिष्पत्त्या शुद्धस्य निष्पापस्य पुरुषस्य प्रकृतेरिव सर्वमैश्वर्यं भवतीत्यर्थः। प्रकृतिर्यथा सृष्टिस्थितिसंहारं करोति, एवमुपासकस्य बुद्धिसत्त्वमपि प्रकृतिप्रेरणेन सृष्ट्यादिकर्तृ भवतीति ॥ २९ ॥

[ भा० सा० ] तर्ह्युपासनस्य किं फलमित्याह—भावनेति । सर्वत्र ब्रह्मत्वभावनाख्यो-पासनानिष्पत्त्या शुद्धस्य निष्पापस्य प्रकृतेरिव सर्वमैश्वर्यं भवतीत्यर्थः । प्रकृतिर्यथा सृष्टिस्थिति-संहारं करोति तथोपासकबुद्धिरपि प्रकृतिप्रेरणेन तत्कर्त्रीति भावः ।। २९ ।।

## रागोपहतिर्ध्यानम् ।। ३० ।।

[ वृ० ] भावनार्थं ध्यानमाह—रागो० । रागाद्रजोगुणाच्चलितत्वम्, तदुपहति-र्निश्चलितत्वं ध्यानम् ।। ३० ।।

[ वृ० सा ] ध्यानमाह—रागेति । रागस्य रजोगुणस्य उपहतिर्निश्चलत्वमिति यावत् ।। ३० ।।

[ भा० ] ज्ञानमेव मोक्षसाधनमिति स्थापितम् । इदानीं ज्ञानसाधनान्याह—रागोप० । ज्ञानप्रतिबन्धको यो विषयोपरागश्चित्तस्य तदुपघातहेतुर्ध्यानमित्यर्थः । उपचारेण कार्यकारणयोरभेदनिर्देशः, रागक्षयस्य ध्यानत्वासम्भवात् । अत्र ध्यानशब्देन धारणाध्यानसमाधयो योगोक्तास्त्रय एव ग्राह्याः, पातञ्जले योगाङ्गानामष्टानामेव विवेकसाक्षात्कारहेतुत्वश्रवणादिति । एतेषां चावान्तरविशेषास्तत्रैव द्रष्टव्याः । इतराणि च पञ्चाङ्गानि स्वयं वक्ष्यति ।। ३० ।।

[ भा० सा० ] अथ ज्ञानसाधनान्याह—रागेति । ज्ञानप्रतिबन्धको यो विषयोपराग-श्चित्तस्य तदुपघातहेतुर्ध्यानमित्यर्थः । करणे क्तिन् । अत्र ध्यानधारणासमाधयो योगोक्ताः ।।३०।।

## वृत्तिनिरोधात्तत्सिद्धिः ।। ३१ ।।

[ वृ० ] तत्सिद्धिः कथमित्यत आह—वृत्ति० । वृत्तयः प्रमाणादयः पञ्च, तन्निरोधात् तत्सिद्धिः ध्यानसिद्धिः ।। ३१ ।।

[ वृ० सा० ] तदुपायमाह—वृत्तीति । वृत्तयः प्रमाणादयः, तन्निरोधाद् ध्यान-सिद्धिः ।। ३१ ।।

[ भा० ] ध्याननिष्पत्त्यैव ज्ञानोत्पत्तिर्नारम्भमात्रेणेत्याशयेन ध्याननिष्पत्ते-र्लक्षणमाह—वृत्तिनिरो० । ध्येयातिरिक्तवृत्तिनिरोधरूपेण सम्प्रज्ञातयोगेन तत्सिद्धि-र्ध्यानस्य निष्पत्तिर्ज्ञानाख्यफलोपधानरूपा भवतीत्यर्थः । अतस्तावत्पर्यन्तमेव ध्यानं कर्तव्यमित्याशयः । इतरवृत्तिनिरोधे सत्येव विषयान्तरसञ्चाराख्यप्रतिबन्धापगमाद् ध्येयसाक्षात्कारो भवतीति कृत्वा योगोऽपि ज्ञाने कारणं योगाङ्गध्यानादिवदित्यपि मन्तव्यम् । "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" ( क० उ० १।२।१२ ) इत्यादिश्रुतिस्मृत्योस्तदवगमादिति ।। ३१ ।।

[ भा० सा० ] ध्याननिष्पत्त्यैव च ज्ञानोत्पत्तिरतस्तल्लक्षणमाह—वृत्तीति । ध्येयपुरुषातिरिक्ते वृत्तिनिरोधेन तस्य ध्यानस्य सिद्धिर्निष्पत्तिर्ज्ञानाख्यफलोपधानरूपा भवतीत्यर्थः । इतरवृत्तिनिरोधे सति, विषयान्तरसंचाराख्यप्रतिबन्धापगमाद् ध्येयसाक्षात्कारो

भवतीति योगोऽपि ज्ञानकारणम्, योगाङ्गध्यानादिवदिति बोध्यम् । अध्यात्मयोगाधिगमे "तदेवं मत्वा धीरो हर्षशोकौ जहाति" ( क० उ० १।२।१२ ) इत्यादिश्रुतेरिति दिक् ॥ ३१ ॥

## धारणाऽऽसनस्वकर्मणा तत्सिद्धिः ॥ ३२ ॥

[ वृ० ] तन्निरोधः कथमित्यत आह—धारणा० । धारणा नाभ्यादिदेशे चित्तधारणम् । आसनं स्वस्तिकादि । अनेन यमनियमप्राणायामप्रत्याहारा उपलक्षिताः । स्वकर्म स्वजातिविहितकर्मानुष्ठानम् । इति वृत्तिनिरोधसिद्धिः ॥ ३२ ॥

[ वृ० सा० ] वृत्तिरोधोपायमाह—धारणेति । धारणा नाभ्यादिदेशे चित्तधारणम् ।३२।

[ भा० ] ध्यानस्यापि साधनान्याह—धारणा० । वक्ष्यमाणेन धारणादित्रयेण ध्यानं भवतीत्यर्थः ॥ ३२ ॥

[ भा० सा० ] ध्यानसाधनान्याह --धारणेति । वक्ष्यमाणेन धारणादित्रयेण ध्यानं भवतीत्यर्थः ॥ ३२ ॥

## निरोधश्छर्दिविधारणाभ्याम् ३३ ॥

[ वृ० ] अन्यं निरोधोपायमाह—निरोध० । छर्दिः रेचकम्, विधारणं कुम्भकम् । उपलक्षणमेतत्, तेन पूरकोऽपि द्रष्टव्यः ।. ३३ ॥

[ वृ० सा० ] वृत्तिनिरोध उपायान्तरमाह—निरोधेति । वृत्तीनामित्यादि । छर्दिः रेचकम्, विधारणं कुम्भकः, पूरकस्याप्युपलक्षणं प्राणायामैरित्यर्थः ॥ ३३ ॥

[ भा० ] धारणादित्रयं क्रमात् सूत्रत्रयेण लक्षयति—निरोध० । प्राणस्येति प्रसिद्धया लभ्यते । "प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" ( १।३४ ) इति योगसूत्रे भाष्यकारेण प्राणायामस्य व्याख्यातत्वात् । छर्दिश्च वमनम्, विधारणस्त्याग इति यावत्, तेन पूरणरेचनयोर्लाभः । विधारणं च कुम्भकम् । तथा च प्राणस्य पूरकरेचककुम्भकैर्यो निरोधो वशीकरणं सा धारणेत्यर्थः । आसनकर्मणोः स्वशब्देन पश्चाल्लक्षणीयतया सूत्रे परिशेषत एव धारणाया लक्ष्यत्वलाभाद्धारणापदं नोपात्तम् । चित्तस्य धारणा तु समाधिवद् ध्यानशब्देनैव गृहीतेत्युक्तम् ॥ ३३ ॥

[ भा० सा० ] तत्र धारणामाह—निरोधेति । प्राणस्येति शेषः । छर्दिः पूरितस्य त्यागः । तेन पूरणरेचनयोर्लाभः । विधारणं कुम्भकः । तैर्यः प्राणस्य निरोधो वशीकरणं सा धारणेत्यर्थः । आसनस्वकर्मणोः स्वशब्देन लक्षणीयतया परिशेषादिदं धारणालक्षणम् । चित्तस्य धारणा तु समाधिवद् ध्यानशब्देनैव गृहीतेत्युक्तम् ॥ ३३ ॥

## स्थिरसुखमासनम् ॥ ३४ ॥

[ वृ० ] नानासनेषु स्वमतमासनमाह—स्थिर० । येन स्थैर्यं सुखं च स्यात्, तदासनमनुष्ठेयम् ॥ ३४ ॥

[ वृ० सा० ] आसनमाह—स्थिरेति । स्पष्टम् ॥ ३४ ॥

[ भा० ] क्रमप्राप्तमासनं लक्षयति—स्थिर०। यत् स्थिरं सत् सुखसाधनं भवति स्वस्तिकादि, तदासनमित्यर्थः ॥ ३४ ॥

[ भा० सा० ] आसनमाह—स्थिरेति। यत् स्थिरं सत् सुखसाधनं स्वस्तिकादि, तदासनमित्यर्थः ॥ ३४ ॥

स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥ ३५ ॥

[ वृ० ] किं तत् स्वकर्मेत्यत आह—स्वकर्म०। स्पष्टम् ॥ ३५ ॥

[ वृ० सा० ] स्वकर्म व्याचष्टे—स्वेति ॥ ३५ ॥

[ भा० ] स्वकर्म लक्षयति—स्वकर्म०। सुगमम्। तत्र कर्मशब्देन यमनियमयोर्ग्रहणम्; जितेन्द्रियत्वरूपः प्रत्याहारोऽपि सर्वाश्रमसाधारणतया कर्ममध्ये प्रवेशनीयः। तथा च पातञ्जलसूत्रे ज्ञानसाधनतया प्रोक्तान्यष्टौ योगाङ्गान्यत्रापि लब्धानि। यथा तत्सूत्रम्—"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" ( यो० सू० २।२९ ) इति। तेषां च स्वरूपं तत्रैव द्रष्टव्यम् ॥ ३५ ॥

[ भा० सा० ] स्वकर्म लक्षयति—स्वेति। तत्र कर्मपदेन यमनियमौ जितेन्द्रियतारूपः प्रत्याहारश्च। सर्वाश्रमसाधारणत्वादेषां कर्मत्वम्। अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। तपःस्वाध्यायसन्तोषशौचेश्वरपूजनानि नियमाः। एतेन प्रत्याहारधारणाध्यानसमाधिरूपाण्यष्टौ योगाङ्गान्युक्तानि ( यो० सू० २।२९ )। नासाग्रहृत्पुण्डरीकनाभिभ्रूमध्यादिषु देशेषु यत्र ध्येयं चिन्तनीयं तत्र चित्तस्य स्थिरीकरणं धारणा। तत्र देशे ध्येयाकारवृत्तिप्रवाहो वृत्त्यन्तराव्यवहितो ध्यानम्, तदेव ध्यानं यदा ध्येयावेशवशाद् ध्यानध्यातृध्येयभावदृष्टिशून्यं सद् ध्येयमात्राकारं भवति तदा समाधिः ॥ ३५ ॥

वैराग्यादभ्यासाच्च ॥ ३६ ॥

[ वृ० ] अन्यं वृत्तिनिरोधोपायमाह—वैराग्या०। वैराग्याद् द्विविधात्, अपराद् अलमिति प्रत्ययात्, पराद् ज्ञानप्रसादमात्रात्। अभ्यासात् पौनःपुन्येन ध्यानात्। चः समुच्चये ॥ ३६ ॥

[ वृ० सा० ] वृत्तिनिरोधे उपायान्तरमाह—वैराग्यादिति। वैराग्यादलंप्रत्ययात् तदभ्यासाच्च ॥ ३६ ॥

[ भा० ] मुख्याधिकारिणो नास्ति बहिरङ्गस्य यमादिपञ्चकस्यापेक्षा, केवलाद्धारणाध्यानादित्रयरूपात् संयमादेव ज्ञानं योगश्च भवतीति पातञ्जलसिद्धान्तः। जडभरतादिषु च तथा दृश्यतेऽपि। अतस्तदनुसारेणाचार्योऽप्याह—वैराग्या०।

केवलाभ्यासाद् ध्यानरूपादेव वैराग्यसहिताज्ज्ञानं तत्साधनयोगश्च भवत्युत्तमाधिकारिणामित्यर्थः। तदुक्तं गारुडेऽपि—

आसनस्थानविधयो न योगस्य प्रसाधकाः ।
विलम्बजननाः सर्वे विस्तराः परिकीर्तिताः ॥
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् । इति ।
( ग० पु० १।२२७।४४-४५ )

अथवा वैराग्यध्यानाभ्यासावत्र ध्यानस्यैव हेतुतयोक्तौ, चकारश्च धारणासमुच्चयायेति । तदेवं ज्ञानान्मोक्षो व्याख्यातः ॥ ३६ ॥

[ भा० सा० ] तत्रोत्तमाधिकारिणां ध्यानादेव ज्ञानं चित्तवृत्तिनिरोधरूपश्च योगो भवतीति योगशास्त्रसिद्धान्तानुसारेणाह—वैराग्यादिति । केवलाभ्यासाद् ध्यानरूपाद् वैराग्यसहितादेव ज्ञानं तत्साधनकश्च योगो भवत्युत्तमानामित्यर्थः, जडभरतादौ तथा दर्शनात् । वैराग्यमलंप्रत्ययः । "शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात्" ( ग० पु० १।२२७।४५ ) इति गारुडाच्च ॥ ३६ ॥

## विपर्ययभेदाः पञ्च ॥ ३७ ॥

[ वृ० ] वृत्तीनामवान्तरभेदमाह—विपर्यय० । अविद्या मिथ्याज्ञानम्, अस्मिता अभिमानः, रागोऽनुरागः, द्वेषः क्रोधः, अभिनिवेशस्त्रास इति । विषयेण विषयिज्ञानमुपलक्षितम् ॥ ३७ ॥

[ वृ० सा० ] विपर्ययेति । अविद्या मिथ्याज्ञानम्, अस्मिता चाभिमानः, रागोऽनुरागः, द्वेषः क्रोधः, अभिनिवेशस्त्रासः ॥ ३७-४० ॥

[ भा० ] अतः परं "बन्धो विपर्ययाद्" ( सां० सू० ३।२४ ) इत्युक्तो बन्धकारणं विपर्ययो व्याख्यास्यते । तत्रादौ विपर्ययस्य स्वरूपमाह—विपर्यय० । अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च योगोक्ता ( यो० सू० २।३ ) बन्धहेतुविपर्ययस्यावान्तरभेदा इत्यर्थः । तेन शुक्त्यादिज्ञानरूपाणां विपर्ययाणामसंग्रहेऽपि न क्षतिः । तत्राविद्या "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः" ( यो० सू० २।५ ) इति योगे प्रोक्ता । एवमस्मिताप्यात्मानात्मनोरेकताप्रत्ययः शरीराद्यतिरिक्त आत्मा नास्तीत्येवंरूपः । अविद्या तु नैवंरूपा, आत्मनः शरीराशरीरोभयरूपत्वेऽपि शरीरेऽहम्बुद्ध्युपपत्तेः । रागद्वेषौ तु प्रसिद्धावेव । अभिनिवेशश्च मरणादित्रास इति । रागादीनां विपर्ययकार्यतया विपर्ययत्वम् ॥ ३७ ॥

[ भा० सा० ] अथ बन्धकारणं विपर्ययस्वरूपमाह—विपर्ययेति । अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च योगोक्तास्तस्यावान्तरभेदा इत्यर्थः । अविद्याऽनित्याशुचिदुःखरूपानात्मसु नित्यशुचिसुखत्वख्यातिः । शुक्तिरजतज्ञानानामप्यनेन संग्रहः । अस्मिता शरीरातिरिक्त आत्मा नास्तीत्येवं प्रत्ययः । अविद्या तु नैवंरूपा, आत्मनः शरीराशरीरोभयरूपत्वेऽपि शरीरेऽहंबुद्ध्युपपत्तेः । रागद्वेषौ प्रसिद्धौ । अभिनिवेशो मरणादित्रासः । रागादीनां विपर्ययकार्यत्वाद् विपर्ययत्वम् ॥ ३७ ॥

अशक्तिरष्टाविंशतिधा ॥ ३८ ॥

[ वृ० ] अशक्तिमाह—अशक्ति० ।

[ भा० ] विपर्ययस्य स्वरूपमुक्त्वा तत्कारणस्याशक्तेरपि स्वरूपमाह—अशक्ति० । सुगमम् । एतदपि कारिकया व्याख्यातम्—

एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम् ॥ ( सां० का० ४९ )

इति,

बाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमुग्धताः ॥

इत्येकादशेन्द्रियाणामेकादशाशक्तयः स्वतश्च बुद्धेः सप्तदशाशक्तयः । यथा वक्ष्यमाणानां नवतुष्टीनां विघाता नव, तथा वक्ष्यमाणानामष्टसिद्धीनां च विघाता अष्टाविति मिलित्वा चेमाः स्वतः परतश्चाष्टाविंशतिर्बुद्धेरशक्तय इत्यर्थः । तुशब्द एषां विशेषप्रसिद्धिख्यापनार्थः ॥ ३८ ॥

[ भा० सा० ] इदानीं तत्कारणाशक्तिस्वरूपमाह—अशक्तिरिति । तत्र बाधिर्यकुष्ठत्वान्धत्वजडत्वाजिघ्रत्वमूकत्वकुणित्वपङ्गुत्वपण्ढत्वोदावर्तमुग्धत्वरूपा एकादशेन्द्रियाणामेकादशाशक्तयस्तद्द्वारा चैताः, बुद्धिरपि । स्वतश्च बुद्धेः सप्तदश, वक्ष्यमाणनवतुष्टीनां विघाता नव, वक्ष्यमाणाष्टसिद्धीनां विघाताश्चाष्टौ, इति स्वतः परतश्चाष्टाविंशतिर्बुद्धेरशक्तय इत्यर्थः ॥ ३८ ॥

तुष्टिर्नवधा ॥ ३९ ॥

[ वृ० ] तुष्टिमाह—तुष्टि० ।

[ भा० ] ययोर्विघाते बुद्धेरशक्ती ते तुष्टिसिद्धी सूत्रद्वयेनाह—तुष्टि० । स्वयमेव नवधात्वं वक्ष्यति ( सू० ३।४३ ) ॥ ३९ ॥

[ भा० सा० ] ययोर्विघाते बुद्धेरशक्ती ते आह—तुष्टिरिति । तत्र प्रकृत्याख्या तुष्टिराद्या । यथा साक्षात्कारपर्यन्तः सर्वोऽपि परिणामः प्रकृतेरेव, तं च प्रकृतिरेव करोति, अहं तु कूटस्थः पूर्ण इत्यात्मभावनात् परितोषरूपेयं तुष्टिरम्भ इत्युच्यते । उपादानाख्या द्वितीया । उपादानेन या तुष्टिः, इयं सलीलमित्युच्यते । कालाख्या तृतीया । प्रव्रज्यायां बहुकालसमाध्यनुष्ठानेन या तुष्टिः, इयम् ओघ इत्युच्यते । भाग्याख्या चतुर्थी । या संप्रज्ञातपरमकाष्ठरूपे धर्ममेघसमाधौ सति तुष्टिः, एषा वृष्टिरित्युच्यते । एताश्चतस्र आध्यात्मिक्यः । बाह्याः पञ्च या बाह्यविषयेषु पञ्चसु शब्दादिषु अर्जनरक्षणक्षयभोगहिंसादोषनिमित्तकोपरमाज्जायन्ते । एताश्च क्रमेण पार-सुपार-पारापारानुत्तमाम्भ-उत्तमाम्भा इत्युच्यन्ते । भोगोऽपि कामवृद्ध्या विषयाप्राप्तौ कामिने दुःखायतीति दोषः । विना हिंसां न विषयभोग इति हिंसादृष्ट्या विषयोपरमः । अत्राध्यात्मिकतुष्टिर्वाचस्पतिमिश्रैरित्थं व्याख्याता—"विवेकसाक्षात्कारेऽपि प्रकृतिपरिणाम

एवेत्यलं ध्यानेनेत्युपदेशेन ध्यानादिनिवृत्तौ या तुष्टिः सा आद्या। प्रव्रज्य चैव मोक्षोऽलं ध्यानेनेति तुष्टिः द्वितीया। संन्यस्यापि कालेनैव मोक्षोऽलमुद्वेगेनेति तुष्टिस्तृतीया। भाग्यादेव मोक्षो न शास्त्रोक्तसाधनैरिति तुष्टिश्चतुर्थीति" ( सां० त० कौ० करिका ५० )। तत्रैतद्वातुष्टय-भावस्य ज्ञानानुकूलत्वेनाशक्तित्वानौचित्यमिति बोध्यम् ॥ ॥ ३९ ॥

## सिद्धिरष्टधा ॥ ४० ॥

[ वृ० ] सिद्धिमाह—सिद्धि०।

[ भा० ] सिद्धि०। एतदपि स्वयं वक्ष्यति ( सू० ३।८४ ) ॥ ४० ॥

[ भा० सा० ] सिद्धिरिति। एवं सिद्धिरष्टधा सा चाध्ययनशब्दोहसुहृत्प्राप्तिदानैः पञ्चधा। गुरोः सकाशादात्मविद्यानामक्षररूपेण ग्रहणमध्ययनमाद्या सिद्धिस्तारमित्युच्यते। शब्दशब्देन तज्ज्ञानार्थज्ञानरूपा द्वितीया सुतारमित्युच्यते। आगमाविरोधितर्केणार्थपरीक्षणं मननरूपं तृतीया तारसुतारमित्युच्यते। सब्रह्मचर्यादिभिः संवादेन तस्यैव दार्ढ्यकरणं चतुर्थी रम्यकमुच्यते। दानं संशयविपर्ययपरिहारेण निरन्तरदीर्घकालसेविताभ्यासपरिपाकजन्यः साक्षात्कारः पञ्चमी सिद्धिः सदाप्रमुदितमित्युच्यते। तदुत्तराश्च प्रमोदमुदितमोदमानाख्यास्तिस्र इत्यष्टौ। अन्त्यास्तिस्र आध्यात्मिकादिदुःखात्ययरूपाः। आद्याः पञ्च साक्षात्परम्परया वा तत्साधनानि। तत्राध्ययनादित्रयमितरसिद्धीनामङ्कुशवद् गजस्य मुख्यं साधनमिति दिक् ॥४०॥

## अवान्तरभेदाः पूर्ववत् ॥ ४१ ॥

[ वृ० ] चतुर्षु विपर्ययभेदमाह—अवान्तर०। पूर्ववदिति पूर्वाचार्यैरुक्ताः, द्वाषष्टिर्विपर्ययभेदाः। प्रकृतिमहदहङ्कारपञ्चतन्मात्रेष्वात्मबुद्धिरविद्या—तमः, अष्टविषय-त्वादष्टधा। देवा ह्यणिमादिकमात्मीयत्वेनाभिमन्यन्ते; सेयमस्मिता—मोहः, अष्टविषय-त्वादष्टधा। शब्दादिषु तन्मात्रेषु पञ्चसु दिव्यता रागः—महामोहः, दशविषयत्वाद्दशधा। शब्दादयो दश अणिमाद्यष्टैश्वर्योपधानेन सहिताः, ते चान्येनोपहन्यमाना इति द्वेषः—तामिस्रः, अष्टादशविषयत्वाद् अष्टादशधा। देवा ह्येतानुपभुञ्जाना असुरैरुपहन्यन्त इत्यभिनिवेशस्त्रासः-अन्धतामिस्रः, अष्टादशविषयत्वादष्टादशधा। एवं द्वाषष्टिरिति ॥४१॥

[ वृ० सा० ] चतुर्षु विपर्ययभेदानवान्तरानाह – अवान्तरेति। विपर्ययस्यावान्तरभेदाः पूर्वाचार्यैर्यथोक्तास्तथा बोध्याः। तथापि पञ्चानां विपर्ययभेदानामविद्यास्मितारागद्वेषाभि-निवेशानां तमः, मोहः, महामोहः, तामिस्रोऽन्धतामिस्र इति क्रमेण नामानि। अव्यक्तमदहङ्कार-पञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्या तमः, सा चाष्टविधविषयत्वादष्टविधा। शब्दादिपञ्चसु दिव्यादिव्यतया दशविधेषु राग आसक्तिर्महामोहः, स च दशविषयत्वादष्टादशविधः। शब्दादयो दशाणिमाद्योऽष्टौ, परस्परेणोपहन्यमानाः कोपनीया भवन्तीति तद्विषयो द्वेषस्तामिस्रोऽष्टा-दशविधविषयत्वादष्टादशविधः। देवा अणिमादिकमैश्वर्यमासाद्य शब्दादीन् विषयान् भुञ्जानाः शब्दादयो भोग्याः, तद्गुणधयश्चाणिमादयोऽस्माकमसुरैर्जातूपहन्येरन्निति बिभ्यति, सोऽयं

त्रासोऽभिनिवेशो महातामिस्रः। सोऽप्यष्टादशविधविषयत्वादष्टादशविध इति संकलनया द्विषष्टिर्विपर्ययभेदाः ॥ ४१ ॥

[ भा० ] उक्तानां विपर्ययाशक्तितुष्टिसिद्धीनां विशेषजिज्ञासायां क्रमेण सूत्रचतुष्टयं प्रवर्तते—अवान्तर०। विपर्ययस्यावान्तरभेदा ये सामान्यतः पञ्चोक्तास्ते पूर्ववत् पूर्वाचार्यैर्यथोक्तास्तथैव विशिष्यावधार्याः, विस्तरभयान्नेहोच्यन्त इत्यर्थः। ते चाविद्यादयो मयापि सामान्यत एव व्याख्याताः पञ्चेति, विशेषतस्तु द्वाषष्टिभेदाः। तदुक्तं कारिकायाम्—

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः॥ ( सां० का० ४८ )

इति। अस्यायमर्थः—अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु प्रकृतिष्वनात्मस्वात्मबुद्धिरविद्या तमोऽष्टधा भवति। कार्यकारणभेदेन केवलविकृतिष्वात्मबुद्धेरप्यत्रान्तर्भावः। एवमविद्याया विषयभेदेनाष्टविधत्वात् तत्समानविषयकस्यास्मिताख्यमोहस्याष्टविधत्वम्। दिव्यादिव्यभेदेन शब्दादीनां विषयाणां दशत्वात् तद्विषयको रागाख्यो महामोहो दशविधः। अविद्यास्मितयोरष्टौ ये विषया ये रागस्य दश विषयास्तद्विघातकेष्वष्टादशस्वष्टादशधा तामिस्राख्यो द्वेषः। एवं तेषामष्टादशानां विनाशादिदर्शनादष्टादशधाऽन्धतामिस्राख्योऽभिनिवेशो भयमिति। एतेषां च तमआदिसंज्ञा तद्धेतुत्वादिति ॥

[ भा० सा० ] इदानीं विपर्ययाशक्तितुष्टिसिद्धीनां विशेषानाह—अवान्तरेति। पूर्वाचार्योक्ता एवेत्यर्थः। ते च द्वाषष्टिभेदैरुक्ताः। तमोरूपा अविद्या अव्यक्तमहदहङ्कारपञ्चतन्मात्ररूपाष्टप्रकृतिष्वनात्मस्वात्मबुद्धिरूपविषयभेदादष्टधा। कार्यकारणभेदाद् विकृतिष्वात्मबुद्धेरप्यत्रैवान्तर्भावः। एवं तत्समानविषयकस्यास्मिताख्यस्य मोहस्याप्यष्टविधत्वम्। दिव्यादिव्यभेदेन शब्दादीनां विषयाणां दशत्वात् तद्विषयो रागाख्यो महामोहो दशविधः। अविद्यास्मितारागाणां विषयाश्चाष्टादश, तद्विघातकेषु अष्टादशसु तामिस्राख्यो द्वेषो विषयभेदादष्टादशधा। एवं तेषामष्टादशानां दर्शनादष्टादशविधोऽन्धतामिस्राख्योऽभिनिवेशो भयमिति। एषां च तमआदिसंज्ञकनरकहेतुत्वात् तत्संज्ञकत्वं बोध्यम् ॥ ४१ ॥

## एवमितरस्याः ॥ ४२ ॥

[ वृ० ] अशक्तिभेदानाह—एव०। इतरस्या अशक्तेः एवमनेकधाऽष्टाविंशतिधा। एकादशेन्द्रियवधाः—

"बाधिर्यं कुष्ठितान्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्य-पङ्गुत्वे क्लैब्योदावर्तमुग्धताः" ॥

एतद्विषया एकादश वधाः। नव तुष्टयः, अष्टौ सिद्धयः, तद्विपर्ययेण सप्तदश बुद्धेः। एवमष्टाविंशतिरिति ॥ ४२ ॥

[ वृ० सा० ] अशक्तेर्भेदानाह—एवमिति । पूर्वाचार्योक्ता एवाशक्तेर्भेदा ज्ञेयाः, ते च–

बाधिर्यं कुष्ठितान्धत्वं जडताजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वं क्लैब्योदावर्तमुग्धताः ॥

इत्येकादशेन्द्रियवधाः । तुष्टयो नव, सिद्धयोऽष्टौ, तद्विपर्ययेण सप्तदश बुद्धेर्वधाः । इत्यष्टाविंशतिधा बुद्धेरशक्तिः । जडता रसाज्ञानम्, कौण्यं ग्रहणासामर्थ्यम्, उदावर्तो विसर्गासामर्थ्यम्, मुग्धता विषयाग्रहणम् ॥ ४२ ॥

[ भा० ] एवं० । एवं पूर्ववदेवेतरस्या अशक्तेरप्यवान्तरभेदा अष्टाविंशतिविंशेषतोऽवगन्तव्या इत्यर्थः । अशक्तिरष्टाविंशतिधेत्येतस्मिन्नेव ( ३८ ) सूत्रेऽष्टाविंशतिधात्वं मया व्याख्यातम् ॥ ४२ ॥

[ भा० सा० ] एवमिति । इतरस्या अशक्तेरप्यत्रावान्तरभेदा अष्टाविंशतिरवगन्तव्याः ॥ ४२ ॥

आध्यात्मिक्यादिभेदान्नवधा तुष्टिः ॥ ४३ ॥

[ वृ० ] तुष्टिभेदानाह—आध्यात्मिक्यादि० । अनात्मन्यात्मबुद्ध्या प्रवर्तमाना आध्यात्मिक्यश्चतस्रः । आदिशब्दाद् बाह्याः पञ्च । प्रकृतिविवेकदर्शनाच्चेन्मुक्तिः, सैवोपास्या किमात्मनेति प्रकृत्याख्या एका तुष्टिः, अम्भ इत्युच्यते । विवेकज्ञानादपि न साक्षात्, अदर्शनं व्रतग्रहणादेव भविष्यतीत्युपादानाख्या द्वितीया तुष्टिः, सलिलमित्युच्यते । व्रतादपि न साक्षात्, किन्तु कालाद् भवतीति कालाख्या तृतीया तुष्टिः, ओघ इत्युच्यते । कालवशादपि न सर्वेषां मुक्तिः, किन्तु भाग्यादेवेति भाग्याख्या चतुर्थी तुष्टिः, वृष्टिरित्युच्यते । आत्मानमधिकृत्येत्याध्यात्मिक्यः । पञ्चधा विषयोपरमाद् बाह्याः पञ्च । तथा हि—विषयार्जनदुःखादुपरमे एका तुष्टिः, पारमुच्यते । रक्षणदुःखादुपरमे द्वितीया तुष्टिः, सुपारमुच्यते । क्षयं भावयतो दुःखादुपरमे तृतीया तुष्टिः, पारपारमुच्यते । भोगदोषं भावयतो दुःखादुपरमे चतुर्थी तुष्टिः, अनुत्तमाम्भ उच्यते । नानुपहत्य भूतानि भोगसिद्धिरिति दुःखादुपरमे पञ्चमी तुष्टिः, उत्तमाम्भ उच्यते । एवं नवधेति ॥ ४३ ॥

[ वृ० सा० ] तुष्टिभेदानाह—आध्यात्मिकेति । तुष्टयो द्विधा—आध्यात्मिका बाह्याश्च तत्र प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य प्रवृत्ता आध्यात्मिकाश्चतस्रः, प्रकृत्युपादानकालभाग्यनामानः । तत्र प्रकृतितुष्टिर्यथा—प्रकृतिव्यतिरिक्ते आत्मनि ज्ञाते विवेकसाक्षात्कारो हि प्रकृतिपरिणामस्तं च प्रकृतिरेव करिष्यतीति तदर्थमलं ते ध्यानाभ्यासेन, तस्मादेवमेवास्स्वेति कस्यचिदुपदेशात् शिष्यस्य तुष्टिः । इयमेवाम्भ इत्युच्यते । उपादानतुष्टिर्यथा—प्राकृत्यपि विवेकख्यातिर्न प्रकृतिमात्राद्भवति, मा भूत्सर्वस्य सर्वदा, प्रकृतिमात्रस्य सर्वान् प्रत्यविशेषात् । प्रव्रज्याहेतुका तु सा, तस्मात्प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनेत्युपदेशात्तुष्टिः । सा च सलिलमुच्यते । कालतुष्टिर्यथा—प्रव्रज्या अपि सद्यो निर्वाणदा न भवति, किन्तु कालमपेक्ष्येति

कालात्ते सिद्धिर्भविष्यत्यलमुत्तप्ततया तवेत्युपदेशात्तुष्टिर् ओघ उच्यते। भाग्यतुष्टिर्यथा— कालादपि न सर्वेषां मुक्तिरपि तु भाग्यादेव कस्यचित्। अत एव मदालसापत्यानां बाल्येऽपि मातुरुपदेशमात्रादेव विवेकख्यातिलाभेन मुक्तिरभूत्। तस्माद्भाग्य एव हेतुर्नान्य इत्युपदेशात्तुष्टिर्वृष्टिरित्युच्यते। बाह्याः पञ्च। ता हि अनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमन्यमानस्यैव विषयोपरमे सति भवन्ति। तथा हि शब्दादिषु पञ्चस्वपि विषयेष्वर्जनरक्षणक्षयभोगहिंसादोषदर्शनजन्मानः पञ्चोपरमा भवन्ति, तेषु च पञ्चतुष्टयो भवन्ति। स्रक्चन्दनवनिताद्यर्जने बहुदुःखमनुसंदधतो विषयोपरमे तुष्टिरेका। अर्जितमपि धनादिकं राजादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महादुःखमिति भावयतो विषयोपरमे तुष्टिर्द्वितीया। अल्पायासेनार्जितं रक्षितं च तद्भुज्यमाने क्षीयत एवेति क्षयं भावयतो विषयोपरमे तुष्टिस्तृतीया।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ( भा० ९।१९।१४ )

इत्युक्तेर्भोगाभ्यासात् कामा वर्धन्ते, ते च विषयाप्राप्तौ कामिनो दुःखयन्तीति भोगदोषं भावयतो विषयोपरमे तुष्टिश्चतुर्थी। नानुपहत्य भूतान्युपभोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे तुष्टिः पञ्चमी। एताश्च क्रमेण पारं सुपारं पारपारमनुत्तमाम्भ उत्तमाम्भ इति चोच्यन्ते। इति नव तुष्टयः ॥ ४३ ॥

[ भा० ] आध्या०। इदं सूत्रं कारिकया व्याख्यातम्—

आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ॥ ( सां० का० ५० )

इति। अस्यायमर्थः—आत्मानं तुष्टिमतः सङ्घातमधिकृत्य प्रवर्तन्त इत्याध्यात्मिक्यस्तुष्टयश्चतस्रः। तत्र प्रकृत्याख्या तुष्टिर्यथा—साक्षात्कारपर्यन्तः परिणामः सर्वोऽपि प्रकृतेरेव। तं च प्रकृतिरेव करोत्यहं तु कूटस्थः पूर्ण इत्यात्मभावनात् परितोषः। इयं तुष्टिरम्भ इत्युच्यते। ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाख्या सलिलमित्युच्यते। ततश्च प्रव्रज्यायां बहुकालं समाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिरोघ इत्युच्यते। ततश्च प्रज्ञानपरमकाष्ठारूपे धर्ममेघसमाधौ सति या तुष्टिः सा भाग्याख्या वृष्टिरित्युच्यत इति चतस्र आध्यात्मिक्यः। बाह्याः पञ्च तुष्टयो बाह्यविषयेषु पञ्चसु शब्दादिष्वर्जनरक्षणक्षयभोगहिंसादिदोषनिमित्तकोपरमाज्जायन्ते। ताश्च तुष्टयो यथाक्रमं पारं सुपारं पारपारमनुत्तमाम्भ उत्तमाम्भ इति परिभाषिता इति।

कश्चित् त्विमां कारिकामन्यथा व्याख्यातवान्। तद्यथा—विवेकसाक्षात्कारोऽपि प्रकृतिपरिणाम एवेत्यलं ध्यानाभ्यासेनेत्येवं दृष्ट्या या ध्यानादिनिवृत्तौ तुष्टिः सा प्रकृत्याख्या। प्रव्रज्योपादानेनैव मोक्षो भविष्यति किं ध्यानादिनेति या तुष्टिः सोपादानाख्या। कृतसंन्यासस्यापि कालेनैव मोक्षो भविष्यत्यलमुद्वेगेनेति या तुष्टिः सा कालाख्या। भाग्यादेव मोक्षो भविष्यति न मोक्षशास्त्रोक्तसाधनैरेवं कुतर्के या तुष्टिः

सा भाग्याख्येत्यादिरर्थः, इति। तन्न; तद्व्याख्याततुष्टीनामभावस्य ज्ञानाद्यनुकूलत्वेनाशक्तिपरिभाषानौचित्यादिति ॥ ४३ ॥

[ भा० सा० ] आध्यात्मिकेति। व्याख्यातम् ॥ ४३ ॥

**ऊहादिभिः सिद्धिरष्टधा ॥ ४४ ॥**

[ वृ० ] सिद्धेर्भेदानाह—ऊहादिभि०। ऊहस्तर्को मननमित्येका सिद्धिस्तारमुच्यते। शब्दज्ञानं द्वितीया सिद्धिः सुतारमुच्यते। अध्ययनं तृतीया सिद्धिः तारतारमुच्यते। गुरुब्रह्मचारिणां प्राप्तिश्चतुर्थी सिद्धी रम्यकमुच्यते। बाह्यान्तःशुद्धिः पञ्चमी सिद्धिः सदामुदितमुच्यते। आध्यात्मिकदुःखविघातः षष्ठी सिद्धिः प्रमोदमुच्यते। आधिभौतिकदुःखविघातः सप्तमी सिद्धिर्मुदितमुच्यते। आधिदैविकदुःखविघातोऽष्टमी सिद्धिर्मोदमानमुच्यते। एवमष्टधेति। प्राधान्येन विपर्ययाशक्तितुष्टिसिद्धिरिति चतुष्प्रकारा अवान्तरभेदात् पञ्चाशत् ॥ ४४ ॥

[ वृ० सा० ] सिद्धेर्भेदानाह—ऊहादिभिरिति। ऊहादिभेदैरष्टधा सिद्धिरित्यर्थः। ते च—ऊहः शब्दोऽध्ययनं त्रयो विघाता सुहृत्प्राप्तिर्दानं चेति। अथ 'श्रौतक्रमात्पदार्थक्रमो बलवान्' इत्यभिप्रेत्य क्रमान्तरेण व्याख्यायन्ते। तत्राद्या सिद्धिरध्ययनं नाम, विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणं तारमुच्यते। द्वितीया सिद्धिः शब्दः, शब्द इति तज्जनितमर्थज्ञानं सुतारमुच्यते। तृतीया ऊहस्तर्कः, आगमाविरोधिन्यायेनागमार्थपरीक्षणं यदिदं मननमाहुः सा तारतारमुच्यते। सुहृत्प्राप्तिश्चतुर्थी, न्यायेन परीक्षितमप्यर्थं न तावच्छ्रद्दधते यावद् गुरुशिष्यसब्रह्मचारिभिः सह न संवाद्यते, तस्मात् सुहृदां गुर्वादीनां प्राप्तिरावश्यकीति। सा च रम्यकमुच्यते। दानं पञ्चमी सिद्धिः, दानं च विवेकज्ञानस्य शुद्धिः, देहशोधन इत्यस्माद्दानपदोत्पत्तेः। यदाह पतञ्जलिः—"विवेकख्यातिरविप्लवा हानोपायः" ( यो० सू० २।२६ ) इति। अविप्लवः शुद्धिः, सा च सवासनसंशयविपर्ययायासपरिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थानम्। इयं तु न विनादरनैरन्तर्यदीर्घकालस्य नियताभ्यासपरिपाकाद्भवतीति दानेन कार्येण सोऽपि संगृहीतः। सेयं सदामुदितमुच्यते। इमाश्च पञ्चामुख्याः सिद्धयो हेतुत्वात्, तिस्रः पुनः फलत्वान्मुख्याः—आध्यात्मिकदुःखविघातः, आधिभौतिकदुःखविघातः, आधिदैविकदुःखविघातश्चेति। इमाश्च क्रमेण प्रमोदमुदितमोदमाननामानः। एवं पञ्च विपर्ययभेदाः, अशक्तिरष्टाविंशतिधा, तुष्टिर्नवधा सिद्धिरष्टधेति पञ्चाशत्पदार्थाः ॥ ४४ ॥

[ भा० ] ऊहादि०। ऊहादिभेदैः सिद्धिरष्टधा भवतीत्यर्थः। इदमपि सूत्रं कारिकया व्याख्यातम्—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ( सां० का० ५७ )

इति। अस्यायमर्थः—अत्राध्यात्मिकादिदुःखत्रयप्रतियोगिकत्वात् त्रयो दुःखविघाता मुख्यसिद्धयः, इतरास्तु तत्साधनत्वाद् गौण्यः सिद्धयः। तत्रोहो यथा—

उपदेशादिकं विनैव प्राग्भवीयाभ्यासवशात् तत्त्वस्य स्वयमूहनमिति । शब्दस्तु यथा—अन्यदीयपाठमाकर्ण्य स्वयं वा शास्त्रमाकलय्य यज्ज्ञानं जायते तदिति । अध्ययनं च यथा—शिष्याचार्यभावेन शास्त्राध्ययनाज्ज्ञानमिति । सुहृत्प्राप्तिर्यथा—स्वयमुपदेशार्थं गृहागतात् परमकारुणिकाज्ज्ञानलाभ इति । दानं च यथा—धनादिदानेन परितोषिता-ज्ज्ञानलाभ इति । एषु च पूर्वस्त्रिविध ऊहशब्दाध्ययनरूपो मुख्यसिद्धेरङ्कुश आकर्षकः । सुहृत्प्राप्तिदानयोरूहादित्रयापेक्षया मन्दसाधनत्वप्रतिपादनायेदमुक्तम् ।

कश्चित् त्वेतासामष्टसिद्धीनामङ्कुशो निवारकः पूर्वस्त्रिविधो विपर्ययाशक्ति-तुष्टिरूपो भवति बन्धकत्वादिति व्याचष्टे । तन्न; तुष्ट्यभावस्याशक्तितया बाधिर्यादिवत् सिद्धिविरोधितालाभेन तुष्ट्यतुष्ट्योरुभयोः सिद्धिविरोधित्वासम्भवात् ॥ ४४ ॥

[ मा० सा० ] ऊहादिभिरिति । व्याख्यातम् ॥ ४४ ॥

## नेतरादितरहानेन विना ॥ ४५ ॥

[ वृ० ] उत्तरेण पूर्वपरित्यागात् सिद्धिरित्याह—नेतरा० । इतरादशक्तितः, इतरहानेन विपर्ययहानेन विना न सिद्धिः । एवं तुष्टितोऽशक्तिहानेन विना न सिद्धिः । एवं तद्धानेन विनेति ॥ ४५ ॥

[ वृ० सा० ] विपर्ययाशक्तितुष्टयश्च हेया इत्याह—नेतरादिति । इतरासां विपर्यया-शक्तितुष्टीनां हानेन विना, इतराद् इतरस्मात्, अहानात् सिद्धयो न भवन्तीति शेषः । आसां सिद्धिपरिपन्थित्वादिति भावः । इतरादिति छान्दसम्, इतरेत्यत्र सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ॥ ४५ ॥

[ भा० ] ननूहादिभिरेव कथं सिद्धिरुच्यते ? मन्त्रतपःसमाध्यादिभिरप्यणिमाद्यष्ट-सिद्धेः सर्वशास्त्रसिद्धत्वादिति, तत्राह—नेतरादि० । इतरादूहनादिपञ्चकभिन्नात् तप आदेस्तात्त्विकी न सिद्धिः; कुतः ? इतरहानेन विना । यतः सा सिद्धिरितरस्य विपर्ययस्य हानं विनैव भवत्यतः संसारापरिपन्थित्वात् सा सिद्ध्याभास एव, न तु तात्त्विकी सिद्धिरित्यर्थः । तथा चोक्तं योगसूत्रेण—"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" ( यो० सू० ३।३७ ) इति ।

तदेवं "ज्ञानान्मुक्तिः" ( सां० सू० ३।२३ ) इत्यारभ्य विस्तरतो बुद्धिगुणरूपः प्रत्ययसर्गः सकार्यबन्धो मोक्षरूपपुरुषार्थेन सहोक्तः । एतौ च बुद्धि-तद्गुणरूपौ सर्गौ प्रवाहरूपेणान्योन्यं हेतू बीजाङ्कुरवत् । तथा च कारिका—

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥ (सां० का० ५२)

इति । भावा वासनारूपा बुद्धेर्ज्ञानादिगुणाः; लिङ्गं महत्तत्त्वं बुद्धिरिति । समष्टिसर्गः प्रत्ययसर्गश्च समाप्तः ॥ ४५ ॥

[ भा० सा० ] ननूहाद्यतिरिक्तमन्त्ररूपैः समाख्यादिभिरप्यणिमाद्यष्टसिद्धेः सर्वशास्त्रसिद्धत्वादाह—नेतरादिति । इतरान्मन्त्रादेर्न तात्त्विकी सिद्धिर्यतः सारतरस्य विपर्ययस्य हानेन विनैवं भवति । अतः संसारपरिपन्थित्वात् सा सिद्ध्याभास एव, न तात्त्विकी सिद्धिरित्यर्थः । एवं सूक्ष्मस्थूलौ सर्गौ प्रवाहरूपेणान्योन्यं हेतू, बीजाङ्कुरवत् । तत्र स्थूलसर्गो भव इति प्रत्ययसर्ग इति चोच्यते, सूक्ष्मसर्गो लिङ्गमिति । पुरुषार्थस्य भोगस्य भोग्यशब्दादिभिर्भोगायतनशरीरेण भोगसाधनेन्द्रियकरणैर्विनाऽसंभवाद् द्विविधसर्गाविश्यकत्वम् । कल्पादावपि पूर्वकल्पोत्पन्नभावलिङ्गसंस्कारात्तयोरुत्पत्तिरिति मन्तव्यम् ॥ ४५ ॥

## दैवादिप्रभेदा ॥ ४६ ॥

[ वृ० ] सर्गे सति वैराग्यम्, तत्र कति सर्गभेदाः ? इत्यत्राह—दैवादि० । आदिशब्दात् षड् भेदाः । तथा चोक्तम्—

"दैवादिः षड्विधश्च स्यात् संसारः कर्मसम्भवः ।
सुरोऽसुरो नरः प्रेतस्तिर्यङ् नारक एव च ॥"

स्थावरादीनां नारकेष्वन्तर्भावः ॥ ४६ ॥

[ वृ० सा० ] सृष्टिभेदानाह—दैवादीति । सृष्टिरिति शेषः । आदिशब्दात् तैर्यग्योनः मानुष्यश्च । ब्राह्मः प्राजापत्य ऐन्द्रः पैत्रो गान्धर्वो याक्षो राक्षसः पैशाच इत्यष्टविधो दैवः । पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधस्तैर्यग्योनः । एकविधो मानुष्यः । ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्षु वर्णेष्वविशेषादिति समासतो भौतिकः सर्गः ॥ ४६ ॥

[ भा० ] साम्प्रतं "व्यक्तिभेदः कर्मविशेषाद्" ( सां० सू० ३।१० ) इति संक्षेपादुक्ता व्यष्टिसृष्टिर्विस्तरतः प्रतिपाद्यते—दैवादि० ।

दैवादिः प्रभेदोऽवान्तरभेदो यस्याः सा तथा सृष्टिरिति शेषः । तदेतत् कारिकया व्याख्यातम्—

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ (सां० का० ५३)

इति । ब्राह्म-प्राजापत्यैन्द्र-पैत्र-गान्धर्व-याक्ष-राक्षस-पैशाचा इत्यष्टविधो दैवः सर्गः । पशु-मृग-पक्षि-सरीसृप-स्थावरा इति तैर्यग्योनः पञ्चविधः । मानुष्यसर्गश्चैकप्रकार इति । भौतिको भूतानां व्यष्टिप्राणिनां विराजः सकाशात् सर्ग इत्यर्थः ॥ ४६ ॥

[ भा० सा० ] इदानीं व्यष्टिसृष्टिविस्तरमाह—दैवादीति । दैवादिप्रभेदो यस्याः सा सृष्टिरिति शेषः । तत्र ब्राह्मप्राजापत्यैन्द्रपैत्र्यगान्धर्वयाक्षराक्षसपैशाचभेदाद् दैवोऽष्टविधः । पशुमृगपक्षिसरीसृपस्थावरभेदात् तैर्यग्योनः पञ्चधा । मानुष्यश्च संस्थानैक्यादेकविधः । अयं भूतानां व्यष्टिप्राणिनां विराजः सकाशात् सर्ग इति बोध्यम् ॥ ४६ ॥

आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिराविवेकात् ॥ ४७ ॥

[ वृ० ] प्रकृतेः प्रवृत्तिशीलत्वात् सर्वदा सृष्टौ न मुक्तिरित्यत्राह—आब्रह्म० । तत्कृते पुरुषकृते, मोक्षार्थं सृष्टिः । आविवेकाद् विवेकपर्यन्तम् । प्रकृतेः शीलमिदं यद् विवेकज्ञानं यावत् प्रवर्तते, स्वभावस्यानपायित्वात् ॥ ४७ ॥

[ वृ० सा० ] प्रकृतेः प्रवृत्तिशीलत्वात् सर्वदा सृष्टौ कथं मुक्तिरित्यत आह—आब्रह्मेति । विवेकज्ञानपर्यन्तमेव प्रकृतिः प्रवर्तते स्वभावात् ॥ ४७ ॥

[ भा० ] अवान्तरसृष्टेरप्युक्तायाः पुरुषार्थत्वमाह—आब्रह्म० । चतुर्मुखमारभ्य स्थावरान्ता व्यष्टिसृष्टिरपि विराट्सृष्टिवदेव पुरुषार्था भवति, तत्तत्पुरुषाणां विवेकख्यातिपर्यन्तमित्यर्थः ॥ ४७ ॥

[ भा० सा० ] व्यष्टिसृष्टिरपि पुरुषार्थेत्याह—आब्रह्मेति । चतुर्मुखमारभ्य स्थावरान्ता व्यष्टिसृष्टिरपि विराट्सृष्टिवदेव पुरुषार्था, तत्पुरुषाणां विवेकख्यातिपर्यन्तमित्यर्थः ॥ ४७ ॥

ऊर्ध्वं सत्त्वविशाला ॥ ४८ ॥

[ वृ० ] कुत्र कथं सृष्टिः ? इत्यत्राह—ऊर्ध्वं० । ऊर्ध्वं देवलोके ॥ ४८ ॥

[ वृ० सा० ] कुत्र कथं सृष्टिरित्याह—ऊर्ध्वमिति । भुवःप्रभृति सत्यान्ता सत्त्वमूला सत्त्वबहुला ॥ ४८ ॥

[ भा० ] व्यष्टिसृष्टावपि विभागमाह सूत्रत्रयेण—ऊर्ध्वं० । ऊर्ध्वं भूर्लोकादुपरि सृष्टिः सत्त्वाधिका भवतीत्यर्थः ॥ ४८ ॥

[ भा० सा० ] तत्रापि विशेषमाह—ऊर्ध्वमित्यादि । ऊर्ध्वं भूलोकादुपरि सृष्टिः सत्त्वाधिकेत्यर्थः ॥ ४८ ॥

तमोविशाला मूलतः ॥ ४९ ॥

[ वृ० ] नागलोके सृष्टिमाह—तमो० । मूलतः पाताले ॥ ४९ ॥

[ वृ० सा० ] तम इति । मूलतः सृष्टिः पश्वादिस्थावरान्ता तमोबहुला ॥ ४९ ॥

[ भा० ] तमो० । मूलतो भूर्लोकादध इत्यर्थः ॥ ४९ ॥

[ भा० सा० ] तम इति । मूलतः भूर्लोकादध इत्यर्थः । इदमुपलक्षणं पश्वादिस्थावरान्तसृष्टेः, सोऽयं मोहमयत्वात् तमोबहुलः ॥ ४९ ॥

मध्ये रजोविशाला ॥ ५० ॥

[ वृ० ] मध्ये मर्त्यलोके सृष्टिमाह—मध्ये० । विशाला उद्रिक्ता ॥ ५० ॥

[ वृ० सा० ] मध्य इति । किन्तु मध्ये रजोबहुला ॥ ५० ॥

[ भा० ] मध्ये० । मध्ये भूर्लोक इत्यर्थः ॥ ५० ॥

[ भा० सा० ] मध्य इति । मध्ये भूर्लोके ॥ ५० ॥

## कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥ ५१ ॥

[ वृ० ] नन्वेकैकस्वगुणानामन्योन्यमिथुनीभावात् कथं प्रकृतेः सृष्टिवैचित्र्यमित्यत आह—कर्मवैचित्र्यात्० । यथा गर्भदासो विचक्षणो विचित्रं कर्म कुरुते प्रभोरर्थाय, तथा प्रधानं पुरुषार्थं विचित्रां सृष्टिं कुरुते, कर्मवैचित्र्यात् कर्मलाभात् ॥ ५१ ॥

[ वृ० सा० ] धर्माधर्मानुष्ठानपरत्वाद् दुःखबहुलत्वाच्चैकस्याः प्रकृतेः सृष्टिवैचित्र्यं कथम् ? तदाह—कर्मेति । गर्भदासो यथा विचित्रं कर्म कुरुते प्रभोरर्थे तद्वत् ॥ ५१ ॥

[ भा० ] नन्वेकस्या एव प्रकृतेः केन निमित्तेन सत्त्वादिविशालतया विचित्राः सृष्टय इत्याकाङ्क्षायामाह—कर्मवै० । विचित्रकर्मनिमित्तादेव यथोक्ता प्रधानस्य चेष्टा कार्यवैचित्र्यरूपा भवति । वैचित्र्ये दृष्टान्तो गर्भदासवदिति । यथा गर्भावस्थामारभ्य यो दासस्तस्य भृत्यवासनापाटवेन नानाप्रकारा चेष्टा परिचर्या स्वाम्यर्थे भवति, तद्वदित्यर्थः ॥ ५१ ॥

[ भा० सा० ] एवंभूतसृष्टिवैचित्र्ये हेतुमाह—कर्मेति । विचित्रकर्मरूपान्निमित्तात् प्रधानस्य चेष्टा कार्यवैचित्र्यरूपा, यथा गर्भदासो भृत्यत्ववासनापाटवेन नानाप्रकारां परिचर्यां स्वाम्यर्थे करोति तद्वदित्यर्थः ॥ ५१ ॥

## आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः ॥ ५२ ॥

[ वृ० ] कर्मणा चेत् तल्लाभस्तर्हि उत्तरोत्तरभूमिलाभात् कृतकृत्यस्य किं मोक्षेणेत्यत्राह—आवृत्ति० । उत्तरोत्तरविशिष्टजन्मलाभेऽपि संसारे आवृत्तिः, तस्माद्धेयः संसारः ॥ ५२ ॥

[ वृ० सा० ] ननु कर्मवैचित्र्यादुत्तरोत्तरभूमिलाभे किं मोक्षेणेत्यत आह—आवृत्तिरिति । उत्तरोत्तरविशिष्टजन्मलाभोऽप्यावृत्तिर्यतोऽतः संसारो हेयः ॥ ५२ ॥

[ भा० ] ननु चेदूर्ध्वं सत्त्वविशाला सृष्टिरस्ति तर्हि तत एव कृतार्थत्वात् पुरुषस्य किं मोक्षेणेति, तत्राह—आवृत्ति० । तत्राप्यूर्ध्वगतावपि सत्यामावृत्तिरस्त्यत उत्तरोत्तरयोनियोगादधोऽधो योनिजन्मनः सोऽपि लोको हेय इत्यर्थः ॥ ५२ ॥

[ भा० सा० ] ननूर्ध्वसृष्टेः सत्त्वविशालत्वे तत एव कृतार्थत्वात् तत्रत्यपुरुषाणां किं मोक्षेणेत्यत आह—आवृत्तिरिति । तत्राप्यूर्ध्वगतावप्यावृत्तिरस्ति, अतोऽधोऽधोयोनिसंबन्धात् सोऽपि लोको हेय इत्यर्थः ॥ ५२ ॥

## समानं जरामरणादिजं दुःखम् ॥ ५३ ॥

[ वृ० ] एतदेवाह—समानं० । आब्रह्मस्तम्बपर्यन्तम् ॥ ५३ ॥

[ वृ० सा० ] समानमिति । स्पष्टम् ॥ ५३ ॥

[ भा० ] किञ्च—समानं० । ऊर्ध्वाधोगतानां ब्रह्मादिस्थावरान्तानां सर्वेषामेव जरामरणादिजं दुःखं साधारणमतोऽपि हेय इत्यर्थः ॥ ५३ ॥

[ भा० सा० ] किञ्च—समानमिति । आब्रह्मस्थावरान्तमिति शेषः ॥ ५३ ॥

## न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥ ५४ ॥

[ वृ० ] कारणे प्रकृतौ लयादेव कृतकृत्यस्य किं मोक्षेणेत्यत आह--न कारण० । भवेदेवम्, यदि प्रकृतिलीनस्य न पुनरावृत्तिः । न त्वेवम्, पुनरावृत्तिश्रुतेः । तथा च —

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते ॥"

यथा स्नानार्थं मग्नस्य पुनरुत्थानं तथा प्रकृतिलीनस्येत्यर्थः ॥ ५४ ॥

[ वृ० सा० ] प्रकृतिलयात्कृतकृत्यतां निरस्यति—नेति । "पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः" इत्युक्तेः कारणलीनस्य मग्नवत् पुनरुत्थानप्रतीतेः । "निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते" इत्युक्तेस्तु न मुक्तौ पुनरावृत्तिः ॥ ५४ ॥

[ भा० ] किं बहुना, कारणे लयादपि न कृतकृत्यतेत्याह—न कारण० । विवेकज्ञानाभावे यदा महदादिषु वैराग्यं प्रकृत्युपासनया भवति, तदा प्रकृतौ लयो भवति, "वैराग्यात् प्रकृतिलयः" ( सां० का० ४५ ) इति वचनात् । तस्मात् कारणलयादपि न कृतकृत्यताऽस्ति, मग्नवदुत्थानात् । यथा जले मग्नः पुरुषः पुनरुत्तिष्ठति, एवमेव प्रकृतिलीनाः पुरुषा ईश्वरभावेन पुनराविर्भवन्ति, संस्कारादेरक्षयेण पुना रागाभिव्यक्तेः, विवेकख्यातिं विना दोषदाहानुपपत्तेरित्यर्थः ॥ ५४ ॥

[ भा० सा० ] कारणे लयादपि न कृतकृत्यतेत्याह—नेति । विवेकज्ञानाभावे यदा महदादिषु वैराग्यं प्रकृत्युपासनया भवति, तदा महदादिषु वैराग्यात् प्रकृतिलयेऽपि न कृतकृत्यता । यथा जले मग्नः पुनरुत्तिष्ठति, एवं प्रकृतिलीना ईश्वरभावेन पुनराविर्भवन्ति । संस्कारादेरक्षयेण पुना रागाभिव्यक्तेरित्यर्थः ॥ ५४ ॥

## अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥ ५५ ॥

[ वृ० ] नित्यत्वाद् यथा नात्मनो बन्धस्तथा प्रधानस्यापीत्यत आह—अकार्यत्वे० । अकार्यत्वमप्रयोजकम्, किन्तु परतन्त्रत्वम् । तच्च प्रकृतावस्तीति, तद्योगाच्च बन्धयोगः ॥ ५५ ॥

[ वृ० सा० ] ननु प्रकृतिपुरुषयोर्नित्यत्वाविशेषे कुतः प्रकृतेरेव स्रष्टृत्वम् ? तत्राह—अकार्यत्व इति । अकार्यत्वेऽपि नित्यत्वेऽपि तद्योगः स्रष्टृत्वयोगः, पारवश्यात् परार्थत्वात् ॥५५॥

[ भा० ] ननु कारणं केनापि न कार्यतेऽतः स्वतन्त्रा कथं स्वोपासकस्य दुःखनिदानमुत्थानं पुनः करोति, तत्राह—अकार्यत्वे० । प्रकृतेरकार्यत्वेऽप्यप्रेर्यत्वेऽप्यन्येच्छानधी-

नत्वेऽपि तद्योगः पुनरुत्थानौचित्यं तल्लीनस्य । कुतः ? पारवश्यात् पुरुषार्थतन्त्रत्वात् । विवेकख्यातिरूपपुरुषार्थवशेन प्रकृत्या पुनरुत्थाप्यते स्वलीन इत्यर्थः । पुरुषार्थादयश्च प्रकृतेर्न प्रेरकाः, किन्तु प्रवृत्तिस्वभावायाः प्रवृत्तौ निमित्तानीति न स्वातन्त्र्यक्षतिः । तथा च योगसूत्रम्—"निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" ( सू० ४।३ ) इति । वरणभेदः प्रतिबन्धनिवृत्तिः ।। ५५ ॥

[ भा० सा० ] ननु स्वतन्त्रा प्रकृतिः कथं स्वोपासकस्य दुःखनिदानमुत्थानं पुनः करोति, तत्राह—अकार्यत्व इति । अकार्यत्वमप्रेर्यत्वं प्रकृतेरन्येच्छानधीनत्वेऽपि तद्योगः स्वलीनस्य पुनरुत्थानं पुरुषार्थतन्त्रत्वाद्विवेकख्यातिरूपपुरुषार्थवशेन प्रकृत्या पुनरुत्थाप्यते स्वलीन इत्यर्थः । पुरुषादयश्च न प्रकृतेः प्रेरकाः, किन्तु प्रकृतिस्वभावायाः प्रकृतिप्रतिबन्धकनिवृत्तौ निमित्तानीति न स्वातन्त्र्यहानिः ॥ ५५ ॥

## स हि सर्ववित् सर्वकर्ता ॥ ५६ ॥

[ वृ० ] पर आत्मा किं रूपः ? इत्यत्राह—स हि० । प्रकृतिप्रतिबिम्बितत्वादेवमभिमानः ॥ ५६ ॥

[ वृ० सा० ] प्रकृतेरचेतनाया अधिष्ठाता चेतनः कश्चिदस्ति, स च सर्ववित् सर्वकर्तेति मतं दूषयति—स इति । स हीति प्रकृतिपदार्थ एवेत्यर्थः । प्रकृतेः परिणामित्वेन ज्ञानवृत्तिरूपपरिणामभावादिति भावः ॥ ५६ ॥

[ भा० ] प्रकृतिलयात् पुरुषस्योत्थाने प्रमाणमप्याह—स हि० । स हि पूर्वसर्गे कारणलीनः सर्गान्तरे सर्ववित् सर्वकर्तेश्वर आदिपुरुषो भवति, प्रकृतिलये तस्यैव प्रकृतिपदप्राप्त्यौचित्यात् । "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य" ( बृ० उ० ४।४।६ ) इत्यादिश्रुतेरित्यर्थः ॥ ५६ ॥

[ भा० सा० ] प्रकृतिलीनपुरुषोत्थाने प्रमाणमाह—स हीति । पूर्वे सर्गे प्रत्युपासनया तल्लीनः सर्गान्तरे सर्ववित् सर्वकर्तेति श्रूयत, इत्यर्थः । स एवेश्वर आदिपुरुष इत्युच्यते प्रकृतिलयेन तस्यैव प्रकृतिपदप्राप्त्यौचित्यात् ॥ ५६ ॥

## ईदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥

[ वृ० ] तात्त्विकमेव कर्तृत्वं भवतु, किं प्रतिबिम्बकल्पनया ? तथा च न्यायाभिमत एवेश्वरोऽस्त्वित्यत्राह—ईदृशे० । यद्यस्मदभिमत आत्मा ईश्वरो भवेद्, भवतु । न्यायाभिमते तु प्रमाणं नास्ति । एतच्च प्रथमाध्याये "ईश्वरासिद्धेः" ( १।९२ ) इति सूत्रे वर्णितम्, द्वितीयाध्याये "विमुक्तविमोक्षार्थम्" ( २।१ ) इति सूत्रे स्वार्थं परार्थं च प्रधानप्रवृत्तिरित्युक्तम्; अत्र तु स्वार्थस्य गौणत्वम् ।

[ वृ० सा० ] ईश्वरकारणत्वप्रतिपादकश्रुत्यादीनामप्ययमेवार्थं इत्याह—ईदृश इति। सिद्धिर्ज्ञानसिद्धा प्रमाणजन्या ॥ ५७ ॥

[ भा० ] नन्वेवमीश्वरप्रतिषेधानुपपत्तिस्तत्राह—ईदृशे०। प्रकृतिलीनस्य जन्येश्वरस्य सिद्धिः "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" ( मु० उ० १।१।९ ) इत्यादिश्रुतिभ्यः सर्वसम्मतैव। नित्येश्वरस्य विवादास्पदत्वादित्यर्थः।

अथवा 'स हि' इत्यादिसूत्रद्वयमेवं व्याख्येयम्—पारवश्यमपि प्रतिपादयति स हीति सूत्रेण। स हि परः पुरुषसामान्यं सर्वज्ञानशक्तिमत् सर्वकर्तृताशक्तिमच्च, अयस्कान्तवत् सन्निधिमात्रेण प्रेरकत्वादित्यर्थः। तथा चासमासतार्थपुरुषसान्निध्यात् तदर्थमन्येच्छानधीनाया अपि प्रकृतेः प्रवृत्तिरावश्यकीति।

नन्वेवमीश्वरप्रतिषेधविरोधस्तत्राह—ईदृशेश्वरसिद्धिः सिद्धा। सान्निध्यमात्रेणेश्वरस्य सिद्धिस्तु श्रुतिस्मृतिषु सर्वसम्मतेत्यर्थः --

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते॥ ( क० उ० २।१।१२ )
सृजते च गुणान् सर्वान् क्षेत्रज्ञस्त्वनुपश्यति।
गुणान् विक्रियते सर्वानुदासीनवदीश्वरः॥

इत्यादिश्रुतिस्मृतयश्चैतादृशेश्वरे प्रमाणमिति ॥ ५७॥

[ मा० सा० ] नन्वेवमीश्वरप्रतिषेधानुपपत्तिरत आह—ईदृशेति प्रकृतिलीनस्य जन्येश्वरस्य सिद्धिः "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" ( मु० उ० १।१।९ ) इत्यादिश्रुतेः सर्वसिद्धैवेत्यर्थः। यद्वा स हि सर्ववित् सर्वकर्तेत्यस्यायमर्थः—सः पुरुषसामान्यं सर्वज्ञानशक्तिमद् अयस्कान्तवत् सन्निधिमात्रेण प्रेरकतया सर्वकर्तृत्वशक्तिमच्चेत्यसमाप्तपुरुषार्थपुरुषसान्निध्यात् तदर्थमस्येच्छानधीनाया अपि प्रकृतेः प्रवृत्तिः। सान्निध्यमात्रेणेश्वरसिद्धिस्तु—

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते॥ ( क० उ० २।४।२ )
सृजते च गुणान् सर्वान् क्षेत्रज्ञस्त्वनुपश्यति।
गुणान् विक्रियते सर्वानुदासीनवदीश्वरः॥

इत्यादि श्रुति स्मृति सिद्धेति द्वितीयसूत्रार्थः॥ ५७॥

**प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत् ॥ ५८ ॥**

[ वृ० ] परार्थत्वमेवाह—प्रधान०। चेतनस्यापि परार्थं प्रवृत्तिर्दृश्यते, यथोष्ट्रः कुङ्कुमं वहति, अचेतनायास्तु प्रकृतेरभोक्तृत्वात् परार्थमेव प्रवर्तनमिति ॥ ५८ ॥

[ वृ० सा० ] प्रधानः किमर्थं प्रवर्तते तत्राह—प्रधानेति। परार्थम्। अपिरेवार्थे, स्वतः अभोक्तृत्वादेवेत्यर्थः। उष्ट्रकुङ्कुमवहनवदिति ॥ ५८ ॥

[ भा० ] द्वितीयाध्यायादिमारभ्यैतावत्पर्यन्तं सूत्रव्यूहैः प्रधानसृष्टिः समापिता। इतः परं मोक्षोपपत्त्यर्थं प्रधानसृष्टेर्ज्ञानिपुरुषं प्रत्यत्यन्तनिवृत्तिरत्यन्तलयाख्या वक्तव्या, तदुपपत्त्यर्थमादौ प्रधानसृष्टेः प्रयोजनं द्वितीयाध्यायस्यादिसूत्रे दिङ्मात्रेणोक्तं विस्तरतः प्रतिपादयति—प्रधान० ।

प्रधानस्य स्वत एव सृष्टिर्यद्यपि, तथापि परार्थमन्यस्य भोगापवर्गार्थम्। यथोष्ट्रस्य कुङ्कुमवहनं स्वाम्यर्थम्। कुतः? अभोक्तृत्वादचेतनत्वेन भोगापवर्गासम्भवादित्यर्थः। ननु "विमुक्तमोक्षार्थं स्वार्थं वा" ( सां० सू० २।१ ) इत्यनेन स्वार्थापि सृष्टिरुक्तेति चेत्, सत्यम्; तथापि पुरुषार्थतां विना स्वार्थताऽपि न सिद्धयति। स्वार्थो हि प्रधानस्य कृतभोगापवर्गात् पुरुषादात्मविमोक्षणमिति। ननु भृत्यतुल्या चेत् प्रकृतिस्तर्हि कथं स्वामिनो दुःखार्थमपि प्रवर्तत इति चेन्न, सुखार्थप्रवृत्त्यैव नान्तरीयकदुःखसम्भवाद् दुष्टभृत्यतुल्यत्वाद्वेति ॥ ५८ ॥

[ भा० सा० ] अथ प्रधानसृष्टेः प्रयोजनं विस्तरत आह—प्रधानेति। प्रधानस्य स्वत एव सृष्टिः। सा च परार्थमन्यस्य पुरुषस्य भोगापवर्गार्थम्, यथोष्ट्रस्य कुङ्कुमवहनं स्वाम्यर्थम्। कुतः? अभोक्तृत्वात्, अचेतनत्वादित्यर्थः। यद्यपि पूर्वं स्वार्थापि सृष्टिरित्युक्तं तथापि पुरुषार्थतां विना स्वार्थोऽपि न सिद्धयति। स्वार्थोऽपि प्रधानस्य जातभोगापवर्गात् पुरुषादात्मविमोक्षणमेव। भृत्यतुल्या यापि स्वामिनो दुःखार्थमपि प्रवृत्तिः,[सा]दुष्टभृत्यवद् बोध्या ॥ ५८ ॥

## अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥ ५९ ॥

[ वृ० ] चेतनस्य प्रवृत्तिर्दृष्टा, नाचेतनास्येत्यत्राह—अचेतनत्वे०। यथा क्षीरमचेतनं वत्सार्थं प्रवर्तते, तथा प्रधानं पुरुषार्थं प्रवर्तते ॥ ५९ ॥

[ वृ० सा० ] दृष्टान्तेन चेतनस्यैव परार्थप्रवृत्तिमाशङ्क्याह—अचेतनत्व इति। यथा क्षीरं वत्सविवृद्धयर्थं प्रवर्तते तद्वदित्यर्थः ॥ ५९ ॥

[ भा० ] ननु प्रधानस्याचेतनस्य स्वतः स्रष्टृत्वमेव नोपपद्यते, रथादेः परप्रयत्नेनैव प्रवृत्तिदर्शनादिति, तत्राह—अचेतनत्वे०। यथा क्षीरं पुरुषप्रयत्ननैरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते, एवमचेतनत्वेऽपि परप्रयत्नं विनापि महदादिरूपपरिणामः प्रधानस्य भवतीत्यर्थः। "धेनुवद्वत्साय" ( सां० सू० २।३७ ) इत्यनेन सूत्रेणास्य न पौनरुक्त्यम्, तत्र करणप्रवृत्तेरेव विचारितत्वात्, धेनूनां चेतनत्वाच्चेति ॥ ५९ ॥

[ भा० सा० ] नन्वचेतनस्य स्वतः स्रष्टृत्वमनुपपन्नम्, रथादौ परत्वेनैव चेष्टादर्शनादिति तत्राह—अचेतनत्व इति। यथा क्षीरं द्रव्यान्तरसंयोगेन पुरुषयत्नं विनैव स्वत एव दधिरूपेण परिणमते, एवं महदादिरूपेण प्रधानं परिणमत इत्यर्थः ॥ ५९ ॥

## कर्मवद् दृष्टेर्वा कालादेः ॥ ६० ॥

[ वृ० ] दृष्टान्तान्तरमाह—कर्मवद्० । यथा कृषीबलेन कृतं कर्म धान्यारोपणादि कालादेव फलति; न च वृक्षाश्चेतनाः । आदिशब्दाददृष्टं ग्राह्यम् ॥ ६० ॥

[ वृ० सा० ] दृष्टान्तमाह—कर्मवदिति । क्रियते उप्यते इति कर्म । कृषीवलेनोप्यमानं बीजादि वृष्टिमपेक्ष्य वृक्षादिरूपेण परिणमते तथा प्रधानमपि ॥ ६० ॥

[ भा० ] दृष्टान्तान्तरप्रदर्शनपूर्वकमुक्तार्थहेतुमाह—कर्मवद्० । कालादेः कर्मवद्वा स्वतः प्रधानस्य चेष्टितं सिद्ध्यति, दृष्टत्वात् । अथैको गच्छति ऋतुरितरश्च प्रवर्तत इत्यादिरूपं कालादिकर्म स्वत एव भवत्येवं प्रधानस्यापि चेष्टा स्यात्, कल्पनाया दृष्टानुसारित्वादित्यर्थः ॥ ६० ॥

[ भा० सा० ] दृष्टान्तान्तरमाह—कर्मवदिति । यथा कर्म व्यापारः, कालादेः । अत एव दृष्टेः । एवं प्रधानस्यापि चेष्टा, दृष्टानुसारित्वात् कल्पनाया इत्यर्थः ॥ ६० ॥

## स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ॥ ६१ ॥

[ वृ० ] उष्ट्रस्यापि ताडनादिभयाभिसन्धानात् प्रवृत्तिर्दृश्यते, न चाचेतनायाः प्रकृतेरभिसन्धानमस्तीत्यत्राह—स्वभावा० । यथा गर्भदासो भृत्यः स्वामित्यभिसंधानशून्यः स्वभावादेव चेष्टते, अनभिसन्धाय कार्यं करोति, तथा प्रकृतिः ॥ ६१ ॥

[ वृ० सा० ] उष्ट्रस्य ताडनभियाऽपि कुङ्कुमवहनं घटते । प्रकृतेरचेतनत्वेन तु न स्वार्थानुसन्धानमित्यत आह— स्वभावादिति । गर्भदासो हि स्वभावादेव स्वामिकार्यं करोति, न स्वार्थमनुसन्धायेति प्रसिद्धम् ॥ ६१ ॥

[ भा० ] ननु तथापि ममेदं भोगादिसाधनमिति प्रतिसन्धानाभावान्मूढायाः प्रकृतेः कदाचित् प्रवृत्तिरपि न स्याद्विपरीता च प्रवृत्तिः स्यात्, तत्राह—स्वभावात्० । यथा प्रकृष्टभृत्यस्य स्वभावात् संस्कारादेव प्रतिनियताऽऽवश्यकी च स्वामिसेवा प्रवर्तते, न तु स्वभोगाभिप्रायेण, तथैव प्रकृतेश्चेष्टितं संस्कारादेवेत्यर्थः ॥ ६१ ॥

[ भा० सा० ] नन्वेवमपि ममेदं भोगसाधनमिति प्रतिसन्धानाभावान्मूढायाः प्रकृतेः कदाचित् प्रवृत्तिरपि न स्यादत आह—स्वभावादिति । यथा प्रकृष्टभृत्यस्य संस्कारादेवावश्यक-स्वामिसेवायां प्रवृत्तिस्तथैव प्रकृतेश्चेष्टितं संस्कारादेवेत्यर्थः ॥ ६१ ॥

## कर्माकृष्टेर्वाप्यनादितः ॥ ६२ ॥

[ वृ० ] पक्षान्तरमाह—कर्मा० । अनादित्वात् संसारस्य धर्माधर्माकर्षणात् प्रधानं प्रवर्तते, यथा पुंसां कर्मवशादचेतना अपि वृक्षाः फलन्तीति ॥ ६२ ॥

[ वृ० सा० ] कर्मेति । अनादित्वात् संसारस्य धर्माधर्मायोद्वलितं प्रधानं प्रवर्तत इत्यर्थः ॥ ६२ ॥

[ भा० ] कर्माकृष्टेः० । वाशब्दोऽत्र समुच्चये । यतः कर्मानाद्यतः कर्मभिराकर्षणादपि प्रधानस्यावश्यकी व्यवस्थिता च प्रवृत्तिरित्यर्थः ॥ ६२ ॥

[ भा० सा० ] कर्मेति । वा चार्थे । कर्मभिराकर्षणाच्च प्रधानस्यावश्यकी व्यवस्थिता च प्रवृत्तिरित्यर्थः । अनवस्था चानादित्वान्न दोषः ॥ ६२ ॥

## विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ॥ ६३ ॥

[ वृ० ] युक्तिबहुत्वात् पुनर्वचनं न पुनरुक्ततादोषायेत्यत आह—विविक्त० । पुरुषार्थं सृष्टिः, तन्निवृत्तिः प्रकृतिपुरुषविवेकज्ञानात् । यथा सूपकारः पाकं कृत्वा निवर्तते ॥ ६३ ॥

[ वृ० सा० ] शतकृत्वोऽपि पथ्यं वेदितव्यमित्याशयेनाह—विविक्तेति । यथा सूपकारः पाकं कृत्वा निवर्तते ॥ ६३ ॥

[ भा० ] तदेवं प्रधानस्य परार्थतः स्रष्टृत्वे सिद्धे परप्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्षः सिद्धचतीत्याह प्रघट्टकेन—विविक्त० । विविक्तपुरुषज्ञानात् परवैराग्येण पुरुषार्थसमाप्तौ प्रधानस्य सृष्टिर्निवर्तते । यथा पाके निष्पन्ने पाचकस्य व्यापारो निवर्तत इत्यर्थः । इयमेवात्यन्तिकप्रलय इत्युच्यते । यथा च श्रुतिः—"तस्याभिध्यानाद्योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" ( श्वे० उ० १।१० ) इति ॥ ६३ ॥

[भा० सा०] इदानीं प्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्ष इत्याह—विविक्तेति । विविक्तपुरुषज्ञानात् परवैराग्येण पुरुषार्थसमाप्तौ प्रधानं सृष्टेर्निवर्तते । यथा पाके निष्पन्ने पाचकव्यापारो निवर्तत इत्यर्थः । अयमेवात्यन्तिकप्रलयः, "तस्याभिध्यानात् योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" ( श्वे० उ० १।१० ) इति श्रुतेः ॥ ६३ ॥

## इतर इतरवत् तद्दोषात् ॥ ६४ ॥

[ वृ० ] उपदेशाद्विवेकज्ञानेऽपि मुक्तिर्न दृश्यते, इत्यत्राह—इतर० । न यथाकथञ्चिद् बोधमात्रान्मुक्तिः, किन्त्विन्द्रियाद् इतर आत्मा इतरत् प्रधानं जहाति ध्यानादिना पृथक् करोति, तद्दोषात् प्रकृतेश्चलत्वादिदोषात् ॥ ६४ ॥

[ वृ० सा० ] सत्यपि विवेकज्ञाने कुतो न मुक्तिरित्याशङ्क्याह—इतर इति । इतरः केवलविवेकज्ञानवानपि, इतरवत् विवेकज्ञानरहितवत् । तस्य विवेकज्ञानस्य दोषात् संशयविपर्यासरूपात् । तथा च विवेकज्ञानस्य शुद्धचर्थं तत्त्वाभ्यासे यतनीयमिति भावः ॥ ६४ ॥

[ भा० ] नन्वेवमेकपुरुषस्योपाधौ विवेकज्ञानोत्पत्त्या प्रकृतेः सृष्टिनिवृत्तौ सर्वमुक्तप्रसङ्ग इति, तत्राह—इतर० । इतरस्तु विविक्तबोधरहित इतरवद् बद्धवदेव प्रकृत्या तिष्ठति; कुतः? तद्दोषात्—तस्य प्रधानस्यैव तत्पुरुषार्थासमापनाख्यदोषादित्यर्थः । तदुक्तं योगसूत्रे—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" ( सू० २।२२ )

इति। तथा च पूर्वसूत्रे या प्रधाननिवृत्तिरुक्ता सा विविक्तबोद्धृपुरुषं प्रत्येवेति भावः। विश्वमायाश्रुतिः ( श्वे० उ० १।१० ) अपि ज्ञानिनं प्रत्येव मन्तव्या, "अजाम्" ( श्वे० उ० ४।५ ) इति श्रुत्यैकवाक्यत्वादिति ॥ ६४ ॥

[ भा० सा० ] इयं च विविक्तबोधपुरुषं प्रत्येवेत्याह—इतर इति। इतरः विवेक-रहितः, इतरवद् बद्धवदेव, तद्दोषादविवेकरूपात् दोषात्। अतस्तं प्रति प्रधानं प्रवर्तत एवेत्यर्थः ॥ ६४ ॥

## द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥ ६५ ॥

[ वृ० ] मोक्षस्वरूपमाह—द्वयोरेक०। द्वयोः प्रकृतिपुरुषयोः। प्रकृतेरौदासीन्यं विवेकिनं प्रत्यप्रवर्तनम्, पुरुषस्यौदासीन्यं प्रकृत्यनभिष्वङ्गः। एकतरस्येति आत्मनः, तस्यैव मुख्यत्वात् ॥ ६५ ॥

[ वृ० सा० ] मोक्षस्वरूपमाह—द्वयोरिति। विवेकिनं प्रत्यप्रवृत्तिः प्रकृतेरौदासीन्यं प्रकृत्यनभिष्वङ्गः ॥ ६५ ॥

[ भा० ] सृष्टिनिवृत्तेः फलमाह—द्वयोरेक०। द्वयोः प्रधानपुरुषयोरेवौदासीन्य-मेकाकिता, परस्परवियोग इति यावत्। सोऽपवर्गः। अथवा पुरुषस्यैव कैवल्यमहं मुक्तः स्यामित्येव पुरुषार्थतादर्शनादित्यर्थः ॥ ६५ ॥

[ भा० सा० ] सृष्टिनिवृत्तेः फलमाह—द्वयोरिति। द्वयोः प्रधानपुरुषयोरेकस्य पुरुषस्यैव वा औदासीन्यं परस्परवियोग इतरवियोगो वा सोऽपवर्ग इत्यर्थः। अहं मुक्तः स्यामित्येव प्रतीतेरन्त्यो मुक्तः ॥ ६५ ॥

## अन्यसृष्ट्युपरागेऽपि न विरज्यते, प्रबुद्धरज्जुतत्त्वस्येवोरगः ॥ ६६ ॥

[वृ०] प्रकृतेः प्रवृत्तिशीलाया औदासीन्ये सर्वमुक्तिप्रसङ्ग इत्यत्राह—अन्यसृष्ट्यु०। न प्रवृत्तिशीलाया औदासीन्यम्, स्वभावत्यागदोषात्; किन्तु विवेकिनं प्रति अपवर्तने, अज्ञान् प्रति सृष्ट्युपरागेऽपि सृष्टिकरणेऽपि न विरज्यते, सृष्टौ न निवर्तते। यथा रज्जौ सर्पभूते प्रबुद्धरज्जुतत्त्वस्यैवोरगः सर्पभ्रमो निवर्तते न त्वज्ञातरज्जुतत्त्वस्य ॥ ६६ ॥

[ वृ० सा० ] पुरुषस्य एकतरस्यात्मनो मुख्यत्वात्तस्याः प्रकृतेरौदासीन्ये सर्वमुक्तिः स्यादत आह—अन्येति। उपरागकरणं ज्ञानिनं प्रत्यौदासीन्येऽप्यज्ञानिनः प्रति प्रवर्तते। दृष्टान्तः स्पष्टः ॥ ६६ ॥

[ भा० ] नन्वेकपुरुषमुक्तावेव विवेकाकारवृत्त्या विरक्ता प्रकृतिः कथमन्य-पुरुषार्थं पुनः सृष्टौ प्रवर्तताम्। न च प्रकृतेरंशभेदान्नैष दोष इति वाच्यम्; मुक्त-पुरुषोपकरणैरपि पृथिव्यादिभिरन्यस्य भोग्यसृष्टिदर्शनादिति; तत्राह—अन्य०।

एकस्मिन् पुरुषे विविक्तबोधाद्विरक्तमपि प्रधानं नान्यस्मिन् पुरुषे सृष्ट्युप-रागाय विरक्तं भवति, किन्तु तं प्रति सृजत्येव। यथा प्रबुद्धरज्जुतत्त्वस्येवोरगो

भयादिकं न जनयति, मूढं प्रति तु जनयत्येवेत्यर्थः। उरगतुल्यत्वं च प्रधानस्य रज्जुतुल्ये पुरुषे समारोपणादिति। एवंविधं रज्जुसर्पादिदृष्टान्तानामाशयमबुद्ध्वैवाबुधाः केचिद्वेदान्तिब्रुवाः प्रकृतेरत्यन्ततुच्छत्वं मनोमात्रत्वं वा तुल्यन्ति। एतेन प्रकृतिसत्यतावादिसाङ्ख्योक्तदृष्टान्तेन श्रुतिस्मृत्यर्था बोधनीयाः, न केवलं दृष्टान्तवत्त्वेनायमर्थः सिद्ध्यति ॥ ६६ ॥

[ भा० सा० ] अमुक्तपुरुषं प्रति प्रधानस्य प्रवृत्तौ दृष्टान्तमाह—अन्येति। यथा प्रबुद्धरज्जुतत्त्वं प्रति निवृत्तोऽप्यहिरप्रबुद्धरज्जुतत्त्वस्य भयादिसृष्ट्युपरागान्न निवर्तते, तथा ज्ञानिनं प्रति निवृत्तापि प्रकृतिरन्यं प्रति सृष्टौ प्रवर्तते इत्यर्थः। उरगतुल्यत्वं च प्रधानस्य रज्जुतुल्ये पुरुषे समारोपणादिति बोध्यम् ॥ ६६ ॥

## कर्मनिमित्तायोगाच्च ॥ ६७ ॥

[ वृ० ] अत्र न्यायमाह—कर्म०। विवेकिनं प्रति कर्मणो निमित्तस्याभावात्। न बीजं विनाऽङ्कुरो भवति। श्रुतिरपि—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" ( मु० उ० २।२।८ ) ॥ ६७ ॥

[ वृ० सा० ] कर्मेति। सृष्टौ हि कर्मापि निमित्तमित्युक्तं तच्च ज्ञानिनो नास्ति, "क्षीयन्ते चास्य कर्माणि" ( मु. उ. २।२।८ ) इति श्रुतेः ॥ ६७ ॥

[ भा० ] कर्म०। सृष्टौ निमित्तं यत् कर्म तस्य सम्बन्धादप्यन्यपुरुषार्थं सृजतीत्यर्थः ॥ ६७ ॥

[ भा० सा० ] हेत्वन्तरमाह—कर्मेति। सृष्टौ निमित्तं यत् कर्म तस्य संबन्धादप्यन्यपुरुषार्थं सृजतीत्यर्थः ॥ ६७ ॥

## नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥ ६८ ॥

[ वृ० ] अदृष्टस्य बुद्धिकार्यत्वादहङ्काराद्युत्पत्तौ भवत्वदृष्टसहायता, प्रकृतेः स्वकार्यकरणे क्वादृष्टसहकारिता? इत्यत्राह—नैरपेक्ष्ये०। अदृष्टनैरपेक्ष्येऽपि प्रकृतेरविवेकः सहकारीति ॥ ६८ ॥

[ वृ० सा० ] अदृष्टस्याकारणत्वेऽप्याह—नैरपेक्ष्येति। अदृष्टनैरपेक्ष्येऽप्यविवेकः प्रकृतिप्रवृत्तावपेक्षितः ॥ ६८ ॥

[ भा० ] ननु सर्वेषां पुरुषाणामप्रार्थकतया नैरपेक्ष्याविशेषेऽपि कञ्चित् प्रत्येव प्रधानं प्रवर्तते, कञ्चित् प्रति निवर्तत इत्यत्र किं नियामकम्। न च कर्म नियामकम्, कस्य पुरुषस्य किं कर्मेत्यत्र नियामकाभावादिति, तत्राह—नैरपेक्ष्ये०।

पुरुषाणां नैरपेक्ष्येऽप्ययं मे स्वाम्ययमेवाहमित्यविवेकादेव प्रकृतिः सृष्ट्यादिभिः पुरुषानुपकरोतीत्यर्थः। तथा च यस्मै पुरुषायात्मानमविविच्य दर्शयितुं वासना वर्तते, तं प्रत्येव प्रधानं प्रवर्तत इत्येव नियामकमिति भावः ॥ ६८ ॥

[ भा० सा० ] ननु सर्वेषां पुरुषाणामप्रार्थकत्वेन निरपेक्षत्वाविशेषात् कञ्चित्प्रति प्रवर्तते नान्यं प्रति, किं नियामकमत आह—नैरपेक्ष्य इति । तेषामितरनैरपेक्ष्येऽप्ययं ममायमहमित्यविवेकात्, प्रकृतिः सृष्टयादिभिः पुरुषानुपकरोतीत्यर्थः । यः पुरुषः एवं विविच्य न पश्यति तं प्रत्येव प्रवर्तते इति भावः ॥ ६८ ॥

## नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात् ॥ ६९ ॥

[ वृ० ] प्रकृतेर्निवृत्तिं दृष्टान्तेनाह—नर्तकीवत्० । यथा नर्तकी परिषच्चारितार्थ्यान्नृत्यान्निवर्तते, तथा प्रकृतिरपि पुरुषस्य विवेकचारितार्थ्यात् सर्गान्निवर्तते ॥ ६९ ॥

[ वृ० सा० ] प्रकृतेर्निवृत्तिं दृष्टान्तेनाह—नर्तकीवदिति । नर्तकी यथा सभ्यान् प्रत्यात्मानं प्रदर्श्य नृत्यान्निवर्तते, तथा प्रधानमपि ॥ ६९ ॥

[ भा० ] प्रवृत्तिस्वभावत्वात् कथं विवेकेऽपि निवृत्तिरुपपद्यताम्, तत्राह—नर्तकीवत्० । पुरुषार्थमेव प्रधानस्य प्रवृत्तिस्वभावो न सामान्येन । अतः प्रवृत्तस्यापि प्रधानस्य पुरुषार्थसमाप्तिरूपे चरितार्थत्वे सति निवृत्तिर्युक्ता । यथा परिषद्भ्यो नृत्यदर्शनार्थं प्रवृत्ताया नर्तक्यास्तत्सिद्धौ निवृत्तिरित्यर्थः ॥ ६९ ॥

[ भा० सा० ] ननु प्रवृत्तिस्वभावायाः कथं विवेकेऽपि निवृत्तिरत आह—नर्तकीवदिति । यथा परिषद्भ्यो नृत्यदर्शनार्थं प्रवृत्ता नर्तकी तत्सिद्धौ निवर्तते, तथा प्रधानं पुरुषार्थं प्रवृत्तं तत्समाप्तिरूपे चरितार्थत्वे निवर्तत इत्यर्थः ॥ ६९ ॥

## दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥ ७० ॥

[ वृ० ] निवृत्तापि प्रकृतिः कुतोऽपि कारणात् प्रवर्तिष्यत इत्यत्राह—दोषबोधे० । स्वदोषविज्ञानाद्विवेकेन प्रकृतेर्नोपसर्पणम्, यथा कुलवधूः परपुरुषेण दृष्टा 'न पुनस्तद्दर्शनं मे भविष्यति' इत्यवहित्थां कुरुते ॥ ७० ॥

[ वृ० सा० ] नर्तकीवत्पुनः कदाचित्प्रवर्तिष्यते ? नेत्याह—दोषेति । विवेकज्ञानाद् दोषबोधे सत्युपसर्पणं नैवेत्यर्थः । कुलवधूर्यथा परपुरुषेण दृष्टाहमिति जानाना नोपसर्पति तम् ॥ ७० ॥

[ भा० ] निवृत्तौ हेत्वन्तरमाह—दोषबोधे० । पुरुषेण परिणामित्वदुःखात्मकत्वादिदोषदर्शनादपि लज्जितायाः प्रकृतेः पुनर्न प्रत्युपसर्पणं कुलवधूवत् । यथा स्वामिना मे दोषो दृष्ट इत्यवधारणेन लज्जिता कुलवधूर्न स्वामिनमुपसर्पति तद्वदित्यर्थः । तदुक्तं नारदीये—

सविकारापि मौढ्येन चिरं भुक्ता गुणात्मना ।
प्रकृतिर्ज्ञातदोषेयं लज्जयेव निवर्तते ॥ इति ।

एतदेवोक्तं कारिकयापि—

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ( सां० का० ६१ )

इति ॥ ७० ॥

[ भा० सा० ] हेत्वन्तरमाह—दोषेति । यथा स्वामिना मे दोषो दृष्ट इति लज्जिता कुलवधूः स्वामिनं नोपसर्पति, तथा प्रकृतेः परिणामित्वदुःखात्मकत्वादिदोषदर्शनाल्लज्जितेव सा पुरुषं प्रति नोपसर्पति, कुतः सृष्टिरित्यर्थः ।

सविकारापि मौढ्येन चिरमुक्ता गुणात्मना ।
प्रकृतिर्ज्ञातदोषेयं लज्जयेव निवर्तते ॥

इति स्मृतेः ॥ ७० ॥

## नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥ ७१ ॥

[ वृ० ] यस्य बन्धस्तस्य मोक्षः, न च पुरुषस्य तौ स्त इत्यत्राह—नैकान्ततो० । प्रकृतिपुरुषाविवेकाद् बन्धमोक्षावित्यभिमानमात्रमिति ॥ ७१ ॥

[ वृ० सा० ] बन्धमोक्षौ च पुरुषस्याविवेकादेव न तु स्वाभाविकावित्याह—नैकान्तत इति । एकान्ततः स्वाभाविकौ, प्रकृतौ स्वपुरुषस्याविवेकादेव ॥ ७१ ॥

[ भा० ] ननु पुरुषार्थं चेत् प्रधानप्रवृत्तिस्तर्हि बन्धमोक्षाभ्यां पुरुषस्य परिणामापत्तिरिति, तत्राह—नैकान्ततो० । दुःखयोग-वियोगरूपौ बन्धमोक्षौ पुरुषस्य नैकान्ततस्तत्त्वतः, किन्तु चतुर्थसूत्रवक्ष्यमाणप्रकारेणाविवेकादेवेत्यर्थः ॥ ७१ ॥

[ भा० सा० ] नन्वेवं बन्धमोक्षरूपेण पुरुषस्य परिणामापत्तिरत आह —नैकान्तत इति । दुःखयोगवियोगरूपौ बन्धमोक्षौ पुरुषस्य नैकान्ततस्तत्त्वतः, किन्त्वविवेकनिमित्तकावित्यर्थः ॥७१॥

## प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥ ७२ ॥

[ वृ० ] अथ असत्यस्य सत्यपूर्वकत्वात् कस्य बन्धमोक्षौ ? इत्यत्राह—प्रकृते० । आञ्जस्यात्तत्त्वतः । ससङ्गत्वात् गुणयोगात् । यथा पशुः सङ्गाद् गुणयोगाद् बध्यते । तस्मात् प्रकृतेर्बन्धमोक्षौ सत्यौ । अविवेकिनं प्रति प्रवर्तनमेव बन्धः, मोक्षः पुनर्विवेकिनं प्रत्यप्रवर्तनम् । तेन च न स्वभावप्रच्युतिदोष इति ॥ ७२ ॥

[ वृ० सा० ] स्वाभाविकावित्याह—प्रकृतेरिति । आञ्जस्यात्तत्त्वतः संसर्गत्वाद् गुणयोगात् तत्स्यात् । प्रकृतिगतयोरपि बन्धमोक्षयोर्विवेक[ा]ग्रहात् पुरुषसम्बन्ध इति भावः ॥७२॥

[ भा० ] परमार्थवस्तु यथोक्तौ बन्धमोक्षौ प्रकृतेरेवेत्याह—प्रकृते० । प्रकृतेरेव तत्त्वतो दुःखेन बन्धमोक्षौ ससङ्गत्वाद् दुःखसाधनैर्धर्मादिभिर्लिप्तत्वात् । यथा पशुः रज्ज्वा लिप्ततया बन्धमोक्षभागी तद्वदित्यर्थः । एतदुक्तं कारिकया—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ (सां० का० ६२)

इति। "द्वयोरेकतरस्य वौदासीन्यमपवर्गः" ( सां० सू० ३।६५ ) इति सूत्रे च यः पुरुषस्यापवर्ग उक्तः स प्रतिबिम्बरूपस्य मिथ्यादुःखस्य वियोग एवेति ॥ ७२ ॥

[ भा० सा० ] तत्त्वतस्तु बन्धमोक्षौ प्रकृतेरेवेत्याह—प्रकृतेरिति। आञ्जस्येन तत्त्वतः दुःखेन बन्धमोक्षौ प्रकृतेरेव। सङ्गत्वाद् दुःखसाधनधर्मादियोगात्। यथा पशुः रज्ज्वा लिप्ततया बन्धमोक्षभागी तद्वदित्यर्थः। पुरुषस्य मोक्षस्तु प्रतिबिम्बरूपदुःखवियोग एवेति बोध्यम् ॥ ७२ ॥

**रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद्**
**विमोचयत्येकेन रूपेण ॥ ७३ ॥**

[ वृ० ] केन रूपेण प्रकृतिरात्मानं बध्नाति, केन च विमोचयतीत्यत आह—रूपैः०। रूपैः सप्तभिः—धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैर्बध्नाति। विमोचयति च एकेन रूपेण ज्ञानेन ॥ ७३ ॥

[ वृ० सा० ] प्रकृतिः कियद्भी रूपैरात्मानं बध्नाति तदाह—रूपैरिति। सप्तभिर्धर्मवैराग्यैश्वर्याज्ञानाधर्मावैराग्यानैश्वर्यैः। एकेन ज्ञानेन ॥ ७३ ॥

[ भा० ] तत्र कैः साधनैर्बन्धः कैर्वा मोक्ष इत्याकाङ्क्षायामाह—रूपै०। धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः सप्तभी रूपैः स्वधर्मैर्दुःखहेतुभिः प्रकृतिरात्मानं दुःखेन बध्नाति कोशकारवत्। कोशकारकृमिर्यथा स्वनिर्मितेनाऽऽवासेनात्मानं बध्नाति तद्वत्। सैव च प्रकृतिरेकरूपेण ज्ञानेनैवात्मानं दुःखान्मोचयतीत्यर्थः ॥ ७३ ॥

[ भा० सा० ] बुद्धेरपि कैर्बन्धः कैर्मोक्षस्तत्राह—रूपैरिति। धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः सप्तभी रूपैः स्वधर्मैर्दुःखहेतुभिः प्रकृतिरात्मानं दुःखेन बध्नाति। एकेनैव रूपेण ज्ञानेनात्मानं मोचयतीत्यर्थः ॥ ७३ ॥

**निमित्तत्वमविवेकस्येति न दृष्टहानिः ॥ ७४ ॥**

[ वृ० ] काम्याकाम्यकर्मभ्यां भुक्तिर्मुक्तिश्चेति, तत्त्यागे दृष्टहानिरित्यत्राह—निमित्त०। अदृष्टस्य ज्ञानद्वारेण परम्परया कारणत्वं मुक्तौ। संसारस्य तु कारणमविवेकः। तस्मान्न दृष्टहानिरिति ॥ ७४ ॥

[ वृ० सा० ] ननु विवेकख्यात्यर्थं निरन्तरं ध्यानानुष्ठाने, मुक्तिहेतुभूतकर्मत्यागात् मुक्तिर्न स्यादित्यत आह—निमित्तत्वमिति। संसारस्य कारणमविवेकस्तन्निवृत्तये विवेकख्यातावेव यतनीयं ते, न तु दृष्टफलमुक्तिहानिर्भविष्यति। कर्मणस्तु चित्तशुद्धिद्वारा फलादिति तददृष्टमित्युच्यते ॥ ७४ ॥

[ भा० ] ननु "बन्धमुक्ती अविवेकाद्" ( सां० सू० ३।७१ ) इति यदुक्तम्, तदयुक्तम्, अविवेकस्याहेयानुपादेयत्वात्। लोके दुःखस्य तदभावसुखादेरेव च स्वतो हेयोपादेयत्वात्। अन्यथा दृष्टहानिरित्याशङ्क्य चतुर्थसूत्रोक्तं स्वयं विवृणोति—निमित्तत्व०।

अविवेकस्य पुरुषेषु बन्धमोक्षनिमित्तत्वमेव पुरा ( सां० सू० १।५५ ) उक्तम्, न त्वविवेक एव ताविति। नातो दृष्टहानिरित्यर्थः। एतच्च प्रथमाध्यायसूत्रेषु ( सां० सू० १।५५-५७ ) स्पष्टम्। अविवेकनिमित्तात् प्रकृतिपुरुषयोः संयोगस्तस्माच्च संयोगादुत्पद्यमानस्य प्राकृतदुःखस्य पुरुषे यः प्रतिबिम्बः, स एव दुःखभोगो दुःखसम्बन्धस्तन्निवृत्तिरेव च मोक्षाख्यः पुरुषार्थ इति ॥ ७४ ॥

[ भा० सा० ] अविवेकादृते इत्यस्य विवेक एव बन्ध इति नार्थः। तस्याहेयत्वानुपादेयत्वात्, लोके दुःखसुखयोरेव तत्त्वेन दृष्टत्वादित्याह—निमित्तत्वमिति। अविवेकेन निमित्तेन यः प्रकृतिपुरुषयोः संयोगस्तेनोत्पद्यमानप्राकृतदुःखस्य यः प्रतिबिम्बः स एव बन्धः तन्निवृत्तिरेव मोक्ष इत्यर्थः। पुरुषस्तु कूटस्थचिन्मात्रः स्वबुद्धिवृत्तिसाक्षी सदैकरूप एवेति बोध्यम् ॥ ७४ ॥

## तत्त्वाभ्यासान्नेति नेतीति त्यागाद्विवेकसिद्धिः ॥ ७५ ॥

[ वृ० ] विवेकश्च कथं स्यादित्यत्राह—तत्त्वाभ्यासा०। स्पष्टम्। श्रुतिश्च "स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते, अशीर्यो नहि शीर्यते" ( बृ० उ० ३।९।२६ ) इत्यादि ॥ ७५ ॥

[ वृ० सा० ] विवेकः कथं स्यात्तत्राह—तत्त्वाभ्यासादिति। नेति नेतीति तत्त्वाभ्यासाद्देहेन्द्रियादिवैलक्षण्येनात्मनः पुनः पुनश्चिन्तनात् त्यागात् संन्यासाच्च विवेकसिद्धिः विवेकसाक्षात्कारः। तथा च श्रुतिः—"अथात आदेशो नेति नेतीति" ( बृ० उ० २।३।६ ), "त्यागेनैके अमृतत्वमानशुः" ( म० ना० उ० १०।५ ) इति च ॥ ७५ ॥

[ भा० ] तदेवमादिसर्गमारभ्यात्यन्तिकलयपर्यन्तोऽखिलपरिणामः प्रधान-तद्विकाराणामेव, पुरुषस्तु कूटस्थपूर्णचिन्मात्र एवेत्यध्यायद्वयेन विस्तरतो विवेचितम्, तस्य विवेकस्य निष्पत्त्युपायेषु सारभूतमभ्यासमाह—तत्त्वाभ्यासा०।

प्रकृतिपर्यन्तेषु जडेषु नेति नेतीत्यभिमानत्यागरूपात् तत्त्वाभ्यासाद् विवेकनिष्पत्तिर्भवति। इतरत् सर्वमभ्यासस्याङ्गमात्रमित्यर्थः। तथा च श्रुतिः—"अथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत् परमस्ति" ( बृ० उ० २।३।६ ) "स एष आत्मा नेति नेति" ( बृ० उ० ३।१।२६ ) इत्यादिरिति।

अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्णिते।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥ ( वायु० पु० ५९। ४ )

इति। यथा—

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम्।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते ॥ (मनु० ६।७६-७८)

इति । एतदेव कारिकयाऽप्युक्तम्—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ।। ( सां० का० ६४ )

इति । नास्मीत्यात्मनः कर्तृत्वनिषेधः । न मे इति सङ्गनिषेधः, नाहमिति तादात्म्यनिषेधः । केवलमित्यस्य विवरणमविपर्ययाद्विशुद्धमिति । अतोऽन्तरा विपर्येणाविप्लुतमित्यर्थः । इदमेव केवलत्वं सिद्धिशब्देन सूत्रे प्रोक्तम् । "विवेकख्यातिरविप्लवा हानोपायः" ( यो० सू० ३।२६ ) इति योगसूत्रेणैतादृशज्ञानस्यैव मोक्षहेतुत्वसिद्धिरिति ।। ७५ ।।

[ भा० सा० ] तत्र विवेकनिष्पत्तौ सारभूतमुपायमाह—तत्त्वेति । प्रकृतिपर्यन्तेषु जडेषु नेति नेतीत्यभिमानत्यागरूपात् तत्त्वाभ्यासाद्विवेकसिद्धिः । इतरत् सर्वमेतदङ्गमित्यर्थः । "अथात आदेशो नेति नेति" ( बृ० उ० २।३।६ ) इत्यादिश्रुतेः । स च नास्मि न मे नाहमित्याकारोऽन्तरान्तरा विपर्ययेणाविप्लुतस्तन्निष्पादकः । तत्राद्यः कर्तृत्वनिषेधः, द्वितीयः सङ्गनिषेधः, तृतीयस्तादात्म्यनिषेधः । स च तत्र तत्रानित्याशुचिदुःखात्मकत्वदर्शनादित्यवधेयम् ।। ७५ ।।

## अधिकारिप्रभेदान्न नियमः ।। ७६ ।।

[ वृ० ] यदि तत्त्वाभ्यासादिना मोक्षः, उपदेशानन्तरं सर्वशिष्याणां मुक्तिः स्यात्, अभ्यासस्य तुल्यत्वादित्यत्राह—अधिकारि० । उत्तममध्यमाधमशक्तिभेदादेकदेति न नियमः ।। ७६ ।।

[ वृ० सा० ] ननु अभ्यासेन चेद्विवेकसिद्धिद्वारा मोक्षस्तर्हि सर्वेषां शिष्याणां स्यादेकदाभ्यासाविशेषादत आह—अधिकारीति ।। ७६ ।।

[ भा० ] विवेकसिद्धौ विशेषमाह—अधिकारि० । मन्दाद्यधिकारिभेदसत्त्वादभ्यासे क्रियमाणेऽप्यस्मिन्नेव जन्मनि विवेकनिष्पत्तिर्भवतीति नियमो नास्तीत्यर्थः । अत उत्तमाधिकारमभ्यासपाटवेनात्मनः सम्पादयेदिति भावः ।। ७६ ।।

[ भा० सा० ] विवेकसिद्धौ विशेषमाह—अधिकारीति । मन्दाद्यधिकारिभेदसत्त्वादभ्यासः क्रियमाणोऽप्येकेनैव जन्मना सिद्ध्यतीति नियमो नास्तीत्यर्थः । अतो यमनियमादिभिरुत्तमाधिकारमात्मनः सम्पादयेदित्यर्थः ।। ७६ ।।

## बाधितानुवृत्तेर्मध्यविवेकतोऽप्युपभोगः ।। ७७ ।।

[ वृ० ] यदि विवेकान्मुक्तिः, कथं विवेकिनां भोगदर्शनमित्यत्राह—बाधितानु० । तीव्रविवेकस्योपभोगो नास्ति । मध्यविवेकस्याप्युपभोगो रागाभावादलमिति ज्ञानेन बाधितत्वाद्वासनानुवृत्तिमात्रम्; उपारूढफलं कर्म उपभोगात् क्षिणोमीत्युपभुङ्क्ते, इति ।।

[ वृ० सा० ] बाधितेति । मध्यत्वं नाम विदेहमुक्तिप्रतिबन्धकप्रारब्धशेषवत्त्वम् । तद्वतो विवेकात्, उपभोगेऽपीत्यन्वयः । रागद्वेषाभावाद् बाधितस्य हर्षविषादयोरप्रयोजकस्य

कामानुत्पादकस्याप्यनुवृत्त्या प्रारब्धकर्मफलत्वेनावश्यकतया । तथा च विवेकविवेकिनोरुपभोगे महान्भेद इति भावः ॥ ७७ ॥

[ भा० ] विवेकनिष्पत्त्यैव निस्तारो नान्यथेत्याह—बाधितानु० । सकृत् सम्प्रज्ञातयोगेनात्मसाक्षात्कारोत्तरं मध्यविवेकावस्थो मध्यमविवेकेऽपि सति पुरुषे बाधितानामपि दुःखादीनां प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवतीत्यर्थः । विवेकनिष्पतिश्चापुनरुत्थानादसम्प्रज्ञातादेव भवतीत्यतस्तस्यां सत्यां न भोगोऽस्तीति प्रतिपादयितुं मध्यविवेकत इत्युक्तम् । मन्दविवेकस्तु साक्षात्कारात् पूर्वं श्रवणमननध्यानमात्ररूप इति विभागः ॥ ७७ ॥

[ भा० सा० ] ननु विवेकनिष्पत्तेरनन्तरक्षण एव किं मोक्षोऽथवा कश्चिद् विलम्बोऽपि, तत्राह—बाधितेति । सकृत्संप्रज्ञातयोगेन ध्येयातिरिक्तवृत्तिनिरोधविशेषरूपेण यो विवेकः स मध्यावस्थः, तस्मिन् सति पुरुषे बाधितानामपि दुःखादीनामभिभूतवासनातत्त्वेन प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवेदित्यर्थः । उत्तमविवेकश्च संस्कारदाहकत्वे सति सर्ववृत्तिनिरोधरूपस्यासंप्रज्ञातयोगस्यापुनरुपस्थानस्यैव जननाद्भवतीति तत्र न भोगः । मन्दविवेकस्तु साक्षात्कारात् पूर्वं श्रवणमननध्यानमात्ररूप इति विभागः ॥ ७७ ॥

## जीवन्मुक्तश्च ॥ ७८ ॥

[ वृ० ] मध्यविवेकिनः स्वरूपमाह—जीव० । च इवार्थे । मुक्त इव मुक्तो रागाभावाद् धर्मानुपपत्तेश्च । श्रुतिरपि—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ ( बृ० उ० ४।४।१२ ) ॥७८॥

[ वृ० सा० ] मध्यविवेकिनः स्वरूपमाह—जीवन्मुक्त इति । जीवन्नपि मुक्त इव ॥७८॥

[ भा० ] जीवन्मुक्तश्च । जीवन्मुक्तोऽपि मध्यविवेकावस्थ एव भवतीत्यर्थः॥७८॥

[ भा० सा० ] जीवन्मुक्त इति । जीवन्मुक्तोऽपि मध्यविवेककाल एवेत्यर्थः । तस्यामवस्थायामभिभूतवासनावशात् कृतमपि कर्म न फलायेति बोध्यम् ॥ ७८ ॥

## उपदेश्योपदेष्टृत्वात्तत्सिद्धिः ॥ ७९ ॥

[ वृ० ] जीवतो मुक्तिरित्यनुपपत्तेरिदमाह—उपदेश्यो० । तीव्रविवेकिनो बाह्यासंवेदिन उपदेष्टृत्वमेव नास्ति, मन्दविवेकिनोऽप्यज्ञानान्नोपदेष्टृत्वम्, किन्तु स उपदेश्यः, उपदेष्टा च मध्यविवेकी । अतस्तत्सिद्धिर्जीवन्मुक्तिसिद्धिः ॥ ७९ ॥

[ वृ० सा० ] जीवन्मुक्ते प्रमाणमाह—उपदेश्येति । जीवन्मुक्तस्य रागाद्यभावान्नोपदेश्यत्वसम्भवः । मन्दविवेकी तूपदेश्यः, तथा च तदुपदेष्टृत्वाज्जीवन्मुक्तिसिद्धिः ॥ ७९ ॥

[ भा० ] जीवन्मुक्ते प्रमाणमाह—उपदेश्यो० । शास्त्रेषु विवेकविषये गुरुशिष्यभावश्रवणाज्जीवन्मुक्तसिद्धिरित्यर्थः । जीवन्मुक्तस्यैवोपदेष्टृत्वसम्भवादिति ॥७९॥

[ भा० सा० ] जीवन्मुक्ते प्रमाणमाह—उपदेश्येति । शास्त्रेषु विवेकविषये गुरुशिष्यभावश्रवणाज्जीवन्मुक्तसिद्धिः । जीवन्मुक्तस्यैवोपदेष्टृत्वसंभव इति भावः ॥ ७९ ॥

## श्रुतिश्च ॥ ८० ॥

[ वृ० ] अत्र प्रमाणं दर्शयति—श्रुतिश्च । उवाच—"जीवन्नेव हि विद्वान् हर्षायासाभ्यां विमुच्यते" इति ॥ ८० ॥

[ वृ० सा० ] अत्र प्रमाणं दर्शयति —श्रुतिश्चेति । "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति तस्मै स विद्वानुपसन्नाय सम्यक्" इति श्रुतिर्विदुष उपदेष्टृत्ववादिनोऽप्यस्ति ॥ ८० ॥

[ भा० ] श्रुतिश्च० । श्रुतिश्च जीवन्मुक्तेऽस्ति —

दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे ।
कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः ॥

"ब्रह्मैव सन् ब्रह्माप्येति" (बृ० उ० ४।४।६) इत्यादिरिति । नारदीयस्मृतिरपि—

पूर्वाभ्यासबलात् कार्ये न लोको न च वैदिकः ।
अपुण्यपापः सर्वात्मा जीवन्मुक्तः स उच्यते ॥ इति ॥ ८० ॥

[ भा० सा० ] श्रुतिश्चेति । "ब्रह्मैव सन् ब्रह्माप्येति" ( बृ० उ० ४।४।६ ) । "तिष्ठेन्मुक्तोऽपि विग्रहे" इति श्रुतिश्च ॥ ८० ॥

## इतरथाऽन्धपरम्परा ॥ ८१ ॥

[ वृ० ] मन्दविवेकोऽप्युपदेष्टा भविष्यतीत्यत्राह—इतरथा० । अज्ञानी गुरुः, किं च शिष्योऽज्ञातेति ॥ ८१ ॥

[ वृ० सा० ] विपक्षे बाधमाह—इतरथेति । अज्ञानिना कथमज्ञानी उपदेश्यः ॥८१॥

[ भा० ] ननु श्रवणमात्रेणाऽप्युपदेष्टृत्वं स्यात्, तत्राह—इतरथा० । इतरथा मन्दविवेकस्याप्युपदेष्टृत्वेऽन्धपरम्परापत्तिरित्यर्थः । सामग्र्येणात्मतत्त्वमज्ञात्वा चेदुपदिशेत्, कस्मिंश्चिदंशे स्वभ्रमेण शिष्यमपि भ्रान्तीकुर्यात्, सोऽप्यन्यं सोऽप्यन्यमित्येवमन्धपरम्परेति ॥ ८१ ॥

[ भा० सा० ] विपक्षे बाधकमाह—इतरथेति । मन्दविवेकस्याकृतसाक्षात्कारस्याप्युपदेष्टृत्वेऽन्धपरम्परा । सामग्र्येणाज्ञात्वा चेदुपदिशेत् कस्मिंश्चिद् देशे स्वभ्रमेण शिष्यमपि भ्रान्तं कुर्यात् । सोऽप्यन्यमित्येवमन्धपरम्परेति भावः ॥ ८१ ॥

## चक्रभ्रमणवद् धृतशरीरः ॥ ८२ ॥

[ वृ० ] उपदेशे हि ज्ञानान्मोक्षः, उपदेशानन्तरं मुच्येत, किं विलम्बेनेत्यत्राह—चक्रभ्रमण० । यथा दण्डापगमे संस्कारवशाच्चक्रं भ्रमति, तथा विवेकिनामपि देहधारणकर्मणोऽक्षीणत्वान्न तत्क्षणान्मुक्तिः, किन्तूपभोगादिना कर्मक्षयादिति । तथा च श्रुतिः—

दीक्षयैव नरो मुच्येत्तिष्ठेन्मुक्तोऽपि विग्रहे ।
कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः ॥ ८२ ॥

[ वृ० सा० ] ज्ञानिनः शरीरं कथं तिष्ठतीत्याह—चक्रेति । यथा दण्डेन भ्राम्यमाणं चक्रं निवृत्तेऽपि दण्डे भ्राम्यत्येव, एवं विवेकिनः प्रकृतेर्निवृत्तावपि पूर्वव्यापारेण जातं शरीरं तिष्ठतीत्यर्थः ॥ ८२ ॥

[ भा० ] ननु ज्ञानेन कर्मक्षये सति कथं जीवनं स्यात्, तत्राह—चक्रभ्रमण० । कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् स्वयमेव कियत्कालं चक्रं भ्रमति । एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं शरीरं धृत्वा जीवन्मुक्तस्तिष्ठतीत्यर्थः ॥ ८२ ॥

[ मा० सा० ] ननु ज्ञानेन कर्मक्षये सति कथं जीवनमत आह—चक्रेति । कुलालकर्मनिवृत्तावपि पूर्ववेगाद्यथा स्वयमेव चक्रं भ्रमति, एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं शरीरं धृत्वा जीवन्मुक्तस्तिष्ठतीत्यर्थः ॥ ८२ ॥

संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥

[ वृ० ] तस्मादस्ति जीवन्मुक्त इत्याह—संस्कार० । जीवन्मुक्तिसिद्धिः ॥ ८३ ॥

[ वृ० सा० ] ननु दण्डक्रियाया अभावेऽपि तत्संस्काराद् भ्रमणमस्तु, रागाद्यभावे उपभोगस्तु कथं स्यादत आह—संस्कारेति । संस्कारो रागादीनां स एव, लेशो रागाद्याभास इत्यर्थः । ततस्तत्सिद्धिरुपभोगसिद्धिः । अत एव विवेकिनां रागादिदर्शनेऽपि न तद्रागादि, किन्तु रागाद्याभास एवेति भावः ॥ ८३ ॥

[ भा० ] ननु ज्ञानहेतुसम्प्रज्ञातयोगेन भोगादिवासनाक्षये कथं शरीरधारणम् ? न च योगस्य संस्काराभिभावकत्वे किं मानमिति वाच्यम्; "व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणामः" ( ३।९ ) इति योगसूत्रतस्तत्सिद्धेः । चिरकालीनस्य विषयान्तरावेशस्य विषयान्तरसंस्काराभिभावकतया लोकेऽप्यनुभवाच्चेति; तत्राह—संस्कार० ।

शरीरधारणहेतवो ये विषयसंस्कारास्तेषामल्पावशेषात् तस्य शरीरधारणस्य सिद्धिरित्यर्थः । अत्र चाविद्यासंस्कारलेशस्य सत्ता नापेक्ष्यते, अविद्याया जन्मादिरूपकर्मविपाकारम्भमात्रे हेतुत्वात्, योगभाष्ये ( सू० २।१३ ) व्यासैस्तथा व्याख्यातत्वात्, "वीतरागजन्मादर्शनात्" ( न्या० सू० ३।१।२५ ) इति न्यायाच्च; न तु प्रारब्धफलककर्मभोगेऽपीति । यत्र च नियमेनाऽविद्याऽपेक्ष्यते स प्रयासविशेषरूपो भोगो मूढेष्वेवास्ति, जीवन्मुक्तानां तु भोगाभास एवेति प्रागुक्तम् । यत्तु कश्चिद्—अविद्यासंस्कारलेशोऽपि जीवन्मुक्तस्य तिष्ठतीत्याह, तन्न; धर्माधर्मोत्पत्तिप्रसङ्गात्, अन्धपरम्पराप्रसङ्गाद्, अविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभावाच्च । एतच्च ब्रह्ममीमांसाभाष्ये ( ४।१ ) प्रपञ्चितमिति ॥ ८३ ॥

[ भा० सा० ] ननु संप्रज्ञातयोगेन सर्ववासनाभिभवे कथं शरीरधारणम् ? चिरकालीनविषयान्तरावेशस्य विषयान्तरसंस्काराभिभावकत्वस्य लोके दृष्टत्वादत आह—संस्कारेति। अल्पावशिष्टाभिभूतसंस्कारेभ्य एव शरीरधारणसिद्धिरित्यर्थः। अस्याविद्यासंस्कारस्यापि लेशतः स्थित्या अभिभूतत्वेन च न जन्मधर्माधर्मोत्पत्तिः।

केचित्तु-'सा लेशतोऽपि नास्ति, जन्मादावेव तदुपयोगात्, प्रारब्धकर्मफलभोगे तदनपेक्षणाच्च। यादृशे सा नियमेनापेक्षते स प्रवाहरूपो न जीवन्मुक्तेषु, तेषां तु भोगाभास एव' ( यो० सू० भा० २।१३ ) इत्याहुः॥ ८३॥

**विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यो नेतरान्नेतरात्॥ ८४॥**

[ वृ० ] कदा परममुक्तिरित्यत्राह—विवेका०। निःशेषेण त्रिविधदुःखस्यात्यन्तनिवृत्तौ कृतकृत्यः, परमुक्तिप्राप्तेः। नेतरात् कर्मण इति। नेतरादिति वीप्साऽध्यायपरिसमाप्तौ॥ ८४॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ वैराग्याध्यायस्तृतीयः॥

[ वृ० सा० ] विदेहमुक्तिमाह—विवेकादिति। उपभोगेन प्रारब्धसमाप्तौ प्रोक्तत्रिविधदुःखस्यात्यन्तनिवृत्तौ कृतकृत्यो मुक्तो भवति। कर्मणो मुक्तिहेतुत्वाभावमुपसंहरति—इतरस्मात् कर्मणः। इतरादिति तु 'संज्ञापूर्वको विधिरनित्यः' इति वा छान्दसत्वं वा स्वीकृत्य संगमनीयम्। वीप्साध्यायसमाप्त्यर्थम्॥ ८४॥

इति वेदान्तिमहादेवकृतसांख्यवृत्तिसारे तृतीयोऽध्यायः॥ ३॥

[ भा० ] शास्त्रवाक्यार्थमुपसंहरति—विवेका०। उक्ताया विवेकसिद्धितः परवैराग्यद्वारा सर्ववृत्तिनिरोधेन यदा निःशेषतो बाधिताबाधितसाधारण्येनाखिलदुःखं निवर्त्तते तदैव पुरुषः कृतकृत्यो भवति, नेतराज्जीवन्मुक्तत्वादेरपीत्यर्थः। नेतरादिति वीप्साऽध्यायसमाप्तौ॥ ८४॥

अत्यन्तलयपर्यन्तः कार्योऽव्यक्तस्य नात्मनः।
प्रोक्त एवं विवेकोऽत्र परवैराग्यसाधनम्॥

इति विज्ञानभिक्षुनिर्मिते कापिलसांख्यप्रवचनस्य भाष्ये
वैराग्याध्यायस्तृतीयः॥

[ भा० सा० ] उपसंहरति—विवेकादिति। उक्तायाः विवेकसिद्धेः परवैराग्ये सति देहपातानन्तरं विशेषतः स्थूलसूक्ष्माखिलदुःखनिवृत्तौ पुरुषः कृतकृत्यो भवति, नेतराज्जीवन्मुक्त्यादेरपीत्यर्थः। द्विरुक्तिस्त्वध्यायसमाप्तौ॥ ८४॥

इति वैराग्याध्यायस्तृतीयः॥ ३॥

———

# चतुर्थोऽध्यायः

राजपुत्रवत्तत्त्वोपदेशात् ।। १ ।।

[ वृ० ] वैराग्यानन्तरं शिष्यप्रबोधायाख्यायिकार्थं चतुर्थाध्यायारम्भः—राजपुत्र०। कश्चिद्राजपुत्रो गण्डक्षणजन्मा निःसारितः शबराधिपेन गृहीतः पुत्रत्वेन तदाचारमात्रं जानाति । अथापुत्रस्य राज्ञो मरणेऽमात्यैरानीय प्रबोधितो 'न त्वं शबरः, राजपुत्रोऽसि' इत्युक्तो झटित्येव पूर्वसंस्कारवशाद्राजपुत्राचारं गृहीतवान् । एवं मन्दानामपि प्रबोधायोपदेशो देय इति ॥ १ ॥

[ वृ० सा० ] वैराग्यानन्तरं शिष्यप्रबोधायाख्यायिकाप्रायश्चतुर्थाध्यायः—राजपुत्रवदिति । राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते यथैवमात्मनोऽज्ञस्येत्युक्तरीत्या गुरुणा तत्त्वोपदेशादवश्यं कृतकृत्यता भवति । उक्तं च गारुडे—

ग्रहाविष्टो द्विजः कश्चिच्छूद्रोऽहमिति मन्यते ।
ग्रहनाशात् पुनः स्वीयं ब्राह्मण्यं मन्यते यथा ।।
मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते ।
मायानाशात् पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते ॥ इति ।। १ ।।

[ भा० ] शास्त्रसिद्धाख्यायिकाजातमुखेनेदानीं विवेकज्ञानसाधनानि प्रदर्शनीयानीत्येतदर्थं चतुर्थाध्याय आरभ्यते—राजपुत्र० । पूर्वपादशेषसूत्रस्थविवेकोऽनुवर्तते । राजपुत्रस्येव तत्त्वोपदेशाद्विवेको जायत इत्यर्थः । अत्रेयमाख्यायिका—कश्चिद्राजपुत्रो गण्डर्क्षजन्मना पुरान्निःसारितः शबरेण केनचित् पोषितोऽहं शबर इत्यभिमन्यमान आस्ते; तं जीवन्तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति—न त्वं शबरो राजपुत्रोऽसीति । स यथा झटित्येव चण्डालाभिमानं त्यक्त्वा तात्त्विकं राजभावमेवालम्बते राजाहमस्मीति । एवमेवादिपुरुषात् परिपूर्णचिन्मात्रेणाभिव्यक्तादुत्पन्नस्त्वं तस्यांश इति कारुणिकोपदेशात् प्रकृत्यभिमानं त्यक्त्वा ब्रह्मपुत्रत्वादहमपि ब्रह्मैव न तु तद्विलक्षणः संसारीत्येवं स्वस्वरूपमेवालम्बत इत्यर्थः । तथा गारुडे—

यथैकहेममणिना सर्वं हेममयं जगत् ।
तथैव ज्ञातमीशेन ज्ञातेनाप्यखिलं भवेत् ।।
ग्रहाविष्टो द्विजः कश्चिच्छूद्रोऽहमिति मन्यते ।
ग्रहनाशात् पुनः स्वीयं ब्राह्मण्यं मन्यते यथा ।।
मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते ।
मायानाशात् पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते ।। इति ।। १ ।।

[ भा० सा० ] इदानीं विवेकज्ञानसाधनान्याख्यायिकामुखेनाह—राजपुत्रवदिति। विवेकोऽनुवर्तते। राजपुत्रस्येव तत्त्वोपदेशाद्विवेको जायत इत्यर्थः। यथा कश्चिद् राजपुत्रो वने शबरैः पोषितः शबरोऽहमिति मन्यमानः केनचिदमात्येन प्रतिबोधितः शबरभावमपहाय तात्त्विकं राजभावमवलम्बते, एवं विष्णुस्त्वमसीत्यादिश्रुत्युपदेशाज्जीवः प्रकृत्यभिमानं त्यक्त्वा नित्यशुद्धब्रह्मभावमवलम्बते। तदुक्तम्—

मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते।
मायानाशात् पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते ॥ इति ॥ १ ॥

## पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥

[ वृ० ] आख्यायिकान्तरमाह—पिशाचवद०। कश्चिदाचार्यो 'विजने उपदेशं गृहाण' इति शिष्यमादायाटवीं प्रविश्योपदेशं दत्तवान्। गुल्मान्तरितेन पिशाचेन तत् श्रुतम्। तेन तस्यापि मुक्तिरभूत्। प्रसङ्गेनाप्यात्मज्ञानान्मुक्तिरिति वाक्यार्थः ॥ २ ॥

[ वृ० सा० ] प्रसङ्गेनाप्यात्मज्ञानान्मुक्तिरित्याह—पिशाचवदिति। केनचिद् गुरुणा विजने शिष्य उपदिश्यमानेऽन्तर्हितेन केनचित् पिशाचेन तदुपदेशः श्रुतः, मुक्तश्च सोऽभूदित्याख्यायते। एवमन्योऽप्यन्यार्थोपदेशान्मुच्यते ॥ २ ॥

[ भा० ] स्त्रीशूद्रादयोऽपि ब्राह्मणेन ब्राह्मणस्योपदेशं श्रुत्वा कृतार्थाः स्युरित्येतदर्थमाख्यायिकान्तरं दर्शयति—पिशाच०। अर्जुनार्थं श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्य पिशाचस्य विवेकज्ञानं जातमेवमन्येषामपि भवेदित्यर्थः ॥ २ ॥

[ भा० सा० ] ब्राह्मणस्य ब्राह्मणेनोपदेशे स्त्रीशूद्रादयोऽपि कृतार्था भवन्तीत्याह—पिशाचवदिति। अर्जुनाय श्रीकृष्णेन तत्त्वे उपदिश्यमाने यथा समीपस्थपिशाचस्य ज्ञानं जातं तद्वदित्यर्थः ॥ २ ॥

## आवृत्तिरसकृदुपदेशात् ॥ ३ ॥

[ वृ० ] अत्र विशेषमाह—आवृत्ति०। तीव्रवैराग्याणां श्रुतिमात्रान्मोक्षो भवतु। मन्दानां तु निरन्तरोपदेश्यत्वादावृत्तिः करणीया ॥ ३ ॥

[ वृ० सा० ] अत्रैव कञ्चन विशेषमाह—आवृत्तिरिति। तीव्रवैराग्यैः सकृदुपदेशश्रवणादेव मोक्षो लभ्यते मन्दैस्त्वसकृदुपदेशादावृत्तिर्बोध्या ॥ ३ ॥

[ भा० ] यदि च सकृदुपदेशाज्ज्ञानं न जायते तदोपदेशावृत्तिरपि कर्त्तव्येतीतिहासान्तरेणाह—आवृत्ति०। उपदेशावृत्तिरपि कर्तव्या छान्दोग्यादौ श्वेतकेत्वादिकं प्रत्यारुणिप्रभृतीनामसकृदुपदेशेतिहासादित्यर्थः ॥ ३ ॥

[ भा० सा० ] सकृदुपदेशाज्ज्ञानाभावे आवृत्तिरपि कार्येत्याह—आवृत्तिरिति। उपदेशावृत्तिरपि कार्या, छान्दोग्यादौ श्वेतकेत्वादिकं प्रत्यारुणिप्रभृतीनामसकृदुपदेशेतिहासादित्यर्थः ॥ ३ ॥

## पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥

[ वृ० ] आख्यायिकान्तरमाह—पितापुत्र० । कश्चिद् ब्राह्मणो दारिद्र्याद् गुर्विणीं भार्यां तत्पितृगृहे निक्षिप्य प्रतिग्रहार्थं देशान्तरं गतो बहुना कालेन गृहमागतः, पुत्रं दृष्ट्वा न ज्ञातवान्, तन्माता भर्तारं पुत्रं च विज्ञापितवती । तत उभयोरपि ज्ञानमभूत् । गुरुं विना सुहृदुपदेशादपि तत्त्वज्ञानं भवतीत्यर्थः ॥ ४ ॥

[ वृ० सा० ] वृत्तिरादरणीया, न चोपदेशार्थं गुरुरावश्यक इत्याह—पितेति । उभयोः गुरुशिष्ययोः दृष्टत्वाद् दृष्टार्थत्वात् । नात्र ज्ञाने गुरुनियमः, किन्त्वभ्रान्तानामेवोपदेशः कार्यः, अधिकारिणा फलमाप्तव्यमिति । तत्र दृष्टान्तः—पितापुत्रवदिति । कश्चिद्दरिद्रो ब्राह्मण आत्मनो भार्यां गुर्विणीं पितृगृहे स्थापयित्वा देशान्तरं गतो बहुकालेन समागतः स्वपुत्रं दृष्ट्वापि मम पुत्रोऽयमिति न ज्ञातवान् । पुत्रोऽपि पितरं दृष्ट्वा मत्पितायमिति न ज्ञातवान् । ततो मात्रा भर्त्ता पुत्रश्चोपदिष्टः, अयं ते पुत्रोऽयं ते पितेति क्रमेण, ततस्तौ सुखिनावभूतामित्याख्यायिका ॥४॥

[ भा० ] वैराग्यार्थं निदर्शनपूर्वकमात्मसङ्घातस्य भङ्गुरत्वादिकं प्रतिपादयति—पितापुत्र० । स्वस्य पितापुत्रयोरिवात्मनोऽपि मरणोत्पत्त्योर्दृष्टत्वादनुमितत्वाद्वैराग्येण विवेको भवतीत्यर्थः । तदुक्तम्—

"आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ" । इति ॥ ४ ॥

[ भा० सा० ] वैराग्यार्थं शरीरादेर्नश्वरत्वमाह—पितेति । स्वस्य पितापुत्रयोरिवात्मनोऽपि मरणोत्पत्त्योर्दृष्टत्वादनुमितत्वाद् वैराग्येण विवेक इत्यर्थः ॥ ४ ॥

## श्येनवत् सुखदुःखी त्यागवियोगाभ्याम् ॥ ५ ॥

[ वृ० ] आख्यायिकान्तरमाह—श्येनवत्० । केनापि पुंसा श्येनशावकः प्राप्तः, खण्डगुडादिनाऽऽहारेण समानेन च पुष्टः, कालेन यौवनमवाप । 'कथमहमेनं दुःखिनं करोमि' इति पुंसा वने त्यक्तः । श्येनश्च बन्धत्यागात्सुखी पुरुषवियोगाद् दुःखीति । दुःखशबलत्वात्सुखस्य द्वयमपि हेयमिति ॥ ५ ॥

[ वृ० सा० ] सांसारिकसुखं दुःखमिश्रितत्वाद्धेयमित्याह—श्येनवदिति । सर्वोऽपि जनः सुखवान् दुःखवांश्च, दुःखमिश्रितसुखवानित्यर्थः । त्यागवियोगाभ्यां श्येनवत् । केनचिन्मृगयां गत्वा सम्प्राप्तः श्येनशावकः पोषितश्चान्नपानाभ्यां काले यौवनमाप्तवान् । यथैनं बन्धेन दुःखिनं कुतोऽहङ्करोमीति चिन्तयता तेन श्येनो वने त्यक्तः । स यथा बन्धनत्यागात्सुखी पोषकपुरुषवियोगाच्च दुःखी, तथा सर्वोऽपि वैषयिकः सुखी दुःखवानेवेत्यर्थः ॥ ५ ॥

[ भा० ] इतः परमुत्पन्नज्ञानस्य विरक्तस्य च ज्ञाननिष्पत्त्यङ्गान्याख्यायिकोक्तदृष्टान्तैर्दर्शयति—श्येनवत्० । परिग्रहो न कर्तव्यः, यतो द्रव्याणां त्यागेन लोकः सुखी वियोगेन च दुःखी भवति, श्येनवदित्यर्थः । श्येनो हि सामिषः केनाप्यपहृत्यामिषाद्वियोज्य दुःखी क्रियते, स्वयं चेत् त्यजति तदा दुःखाद्विमुच्यते । तदुक्तम्—

सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ॥ ( भा० ११।९।२ )

इति । तथा मनुनाप्युक्तम्—

नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते ॥ (मनु० ६।७८) इति ॥५॥

[ भा० सा० ] इदानीं ज्ञाननिष्पत्त्यङ्गान्याह—श्येनवदिति । परिग्रहो न कर्तव्यः । यतो द्रव्याणां स्वतस्त्यागेन लोकः सुखी वियोगेन च दुःखी भवति । यथा श्येनः सामिषः केनाप्युपहत्यामिषाद्वियोजितो दुःखी भवति, स्वतश्चेत्त्यजति न तदा दुःखीत्यर्थः ॥ ५ ॥

## अहिनिर्ल्वयनीवत् ॥ ६ ॥

[ वृ० ] आख्यायिकान्तरमाह—अहि० । निर्ल्वयनी निर्मोकः । कश्चिदहिर्विवरद्वारे निर्मोकं त्यक्त्वा ममेदमिति धूलिपङ्काक्तं दृष्ट्वा शोचति, स्नेहाच्च न संत्यक्तवान्। निर्मोकानुसारात्केनाप्याहितुण्डिकेन गृहीतः । ममत्वस्नेहादयो न कर्तव्या इत्यर्थः ॥ ६ ॥

[ वृ० सा० ] ममत्वस्नेहादिरनर्थावह इत्याह—अहीति । अहिनिर्ल्वयनी सर्पनिर्मोकः तस्यामिव । यथा सर्पः निर्मोकं विवरद्वारेण त्यक्त्वापि स्नेहात्तत्र ममत्वं न त्यजति, किन्तु तं धूलीपङ्काक्तं दृष्ट्वा शोचति, अथ च तदनुसारादेव केनचिदाहितुण्डिकेन गृहीतो बह्वनर्थभाजनं भवति, तथा विषयेषु लिह्यन् जन्तुरित्यर्थः ॥ ६ ॥

[ भा० ] अहि० । यथाऽहिर्जीर्णां त्वचं परित्यजत्यनायासेन हेयबुद्ध्या, तथैव मुमुक्षुः प्रकृतिं बहुकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेदित्यर्थः । तदुक्तम्—"जीर्णां त्वचमिवोरगः" ( कू० पु० २।३६।४० ) इति ॥ ६ ॥

[ भा० सा० ] किञ्च–अहीति । यथा सर्पो जीर्णां त्वचं हेयबुद्ध्या परित्यजति, पुनर्नोपादत्ते च ताम्, तथा मुमुक्षुर्बहुकालोपभुक्तां जीर्णां प्रकृतिं हेयबुद्ध्या त्यजेत् त्यक्तां पुनर्न स्वीकुर्यादित्यर्थः ॥ ६ ॥

## छिन्नहस्तवद्वा ॥ ७ ॥

[ वृ० ] आख्यायिकान्तरमाह—छिन्न० । कश्चिन्मुनिर्भ्रातुराश्रमं प्रविश्य फलादिकमाजहार । भ्रात्राप्युक्तः स्तेयी त्वमिति । तेनोक्तं प्रायश्चित्तं वद । भ्रात्राप्युक्तं हस्तच्छेदादन्यत्प्रायश्चित्तं नास्तीति। तेन च राज्ञे निवेद्य स्वहस्तौ छेदितौ । तस्मादकार्यं न कर्तव्यम्, प्रमादकृते च तन्निष्कृतिरवश्यं कर्तव्येति ॥ ७ ॥

[ वृ० सा० ] अकार्यं सर्वथा न कार्यं प्रमादकृते च तस्मिन्नवश्यं निष्कृतिः कार्येत्याह—छिन्नेति । एवमाख्यायते—

जहार फलपुष्पादि प्रविश्य भ्रातुराश्रमम् ।
मुनिः कश्चिसतो भ्रात्रा स्तेयीत्युक्त उवाच तम् ॥

प्रायश्चित्तं वदाथाह प्रायश्चित्तं करच्छिदाम् ।
निवेद्य राज्ञे तेनाशु स्वकरौ छेदिताविति ॥ ७ ॥

[ भा० ] त्यक्तं च प्रकृत्यादिकं पुनर्न स्वीकुर्यादित्यत्राह—छिन्नहस्त० । यथा छिन्नं हस्तं पुनः कोऽपि नादत्ते, तथैवैतत् त्यक्तं पुनर्नाभिमन्येतेत्यर्थः । वाशब्दोऽप्यर्थे ॥ ७ ॥

[ भा० सा० ] पुनरुपादाने दृष्टान्तमाह—छिन्नेति । छिन्नं हस्तं यथा कोऽपि पुनर्नादत्ते तथैव त्यक्तं नाभिमन्येतेत्यर्थः । वाशब्दोऽप्यर्थे ॥ ७ ॥

## असाधनानुचिन्तनं बन्धाय भरतवत् ॥ ८ ॥

[ वृ० ] आख्यायिकान्तरमाह—असाधना० । भरतो नाम नृपः प्रत्यासन्नमोक्षोऽपि तत्क्षणप्रसूतां हरिणीं दृष्ट्वा हरिणशावकं पुपोष । तं विहाय नान्यमना बभूव । मरणसमये तद्गतमनाः प्राणांस्तत्याज । तत्सङ्गान्मुक्तिं नावाप । अनिष्टचिन्तनं न कार्यमित्यर्थः ॥ ८ ॥

[ वृ० सा० ] असाधनेति । भरतः किल हरिणशावकं पुपोष, तं विहाय नान्यमना बभूव । स च मरणसमयेऽपि तन्मना एव ममार । तेन मुक्तिं नाप, प्रत्युत जन्म लब्धवानिति पुराणेषु स्पष्टम् ॥ ८ ॥

[ भा० ] असाधना० । विवेकस्य यदन्तरङ्गसाधनं न भवति स चेद्धर्मोऽपि स्यात् तथापि तदनुचिन्तनं तदनुष्ठाने चित्तस्य तात्पर्यं न कर्तव्यम् । यतस्तद्बन्धाय भवति, विवेकविस्मारकतया भरतवत् । यथा भरतस्य राजर्षेर्धर्म्यमपि दीनानाथहरिणशावकस्य पोषणमित्यर्थः । तथा च जडभरतं प्रकृत्य विष्णुपुराणे—

चपलं चपले तस्मिन् दूरगं दूरगामिनि ( २।१३।३० ) ।
आसीच्चेतः समासक्तं तस्मिन् हरिणपोतके ( २।१३।२२ ) ॥ ८ ॥

[ भा० सा० ] असाधनेति । यथा भरतस्य राज्ञो धर्म्यमपि हरिणशावपोषणं बन्धायासीदेवं विवेकसाधनधर्मस्याप्यनुचिन्तनमनुष्ठानं बन्धाय विवेकविस्मारकत्वादिति भावः ॥ ८ ॥

## बहुभिर्योगविरोधो रागादिभिः कुमारीशङ्खवत् ॥ ९ ॥

[ वृ० ] बहुभिर्मेलनं न कुर्यादित्याह—बहुभिः० । बहुभिः कलहोऽवश्यम्, यथा कुमारीशङ्खानामन्योन्यं झणत्कारः परस्परसंघर्षात् ॥ ९ ॥

[ वृ० सा० ] बहुभिर्मेलनं न कुर्यादित्याह—बहुभिरिति । यथा कुमारीशङ्खवलयानां परस्परसङ्घर्षात् रणत्कारस्तथा बहूनां मेलने रागादिभिः परस्परं कलहोऽवश्यं भवेदिति बहुमेलनं न कुर्यात् ॥ ९ ॥

[ भा० ] बहुभिर्योगे० । बहुभिः सङ्गो न कार्यः । बहुभिः सङ्गे हि रागाद्यभिव्यक्त्या कलहो भवति योगभ्रंशकः । यथा कुमारीहस्तशङ्खानामन्योन्यसङ्गेन झणत्कारो भवतीत्यर्थः ॥ ९ ॥

[ भा० सा० ] बहुभिरिति । बहुभिः सङ्गो रागाद्यभिव्यक्त्या योगभ्रंशककलहाद्युत्पत्तिः । स न कार्यः । यथा कुमारीहस्तशङ्खानामन्योन्यसङ्गेन झणत्कारः ॥ ९ ॥

## द्वाभ्यामपि तथैव ॥ १० ॥

[ वृ० ] द्वाभ्यामपि न कुर्यादित्याह—द्वाभ्या० । संकथनादिदोषात् ॥ १० ॥

[ वृ० सा० ] द्वाभ्यामिति । संकथनादिदोषस्य तत्रापि सम्भवादिति भावः ॥ १० ॥

[ भा० ] द्वाभ्यामपि० । द्वाभ्यां योगेऽपि तथैव विरोधो भवत्यत एकाकिनैव स्थातव्यमित्यर्थः । तदुक्तम्—

वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ॥ ( भा० ११।९।१० ) ॥१०॥

[ भा० सा० ] द्वाभ्यामिति । कलह इत्यर्थः, वार्ता वा । तस्मादेकतया स्थेयमिति भावः ॥ १० ॥

## निराशः सुखी पिङ्गलावत् ॥ ११ ॥

[ वृ० ] आख्यायिकान्तरमाह—निराशः० । पिङ्गला नाम वेश्या रत्यर्थं भुजङ्गागमनप्रतीक्षणादुन्निद्रा दुःखमनुभूतवती । एकदा त्वत्यन्तदुःखनिर्विण्णा पुनर्नैवं करिष्यामीति निर्विण्णा बभूव । निराशा सुखं स्वपिति ॥ ११ ॥

[ वृ० सा० ] निराश इति ।

आशा हि परमं दुःखं निराशा परमं सुखम् ।
इति सन्त्यज्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ (ब्र०वै०पु०४।९७।५६)इति॥११॥

[ भा० ] आशा वैवश्यविरसे चित्ते सन्तोषवर्जिते ।
म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति । ( यो० वा० २।१५।९ )

इति वचनान्निराशता योगिनाऽनुष्ठेयेत्याह—निराशः० ।

आशां त्यक्त्वा पुरुषः सन्तोषाख्यसुखवान् भूयात्, पिङ्गलावत् । यथा पिङ्गला नाम वेश्या कान्तार्थिनी कान्तमलब्ध्वा निर्विण्णा सती विहायाशां सुखिनी बभूव तद्वदित्यर्थः । तदुक्तम्—

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ ( ब्र० वै० पु० ४।९७।५६ )

नन्वाशानिवृत्त्या दुःखनिवृत्तिः स्यात्, सुखं तु कुतः? साधनाभावादिति । उच्यते; चित्तस्य सत्त्वप्राधान्येन स्वाभाविकं यत् सुखमाशया पिहितं तिष्ठति तदेवाशाविगमे

लब्धवृत्तिकं भवति, तेजःप्रतिबद्धजलशैत्यवदिति, न तत्र साधनापेक्षा। एतदेव चात्मसुखमित्युच्यत इति ॥ ११ ॥

[ भा० सा० ] आशावैवश्यविरसे चित्ते सन्तोषवर्जिते।
म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति ॥ (यो० बा० २।१५।९)

इत्युक्तेर्निराशतावश्यकीत्याह—निराश इति। यथा पिङ्गला वेश्या कान्तेच्छावती तदलाभान्निर्विण्णतां विहाय सुखिनी, एवं निराश इत्यर्थः।

नन्वाशानिवृत्तावपि साधनाभावात्कुतः सुखमिति चेत् ? न; चित्तस्य सत्त्वप्रधानतया स्वाभाविकं यत्सुखमाशापिहितं तदेव तद्विगमे लब्धवृत्तिकमित्यदोषात्, तेजःप्रतिबद्धजलशैत्यवत्। एतदेवात्मसुखमित्युच्यते ॥ ११ ॥

## अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥ १२ ॥

[ वृ० ] गृहारम्भो दुःखायेत्याह—अनारम्भे०। व्यक्तम् ॥ १२ ॥

[ वृ० सा० ] अनारम्भ इति।

गृहारम्भो मनुष्याणां न सुखाय कदाचन।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ (म० भा० शा० १७८।१०) इति ॥१२॥

[ भा० ] योगप्रतिबन्धकत्वादारम्भोऽपि भोगार्थं न कर्तव्योऽन्यथैव तदुपपत्तेरित्याह—अनारम्भे०। सुखी भवेदिति शेषः। शेषं सुगमम्; तदुक्तम्—

गृहारम्भो हि दुःखाय न सुखाय कथञ्चन।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १२ ॥ ( म० भा० शा० १७८।१० )

[ भा० सा० ] भोगार्थमारम्भोऽपि न कार्यः, योगप्रतिबन्धकत्वादित्याह—अनारम्भ इति। भवेदिति शेषः। इतरत् स्पष्टम् ॥ १२ ॥

## बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥ १३ ॥

[ वृ० ] शास्त्रे व्याख्यान-परोपालम्भादिकमसारमस्ति, तत्परित्यजनीयमित्याह—बहुशास्त्र०। यथा भ्रमरः पुष्पं विहाय मधु समादत्ते, तद्वन्मोक्षार्थिनाऽविद्या त्याज्येति ॥ १३ ॥

[ वृ० सा० ] बहुशास्त्रेति। "सर्वतः सारमादद्याद् द्रव्येभ्य इव काञ्चनम्" इति न्यायेन शास्त्रेभ्योऽपि सारमेव ग्राह्यम्, न तु परविजयायामभिनिवेष्टव्यम्। किञ्च, गुरुनिष्ठं शमाद्येवादरणीयं न तु कादाचित्कं रागद्वेषादीत्यर्थः। अत एवोक्तं मार्कण्डेये—

इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत्।
स तु कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात् ॥ ( मा० पु० ४१।१९ ) इति ॥ १३ ॥

[ भा० ] शास्त्रेभ्यो गुरुभ्यश्च सार एव ग्राह्योऽन्यथाभ्युपगमवादादिभिरंशतोऽसारभागेऽन्योन्यविरोधेनार्थबाहुल्येन चैकाग्रताया असम्भवादित्याह—बहुशास्त्र०। कर्तव्यमिति शेषः। अन्यत् सुगमम्। तदुक्तम्—

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः।
सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः॥ ( भा० ११।८।१० )

इति। मार्कण्डेयपुराणे च—

सारभूतमुपासीत ज्ञानं यत् स्वार्थसाधकम्।
ज्ञानानां बहुता यैषा योगविघ्नकरी हि सा॥
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत्।
असौ कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात्॥

( मा० पु० ४१।१८-१९ ) इति॥ १३॥

[ भा० सा० ] बह्विति। अन्यथाऽन्योन्यविरोधेनार्थबाहुल्येन चैकाग्रताभङ्ग इति भावः॥ १३॥

## इषुकारवन्नैकचित्तस्य समाधिहानिः॥ १४॥

[ वृ० ] कस्य समाधिर्भवतीत्यत्राह—इषुकार०। यथेषुकार इषौ गतमनाः समीपे गच्छन्तं राजानं न बुद्धवान्, तथैवैकाग्रमनसो न समाधिहानिरिति॥ १४॥

[ वृ० सा० ] एकाग्रताऽऽदरणीयेत्याह—इषुकारवदिति। इषुकारो हीषुगतमना राजानं ससैन्यं स्वसमीपमार्गेण गच्छन्तं न जानाति, तद्वदेकचित्तस्य न समाधिहानिः। अन्यस्य तु साऽवश्यं भवतीति चित्तैकाग्रता तत्त्वज्ञानायादरणीया॥ १४॥

[ भा० ] साधनान्तरं यथा तथा भवत्वेकाग्रतयैव समाधिपालनद्वारा विवेकसाक्षात्कारो निष्पादनीय इत्याह—इषुकार०। यथा शरनिर्माणायैकचित्तस्येषुकारस्य पार्श्वे राज्ञो गमनेनापि न वृत्त्यन्तरनिरोधो हीयते, एवमेकाग्रचित्तस्य सर्वथापि न समाधिहानिर्वृत्त्यन्तरनिरोधक्षतिर्भवति। ततश्च विषयान्तरसञ्चाराभावे ध्येयसाक्षात्कारोऽप्यवश्यं भवतीत्येकाग्रतां कुर्यादित्यर्थः। तदुक्तम्—

तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे॥

( भा० ११।९।१३ ) इति॥ १४॥

[ भा० सा० ] एकाग्रतैव समाधिसिद्धिद्वारा विवेकस्य मुख्यसाधनमित्याह—इषुकारवदिति। यथा शरनिर्माणे इषुकारस्यैकचित्तता पार्श्वे राज्ञो गमनेनापि न हीयते, एवमेकाग्रचित्तस्य न समाधिहानिरित्यर्थः। ततो विषयान्तरसञ्चारबाधे ध्येयसाक्षात्कारोऽप्यवश्यं भवतीत्यर्थः॥ १४॥

## व्रतनियमलङ्घनादानर्थक्यं लोकवत् ॥ १५ ॥

[ वृ० ] सत्त्वशुद्ध्यर्थं न व्रतादिभङ्गः कर्तव्य इत्याह—व्रत०। यथा लोके बहुशः कृतसमयलङ्घनं सर्वे परित्यजन्ति, तथा व्रतादिलङ्घनाद्वेदार्थबाह्यो भवतीति ॥

[ वृ० सा० ] कृतेति। कृतानामङ्गीकृतानां नियमानां शौचादीनां लङ्घनादननुष्ठानादानर्थक्यं नैष्फल्यम्। तत्त्वज्ञानसामग्र्या इति विशेषः। शौचाद्यनुष्ठानं तत्त्वज्ञानसाधनेन तत्त्वज्ञाने जननीये सहकारीति भावः। लोकवत्, लोके यथा कृतानां नियमानां समयानां लङ्घने राज्यादिसुखकारणमपि निष्फलं भवति, समयलङ्घने प्रजोद्वेगेन न राज्यमपि सुखदं भवति, तद्वत् ॥ १५ ॥

[ भा० ] सत्यां शक्तौ ज्ञानबलाच्चेच्छास्त्रकृतनियमो वृथा लङ्घ्यते तदा ज्ञानानिष्पत्त्याऽनर्थक्यं योगिनो भवतीत्याह—कृतनियम०। यः शास्त्रेषु कृतो योगिनां नियमस्तस्योल्लङ्घने ज्ञाननिष्पत्त्याख्योऽर्थो न भवति, लोकवत्। यथा लोके भैषज्यादौ लङ्घने तत्तत्सिद्धिर्न भवति तद्वदित्यर्थः। अशक्त्या ज्ञानरक्षार्थं वा लङ्घने तु न ज्ञानप्रतिबन्धः।

अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः।
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते ॥ ( म० भा० अश्व० २६।१६ )

इति मोक्षधर्मादिभ्यः, वसिष्ठादिस्मृतिभ्यश्च। अत एव विष्णुपुराणादौ वृथाकर्मत्यागिन एव पाषण्डतया निन्दिताः—"पुंसां जटाधरणमौण्ड्यवतां वृथैव" ( वि० पु० ३।१८।१०३ ) इत्यादिनेति ॥ १५ ॥

[ भा० सा० ] शक्तिमता ज्ञानित्वाभिमानेन शास्त्रकृतवर्णाश्रमाद्याचारनियमस्य लङ्घने ज्ञानानिष्पत्त्या तत्साधनानामानर्थक्यमित्याह—कृतेति। यथा लोके भैषज्यादौ विहितानां पथ्यादीनां लङ्घने तत्तत्सिद्धिर्न भवति, तद्वदेव योगिनां शास्त्रेषु कृतनियमस्य लङ्घनेऽपि ज्ञाननिष्पत्त्याख्योऽर्थो न भवति। अशक्त्या ज्ञानरक्षार्थं वा लङ्घने तु न प्रतिबन्धः ॥ १५ ॥

## तद्विस्मरणेऽपि भेकीवत् ॥ १६ ॥

[ वृ० ] तत्त्वज्ञानविस्मरणेन दुःखमवश्यं भवतीत्याह—तद्विस्मरणे०। कश्चिन्नृपो मृगयां गतो वने सुन्दरीं कन्यामपश्यत्। तामपृच्छत्का त्वमिति। सा प्राह राजदुहिताहम्। राजा प्राह—मां भजस्व। सा प्राह—बाढम्, किं तु समयं कुरु, त्वया जलं मम न दर्शनीयमिति। एवमस्त्वित्युक्त्वा तस्याः पाणिं जग्राह। एवं गते काले क्रीडयाऽऽयासिता कुत्र जलमिति राजानं पप्रच्छ। राजापि संभ्रमात्समयं विस्मृत्य जलमदर्शयत्, सा च भेकराजदुहिता जलस्पर्शाद्भेकी बभूव। राजापि जालादिना तामन्विष्याप्राप्य बहुदुःखमनुबभूव। तस्मात्तत्त्वाभ्यासविच्छेदो न कार्य इति ॥ १६ ॥

[ वृ० सा० ] तत्त्वज्ञानविस्मरणे दुःखं भवतीत्याह—तदिति। बुद्धिस्थत्वात्तत्त्वज्ञानं परामृश्यते। यथा कश्चिद्राजा मृगयां गतः सुन्दरीं कन्यामद्राक्षीत्, दृष्ट्वा च तस्यां साभिलाषो

भूत्वा पप्रच्छ कासि त्वमिति । सा च राजदुहिताहमित्याह । राजा मां भजस्वेत्याह । तया च जलं मे न दर्शयितव्यमिति समयपूर्वकं राजा पतित्वेनाङ्गीकृतः । एवं गते काले क्रीडयाऽऽयासिता सती कदाचिद्राजानमाह—कुत्र जलमिति । राजा तु समयविस्मरणाज्जलं प्रदर्शयामास । सा च जलस्पर्शाद् भेकी भूत्वा जलं प्रविष्टा । राजा तु तद्विरहाद् दुःखमवापेत्याख्यायते ॥ १६ ॥

[ भा॰ ] नियमविस्मरणेऽप्यानर्थक्यमाह—तद्विस्मरणे॰ । सुगमम् ।

भेक्याश्चेयमाख्यायिका—कश्चिद्राजा मृगयां गतो विपिने सुन्दरीं कन्यां ददर्श । सा च राज्ञा भार्याभावाय प्रार्थिता नियमं चक्रे—यदा मह्यं त्वया जलं प्रदर्श्यते तदा मया गन्तव्यमिति । एकदा तु क्रीडया परिश्रान्ता राजानं पप्रच्छ—कुत्र जलमिति । राजापि समयं विस्मृत्य जलमदर्शयत् । तत्र सा भेकराजदुहिता कामरूपिणी भेकी भूत्वा जलं विवेश; ततश्च राजा जालादिभिरन्विष्यापि न तामविन्ददिति ॥ १६ ॥

[ भा॰ सा॰ ] नियमविस्मरणेऽपि ज्ञानसाधनानामानर्थक्यमाह—तदिति । यथा कामरूपायाः मण्डूकराजदुहितुः केनचिद् राज्ञा प्रार्थितायाः यदा मह्यं त्वया जलं प्रदर्श्यते तदा मया गन्तव्यमिति समयेनाङ्गीकृतवत्यास्तं समयं विस्मृत्य कदाचिद्राज्ञा जले दर्शिते तस्यां जलं प्रविष्टायां राज्ञः जलाद्यन्वेषणप्रयासानर्थक्यमिति ॥ १६ ॥

**नोपदेशश्रवणेऽपि कृतकृत्यः परामर्शादृते विरोचनवत् ॥ १७ ॥**

[ वृ॰ ] आख्यायिकान्तरमाह—नोपदेश॰ । न श्रवणमात्रान्मुक्तिः, किं तु मननादेव । यथेन्द्रविरोचनौ तत्त्वज्ञानाय ब्रह्मलोकं गतौ ब्रह्मणा चोपदिष्टौ । विरोचनस्तत्त्वज्ञानश्रवणात्स्वगृहमागतो न मननादि कृतवान् । अतो नामुच्यत । इन्द्रस्तु ब्रह्माणमाराधयन्बहुकालं मननमकरोत् ॥ १७ ॥

[ वृ॰ सा॰ ] नोपदेशश्रवणमात्रेण कृतकृत्यताऽपि तु गुरुनिकटे स्थित्वा मननादि कुर्वत एवेत्याह—नेति । परामर्शो मननादि । विरोचनो ह्युपदेशं श्रुत्वैव गृहं गतो न मननादि कृतवान् ॥ १७ ॥

[ भा॰ ] श्रवणवद् गुरुवाक्यमीमांसाया अप्यावश्यकत्व इतिहासमाह—नोपदेश॰ । परामर्शो गुरुवाक्यतात्पर्यनिर्णायको विचारस्तं विनोपदेशवाक्यश्रवणेऽपि तत्त्वज्ञाननियमो नास्ति, प्रजापतेरुपदेशश्रवणेऽपीन्द्रविरोचनयोर्मध्ये विरोचनस्य परामर्शाभावेन भ्रान्तत्वश्रुतेरित्यर्थः । अतो गुरूपदिष्टस्य मननमपि कार्यमिति । दृश्यते चेदानीमप्येकस्यैव तत्त्वमस्युपदेशस्य नानारूपैरर्थैः सम्भावना—अखण्डत्वमवैधर्म्यलक्षणाभेदोऽविभागश्चेति ॥ १७ ॥

[ भा॰ सा॰ ] श्रवणवन्मननमप्यावश्यकमित्याह—नोपदेशेति । परामर्शो मननम्, गुरुवाक्यतात्पर्यनिर्णायको विचारस्तं विना न तत्त्वज्ञानम्, यथेन्द्रविरोचनयोस्तुल्येऽपि श्रवणे विरोचनस्य परामर्शाभावान्न विवेक इत्यर्थः ॥ १७ ॥

## दृष्टस्तयोरिन्द्रस्य ॥ १८ ॥

[ वृ० ] इन्द्रस्य किं वृत्तमित्यत्राह—दृष्टस्तयो० । तयोर्मध्ये इन्द्रस्य बोधो दृष्टः । बहुकालाभ्यासेन ब्रह्मप्रसादनान्मननिदिध्यासनसाक्षात्कारात्सिद्धिरिति ॥ १८ ॥

[ वृ० सा० ] दृष्ट इति । तयोरिन्द्रविरोचनयोर्मध्ये इन्द्रस्य दृष्टः कृतकृत्यभाव इति शेषः ॥ १८ ॥

[ भा० ] अत एव च परामर्शो दृश्यत इत्याह—दृष्ट० । तच्छब्देनोक्तोच्यमानयोः परामर्शः । तयोरिन्द्रविरोचनयोर्मध्ये परामर्श इन्द्रस्य दृष्टश्चेत्यर्थः ॥ १८ ॥

[ भा० सा० ] दृष्ट इति । तयोर्मध्ये परामर्शसत्त्वादिन्द्रस्य स दृष्ट इत्यर्थः ॥ १८ ॥

## प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात् तद्वत् ॥ १९ ॥

[ वृ० ] ज्ञानप्राप्तिश्च कथमित्यत्राह—प्रणति० । अप्रणतस्याब्रह्मचारिणोऽनधिकारः । तद्वत् इन्द्रवत् । यथा ब्रह्माराधनेनेन्द्रेण ज्ञानं प्राप्तम्, तथा गुर्वाराधनेनान्येनापि ॥ १९ ॥

[ वृ० सा० ] कथमिन्द्रस्य कृतकृत्यभावस्तत्राह—प्रणतीति । उपसर्पणं समीपेऽवस्थानं तद्वदन्यस्यापीति शेषः ॥ १९ ॥

[ भा० ] सम्यग्ज्ञानार्थिना च गुरुसेवा बहुकालं कर्तव्येत्याह—प्रणति० । तद्वदिन्द्रस्येवान्यस्यापि गुरौ प्रणतिवेदाध्ययनसेवादीन् कृत्वैव सिद्धिस्तत्त्वार्थस्फूर्तिर्भवति, नान्यथेत्यर्थः । तथा च श्रुतिः—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
( श्वे० उ० ६।२३ ) इति ॥ १९ ॥

[ भा० सा० ] इन्द्रवदेव चिरकालगुरुसेवयैव सिद्धिरित्याह—प्रणतीति । स्पष्टम् ॥ १९ ॥

## न कालनियमो वामदेववत् ॥ २० ॥

[ वृ० ] किं कालदेशनियमान्मुक्तिः ? तथा च चिरक्षिप्रभावो न स्यादित्यत्राह—न काल० । आराधनार्थं कालनियमो न मोक्षार्थम्, वामदेवस्य तत्त्वज्ञानात्क्षिप्रं मुक्तिदर्शनात् ॥ २० ॥

[ वृ० सा० ] नेति । साधने न कालनियम एतज्जन्मनि जन्मान्तरे वेति । गर्भस्थ एव हि वामदेवो जन्मान्तरानुष्ठितसाधनाज्ज्ञानमवापेति श्रूयते ॥ २० ॥

[ भा० ] न कालनियमो० । ऐहिकसाधनादेव भवतीत्यादिर्ज्ञानोदये कालनियमो नास्ति, वामदेववत् । वामदेवस्य जन्मान्तरीयसाधनेभ्यो गर्भेऽपि यथा ज्ञानोदयस्तथान्यस्यापीत्यर्थः । तथा च श्रुतिः—"तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्य-

श्चेति, तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" (बृ० उ० १।४।१०) इत्यादि। 'अहं मनुरभवम्' इत्यादिकमवैधर्म्यलक्षणाभेदपरं सर्वव्यापकताख्य-ब्रह्मतापरं वा, "सर्वं समाप्नोषि ततोऽसि सर्वं" (गी० ११।४०) इत्यादिस्मरणात्। 'स इदं सर्वं भवति' इति त्वौपाधिकपरिच्छेदस्यात्यन्तोच्छेदपरमिति ॥ २० ॥

[ भा० सा० ] एतज्जन्मार्जितसाधनादेव ज्ञानमित्यादि कालनियमोऽत्र नास्ति, वामदेवस्य गर्भेऽपि ज्ञानोदयश्रवणादित्याह—नेति। स्पष्टम्। अत्र वामदेवस्य "अहं मनुरभवं सूर्यश्च" (बृ० उ० १।४।१०) इत्याद्यनुभवप्रतिपादकश्रुतिर्वैधर्म्यलक्षणभेदपरा सर्वव्यापकताख्यब्रह्मपरा वा, "सर्वं समाप्नोषि ततोऽसि सर्वं" (गी० ११।४०) इति स्मृतेः। "य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" (बृ०उ० १।४।१०) इत्यादिश्रुतिरप्यौपाधिकपरिच्छेदस्यात्यन्तोच्छेदपरेति दिक् ॥ २० ॥

## अध्यस्तरूपोपासनात्पारम्पर्येण यज्ञोपासकानामिव ॥ २१ ॥

[ वृ० ] ज्ञाते हि ध्यायेत्, न चात्मा केनापि दृष्टः, दृष्टश्चेत् किं ध्यानेनेत्यत आह—अध्यस्त०। धर्मः केन दृष्टः? तथापि धर्मलाभाय यज्ञोपासनम्, पारम्पर्येण देवतोद्देशेन हविस्त्यागात्। अत्रापि गुरुणा यदध्यस्तं रूपमुपदिष्टं, तत्सदृशोपासनात्पारम्पर्येण तद्रूपं प्रकाशते। दृष्टं च समानवस्तुचिन्तायां समानानुस्मरणम्। तथा च—

सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः।
अतो नातिप्रसङ्गोऽस्ति स्वप्नादौ भावनाबलात् ॥ २१ ॥

[ वृ० सा० ] ननु दृष्टे ध्यानं स्यान्न चात्मा केनापि दृष्टः, दृष्टश्चेत् किं ध्यानेन? तत्राह—अध्यस्तेति। यज्ञानुष्ठायिनामदृष्टधर्मलाभवत् पारम्पर्येण गुरुपरम्परयाध्यस्तस्योपदिष्टस्य रूपस्य स्वरूपस्योपासनादात्मतत्त्वदर्शनमिति शेषः। ध्याने दर्शनं नापेक्ष्यतेऽपि तु ज्ञानम्, तच्च गुरुपरम्परया सुलभमेवेति भावः ॥ २१ ॥

[ भा० ] ननु सगुणोपासनाया अपि ज्ञानहेतुत्वश्रवणात् तत एव ज्ञानं भविष्यति, किमर्थं दुष्करसूक्ष्मयोगचर्येति, तत्राह—अध्यस्तरूपो०। सिद्धिरित्यनुषज्यते। अध्यस्तरूपैः पुरुषाणां ब्रह्मविष्णुहरादीनामुपासनात् पारम्पर्येण ब्रह्मादिलोकप्राप्तिक्रमेण सत्त्वशुद्धिद्वारा वा ज्ञाननिष्पत्तिर्न साक्षात्। यथा याज्ञिकानामित्यर्थः ॥ २१ ॥

[ भा० सा० ] ननु सगुणोपासनयापि ज्ञानश्रवणात् किमेतैः सूक्ष्मैर्ज्ञानसाधनैरित्यत आह—अध्यस्तेति। अध्यस्तरूपाणां पुरुषाणां ब्रह्मविष्णुहरादीनामुपासनात् तत्तल्लोकप्राप्तिद्वारा क्रमेण सत्त्वशुद्धिद्वारा वा ज्ञाननिष्पत्तिर्न साक्षात् याज्ञिकानामिवेत्यर्थः ॥ २१ ॥

## इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥ २२ ॥

[ वृ० ] ब्रह्मादिलोकलाभात्कृतकृत्यस्य किमात्मज्ञानेनेत्यत्राह—इतरलाभे०। अग्निहोत्रादिना ब्रह्मलोकप्राप्तिः, कर्मजश्च क्षीयत इति पुनरावृत्तौ जन्मश्रुतिः "यथेह

कर्मजितो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयते" ( छा० उ० ८।१।६ ) इति, "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ( तै० आ० १०।१०।३ ) इति ॥ २२ ॥

[ वृ० सा० ] ननु मुक्तिजनकतत्त्वज्ञानेनालं ब्रह्मलोकलाभेनापि कृतकृत्यत्वात्तत्राह—इतरेति । पञ्चाग्नियोगतः पञ्चाग्न्युपासनादितरलाभेऽपि ब्रह्मलोकलाभेऽप्यावृत्तिः, कुतः ? जन्मश्रुतेः । "इमं मानवमावर्तंनावर्तन्त" इति श्रुताविममिति विशेषणान्मानवान्तरे जन्मप्रतीतेः ॥ २२ ॥

[ भा० ] ब्रह्मादिलोकपरम्परयापि ज्ञाननिष्पत्तौ नास्ति नियम इत्याह—इतरलाभे० । निर्गुणात्मन इतरस्याध्यस्तरूपस्य ब्रह्मलोकपर्यन्तस्य लाभेऽप्यावृत्तिरस्ति, कुतः ? देवयानपथेन ब्रह्मलोकं गतस्यापि द्युपर्जन्यधरानरयोषिद्रूपाग्निपञ्चके पञ्चाहुतितो जन्मश्रवणात्, छान्दोग्यपञ्चमप्रपाठके "असौ वाव लोको गौतमाग्निः" (छा० उ० ५।४।१) इत्यादिनेत्यर्थः । यच्च ब्रह्मलोकादनावृत्तिवाक्यं तत् तत्रैव प्रायेणोत्पन्नज्ञानपुरुषविषयकमिति ॥ २२ ॥

[ भा० सा० ] लोकान्तरगतस्य ज्ञाननिष्पत्तौ न नियम इत्याह—इतरलाभ इति । चन्द्रलोकादिलाभेऽपि तत्रानुत्पन्नज्ञानस्यावृत्तिः । पञ्चाग्नीत्यादि छान्दोग्ये स्पष्टा । तत्र हि द्युलोकपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्निसम्बन्धाच्चन्द्रादिलोकस्य जन्मश्रवणादित्यर्थः ॥ २२ ॥

## विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥ २३ ॥

[ वृ० ] विरक्तस्य किं स्वरूपमित्यत्राह—विरक्तस्य० । यद्यपि सर्वेषां हेयहानमुपादेयोपादानं तथापि प्रकरणविशेषाद्धेयः संसारः, उपादेयो मोक्ष इति द्रष्टव्यम् ॥२३॥

[ वृ० सा० ] तच्च तत्त्वज्ञानं विरक्तस्यैवेत्याह—विरक्तस्येति । हेयः संसार उपादेयो मोक्षः ॥ २३ ॥

[ भा० ] ज्ञाननिष्पत्तिर्विरक्तस्यैवेत्यत्र निदर्शनमाह—विरक्तस्य० । विरक्तस्यैव हेयानां प्रकृत्यादीनां हानमुपादेयस्य चात्मन उपादानं भवति । यथा दुग्धजलयोरेकीभावापन्नयोर्मध्येऽसारजलत्यागेन सारभूतक्षीरोपादानं हंसस्यैव, न तु काकादेरित्यर्थः॥२३॥

[ भा० सा० ] ज्ञानमपि विरक्तस्यैवेत्याह—विरक्तस्येति । विरक्तस्यैव हेयादीनां हानमुपादेयस्य चात्मन उपादानं भवति । यथा हंसस्यैव सारभूतक्षीरनीरविवेको न तु काकादेरित्यर्थः ॥ २३ ॥

## लब्धातिशययोगाद्वा तद्वत् ॥ २४ ॥

[ वृ० ] अत्र युक्तिमाह—लब्धाति० । हंसवत्, हंसस्यैवातिशयशक्तिर्येन मिश्रितमपि क्षीरं पिबति जलं त्यजति । तथा लब्धातिशयस्य पुंसः संसारो हेय उपादेयो मोक्ष इति ॥ २४ ॥

[ वृ० सा० ] कुत इत्यत आह—लब्धेति । तद्वत् हंसवत् । हंसस्यैव क्षीरनीरविवेचनशक्तिवद् विरक्तस्यैव हेयोपादेयविवेचनातिशययुक्तिलाभादिति भावः । वाशब्द एवार्थे । विरक्तस्यैवेत्यर्थः ॥ २४ ॥

[ भा० ] सिद्धपुरुषसङ्गादप्येतदुभयं भवतीत्याह—लब्धाति० । लब्धोऽतिशयो ज्ञानकाष्ठा येन तत्सङ्गादप्युक्तं भवति हंसवदेवेत्यर्थः । यथाऽलर्कस्य दत्तात्रेयसङ्गममात्रादेव स्वयं विवेकः प्रादुरभूदिति ॥ २४ ॥

[ भा० सा० ] सिद्धपुरुषसङ्गादप्येतदुभयं भवतीत्याह – लब्धेति । लब्धज्ञानातिशयस्य योगात्सङ्गादपि हंसवदेव भवतीत्यर्थः । यथोत्पन्नस्य हंसस्य पित्रादिभूतहंससंयोगादेव सा शक्तिरिति भावः । यथाऽलर्कस्य दत्तात्रेयसंगमाद्विवेकोऽभूत् ॥ २४ ॥

## न कामचारित्वं रागोपहते शुकवत् ॥ २५ ॥

[ वृ० ] सरागस्यापि मुक्तिर्भविष्यतीत्यत्राह— न काम० । रागोपहतस्य कामचारित्वमेव नास्ति, किं पुनर्मुक्तिरिति । यथा व्यासस्य सरागस्य न मुक्तिरिति । तत्सुतस्य शुकस्य वीतरागत्वान्मुक्तिर्भतैवम् ॥ २५ ॥

[ वृ० सा० ] नेति । रागोपहते कामचारित्वमपि न, किं पुनर्मुक्तिरिति शेषः । वीतरागे तु मुक्तिः शुकदेव इव ॥ २५ ॥

[ भा० ] रागिसङ्गो न कार्य इत्याह—न काम० । रागोपहते पुरुषे कामतः संगो न कर्तव्यः, शुकवत् । यथा शुकपक्षी प्रकृष्टरूप इति कृत्वा कामचारं न करोति रूपलोलुपैर्बन्धनभयात्, तद्वदित्यर्थः ॥ २५ ॥

[ भा० सा० ] रागिसङ्गो न कार्य इत्याह—नेति । रागोपहते पुंसि कामतः सङ्गो न कार्यः । यथा शुकपक्षी रूपादिलोलुपैर्बन्धनभयात् केनापि सङ्गं न करोति तद्वदित्यर्थः ॥ २५ ॥

## गुणयोगाद् बन्धः शुकवत् ॥ २६ ॥

[ वृ० ] बन्धः कथमित्यत्राह—गुणयोगाद्० । यथा शुकः पक्षी गुणयोगाद् बन्धमाप्नोति, तथा गुणयोगात्पुमानपि बन्धमाप्नोति ॥ २६ ॥

[ वृ० सा० ] बन्धः कथमित्यत्राह—गुणयोगादिति । गुणशब्दः श्लिष्टः, यथा मधुरभाषणादिगुणयोगात् शुकः पक्षी बध्यते, एवं सत्त्वरजस्तमआत्मकगुणयोगादात्मा बध्यत इति भावः ॥ २६ ॥

[ भा० ] रागिसङ्गे तु दोषमाह--गुणयोगा० । तेषां सङ्गे तु गुणयोगात् तदीयरागादियोगाद् बद्धः स्यात् शुकवदेव—यथा शुकपक्षी व्याधस्य गुणै रज्जुभिर्बद्धो भवति तद्वदित्यर्थः । अथवा गुणितया गुणलोलुपैर्बद्धो भवति शुकवदित्यर्थः । अत्रैवोक्तं सौभरिणा—

स मे समाधिर्जलवासमित्रमत्स्यस्य सङ्गात् सहसैव नष्टः।
परिग्रहः सङ्गकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः ॥
( वि० पु० ४।२।४८ ) इति ॥ २६ ॥

[ मा० सा० ] तत्र दोषमाह— गुणयोगादिति । सङ्गत्या तद्गुणरागादियोगाद् बन्धः स्यात्, यथा शुकस्य रज्जुभिर्बन्धो भवतीत्यर्थः । यद्वा रूपादिगुणयोगाद् यथा शुकस्य बन्ध इत्यर्थः ॥ २६ ॥

न भोगाद्रागशान्तिर्मुनिवत् ॥ २७ ॥

[ वृ० ] भोगादेव वैराग्यं कालवशाद्भविष्यति, किं ज्ञानेनेत्यत्राह—न भोगाद्० । न मुनेरपि भोगाद्रागशान्तिः, किं पुनरन्यस्य । यथा कण्वसौभरिप्रभृतयः ॥ २७ ॥

[ वृ० सा० ] वैराग्यं च न भोगादपि तु दोषदर्शनादित्याह सूत्राभ्याम्—नेति । सौभरिप्रभृतीनामपि मुनीनां भोगाद्रागशान्तिर्नाभूत्, अस्मादृशां तु का वार्ता ॥ २७ ॥

[ भा० ] वैरागस्याप्युपायमवधारयति द्वाभ्याम्—न भोगाद्० । यथा मुनेः सौभरेर्भोगान्न रागशान्तिरभूत्, एवमन्येषामपि न भवतीत्यर्थः । तदुक्तं सौभरिणैव—

आमृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य ।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसङ्गि ॥
( वि० पु० ४।२।४७ ) इति ॥ २७ ॥

[ मा० सा० ] वैराग्योपायमाह—न भोगादिति । यथा मुनेः सौभरेः भोगान्न शान्तिस्तद्वदित्यर्थः ॥ २७ ॥

दोषदर्शनादुभयोः ॥ २८ ॥

[ वृ० ] विषयिणां कथं वैराग्यं भविष्यतीत्यत्राह—दोषदर्शना० । उभयोः आत्मनो विषयस्य च । आत्मनो दोषः सङ्गान्नरकपातो गर्भवासादिश्च । विषयदोषः परिणतिविरसत्वादिः ॥ २८ ॥

[ वृ० सा० ] दोषेति । उभयोरात्मनोर्विषयस्य च सङ्गान्नरकपातगर्भवासादय आत्मनो दोषाः, परिणतिविरसत्वादयस्तु विषयस्य ॥ २८ ॥

[ भा० ] अपितु—दोषदर्शना० । उभयोः प्रकृतितत्कार्ययोः परिणामित्व-दुःखात्मकत्वादिदोषदर्शनादेव रागशान्तिर्भवति मुनिवदेवेत्यर्थः । सौभरेर्हि सङ्गदोष-दर्शनादेव सङ्गे वैराग्यं श्रूयते—

दुःखं यदेवैकशरीरजन्म तथार्धसंख्यं तदिदं प्रसूतम् ।
परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत् ॥
( वि० पु० ४।२।४९ ) इति ॥ २८ ॥

[ भा० सा० ] दोषेति । किन्तूभयोः प्रकृतिकार्ययोः परिणामित्वदुःखात्मकत्वादिदोषदर्शनादेव तद्रागशान्तिरित्यर्थः ॥ २८ ॥

## न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ॥ २९ ॥

[ वृ० ] उपदेशानधिकारिणं पुरुषमाह—न मलिन० । यथाऽसंस्कृते क्षेत्रे न बीजप्ररोहः, तथा रागादिमलिनचेतसि नोपदेशबीजप्ररोहः । अजवदिति अजनाम्नि नृपे भार्याशोकार्ते तथा वसिष्ठेनोपदेशो दत्तो न स्थिरीबभूव ॥ २९ ॥

[ वृ० सा० ] नेति । उपदेशरूपस्य बीजस्य कारणस्य प्ररोहः फलोन्मुखत्वमजवत् ।

[ भा० ] रागादिदोषोपहतस्योपदेशग्रहणेऽप्यनधिकारमाह—न मलिन० । उपदेशरूपं यज्ज्ञानवृक्षस्य बीजं तस्याङ्कुरोऽपि रागादिमलिनचित्ते नोत्पद्यते, अजवत्; यथाऽजनाम्नि नृपे भार्याशोकमलिनचित्ते वसिष्ठेनोक्तस्याप्युपदेशबीजस्य नाङ्कुर उत्पन्न इत्यर्थः ॥ २९ ॥

[ भा० सा० ] रागादिदोषोपहतस्योपदेशग्रहणेऽप्यनधिकारमाह—नेति । आदेशरूपं यज्ज्ञानवृक्षस्य बीजं तदङ्कुरोऽपि रागादिमलिनचित्तस्य न भवति । यथा भार्याशोकमलिनचित्तेऽजनाम्नि राज्ञि वशिष्ठकृतोपदेशाङ्कुरानुत्पत्तिरित्यर्थः ॥ २९ ॥

## नाभासमात्रमपि मलिनदर्पणवत् ॥ ३० ॥

[ वृ० ] रागादिमलिने चेतसि नाभासज्ञानमपीत्याह—नाभास० । यथा मलिने दर्पणे मुखाभासमपि न प्रतिभाति, तथा प्रधानप्रतिबिम्बितत्वादात्मनः प्रधानकार्यमात्मज्ञानम् ॥ ३० ॥

[ वृ० सा० ] अतिमलिनचेतसि ज्ञानाभासोऽपि नेत्याह—नाभासेति । स्पष्टम् ॥ ३० ॥

[ भा० ] किं बहुना—नाभास० । आपातज्ञानमपि मलिनचेतस्युपदेशान्न जायते, विषयान्तरसङ्कारादिभिः प्रतिबन्धात्, यथा मलैः प्रतिबन्धान्मलिनदर्पणेऽर्थो न प्रतिबिम्बति तद्वदित्यर्थः ॥ ३० ॥

[ भा० सा० ] किं बहुना—नेति । आभासमापातज्ञानं यथा मलिनदर्पणेऽर्थो न प्रतिबिम्बति, इत्यर्थः ॥ ३० ॥

## न तज्जस्यापि तद्रूपता पङ्कजादिवत् ॥ ३१ ॥

[ वृ० ] ननु महानेव कारणरूपत्वादात्मास्त्वित्यत्राह—न तज्जस्या० । न कार्यमेव कारणम्, भेदात् । नहि पङ्कज एव पङ्कः ॥ ३१ ॥

[ वृ० सा० ] प्रकृतिजन्यस्य भूतभौतिककर्तृत्वादेरिव तज्जन्यस्य मोक्षस्यापि संसारत्वं स्यात्तदाह—नेति । यथा पङ्काज्जातस्यापि न पङ्करूपता, तथा प्रकृतिजन्यस्यापि न संसाररूपत्वं दुःखास्पर्शेन विशेषात् ॥ ३१ ॥

[ भा० ] यदि वा कथञ्चिज् ज्ञानं जायते, तथाप्युपदेशानुरूपं न भवेदित्याह—न तज्ज० । तस्मादुपदेशाज्जातस्यापि ज्ञानस्योपदेशानुरूपता न भवति सामग्र्येणानव-

बोधात्, पङ्कजवत्; यथा बीजस्योत्तमत्वेऽपि पङ्कदोषाद् बीजानुरूपता पङ्कजस्य न न भवति तद्वदित्यर्थः। पङ्कस्थानीयं शिष्यचित्तम् ॥ ३१ ॥

[ भा० सा० ] कथञ्चित्तादृशस्य जायमानमपि ज्ञानं नोपदेशानुरूपमित्याह—नेति। उपदेशाज्जातमपि ज्ञानं नोपदेशानुरूपं भवति, सामग्र्येणानवबोधात्। यथाल्पपङ्काद् बीजोद्गमेऽपि पङ्कदोषाद्बीजानुरूपता पङ्कजस्य न, तद्वदित्यर्थः ॥ ३१ ॥

न भूतियोगे कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ॥ ३२ ॥

[ वृ० ] अणिमादिविभूतिसिद्धस्यापि न कृतकृत्यतेत्याह न भूति०। यथा गुरूपासनया तत्त्वज्ञानेन सिद्धस्यानावृत्तेः कृतकृत्यता, तथा न भूतियोगेन, पुनरावृत्तेः। उपास्यसिद्धिवदिति वीप्साऽध्यायपरिसमाप्तौ ॥ ३२ ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ
आख्यायिकाध्यायश्चतुर्थः ॥

[ वृ० सा० ] ननु दुःखास्पर्शोऽणिमादिसिद्धिलाभेऽस्तीत्यत्राह—न भूतेति। आवृत्तिसत्त्वादिति भावः। उपास्येन राजादिना या सिद्धिर्विशिष्टाधिकारलाभादिस्तस्यामिव। सा हि क्षयिष्णुत्वान्न कृतकृत्यतावहेति। वीप्साध्यायसमाप्तिं द्योतयति ॥ ३२ ॥

इति श्रीस्वयंप्रकाशतीर्थाङ्घ्रिलब्धवेदान्तिसत्पदेन महादेवेनोन्नीते
सांख्यवृत्तिसारे चतुर्थोऽध्यायः ॥ ४ ॥

[ भा० ] ननु ब्रह्मलोकादिष्वैश्वर्येणैव पुरुषार्थतासिद्ध्या किमर्थमेतावता प्रयासेन मोक्षाय ज्ञाननिष्पादनम्, तत्राह—न भूति०। ऐश्वर्ययोगेऽपि कृतकृत्यता कृतार्थता नास्ति, क्षयातिशयदुःखैरनुगमात्। उपास्यसिद्धिवत्, यथोपास्यानां ब्रह्मादीनां सिद्धियोगेऽपि न कृतकृत्यता, तेषामपि योगनिद्रादौ योगाभ्यासश्रवणात्। तथैव तदुपासनया प्राप्ततदैश्वर्यस्यापीत्यर्थः। उपास्यसिद्धिवदिति वीप्साऽध्यायसमाप्तौ ॥ ३२ ॥

अध्यायत्रितयोक्तस्य विवेकस्यान्तरङ्गकम्।
आख्यायिकाभिः सम्प्रोक्तमत्राध्याये समासतः ॥

इति विज्ञानभिक्षुनिर्मिते कापिलसांख्यप्रवचनस्य भाष्ये आख्यायिकाध्यायश्चतुर्थः।

[ भा० सा० ] ननु ब्रह्मलोकादिष्वैश्वर्येणैव पुरुषार्थसिद्ध्या किं मोक्षेणेत्यत आह—नेति। भूतमैश्वर्यम् उपास्यादीनां ब्रह्मादीनां या सिद्धिरैश्वर्यं यद्योगेऽपि तेषां यथा न कृतार्थता, तथा तत्सदृशैश्वर्ययोगेऽपि न कृतार्थता, क्षयातिशयदुःखैरनुगमादित्यर्थः। "ब्रह्मणोऽपि भयमतो द्विपरार्धपरायुषः" इति स्मृतेः। दुःखनिवृत्त्यर्थं तेषामपि योगनिद्रादौ योगाभ्यासश्रवणात्। वीप्साऽध्यायसमाप्तौ ॥

॥ इति चतुर्थोऽध्यायः ॥ ४ ॥

—:※:—

# पञ्चमोऽध्यायः

## मङ्गलाचरणं शिष्टाचारात्फलदर्शनात् श्रुतितश्चेति ॥ १ ॥

[ वृ० ] आख्यायिकानन्तरं परपक्षनिरासार्थं पञ्चमाध्यायारम्भः—मङ्गला० । कृतेऽपि मङ्गले ग्रन्थापरिसमाप्तेरकृतेऽपि समाप्तेः, किं मङ्गलेनेति यैरुक्तं तदनेन निरस्तम् ॥ १ ॥

[ वृ० सा० ] परपक्षजयार्थं पञ्चमाध्याय आरभ्यते । तत्र ग्रन्थारम्भे मङ्गलं न कार्यम्, निष्प्रयोजनत्वात् । तच्च कृतेऽपि मङ्गले ग्रन्थस्यासमाप्तेरकृतेऽपि मङ्गले समाप्तेश्चेति, तद् दूषयति—मङ्गलाचरणमिति । श्रुतित इति शिष्टाचारानुमितश्रुतित इत्यर्थः, असमाप्तिरङ्गवैकल्यात्, समाप्तिर्जन्मान्तरीयमङ्गलादिति समाधानसम्भवात् । पराक्रान्तं चात्र सूरिभिः ॥ १ ॥

[ भा० ] स्वशास्त्रसिद्धान्तः पर्याप्तः । इतः परं स्वशास्त्रे परेषां पूर्वपक्षानपाकर्तुं पञ्चमाध्याय आरभ्यते । तत्रादावादिसूत्रेऽथशब्देन ( १।१ सू० ) यन्मङ्गलं कृतं तद् व्यर्थमित्याक्षेपं समाधत्ते—मङ्गलाचरणं० । मङ्गलाचरणं यत् कृतं तस्यैतैः प्रमाणैः कर्तव्यतासिद्धिरित्यर्थः । इतिशब्दो हेत्वन्तराकाङ्क्षानिरासार्थः ॥ १ ॥

[ भा० सा० ] अथ स्वशास्त्रे परकृतपूर्वपक्षनिरासाय पञ्चमारम्भः । तत्रादावथशब्देन मङ्गलाचरणं व्यर्थं निर्मूलं चेति समाधत्ते—मङ्गलेति । फलं च विघ्ननिवृत्तिपूर्वकप्रचयगमनादि । श्रुतिश्चाचार्यवचनादनुमेया ॥ १ ॥

## नेश्वराधिष्ठिते फलसंपत्तिः कर्मणा तत्सिद्धेः ॥ २ ॥

[ वृ० ] पूर्वसिद्धमीश्वरासत्त्वम् । इदानीं न्यायमाह—नेश्वरा० । यदीश्वरः स्वतन्त्रः कर्ता, कर्मणा विनापि कुर्यात् । अथ कर्मसहकारी कुरुते, कर्मैवास्तु, किमीश्वरेण । न च सहकारी प्रधानशक्तिं बाधते; स्वातन्त्र्यविघातात् । किं च स्वार्थपरार्थाभ्यां प्रवृत्तिर्दृष्टा । न चेश्वरस्य स्वार्थमस्ति । न च परार्थप्रवृत्तिः, परोपकारादिनापि स्वार्थलाभात्प्रवृत्तेः । तस्मात्कर्मैव जगत्कारणमस्तु ॥ २ ॥

[ वृ० सा० ] ईश्वरेणाधिष्ठिते कारणे कार्योत्पत्तिः, कुलालाद्यधिष्ठिते मृदादौ घटाद्युत्पत्तिदर्शनादिति दूषयति—नेति । ईश्वरः किं कर्मापेक्ष्य सृजति, अनपेक्ष्य वा ? आद्ये कर्मैव कारणमस्तु नेश्वरः, अन्त्ये स्वातन्त्र्यविघातः । किं चेश्वरस्य स्वार्था परार्था वा प्रवृत्तिः ? नाद्यः, तस्याप्तकामत्वस्वीकारात् । नान्त्यः, कारुणिकस्य दुःखसृष्टिप्रवृत्त्यनुपपत्तेः ॥ २ ॥

[ भा० ] ईश्वरासिद्धेः ( १।९२ सू० ) इति यदुक्तं तन्नोपपद्यते, कर्मफलदातृतया तत्सिद्धेरिति ये पूर्वपक्षिणस्तान्निराकरोति नेश्वरा० । ईश्वराधिष्ठिते कारणे

कर्मफलस्वरूपपरिणामस्य निष्पत्तिर्न युक्ता। आवश्यकेन कर्मणैव फलनिष्पत्तिसम्भवादित्यर्थः ॥ २ ॥

[ भा० सा० ] कर्मफलदातृतयेश्वरस्यावश्यकत्वेनेश्वरासिद्धेरित्युक्तमत आह—नेति। ईश्वराधिष्ठिते कारणकर्मफलरूपपरिणामस्य निष्पत्तिर्न युक्ता। आवश्यकेन कर्मणैव तत्सिद्धिरित्यर्थः ॥ २ ॥

## स्वोपकारादधिष्ठानं लोकवत् ॥ ३ ॥

[ वृ० ] एतद्दर्शयति—स्वोपकारा०। न च नित्यस्य स्वोपकारः संभवति ॥

[वृ० सा०] किञ्च यः कारणमधितिष्ठति स स्वोपकारायैव, एवमीश्वरस्यापि स्यादित्याह—स्वोपकारादिति। स्वोपकारादिति फले हेतौ पञ्चमी ॥ ३ ॥

[ भा० ] ईश्वरस्य फलदातृत्वं न घटतेऽपीत्याह सूत्रैः—स्वोपकारा०। ईश्वराधिष्ठातृत्वे स्वोपकारार्थमेव लोकवदधिष्ठानं स्यादित्यर्थः ॥ ३ ॥

[ भा० सा० ] ईश्वरफलदातृत्वं न घटत इत्याह—स्वोपकारादिति। तस्याधिष्ठातृत्वे स्वोपकारार्थमेव लोकवत्कर्तृत्वं स्यादित्यर्थः ॥ ३ ॥

## लौकिकेश्वरवदितरथा ॥ ४ ॥

[ वृ० ] स्वोपकार एव भविष्यतीत्यत्राह—लौकिके०। असर्वज्ञ इत्यर्थः ॥ ४ ॥

[ वृ० सा० ] अथास्तु ईश्वरेऽपि स्वोपकारस्तत्राह—लौकिकेति। इतरथा स्वोपकारस्वीकारे लौकिकेश्वरवदनाप्तकामत्वापत्तिरिति शेषः ॥ ४ ॥

[ भा० ] भवत्वीश्वरस्याप्युपकारः, का क्षतिरित्याशङ्क्याह—लौकिके०। ईश्वरस्याप्युपकारस्वीकारे लौकिकेश्वरवदेव सोऽपि संसारी स्यात्, अपूर्णकामतया दुःखादिप्रसङ्गादित्यर्थः ॥ ४ ॥

[ भा० सा० ] नन्वस्तु तस्याप्युपकारोऽत आह—लौकिकेति। तस्यापि तत्स्वीकारे लौकिकेश्वरवदेवापूर्णकामत्वे दुःखप्रसङ्ग इत्यर्थः ॥ ४ ॥

## पारिभाषिको वा ॥ ५ ॥

[ वृ० ] दूषणान्तरमाह—पारिभा०। प्रकृतिच्छायापत्त्या तत्कर्तृत्वादात्मैव कर्तेति तस्येश्वरसंज्ञेति परिभाषेति ॥ ५ ॥

[ वृ० सा० ] लौकिकेश्वरवैलक्षण्ये पारिभाषिक एवेश्वरः स्यादित्यत आह—पारिभाषिक इति। वा एवार्थे ॥ ५ ॥

[ भा० ] तथैव भवत्वित्याशङ्क्याह—परिभा०। संसारसत्त्वेऽपि चेदीश्वरस्तर्हि सर्गाद्युत्पन्नपुरुषे परिभाषामात्रमस्माकमिव भवतामपि स्यात्। संसारित्वाप्रतिहतेच्छत्वयोर्विरोधान्नित्यैश्वर्यानुपपत्तेरित्यर्थः ॥ ५ ॥

[ भा० सा० ] नन्वस्तु तथेत्यत आह—पारिभाषिक इति । संसारित्वेऽपि चेदीश्वरत्वं तदास्माकं सर्गाद्युत्पन्नपुरुष इव भवतामपि पारिभाषिक एव स स्यात्, न तु नित्यैश्वर्यासंसारित्वाप्रतिहतेच्छत्वबानित्यर्थः ॥ ५ ॥

न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥ ६ ॥

[ वृ० ] हेत्वन्तरमाह– न रागा० । अविनाभावस्य कारणस्य व्यभिचारे सर्वत्रानाश्वासः । रागश्च प्रवृत्तिनिमित्तमिति तं विना कथं जगन्निर्मातृत्वम्, न च मुक्तस्य रागोऽस्ति ॥ ६ ॥

[ वृ० सा० ] कथं पारिभाषिकस्तत्राह—नेति । न रागादृते जगन्निर्मातृत्वसिद्धिः, निर्माणरागयोः कार्यकारणभावादित्यर्थः ॥ ६ ॥

[ भा० ] ईश्वरस्याधिष्ठातृत्वे बाधकान्तरमाह—न रागा० । किञ्च रागं विना नाधिष्ठातृत्वं सिद्ध्यति, प्रवृत्तौ रागस्य प्रतिनियतकारणत्वादित्यर्थः । उपकार इष्टार्थसिद्धिः । रागस्तूत्कटेच्छेति न पौनरुक्त्यम् ॥ ६ ॥

[ भा० सा० ] तस्याधिष्ठातृत्वे बाधकान्तरमप्याह—नेति । रागस्य प्रवृत्तौ नियतकारणत्वाद्रागं विना न तत्त्वसिद्धिरित्यर्थः ॥ ६ ॥

तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥

[ वृ० ] राग एव भविष्यतीत्यत्राह—तद्योगे० । रागयोगेऽपि ॥ ७ ॥

[ वृ० सा० ] रागाङ्गीकारे दूषणमाह—तद्योगेऽपीति । अपिस्त्वर्थे । स्यादिति शेषः ॥७॥

[ भा० ] नन्वेवमस्तु रागोऽपीश्वरे, तत्राह—तद्योगे० । रागयोगेऽपि स्वीक्रियमाणे स नित्यमुक्तो न स्यात्, ततश्च ते सिद्धान्तहानिरित्यर्थः । किञ्च प्रकृति प्रत्यैश्वर्यं प्रकृतिपरिणामभूतेच्छादिना न सम्भवति, अन्योन्याश्रयात् । नित्येच्छादिकं च प्रकृतौ न युक्तम्, श्रुतिस्मृतिसिद्धसाम्यावस्थानुपपत्तेः । अतः प्रकारद्वयमवशिष्यते, तद्यथा—ऐश्वर्यं किं प्रधानशक्तित्वेनास्मदभिमतानामिच्छादीनां साक्षादेव चेतनसम्बन्धात्, किं वाऽयस्कान्तमणिवत् सन्निधिसत्तामात्रेण प्रेरकत्वादिति ॥ ७ ॥

[ भा० सा० ] राग इच्छा, रागसत्त्वे दोषमाह—तदिति । तद्योगेऽपि स्वीक्रियमाणे च नित्यमुक्त इति त्वत्सिद्धान्तहानिरित्यर्थः ॥ ७ ॥

प्रधानशक्तियोगाच्चेत्सङ्गापत्तिः ॥ ८ ॥

[ वृ० ] प्रधानशक्तियोगात्कर्तृत्वं भविष्यतीत्राह—प्रधान० । 'असङ्गो ह्ययं पुरुषः' ( बृ० उ० ४।३।१६ ) इति तद्विरोधापत्तिः ॥ ८ ॥

[ वृ० सा० ] प्रधाननिष्ठा या कर्तृशक्तिस्तद्योगाच्चेत् कर्तृत्वं तर्हि प्रधानेन साकं सङ्गः स्यात् । तत्र "असङ्गो ह्ययं पुरुषः" (बृ० उ० ४।३।१६) इति श्रुतिविरोधः ॥ ८ ॥

[ भा० ] तत्राद्यं पक्षं दूषयति—प्रधान० । प्रधानशक्तेरिच्छादेः पुरुषे योगात् पुरुषस्यापि धर्मसङ्गापत्तिः। तथा च स यत् तत्र पश्यत्यनन्वागतस्तेन भवति। "असङ्गो ह्ययं पुरुष" ( बृ० उ० ४।३।१६ ) इत्यादिश्रुतिविरोध इत्यर्थः ।। ८ ।।

[ भा० सा० ] ननु प्रधानधर्मेच्छायोगान्न दोषोऽत आह—प्रधानेति । तत्स्वीकारे 'असङ्गो ह्ययं पुरुषः" इति श्रुतिविरोधः । किञ्चान्योन्याश्रयप्रकृतिपरिणामेच्छायोगे प्रकृतिप्रवर्तनम्, तत्प्रवर्तने च तत्परिणामेच्छादिरिति । नित्येच्छादिकं च प्रकृतौ न युक्तम्, श्रुतिस्मृतिसिद्धसाम्यावस्थानुपपत्तेः ।। ८ ।।

## सत्तामात्राच्चेत् सर्वैश्वर्यम् ।। ९ ।।

[ वृ० ] न प्रधानसङ्गः, किं तु प्रधानसत्तामात्रेण कर्तृत्वं भविष्यतीत्यत्राह—सत्तामात्रा० । सर्वात्मनः प्रति प्रधानसत्ताया अविशेषात्सर्वात्मनामीश्वरत्वम् ।। ९ ।।

[ वृ० सा० ] प्रधानसत्तामात्रेणाकर्तृत्वे त्वाह—सत्तेति । प्रधानसत्तायाः सर्वानात्मनः प्रत्यविशेषात् सर्वेषामात्मनामैश्वर्यं स्यात् ।। ९ ।।

[ भा० ] अन्त्ये त्वाह—सत्तामात्रा० । अयस्कान्तवत् सन्निधिसत्तामात्रेण चेच्चेतनैश्वर्यं तर्हि सर्वेषामेव तत्तत्सर्गेषु भोक्तॄणां पुंसामविशेषेणैश्वर्यमस्मदभिप्रेतमेव सिद्धम्, अखिलभोक्तृसंयोगादेव प्रधानेन महदादिसर्जनादिति । ततश्चैक एवेश्वर इति भवत्सिद्धान्तहानिरित्यर्थः ।। ९ ।।

[ भा० सा० ] नन्वयस्कान्तमणिवत् सन्निधिमात्रेण प्रेरकत्वमत आह—सत्तामात्रादिति । तद्वत् प्रेरकत्वे सर्वेषामेव तत्तत्सर्गेषु भोक्तॄणां पुंसामविशेषेणैश्वर्यमस्मदभिमतं सिद्धचेत्, अखिलभोक्तृसंयोगादेव प्रधानेन महदादिसृष्टेः । ततश्चेश्वरैकत्वरूपत्वयोगात्सिद्धान्तभङ्गः ।। ९ ।।

## प्रमाणाभावान्न तत्सिद्धिः ।। १० ।।

[ वृ० ] ईश्वरसाधनानि सन्ति । तत्कथमित्यत्राह—प्रमाणा० । प्रत्यक्षप्रमाणाभावात् ।। १० ।।

[वृ० सा०] प्रमाणेति । तत्सिद्धिरीश्वरसिद्धिः, प्रत्यक्षप्रमाणाभावस्य प्रसिद्धत्वात् ।१०।

[ भा० ] स्यादेतत् –ईश्वरसाधकप्रमाणविरोधेनैतेऽसत्तर्का एव । अन्यथैवंविधासत्तर्कसहस्रैः प्रधानमपि बाधितुं शक्यत इति, तत्राह—प्रमाणा० । तत्सिद्धिर्नित्येश्वरे तावत् प्रत्यक्षं नास्तीत्यनुमानशब्दावेव प्रमाणे वक्तव्ये, ते च न सम्भवत इत्यर्थः ।।१०।।

[ भा० सा० ] किञ्च नित्येश्वरेऽनुमानमित्याह—प्रमाणेति । तत्र प्रत्यक्षं तावदीश्वरे नास्त्येव ।। १० ।।

## सम्बन्धाभावान्नानुमानम् ।। ११ ।।

[ वृ० ] अनुमानं भविष्यतीत्यत्राह—सम्बन्धा० । प्रत्यक्षपूर्वकत्वाद् व्याप्तेस्तदभावात्कुतः सम्बन्धग्रहः । न चासाधारणस्य सम्बन्धग्रहः ।। ११ ।।

[ वृ॰ सा॰ ] अनुमानं निराकरोति—सम्बन्धेति । सम्बन्धाभावाद् व्याप्त्यभावात् ।११।

[ भा॰ ] असम्भवमेव प्रतिपादयति सूत्राभ्याम्—सम्बन्धा॰ । सम्बन्धो व्याप्तिः। अभावोऽसिद्धिः । तथा च महदादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानेष्वप्रयोजकत्वेन व्याप्यत्वासिद्ध्या नेश्वरेऽनुमानमित्यर्थः ।। ११ ।।

[ भा॰ सा॰ ] अनुमानमपि नेत्याह—सम्बन्धेति । सम्बन्धो व्याप्तिः, महदादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानेऽप्रयोजकत्वेन व्याप्त्यसिद्धिरिति भावः ।। ११ ।।

## श्रुतिरपि प्रधानकार्यस्य ।। १२ ।।

[ वृ॰ ] शब्दं प्रमाणं भविष्यतीत्यत्राह—श्रुतिमपि॰ । 'प्रधानाज्जगदुत्पद्यते' इति श्रुतिरस्ति । तस्मादीश्वरसाधकप्रमाणान्याभासानि ।। १२ ।।

[ वृ॰ सा॰ ] श्रुतिर्जगतो नेश्वरकार्यत्वस्य बोधिकास्ति, प्रत्युत प्रधानकार्यत्वस्यैव बोधिका "अजामेकाम्" (श्वे॰ उ॰ ४।५) इत्यादिरस्तीत्याह—श्रुतिरिति । बोधिकेति शेषः ।१२।

[ भा॰ ] नापि शब्द इत्याह—श्रुतिरपि॰ । प्रपञ्चे प्रधानकार्यत्वस्यैव श्रुतिरस्ति न चेतनकारणत्वे । यथा—"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।" ( श्वे॰ उ॰ ४।५ ), "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियते" (बृ॰ उ॰ १।४।७) इत्यादिरित्यर्थः । या च "तदैक्षत बहु स्याम्" ( छा॰ उ॰ १।२।३ ) इत्यादिश्चेतनकारणताश्रुतिः, सा सर्गादावुत्पन्नस्य महत्तत्त्वोपाधिकस्य महापुरुषस्य जन्यज्ञानपरा । किं वा बहुभवनानुरोधात् प्रधान एव कूलं पिपतिषतीतिवद् गौणी, अन्यथा "साक्षी चेता केवलो निर्गुणश्च" ( श्वे॰ उ॰ ६।११ ) इत्यादिश्रुत्युक्तापरिणामित्वस्य पुरुषेऽनुपपत्तेरिति ।

अयं चेश्वरप्रतिषेध ऐश्वर्ये वैराग्यार्थमीश्वरज्ञानं विनापि मोक्षप्रतिपादनार्थं च प्रौढिवादमात्रमिति प्रागेव ( सां॰ सू॰ १।९२ ) व्याख्यातम्; अन्यथा जीवव्यावृत्तस्येश्वरनित्यत्वादेर्गौणत्वकल्पनागौरवम् । औपाधिकानां नित्यज्ञानेच्छादीनां महदादिपरिणामानां चाङ्गीकारेण कौटस्थ्याद्युपपत्तेरित्यादिकं ब्रह्ममीमांसायां द्रष्टव्यमिति ।।१२।।

[ भा॰ सा॰ ] नापि शब्द इत्याह—श्रुतिरपीति । अपि नाम अनुमानमपि "अजामेकाम्" इत्यादिश्रुत्या प्रधानकार्यत्वस्यैव प्रपञ्चे बोधनात् । कृतेरपि प्रकृतिपरिणामविशेषत्वेन कृत्याश्रयत्वरूपकर्तृत्वस्याक्षतेश्च । चेतनकर्तृत्वसाधनत्वप्रयोजनकत्वम् । "बहु स्याम्" ( छा॰ उ॰ ६।२।३ ) इति श्रुतिस्तु बहुभावनानुरोधात् प्रधान एव कूलं पिपतिषतीतिवद् गौणी । अयं चेश्वरप्रतिषेध ऐश्वर्यवैराग्यार्थः ।। १२ ।।

## नाविद्याशक्तियोगो निःसङ्गस्य ।। १३ ।।

[ वृ॰ ] अविद्यायोगादात्मनः कर्तृत्वमिति केचित् । तत्राह—नाविद्या॰ । व्यक्तम् ।। १३ ।।

[वृ०सा०] अविद्याशक्तियोगात्कर्तृत्वमिति केचित्तद् दूषयति—नाविद्येति । स्पष्टम् ॥१३॥

[ भा० ] "नाविद्यातो बन्ध" ( सां० सू० १।२० ) इति यत् सिद्धान्तितं प्रथमपादे, तत्र परमतं विस्तरतः प्रघट्टकेन दूषयति—नाविद्या० ।

परे प्राहुः—प्रधानं नास्ति, किन्तु ज्ञाननाश्यानाद्यविद्याख्या शक्तिश्चेतने तिष्ठति, तत एव चेतनस्य बन्धस्तन्नाशे च मोक्ष इति । तत्रेदमुच्यते निःसङ्गतया चेतनस्याविद्याशक्तियोगः साक्षान्न सम्भवतीति । अविद्या ह्यन्यस्मिंस्तदाकारता, सा च विकारविशेषोऽधिकारहेतुसंयोगरूपं सङ्गं विना न सम्भवतीत्यर्थः ॥ १३ ॥

[ भा० सा० ] आत्माश्रिताज्ञानकल्पनयैव स्वप्नवत् सर्वव्यवहारोपपत्तौ व्यर्था प्रधानकल्पनेत्याशङ्कय तद् दूषयति—नेति । परैर्ज्ञाननाश्यानाद्यविद्याख्या शक्तिश्चेतनस्था । तत एव तस्य बन्धस्तन्नाशे च मोक्ष इति, तन्न; निःसङ्गत्वेन श्रुतिसिद्धस्य साक्षात्तद्योगासंभवादित्यर्थः । अविद्यान्यस्मिंस्तद्बुद्धिरूपा, तच्छक्तिश्च तद्वासना, सा च सङ्गं विना नेत्यर्थः ॥ १३ ॥

## तद्योगे तत्सिद्धावन्योन्याश्रयत्वम् ॥ १४ ॥

[ वृ० ] दूषणान्तरमाह—तद्योगे० । अविद्यया विना न सृष्टिः, सृष्ट्या विना नाविद्येत्यन्योन्याश्रयत्वम् ॥ १४ ॥

[ वृ० सा० ] तद्योग इति । किं चाविद्यायोगसिद्धौ सत्यां तद्योगे कर्तृत्वयोगे अन्योन्याश्रयत्वम्, कर्तृत्वासिद्धौ अविद्यायोगादित्यर्थः ॥ १४ ॥

[ भा० ] नन्वविद्यावशादेवाविद्यायोगो वक्तव्यः । तथा चापारमार्थिकत्वान्न तया सङ्ग इति तत्राह—तद्योग० । अविद्यायोगादविद्यासिद्धौ चान्योन्याश्रयत्वमात्माश्रयत्वम्, अनवस्था चेति शेषः ॥ १४ ॥

[ भा० सा० ] नन्वविद्यावशादेवाविद्यायोग इत्यपारमार्थिकत्वान्न तया सङ्गोऽत आह—तद्योग इति । अविद्यायोगेऽविद्यान्तरस्यानिमित्तत्वेन सिद्धावनवस्थेत्यर्थः ॥ १४ ॥

## न बीजाङ्कुरवत् सादिसंसारश्रुतेः ॥ १५ ॥

[ वृ० ] अनादित्वाद् बीजाङ्कुरवन्नान्योन्याश्रयत्वमित्याह—न बीजा० । भवेदेवं यद्यनादिः संसारः, किं तु सादिः संसारः । श्रुतिश्च—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ॥
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ( य० सं० १७।१९)

तस्मात्प्रलये प्रवाहविच्छेद इति ॥ १५ ॥

[ वृ० सा० ] न च कर्तृत्वाविद्ययोरनादित्वमित्याह—नेति । "सदेव सोम्येदमग्र आसीत्" ( छा० उ० ६।२।१ ), "एकमेवाद्वितीयम्" ( छा० उ० ६।२।१ ) इत्यादिश्रुत्या प्रलये संसारस्याभावावगमात् संसारस्य सादित्वम् ॥ १५ ॥

[ भा० ] ननु बीजाङ्कुरवदनवस्था न दोषायेत्याशङ्क्याह—न बीजा०। बीजाङ्कुरवदप्यनवस्था न सम्भवति, पुरुषाणां संसारस्याविद्याद्यखिलानर्थरूपस्य सादित्वश्रुतेः, प्रलयसुषुप्त्यादावभावश्रवणादित्यर्थः। "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" ( बृ० उ० २।४।१२ ) इत्यादिश्रुतिभिर्हि प्रलयादौ बुद्धिवृत्त्यभावेन तदौपाधिकाविद्याविद्याद्यखिलसंसारशून्यं चिन्मात्रत्वं पुरुषाणां सिद्धमिति। तस्मादविद्याप्याविद्यिकीति वाङ्मात्रम् ॥ १५ ॥

[ भा० सा० ] ननु बीजाङ्कुरवत् सा न दोषायेत्यत आह—नेति। "ब्रह्म वा इदमग्र आसीत्" इत्यादिश्रुतिभिः प्रलयादावविद्याद्यखिलसंस्कारशून्यचिन्मात्रत्वस्य पुरुषाणां श्रुतेः। संसारो ह्यविद्याखिलानर्थरूपत्वमेव, पुरुषस्य प्रकृतावेव हि संसारस्यानादित्वश्रवणं तस्मादविद्याप्याविद्यिकीति वाङ्मात्रम् ॥ १५ ॥

## विद्यातोऽन्यत्वे ब्रह्मबाधप्रसक्तेः ॥ १६ ॥

[ वृ० ] अविद्यास्वरूपमाह—विद्यातो०। विद्यातोऽन्यत्वे ब्रह्मणोऽपि विद्यातोऽन्यत्वेऽविद्यात्वं स्यात्। ततश्च ब्रह्मत्वबाध इति ॥ १६ ॥

[ वृ० सा० ] अविद्याया ब्रह्मभिन्नत्वे दूषणमाह—विद्यात इति। विद्यातो ज्ञानस्वरूपाद् ब्रह्मणो विद्याया अन्यत्वे ब्रह्मवादस्य प्रसङ्गः। विविधपरिच्छेदशून्यत्वस्य ब्रह्मणि त्वयाङ्गीकारात्, अविद्यायां ब्रह्मभिन्नत्वे ब्रह्मणोऽप्यविद्याभिन्नत्वे च भेदप्रतियोगित्वानुयोगित्वरूपवस्तुपरिच्छेदापत्तिरिति भावः ॥ १६ ॥

[ भा० ] नन्वस्माकमविद्या पारिभाषिकी, न तु योगोक्तानात्मन्यात्मबुद्ध्यादिरूपा, तथा च भवतां प्रधानवदेवास्माकमपि तस्या अखण्डानादितया पुरुषनिष्ठत्वेऽपि नाऽसङ्गताहानिरित्याशङ्कायां परिकल्पितमविद्याशब्दार्थं विकल्प्य दूषयति-विद्यातो०।

यदि विद्यान्यत्वमेवाविद्याशब्दार्थस्तर्हि तस्य ज्ञाननाश्यतया ब्रह्मण आत्मनोऽपि बाधो नाशः प्रसज्यते, विद्याभिन्नत्वादित्यर्थः॥ १६ ॥

[ भा० सा० ] नन्वस्माकमविद्या पारिभाषिकी भवतां प्रधानवत्। सा चाखण्डानादिः शुक्त्याद्यज्ञानवत्स्वाश्रयालेपिका च, न तूक्तरूपेति पुरुषनिष्ठत्वेऽपि नासङ्गताहानिरत आह—विद्यात इति। यदि विद्यान्यत्वमेवाविद्याशब्दार्थस्तदा तस्य ज्ञाननाश्यत्वे ब्रह्मणोऽपि नाशः स्यात्, तस्यापि विद्याभिन्नत्वादित्यर्थः ॥ १६ ॥

## अबाधे नैष्फल्यम् ॥ १७ ॥

[ वृ० ] युक्त्यन्तरमाह—अबाधे०। यदि विद्ययाऽविद्या न बाध्यते, विद्यैव न भविष्यतीति ॥ १७ ॥

[ वृ० सा० ] किञ्च विद्यया अविद्याया अबाधो बाधो वा ? आद्ये आह-अबाध इति। विद्याया नैष्फल्यापत्तिरित्यर्थः ॥ १७ ॥

[ भा० ] अबाधे० । यदि त्वविद्यारूपमपि विद्यया न बाध्येत, तर्हि विद्या-वैफल्यम्, अविद्यानिवर्तकत्वाभावादित्यर्थः ॥ १७ ॥

[ भा० सा० ] अबाध इति । यद्यविद्यापि ज्ञानेन न बाध्यते तदापि विद्यानैष्फल्य-मविद्यानिवर्तकाभावादित्यर्थः ॥ १७ ॥

## विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥

[ वृ० ] बाध्यत एवेत्यत्राह—जगतोऽप्यविद्यात्वम् ॥ १८ ॥

[ वृ० सा० ] अन्त्ये आह—विद्येति । अविद्याया इव जगतोऽपि बाधः । तथा च जगन्न प्रतीयेतेति भावः ॥ १८ ॥

[ भा० ] पक्षान्तरं दूषयति—विद्या० । यदि पुनर्विद्यया चेतने बाध्यत्वमेवा-विद्यात्वमुच्यते; तथा सति जगतः प्रकृतिमहदाद्यखिलप्रपञ्चस्याप्येवमविद्यात्वं स्यात्। "अथात आदेशो नेति नेति" ( बृ० उ० २।३।६ ), "अस्थूलमनणु" ( बृ० उ० ३।८।८ ) इत्यादिश्रुतिभिर्मिथ्याज्ञानस्येव प्रकृत्यादेरप्यात्मनि बाधितत्वादित्यर्थः। तथा चाखिल-प्रपञ्चस्यैवाविद्यात्वे सत्येकस्य ज्ञानेनाविद्यानाशादन्यैरपि प्रपञ्चो न दृश्येतेति भावः। विद्यानाश्यत्वं चाविद्यात्वं वक्तुं न शक्यते, विद्यानाश्यत्वेन विद्यानाश्यग्रहासम्भवा-दात्माश्रयादिति ॥ १८ ॥

[ भा० सा० ] ननु विद्या ब्रह्मस्वरूपैव, तत्राह—विद्येति । यदि विद्याबाध्यत्वमेवा-विद्यात्वं तदा महदाद्यखिलप्रपञ्चस्याप्येवमविद्यात्वं स्यात्, तस्याप्युपदेशः "अथात आदेशो नेति नेति" ( बृ० उ० २।३।३ ) इति श्रुत्या, तत्त्वज्ञानेन मिथ्याज्ञानस्यैव प्रकृत्यादेरनात्मनि बोधात् । एवं चैकस्य ज्ञानेनाखिलप्रपञ्चनाशादन्यैरपि प्रपञ्चो न दृश्येतेत्यर्थः। तस्मान्न विद्याबाध्यत्वमविद्यात्वम् । अस्मन्मते तु प्रलये पुरुषस्यासंसारित्वेऽपि प्रधानसंयोगाद् पुनर्बन्धः। तत्संयोगे प्राग्भवीयाविवेकवासनादृष्टादि च निमित्तमित्युक्तम् ॥ १८ ॥

## तद्रूपत्वे सादित्वम् ॥ १९ ॥

[ वृ० ] अस्ति जगतोऽप्यविद्यात्वमित्यत्राह—तद्रूपत्वे० । अनादिरियमविद्या। जगतस्तद्रूपत्वेऽविद्यायाः सादित्वम् ॥ १९ ॥

[ वृ० सा० ] तद्रूपत्व इति । पुनस्तद्रूपत्वे जगदभिनवं जायते, इत्यभ्युपगमेऽविद्याया अप्यभिनवाया उत्पत्तिर्वाच्या, तथा चाविद्यायाः सादित्वं स्यात्, एवं चानिर्मोक्षापत्तिरिति भावः ॥ १९ ॥

[ भा० ] तद्रूपत्वे० । भवतु वा यथाकथञ्चिद्विद्याबाध्यत्वमेवाविद्यात्वम्, तथापि तादृशवस्तुनः सादित्वमेव पुरुषेषु, न त्वनादित्वं सम्भवति । "विज्ञानघन एव" ( बृ० उ० २।४।१२ ) इत्याद्युक्तश्रुतिभिः प्रलयादौ पुरुषस्य चिन्मात्रत्वसिद्धेरित्यर्थः। अस्मन्मते च प्रलये पुरुषस्यासंसारित्वेऽपि स्वतन्त्रनित्यप्रधानसंयोगात् पुनर्बन्ध

उपपादितस्तथा प्रधानसंयोगेऽपि प्राग्भवीयाविवेक एव वासनादृष्टादिद्वारा निमित्त-मित्यप्युक्तम्। तस्माद्योगदर्शनोक्तादन्या नास्त्यविद्या, सा च बुद्धिधर्म एव न पुरुषधर्म इति सिद्धम् ॥ १९ ॥

[ भा॰ सा॰ ] तद्रूपत्व इति। तस्माद् योगोक्तातिरिक्ता नास्त्यविद्या, सा च सादिर्बुद्धिधर्म एव न पुरुषधर्म इति सिद्धम्। प्रकृतावविद्याव्यवहारस्तु तद्वत्त्वेन गौणः, अन्यथा ज्ञाननाश्याविद्यात्वस्य तत्र मुख्यत्वे एकमुक्तावन्यैः प्रपञ्चदर्शनापत्तिः। यदप्युक्तम्—अनाद्यविद्याचेतनस्थे, तदपि न; "विज्ञानघन एव" ( बृ॰ उ॰ २।४।१२ ) इत्यादिश्रुत्या पुरुषस्य प्रलये चिन्मात्रत्वसिद्धेस्तन्निष्ठाया अपि तस्याः सादित्वौचित्यात् ॥ १९ ॥

## न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥ २० ॥

[ वृ॰ ] न कर्मणो जगत्कारणत्वम्, स्वभावादेव जगदुत्पद्यत इत्यत्राह—न धर्माप॰। प्रकृतेर्नित्यत्वात्स्वभावस्यैकत्वाद्धर्माभावाद्विचित्रकार्यानुपपत्तिः। तस्माद्धर्मभेदेन कार्यवैचित्र्यम्, न धर्मापलापः ॥ २० ॥

[ वृ॰ सा॰ ] इदानीं धर्मस्य सृष्टिकारणतामाह—नेति। कार्यवैचित्र्यं प्रकृतिमात्रेण न सम्भवति, तस्या एकस्वभावत्वात्, अपितु धर्मवैचित्र्येण। धर्मशब्देन चात्रादृष्टमुच्यते ॥ २० ॥

[ भा॰ ] अत्रैवाध्याये कर्मनिमित्ता प्रधानप्रवृत्तिरिति यदुक्तं तत्र परपूर्वपक्षं समाधत्ते प्रघट्टकेन—न धर्मा॰। अप्रत्यक्षतया धर्मापलापो न सम्भवति, प्रकृतिकार्येषु वैचित्र्यान्यथानुपपत्त्या तदनुमानादित्यर्थः ॥ २० ॥

[ भा॰ सा॰ ] ननु धर्मादिरूपकर्मनिमित्ता प्रधानप्रवृत्तिरित्युक्तम्, तन्न; मानाभावादित्यत आह - नेति। अप्रत्यक्षतया न धर्मापलापः कार्यः। कार्येषु वैचित्र्या-न्यथानुपपत्त्या तदनुमानादित्यर्थः ॥ २० ॥

## श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥

[ वृ॰ ] धर्मसिद्धौ प्रमाणमह—श्रुतिलिङ्गा॰। श्रुतीति शाब्दं प्रमाणं दर्शितम्, लिङ्गेत्यनुमानम्। आदिशब्दाद्योगिप्रत्यक्षं दर्शितम्। एभिर्धर्मसिद्धिः ॥ २१ ॥

[ वृ॰ सा॰ ] न च धर्मे मानाभाव इत्याह—श्रुतीति। लिङ्गमनुमानम्। आदिपदाद्योगि-प्रत्यक्षम् ॥ २१ ॥

[ भा॰ ] प्रमाणान्तरमप्याह—श्रुति॰। "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" (बृ॰ उ॰ ३।२।१३) इत्यादिश्रुतेः, "स्वर्गकामोऽश्वमेधेन यजेत" (आ॰ श्रौ॰ सू॰ १०।१।६ ) इति विध्यादिरूपाल्लिङ्गाद्योगिप्रत्यक्षादिभिश्च तत्सिद्धिरित्यर्थः ॥ २१ ॥

[ भा॰ सा॰ ] प्रमाणान्तरमाह—श्रुतीति। "पुण्यो वै पुण्येन भवति पापः पापेन" ( बृ॰उ॰ ३।२।१२ ) इत्यादि श्रुतेः। "स्वर्गकामोऽश्वमेधेन यजेत" ( आ॰श्रौ॰सू॰ १०।१।६ ) इत्यादिविधेर्लिङ्गाद्योगिप्रत्यक्षादिभिश्च तत्सिद्धिरित्यर्थः ॥ २१ ॥

न नियमः प्रमाणान्तरावकाशात् ॥ २२ ॥

[ वृ० ] यदि देशकालयोर्न कारणत्वम्, कथं कश्मीरे कुङ्कुमम्, वसन्ते चूतमुकुलोत्पत्तिरित्याह—न नियमः० । नादृष्टमेव कारणमिति नियमः । किन्त्वदृष्टं सहकारिकारणम्, अन्येषामपि कारणत्वं प्रमाणसद्भावात् ॥ २२ ॥

[ वृ० सा० ] देशकालादीनां कारणत्वमाह—नेति । नादृष्टमेव कारणमिति नियमः अपितु प्रमाणान्तरैस्तत्कारणत्वग्राहकैरन्येषामपि कारणत्ववशादन्यान्यपि ॥ २२ ॥

[ भा० ] प्रत्यक्षाभावाद्धर्मासिद्धिरिति परस्य हेतुमाभासीकरोति—न नियमः० । प्रत्यक्षाभावाद्वस्त्वभाव इति नियमो नास्ति, प्रमाणान्तरेणापि वस्तूनां विषयीकरणादित्यर्थः ॥ २२ ॥

[ भा० सा० ] लौकिकप्रत्यक्षाभावाद् वस्त्वभाव इति नियमोऽपि नेत्याह—नेति । प्रमाणान्तरेणापि वस्तूनां विषयीकरणादित्यर्थः ॥ २२ ॥

उभयत्राप्येवम् ॥ २३ ॥

[ वृ० ] दुःखमयसंसारदर्शनाद् दुरितादृष्टमेवास्त्वित्यत्राह—उभयत्रा० । सुखस्यापि दर्शनाच्छुभादृष्टमेवास्तु ॥ २३ ॥

[ वृ० सा० ] उभयत्रेति । इह लोके परलोके च सर्वमदृष्टजन्यं सुखं दुःखमिश्रितं सुखमिति यावत् ॥ २३ ॥

[ भा० ] धर्मवदधर्ममपि साधयति—उभयत्रा० । धर्मवदधर्मोऽप्येवं प्रमाणानीत्यर्थः ॥ २३ ॥

[ भा० सा० ] धर्मवदधर्मं साधयति—उभयत्रेति । धर्मवदधर्मोऽप्येवं प्रमाणानीत्यर्थः ॥ २३ ॥

अर्थात्सिद्धिश्चेत्समानमुभयोः ॥ २४ ॥

[ वृ० ] दुःखाभावे सुखाभिमानात्तत्रादृष्टशब्दो मुख्यः, सुखकारणे गौणः, इत्यत्राह—अर्थात्सिद्धि० । एतद्विपरीतसंभवादुभयोस्तुल्यत्वमिति ॥ २४ ॥

[ वृ० सा० ] अर्थादिति । अर्थाल्लोकोत्तराद् विषयाद् दिव्याङ्गनादिरूपात् सिद्धिः उत्पत्तिः सुखस्य, परलोक इति शेषः । तथाच न दुःखमिश्रितत्वं सुखस्येति चेत्; उभयोरिहलोकपरलोकयोः समानमेतत् । इहलोकेऽपि हि सुखकारणभूताः सन्त्येव विषयाः, किन्तु सुखं प्रति धर्मः कारणम् । स च हिंसादिमिश्रितत्वान्न सुखं दुःखामिश्रितं जनयितुमीष्टे, अपि तु दुःखमिश्रितमेवेति भावः ॥ २४ ॥

[ भा० ] ननु विध्यन्यथाऽनुपपत्तिरूपयाऽर्थापत्त्या धर्मसिद्धिः, सा च नास्त्यधर्म इति कथं श्रौतलिङ्गातिदेशोऽधर्म इति चेन्न; यतः समानमुभयोर्धर्माधर्मयोर्लिङ्गमस्ति 'परदारान्न गच्छेत्' इति निषेधविध्यादेरेवाधर्मे लिङ्गत्वादित्यर्थः ॥ २४ ॥

[ भा० सा० ] अर्थादिति । ज्योतिष्टोमेनेत्यादिविध्यनुपपत्त्या धर्मवत्परदारान्न गच्छेदिति निषेधानुपपत्त्याऽधर्मस्यापि सिद्धिरित्यर्थः ॥ २४ ॥

## अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥

[ वृ० ] धर्मादीनामात्मधर्मत्वं निषेधति—अन्तःकरण० । बुद्धिधर्मत्वम् । आत्मधर्मत्वे निःसङ्गत्वश्रुतिविरोधः ॥ २५ ॥

[ वृ० सा० ] आत्मधर्मत्वं धर्मादीनां दूषयति—अन्तःकरणेति । "असङ्गो ह्ययं पुरुषः" ( बृ० उ० ४।३।१५ ) इति श्रुतेरिति भावः ॥ २५ ॥

[ भा० ] ननु धर्मादिकं चेत् स्वीकृतं तर्हि पुरुषाणां धर्मादिमत्त्वेन परिणामाद्यापत्तिरित्याशङ्क्यां परिहरति—अन्तःकरण० । आदिशब्देन वैशेषिकशास्त्रोक्ताः सर्वं आत्मविशेषगुणा गृह्यन्ते । न चैवं प्रलयेऽन्तःकरणाभावाद्धर्मादिकं क्व तिष्ठत्विति वाच्यम्; आकाशवदन्तःकरणस्यात्यन्तविनाशाभावात् । अन्तःकरणं हि कार्यकारणोभयरूपमिति प्रागेव व्याख्यातम् । अतः कारणावस्थे प्रकृत्यंशविशेषेऽन्तःकरणे धर्माधर्मसंस्कारादिकं तिष्ठतीति ॥ २५ ॥

[ भा० सा० ] तद् धर्मादिकं न पुरुषनिष्ठमित्याह—अन्तःकरणेति । आदिना वैशेषिकोक्तात्मविशेषगुणा गृह्यन्ते, एतेन धनादिरूपेण पुरुषपरिणामापत्तिरिति निरस्तम् । प्रलयेऽप्यन्तःकरणस्यात्यन्तविनाशाभावात् तत्रैव धर्मादिस्थितिः । अन्तःकरणं च कार्यकारणोभयरूपम् । कारणावस्थं चान्तःकरणं प्रकृत्या सत्त्वविशेषः, तद्रूपे चान्तःकरणे धर्माधर्मसंस्कारादिकं जायते प्रलये च तिष्ठतीति बोध्यम् ॥ २५ ॥

## गुणादीनां नात्यन्तबाधः ॥ २६ ॥

[ वृ० ] अन्यधर्मस्यान्यत्र कार्यदर्शनाद्वरमसत्त्वमेव धर्मादीनामित्यत्राह—गुणादीनां० । यथा पृथिव्यादीनां दृष्टत्वान्नात्यन्तबाधः, तथा गुणादीनां धर्मादीनामपि । अन्यधर्मस्याप्यन्यत्र कार्यकरणं चितिच्छायापत्त्येत्युक्तम् ॥ २६ ॥

[ वृ० सा० ] गुणः किं गुणवति वर्तते गुणरहिते वा ? आद्ये आत्माश्रयः, अन्त्ये गुणादिष्वपि गुणप्रसङ्गः, तस्माद् बाधित एव गुण, एवं कर्माद्यपीति केचिद्वादिनः, तद् दूषयति—गुणादीनामिति । दृष्टत्वादिति शेषः ॥ २६ ॥

[ भा० ] स्यादेतत्—प्रकृतिकार्यवैचित्र्याच्छ्रुत्यादेश्च धर्मासिद्धिरिति यदुक्तम्, तदयुक्तम्; त्रिगुणात्मकप्रकृतेस्तत्कार्याणां च भवतां श्रुत्यैव बाधात्—"साक्षी चेता केवलो निर्गुणश्च" ( श्वे० उ० ६।११ ), "अथात आदेशो नेति नेति" ( बृ० उ० २।३।६ ), "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" ( क० उ० १।३।१५ ) इत्यादिना, "न निरोधो न चोत्पत्तिः" ( मा० का० २।३२ ), "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छा० उ० ६।१।४ ) इत्यादिना चेति । तदेतत् परिहरति—गुणादीनां० ।

गुणानां सत्त्वादीनां तद्धर्माणां च सुखादीनां तत्कार्याणामपि महदादीनां स्वरूपतो नास्ति बाधः, किन्तु संसर्गत एव चेतने बाधोऽग्नेरस्यौष्ण्यबाधवत्। तथा कालत एवावस्थादिभिर्बाधो गुणाद्यखिलपरिणामिन इत्यर्थः ॥ २६ ॥

[ भा० सा० ] तदेवाह—गुणादीनामिति। गुणानां सत्त्वादीनां तद्धर्माणां सुखादीनां तत्कार्याणां च महदादीनां नात्यन्तबाधः, कार्यरूपस्य बाधेऽपि कारणरूपेणाबाधादित्यर्थः ।२६।

## पञ्चावयवयोगात् सुखसंवित्तिः ॥ २७ ॥

[ वृ० ] दुःखाभावः सुखमिति तत्प्रतिषेधार्थमाह—पञ्चावयव०। यद्यपि मानसप्रत्यक्षेण भावरूपं सुखमवसीयते, तथापि परबोधाय प्रमाणमप्युक्तम्। पञ्चावयवयोगादिति द्व्यवयवमनुमानमिति निरस्तम्। प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनमिति पञ्च। अनेन पक्षधर्मत्वं सपक्षसत्त्वं विपक्षाद्व्यावृत्तिरसत्प्रतिपक्षत्वमबाधितविषयत्वं च सिद्धम् ॥ २७ ॥

[ वृ० सा० ] सुखे प्रमाणमाह—पञ्चेति। पञ्च इन्द्रियाण्यवयवा इव यस्य मनसस्तस्य योगात् सन्निकर्षात् सुखसंवित्तिः सुखज्ञानम्। तथा च मानसप्रत्यक्षविषयः सुखमिति भावः ॥ २७ ॥

[ भा० ] कुतः पुनः स्वरूपत एव बाधो न भवति स्वप्नमनोरथादिपदार्थवदित्याकाङ्क्षायामाह—पञ्चावयव०। अत्र विशिष्य पक्षीकरणाय विवादविषयैकदेशस्य सुखमात्रस्य ग्रहणं सर्वविषयोपलक्षकम्। सुखादिसंवित्तिरिति पाठस्तु समीचीनः। पञ्चावयवाश्च न्यायस्य प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि, तेषां योगान्मेलनात् सुखाद्यखिलपदार्थसिद्धिरित्यर्थः।

प्रयोगश्चायम्—सुखं सत्, अर्थक्रियाकारित्वात्, यद्यदर्थक्रियाकारि तत् तत् सत्, यथा चेतनः, पुलकादिरूपार्थक्रियाकारि च सुखम्, तस्मात् सदिति। चेतनानां चाविकारित्वेऽपि विषयप्रकाश एवार्थक्रियेति। नास्तिकं प्रति च व्यतिरेक्यनुमानं कर्तव्यम्, तत्र च शशशृङ्गादिर्दृष्टान्त इति ॥ २७ ॥

[ भा० सा० ] नन्वत्यन्तबाध एवास्तु स्वप्नमनोरथादिपदार्थवदित्यत आह—पञ्चेति। प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवात्परार्थानुमानात् सुखादीनां सत्त्वसंवित्तिरित्यर्थः। प्रयोगश्च सुखादिकं सत्, अर्थक्रियाकारित्वात्, यद्यदर्थक्रियाकारित्वं तत्तत् सत्, यथा चेतनः। पुलकादिरूपार्थक्रियाकारि च सुखादिकम्, तस्मात्सदिति चेतनानामविकारित्वेऽपि विषयप्रकाश एवार्थक्रियेति। नास्तिकं प्रति च व्यतिरेक्यनुमानं कार्यम्, तत्र च शशशृङ्गादिर्दृष्टान्तः ॥२७॥

## न सकृद्ग्रहणात्संबन्धसिद्धिः ॥ २८ ॥

[ वृ० ] सकृद्दर्शनान्न व्याप्तिरित्याह—न सकृद्०। स्वप्रतीतिविरोधात्। तथा च वह्निरासभयोः सकृद्दर्शनादनुमानं स्यात्। नैवं प्रतीयत इति ॥ २८ ॥

[ वृ० सा० ] अथ व्याप्तिः किं सकृत्सहचारदर्शनाद् गृह्यते, उत भूयः ? आद्ये वह्निरासभयोरपि व्याप्तिगृं ह्येत, तथा च रासभादपि वह्न्यनुमानापत्तिः। नान्त्यः, शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्वयोर्हीरके व्यभिचारात्। तस्मान्नानुमानं नागमप्रमाणं सुवचमिति केचित्, तद् दूषयति—नेति। व्यभिचारादर्शनसहकृतं सहचारदर्शनं व्याप्तिग्राहकम्, तच्च सकृद् भूयो वेति नादर इति भावः। सम्बन्धसिद्धिर्व्याप्तिग्रहणम् ॥ २८ ॥

[ भा० ] प्रत्यक्षातिरिक्तं प्रमाणमेव न भवति, व्याप्यत्वाद्यसिद्धेरिति चार्वाकः पुनः शङ्कते—न सकृद्०। सकृत् सहचारग्रहणात् सम्बन्धो व्याप्तिर्न सिद्ध्यति। भूयस्त्वं चाननुगतम्। अतो व्याप्तिग्रहासम्भवान्नानुमानेनार्थसिद्धिरित्यर्थः ॥ २८ ॥

[ भा० सा० ] ननु व्याप्तिज्ञानासंभवादनुमानं प्रमाणमेव नेति शङ्कते—नेति। सकृत् सहचारग्रहा व्याप्तिर्न सिद्ध्यति, भूयस्त्वं चाननुगतमतो नानुमानेनार्थसिद्धिरित्यर्थः ॥ २८ ॥

## नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥

[ वृ० ] केयं व्याप्तिरित्यत्राह—नियत०। उभयोरिति समव्याप्तिकयोः कृतकत्वानित्यत्वयोः। एकतरस्य विषमव्याप्तिकस्य धूमस्येति। तथा च—

यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥ २९ ॥

[ वृ० सा० ] व्याप्तिस्वरूपमाह—नियतेति। धर्म आधेयम्, नियतमाधेयसाहित्यं व्याप्तिरिति सम्बन्धः, तच्च समव्याप्तिके स्थले प्रमेयत्वाभिधेयत्वयोरुभयोः। विषमव्याप्तिके एकतरस्य धूमादेरिति ॥ २९ ॥

[ भा० ] समाधत्ते—नियत०। धर्मसाहित्यं धर्मतायां साहित्यम्, सहचार इति यावत्। तथा चोभयोः साध्यसाधनयोरेकतरस्य साधनमात्रस्य वा नियतोऽव्यभिचरितो यः सहचारः स व्याप्तिरित्यर्थः। उभयोरिति समव्याप्तिपक्षे प्रोक्तम्, नियमश्चानुकूलतर्केण ग्राह्य इति न व्याप्तिग्रहासम्भव इति भावः ॥ २९ ॥

[ भा० सा० ] समाधत्ते—नियतमिति। धर्मसाहित्यं धर्मयोः साहित्यसहचारः, सामानाधिकरण्यमिति यावत्। एवं चोभयोः साध्यसाधनयोरेकतरस्य वा साधनमात्रस्य नियतमव्यभिचारित्वं यत्सामानाधिकरण्यं सा व्याप्तिरित्यर्थः। उभयोरिति समव्याप्तिपक्षे। नियमश्चानुकूलतर्कग्राह्य इति न व्याप्तिग्रहासम्भव इति भावः ॥ २९ ॥

## न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥

[ वृ० ] तत्त्वान्तरं व्याप्तिरिति, तन्निराकरोति—न तत्त्वान्तरं०। तत्त्वान्तरस्वीकारेऽप्यव्यभिचारो वक्तव्यः। स एवास्तु किं वस्तुकल्पनयेति ॥ ३० ॥

[ वृ० सा० ] व्याप्तिः पदार्थान्तरमिति मतं दूषयति—नेति। व्याप्तेस्तत्त्वान्तरत्वेऽपि यत्र व्याप्तिस्तस्याव्यभिचार आवश्यक एवेति, स एव कुतो न व्याप्तिरिति भावः ॥ ३० ॥

[भा० ] व्याप्तिर्वक्ष्यमाणशक्त्यादिरूपं पदार्थान्तरं न भवतीत्याह—न तत्त्वा०। नियतधर्मसाहित्यातिरिक्ता व्याप्तिर्न भवति, व्याप्तित्वाश्रयस्य वस्तुनोऽपि कल्पनाप्रसङ्गात्। अस्माभिस्तु सिद्धवस्तुन एव व्याप्तित्वमात्रं क्लृप्तमित्यर्थः ॥ ३० ॥

[भा० सा० ] व्याप्तिः पदार्थान्तरं नेत्याह—नेति। व्याप्तित्वाश्रयस्य वस्तुनोऽपि कल्पनाप्रसङ्गात्। अस्माभिस्तु सिद्धवस्तुनो व्याप्तित्वमात्रमुभयक्लृप्तमेव कल्प्यत इति भावः॥३०॥

## निजशक्त्युद्भवमित्याचार्याः ॥ ३१ ॥

[वृ० ] स्वमतमाह—निजशक्त्यु०। अस्ति वह्निधूमयोर्निजा शक्तिः। सा द्वयोर्दर्शनेन गृह्यते। सैव व्याप्तिरिति ॥ ३१ ॥

[वृ० सा० ] निजेति। निजा सहजा या शक्तिस्तदुद्भवं नियतं वह्निसाहित्यं धूमे इत्याचार्याः। बहुवचनेन स्वाभिमतत्वं ज्ञापयति ॥ ३१ ॥

[भा० ] परमतमाह—निजशक्त्यु०। अपरे त्वाचार्या व्याप्यस्य स्वशक्तिजन्यं शक्तिविशेषरूपं तत्त्वान्तरमेव व्याप्तिरित्याहुः। निजशक्तिमात्रं तु यावद्द्रव्यस्थायितया न व्याप्तिः, देशान्तरगतस्य धूमस्यापि वह्न्यव्याप्यत्वात्। देशान्तरगमनेन च सा शक्तिर्नश्यत इति नोक्तलक्षणेऽतिव्याप्तिः। स्वमते तूत्पत्तिकालावच्छिन्नत्वेन धूमो विशेषणीय इति भावः ॥ ३१ ॥

[भा० सा० ] तत्त्वान्तरमतं दर्शयति—निजेति। व्याप्यस्य स्वशक्तिजन्यं शक्तिविशेषरूपं तत्त्वान्तरमेव व्याप्तिरित्याहुराचार्या इत्यर्थः। निजशक्तिमात्रं तु यावद्द्रव्यस्थायितया न व्याप्तिः, देशान्तरगतस्य धूमस्य वह्न्यव्याप्यत्वात्। देशान्तरगमनेन सा शक्तिर्नश्यत इति न दोषः। स्वमते तूत्पत्तिकालदेशावच्छिन्नत्वेन धूमो विशेषणीय इति भावः ॥ ३१ ॥

## आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥

[वृ० ] एकदेशिमतमाह—आधेय०। यदि निजा शक्तिः, अव्युत्पन्नस्यापि वस्तुनो दर्शनात् 'अत्रायं शक्तः' इति ज्ञानं स्यात्। न चैवम्। तस्मादाधेयशक्तिर्वाच्येति॥

[वृ० सा० ] आधेयेति। आधेयशक्त्या योगे सम्बन्धे सति साहित्यमिति शेषः, तथा च साहित्यमाधेयशक्त्युद्भवमिति। पञ्चशिख इत्येकवचनेन परमतमेतदिति सूचयति ॥ ३२ ॥

[भा० ] आधेय०। बुद्ध्यादिषु प्रकृत्यादिव्याप्यताव्यवहारादाधारताशक्तिर्व्यापकताऽऽधेयताशक्तिमत्त्वं च व्याप्यत्वमिति पञ्चशिख इत्यर्थः ॥ ३२ ॥

[भा० सा० ] आधेयेति। बुद्ध्यादिषु प्रकृत्यादिव्याप्यताव्यवहारादाधारनिरूपिताधेयताशक्तिरेव व्याप्तिरित्यर्थः ॥ ३२ ॥

## न स्वरूपशक्तिनियमः पुनर्वादप्रसक्तेः ॥ ३३ ॥

[वृ० ] युक्तिमाह—न स्वरूप०। यदि स्वरूपं शक्तिः, शक्तो मल्ल(न्त्र) इति पुनरुक्तं स्यात् ॥ ३३ ॥

[ वृ० सा० ] प्रसङ्गात् शक्तेः शक्तपदार्थरूपतां निरस्यति—नेति। स्वरूपं चासौ शक्तिश्चेति स्वरूपशक्तिः, तया नियमो न व्याप्तिः, किन्तु अतिरिक्तया शक्त्या। शक्तेर्नातिरिक्तत्वे दूषणमाह—पुनर्वादप्रसक्तेः, शक्तो मन्त्र इत्यादौ पुनरुक्ततापत्तेरित्यर्थः। ३ ॥

[ भा० ] नन्वाधेयशक्तिः किमर्थं कल्प्यते, व्याप्यस्य वस्तुनः स्वरूपशक्तिरेव व्याप्तिरस्तु, तत्राह—न स्वरूप०। स्वरूपशक्तिस्तु नियमो व्याप्तिर्न भवति, पौनरुक्त्यप्रसङ्गात्। घटः कलश इतिवद् बुद्धिर्व्याप्येत्यत्राप्यर्थाभेदेनेत्यर्थः। स्वरूपमिति वक्तव्ये शक्तिपदोपादानं व्याप्तेर्व्याप्यधर्मतोपपादनाय ॥ ३३ ॥

[ भा० सा० ] ननु व्याप्यस्य वस्तुनः स्वरूपशक्तिरेव व्याप्तिरस्त्वत आह—नेति। स्वरूपशक्तिर्न नियमो व्याप्तिः, पुनर्वादः पौनरुक्त्यं तत्प्रसङ्गात्। बुद्धिर्व्याप्येत्यस्य बुद्धिर्बुद्धित्ववतीत्यर्थादिति भावः ॥ ३३ ॥

## विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥

[ वृ० ] युक्त्यन्तरमाह—विशेषणा०। शक्तो देवदत्त इति प्रत्ययो न स्यात्, किन्तु देवदत्तो देवदत्त इति ॥ ३४ ॥

[ वृ० सा० ] विशेषणेति। देवदत्तो देवदत्त इतिवच्छक्तो मन्त्र इति विशेषणमनर्थकं स्यात् ॥ ३४ ॥

[ भा० ] पौनरुक्त्यं स्वयमेव विवृणोति—विशेषणा०। पूर्वसूत्र एव व्याख्यातप्रायमिदम् ॥ ३४ ॥

[ भा० सा० ] तदेवाह—विशेषणेति। स्पष्टम् ॥ ३४ ॥

## पल्लवादिष्वनुपपत्तेः ॥ ३५ ॥

[ वृ० ] अपरां युक्तिमाह—पल्लवादि०। पल्लवादिषु स्वरूपस्य तादवस्थ्यादप्रयुक्तेऽपि मन्त्रे विषयापनोदनं स्यात् ॥ ३५ ॥

[ वृ० सा० ] पल्लवादिष्विति। पल्लवादिस्वरूपस्य मन्त्रप्रयोगात्पूर्वमपि सत्त्वेन मन्त्रप्रयोगादृतेऽपि विषयनोदनादि स्यात् ॥ ३५ ॥

[ भा० ] दूषणान्तरमाह—पल्लवा०। पल्लवादिषु वृक्षादिव्याप्यताऽस्ति, स्वरूपशक्तिमात्रं तु तस्य लक्षणं न सम्भवति। छिन्नपल्लवेऽपि स्वरूपशक्तेरनपायेन तदानीमपि व्याप्यतापत्तेरित्यर्थः। आधेयशक्तिस्तु छेदकाले विनष्टेति न तदानीं व्याप्तिरिति भावः ॥ ३५ ॥

[ भा० सा० ] ननु बुद्धित्वस्यैव व्याप्तित्वेन भावान्न पौनरुक्त्यमत आह—पल्लवादिष्विति। पल्लवानां छिन्नत्वेऽपि तेषां स्वरूपशक्त्यनपायेन तदानीमपि वृक्षादिव्याप्यत्वापत्तेः। आधेयशक्तिस्तु छेदकाले नष्टेति न दोषः ॥ ३५ ॥

**आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥ ३६ ॥**

[ वृ० ] समाधानमाह—आधेयशक्ति० । निजा चासौ शक्तिश्चेति निजशक्तिः, न तु स्वस्वरूपमेव शक्तिः । तथा चाधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायत्वात् । तथा च शक्तेरविशेषादाधेयशक्तियोगो वा निजशक्तियोगो वेति समानो न्यायः । यच्च वस्तुग्रहणे प्रथमं न गृह्यते, चित्रशक्तित्वात्पदार्थानाम्, यथा स्थितोऽपि पितापुत्रसंबन्धो विनोपदेशान्न गृह्यते । अत एवोक्तं 'निजशक्त्युद्भवम्' (सां० सू० ५।३१) इति ॥ ३६ ॥

[ वृ० सा० ] तर्ह्याधेयशक्तिरेवास्तु किं सहजशक्त्येति चेत्; तत्राह—आधेयेति । यथान्वयव्यतिरेकाभ्यां शास्त्रेण च पल्लवादिषु व्रीह्यादिषु चाधेयशक्तिसिद्धिस्तथैवान्वयव्यतिरेकाभ्यां तत्तद्वस्तुषु शास्त्रेण च तत्तत्कर्मभेदेषु शक्तिसिद्धिः । ३६ ॥

[ भा० ] ननु किं पञ्चशिखेन निजशक्त्युद्भवो व्याप्तिरेव नोच्यते, तर्हि धूमस्य वह्न्याधेयत्वाभावाद्वह्न्यव्याप्यतापत्तिरिति, तत्राह—आधेय० ।

आधेयशक्तेर्व्याप्तिसिद्धौ निजशक्त्युद्भवोऽपि व्याप्तित्वेन सिद्ध एव समानन्यायात्, युक्तिसाम्यादित्यर्थः । अननुगमस्तु नानार्थशब्दवन्न दोषाय । एवं स्वमतेऽपि नानाविधसहचारा एव व्याप्तयो बोध्याः । न चैवमप्यनुमितिहेतुत्वे व्याप्तीनामननुगमः स्यादिति वाच्यम्; तृणारणिमण्यादिवत् कार्यगतवैजात्याद्युपपत्तेरिति । पञ्चावयवयोगाद् गुणादिसिद्धिरिति यदुक्तं तदुपपादनाय व्याप्तिनिर्वचनेनानुमानप्रामाण्ये बाधकमपास्तम् ॥ ३६ ॥

[ भा० सा० ] नन्वाधेयशक्तेर्व्याप्तित्वे गन्धादेः पृथिवीत्वाधेयत्वाभावात् पृथिवीत्वाद्यव्याप्यतापत्तिरत आह—आधेयेति । आधेयशक्तेर्व्याप्तित्वसिद्धौ निजशक्त्युद्भवोऽपि व्याप्तित्वेन सिद्ध एव, समानयुक्तेः । व्याप्तिशब्दस्तु नानार्थ एव । कार्यगतवैजात्याङ्गीकारेणानुमितिहेतुत्वे न व्यभिचार इति भावः ॥ ३६ ॥

**वाच्यवाचकसंबन्धः शब्दार्थयोः ॥ ३७ ॥**

[ वृ० ] पदपदार्थयोस्तादात्म्यं निषेधयति—वाच्यवाचक० । तादात्म्यपक्षे घटोऽपि श्रोत्रग्राह्यः स्यात्, शब्दोऽपि चाक्षुषो भवेत्, अग्न्याद्युच्चारणे मुखदाहादिप्रसङ्ग इति ॥ ३७ ॥

[ वृ० सा० ] शब्दार्थयोस्तादात्म्यं निषेधयति—वाच्येति । तादात्म्ये हि घटोऽपि श्रोत्रग्राह्यः स्यात्, शब्दो वा चाक्षुषः स्यात्, अग्निशब्दोच्चारणे मुखदाहादिप्रसङ्गश्च ॥ ३७ ॥

[ भा० ] इदानीं पञ्चावयवरूपशब्दस्य ज्ञानजनकत्वोपपत्तये शब्दशक्त्यादिनिर्वचनेन तदनुपपत्तिरूपं शब्दप्रामाण्ये परेषां बाधकमपास्यते—वाच्यवाचक० । अर्थे वाच्यताख्या शक्तिः, शब्दे च वाचकताख्या शक्तिरस्ति, सैव तयोः सम्बन्धोऽनुयोगितावत् । तज्ज्ञानाच्छब्देनार्थोपस्थितिरित्यर्थः ॥ ३७ ॥

[ भा० सा० ] इदानीं पञ्चावयवरूपशब्दस्य ज्ञानजनकत्वोपपत्तये आह—वाच्येति । स्पष्टम् । अर्थगतं वाच्यत्वमनुयोगी तावत्सम्बन्ध इत्यर्थः । वस्तुतस्तयोः स्वरूपसम्बन्धः, स एव शक्तिः, तस्यैव च शक्तित्वेन ज्ञानं बोधे कारणमिति भावः ॥ ३७ ॥

## त्रिभिः संबन्धसिद्धेः ॥ ३८ ॥

[ वृ० ] अत्र हेतुमाह—त्रिभिः० । त्रिभिः प्रकारैर्व्युत्पत्तिग्रहणात् । आप्तोपदेशात्, यथा 'अयं घटः' इति । वृद्धव्यवहारात्, यथा 'गामानय शुक्लां दण्डेन' इति । अत्र प्रयोजकवृद्धवाक्यात्प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा बालस्य । प्रसिद्धपदसामानाधिकरण्यात् यथा 'पक्षी आम्रं भक्षयति' इति श्रुत्वाऽऽम्रभक्षणार्थं जानाति, पक्षीति तदानीं प्रतिपद्यते ॥ ३८ ॥

[ वृ० सा० ] शक्तिग्रहोपायमाह—त्रिभिरिति । आप्तोपदेशेन यथायं घट इति, वृद्धव्यवहारेण यथा गामानयेत्यादौ, प्रसिद्धपदसामानाधिकरण्येन यथा सहकारतरौ मधुरं पिको रौतीत्यादौ ॥ ३८ ॥

[ भा० ] शक्तिग्राहकाण्याह—त्रिभिः० । आप्तोपदेशो वृद्धव्यवहारः प्रसिद्धपदसामानाधिकरण्यम्—इत्येतैस्त्रिभिरुक्तसम्बन्धो गृह्यत इत्यर्थः ॥ ३८ ॥

[ भा० सा० ] तद्ग्राहकाण्याह—त्रिभिरिति । आप्तोपदेश-वृद्धव्यवहार-प्रसिद्धपदसामानाधिकरण्यैस्त्रिभिः सम्बन्धग्रह इत्यर्थः ॥ ३८ ॥

## न कार्ये नियम उभयथा दर्शनात् ॥ ३९ ॥

[ वृ० ] कार्ये व्युत्पत्तिरिति नियमं व्युदस्यति – न कार्ये० । कार्ये व्युत्पत्तिर्दृष्टा, यथा 'अहरहः संध्यामुपासीत' इति । सिद्धार्थे च दृष्टा, यथा 'हरिर्देवाधिदेवः' इति । तथा हि विध्यर्थवादमन्त्रात्मका वेदाः । विधौ कार्यतैकार्थसमवेतायामिष्टसाधनतायां प्रामाण्यम् । विधिशक्तेरुत्तम्भकत्वेनार्थवादस्यापि पारम्पर्येण प्रवर्तकत्वात्प्रामाण्यम् । विहितस्मारकत्वेन मन्त्रस्यापि प्रामाण्यम् । यत्तु प्रवृत्तिनिमित्तत्वान्मन्त्रार्थवादयोः प्रामाण्यं न तु प्रतिपादकत्वम्, तन्न; उत्पत्तावस्ति प्रवृत्त्यर्थत्वं ज्ञप्तौ तु सिद्धार्थपरत्वमेव । तस्मात्सिद्धार्थप्रतिपादकयोरप्यर्थवादमन्त्रयोः प्रामाण्यमिति ॥ ३९ ॥

[ वृ० सा० ] कार्यान्विते शक्तिरिति मतं दूषयति—नेति । कार्ये कार्यान्विते नियमः शक्तिनियमः, तत्रैव शक्तिरिति यावत् । कार्ये इव सिद्धे प्रयोगदर्शनात् ॥ ३९ ॥

[ भा० ] न कार्ये० । स च शक्तिग्रहः कार्ये एव भवतीति नियमो नास्ति, लोके कार्यवदकार्येऽपि वृद्धव्यवहारादिदर्शनादित्यर्थः । यथा हि गामानयेत्यादिकार्यपरवाक्याद् वृद्धस्य गवानयनादिव्यवहारो दृश्यते, एवमेव पुत्रस्ते जात इत्यादिसिद्धपरवाक्यादपि पुलकादिव्यवहारो दृश्यत इति । सिद्धार्थशब्दप्रामाण्यसिद्धौ च विवेके वेदान्तप्रामाण्यं सिद्धमित्याशयः ॥ ३९ ॥

[ मा० सा० ] शक्तिग्रहो लिङ्गादिरूपकार्यबोधकघटित एवेति नियमः। कार्ये इवाकार्येऽपि वृद्धव्यवहारदर्शनादित्यर्थः। गामानयेत्यादितो गवानयनादिव्यवहारवत्, पुत्रस्ते जात इति वाक्यात् पुलकादिव्यवहारस्यापि दर्शनादित्यर्थः। सिद्धार्थशब्दप्रामाण्ये च विवेके वेदान्त-प्रामाण्यं सिद्धमित्याशयः ॥ ३९ ॥

## लोकव्युत्पन्नस्य वेदार्थप्रतीतेः ॥ ४० ॥

[ वृ० ] अतीन्द्रियत्वाद्वेदार्थस्य कथमुभयथा व्युत्पत्तिरित्यत्राह—लोक०। "य एव लौकिकास्त एव वैदिकाः" इति सामान्यादिहापि व्युत्पत्तिरिति ॥ ४० ॥

[ वृ० सा० ] ननु वेदे कार्यान्विते शक्तिरस्तु ? तत्राह—लोके इति। "य एव लौकिकास्त एव वैदिकाः" इति न्यायादिति भावः ॥ ४० ॥

[ भा० ] ननु भवतु लोके सिद्धे शक्तिग्रहोऽर्थप्रत्ययादिदर्शनात्, वेदे तु कथं भविष्यत्यकार्यबोधनवैयर्थ्यादिति; तत्राह—लोके०। लोके शब्दशक्तिव्युत्पन्नस्य पुरुषस्य तदनुसारेणैव वेदार्थप्रतीतिः। नहि लोके शक्तिर्भिन्ना वेदे च भिन्ना—'य एव लौकिकास्त एव वैदिकाः' इति न्यायात्। अतो लोके सिद्धार्थपरत्वसिद्धौ वेदेऽपि तत् सिद्ध्यतीत्यर्थः ॥ ४० ॥

[ मा० सा० ] ननु सिद्धबाधके वेदे कथं शक्तिग्रहः ? लोके त्वर्थप्रतीतिदर्शनात् सम्भवत्यपि सिद्धे शक्तिग्रहो न तु वेद इत्यत आह—लोक इति। "य एव लौकिकास्त एव वैदिकाः" इति न्यायादित्यर्थः। सिद्धविवेकप्रतिपादनस्य चाविवेकनिवृत्तिद्वारा मोक्षः फलं वेदे। यथा लोके पुत्रस्ते जात इत्यादिप्रतिपादनस्य हर्षादि फलमितिवत् ॥ ४० ॥

## न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ॥ ४१ ॥

[ वृ० ] भवेदेवम्, यदि वेदस्य पौरुषेयत्वं स्यात्, न चैवमित्याह—न त्रिभि०। ईश्वरस्य निराकृतत्वात्, अन्यस्यासंभवात्, भ्रान्तेः पुरुषधर्मत्वेनाप्तत्वानिश्चयाद्वेदस्या-प्रामाण्यापत्तेरिति ॥ ४१ ॥

[ वृ० सा० ] अथ वेदप्रामाण्यायाह—नेति। न वेदस्याप्रामाण्यमपौरुषेयत्वात्। तच्च त्रिभिर्हेतुभिरीश्वरस्य निराकरणेन अन्यस्यासम्भवेन भ्रान्तेः पुरुषधर्मत्वेनाप्तत्वानिश्चयेनेति। नन्वस्तु कश्चिद्विशिष्टो जीवः कर्ता, तत्राह—तदर्थस्य वेदार्थस्य स्वर्गयागयोः साध्यसाधन-भावादिरूपस्येन्द्रियाद्यगोचरत्वात् ॥ ४१ ॥

[ भा० ] अत्र शङ्कते—न त्रिभि०। ननु त्रिभिराप्तोपदेशादिभिर्वेदशब्देन शक्तिग्रहः सम्भवति, वेदस्यापौरुषेयत्वेन तदर्थेष्वाप्तोपदेशाभावात्। तथा वेदार्थस्या-तीन्द्रियतया तत्र वृद्धव्यवहारस्य प्रसिद्धपदसामानाधिकरण्यस्य च ग्रहीतुमशक्य-त्वादित्यर्थः ॥ ४१ ॥

[ मा० सा० ] तदवैयर्थ्यं शङ्कते—नेति। अपौरुषेयत्वेनाप्तोपदेशासंभवः। तदर्थस्या-तीन्द्रियतया तत्र वृद्धव्यवहाराद्यसम्भव इत्यर्थः ॥ ४१ ॥

## न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥ ४२ ॥

[ वृ॰ ] वेदाप्रामाण्ये यागादावनाश्वास इति वेदप्रामाण्यप्रतिपादनार्थमाह— न यज्ञादेः॰। वैशिष्ट्यं कालदेशपात्रापेक्षया। तन्निरपेक्षत्वे न स्वरूपतो धर्मत्वम्। अन्यथाऽशुद्धकाले म्लेच्छदेशे महापातकिभिः कृता यज्ञादयो धर्महेतवः स्युः। न चैवम् ॥ ४२ ॥

[ वृ॰ सा॰ ] ननु धर्मो वेदार्थः; स च यागदधिशुक्रादिरूपो नातीन्द्रियस्तत्राह—नेति। न यागादिमात्रं धर्मः, शूद्रकृतयागादेरपि धर्मतापत्तेः, किन्तु स्वर्गसाधनत्वावच्छिन्नः। स चातीन्द्रिय एव, कुतः वैशिष्ट्यात्। अधिकारिदेशकालादिवैशिष्ट्यं हि स्वर्गसाधनत्वांश एवोपयोगि न तु यागादिस्वरूपे ॥ ४२ ॥

[ भा॰ ] तत्रातीन्द्रियार्थत्वमादौ निराकरोति—न यज्ञादेः॰। यदुक्तं तन्न; यतो देवतोद्देश्यकद्रव्यत्यागादिरूपस्य यज्ञदानादेः स्वरूपत एव धर्मत्वं वेदविहितत्वं वैशिष्ट्यात् प्रकृष्टफलकत्वात्। यज्ञादिकं चेच्छादिरूपत्वान्नातीन्द्रियम्। न तु यज्ञादिविषयकापूर्वस्य धर्मत्वं येन वेदविहितस्यातीन्द्रियता स्यादित्यर्थः। ननु तथापि देवताद्यतीन्द्रियार्थघटितत्वमस्तीति चेन्न; अतीन्द्रियेष्वपि पदार्थतावच्छेदकेन सामान्यरूपेण प्रतीतेर्वक्ष्यमाणत्वादिति ॥ ४२ ॥

[ भा॰ सा॰ ] वेदमात्रप्रसिद्धशब्दविषया शङ्का, अतीन्द्रियार्थत्वं निराकरोति—नेति। उक्तं न, यतः इच्छादिरूपस्य यज्ञदानादेः स्वरूपत एव धर्मत्वं वेदविहितत्वं वैशिष्ट्यात् प्रकृष्टफलकत्वात्। इच्छादि च नातीन्द्रियम्। न तु यज्ञादिविषयकापूर्वस्य धर्मत्वम्, येनातीन्द्रियत्वं स्यादिति भावः ॥ ४२ ॥

## निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥ ४३ ॥

[ वृ॰ ] अज्ञस्य फलदर्शनाद्वेदप्रामाण्यमिति व्युत्पत्त्या किं क्रियत इत्यत्राह—निजशक्ति॰। अयं शब्दोऽत्र वाचकत्वेन मुख्योऽत्र गौण इति व्यवच्छिद्यते ॥ ४३ ॥

[ वृ॰ सा॰ ] व्युत्पत्तेरुपयोगमाह—निजेति। बोधकताख्या शब्दस्य सहजा शक्तिर्व्युत्पत्त्याग्रहेण व्यवच्छिद्यते मुख्यगौणताभ्यां व्यवस्थाप्यते। यस्य हि साक्षात्प्रत्ययस्तत्र मुख्यबोधकता, यस्य तु शब्दद्वारा तत्र गौणबोधकतेति। उपयुज्यते चैतत्; मन्त्रस्य मुख्य एवार्थे विनियोगो न गौण इत्यादि निर्णयः ॥ ४३ ॥

[ भा॰ ] यच्चोक्तमपौरुषेयत्वेनाप्तोपदेशाभाव इति, तदपि निराकरोति—निजशक्ति॰। अपौरुषेयत्वेऽपि वेदानां स्वाभाविकी याऽर्थेषु शक्तिरस्ति सैवाऽस्मैवृंद्धपरम्पराभिर्व्युत्पत्त्या 'अस्य शब्दस्यायमर्थः' इत्येवंरूपया व्यवच्छिद्यते शिष्येभ्योऽर्थान्तराद् व्यावर्त्योपदिश्यते, न त्वाधुनिकशब्दवत् स्वयं सङ्केत्यते, येन पौरुषेयत्वापेक्षा स्यादित्यर्थः ॥ ४३ ॥

[ भा० सा० ] अपौरुषयत्वादाप्तोपदेशाभावं निराकरोति—निजेति । अपौरुषेयत्वेऽपि वेदानां स्वाभाविकी याऽर्थेषु शक्तिरस्ति, सैवाप्तैर्वृद्धगुरुपरम्परयाऽस्य शब्दस्यायमर्थ इत्येवंरूपया व्युत्पत्त्या व्यवच्छिद्यते, शिष्येभ्योऽर्थान्तरात् व्यावृत्योपदिश्यत इत्यर्थः । न त्वाधुनिकशब्दवत् स संकथ्यते येन पौरुषेयत्वापेक्षा स्यादिति भावः ॥ ४३ ॥

## योग्यायोग्येषु प्रतीतिजनकत्वात्तत्सिद्धिः ॥ ४४ ॥

[ वृ० ] व्युत्पत्तिसिद्धिः कथं ज्ञायत इत्यत्राह—योग्यायोग्येषु० । प्रसिद्धाप्रसिद्धेषु लौकिकवैदिकपदार्थेषु ज्ञानजनकत्वाद् व्युत्पत्तिसिद्धिः ॥ ४४ ॥

[ वृ० सा० ] शक्तिसिद्धिस्तु अर्थप्रत्ययरूपकार्यानुमेयेत्याह—योग्येति । योग्यायोग्येषु लौकिकवैदिकेषु तत्सिद्धिः ॥ ४४ ॥

[ भा० ] ननु तथाप्यतीन्द्रियदेवताफलादिषु कथं शक्तिग्रहो वैदिकपदानां स्यात्, तत्राह—योग्या० । प्रत्यक्षाप्रत्यक्षेषु पदार्थेषु सामान्यधर्मपुरस्कारेण तत्सिद्धिः शक्तिग्रहो भवति, साधारण्येन पदानां प्रतीतिजनकत्वस्यानुभवसिद्धत्वात् । विशेषस्त्वतीन्द्रियोऽपूर्व एव वाक्यार्थो न च तस्य ग्रहणं प्रागपेक्ष्यत इत्यर्थः ॥ ४४ ॥

[ भा० सा० ] अथातीन्द्रियदेवताफलादिषु कथं शक्तिग्रहोऽत्राह—योग्येति । प्रत्यक्षेष्विवाप्रत्यक्षेष्वप्यर्थेषु पदानां प्रतीतिजनकत्वापरपर्यायपदत्वहेतुताशक्तिग्रहसिद्धिः । सामान्यधर्मेषु पुरस्कारेणेत्यर्थः । इदं पदं क्वचिच्छक्तं पदत्वादिति ॥ ४४ ॥

## न नित्यत्वं वेदानां कार्यत्वश्रुतेः ॥ ४५ ॥

[ वृ० ] वेदनित्यत्वं निराकरोति—न नित्यत्वं० । श्रुतिस्तावत्, "नाहरासीन्न रात्रिरासीत्", "स तपोऽतप्यत, तस्मात्तपस्तेपानात् त्रयो वेदा अजायन्त" ( श० प० १३।५।८।३ ) अनुमानं च कृतकत्वादित्यादि । प्रत्यक्षेणाप्युच्चरितप्रध्वंसिनो वर्णा इति गृह्यन्ते । यस्तु 'स एवायं कवर्णः' इति प्रत्ययः, स सामान्यविषयः ॥ ४५ ॥

[ वृ० सा० ] नेति । "त्रयो वेदा अजायन्त" ( श० प० १३।५।८।३ ) इति श्रुतेः कृतकत्वेनानित्यत्वानुमानाद् वर्णेषूत्पत्तिध्वंसयोः प्रत्यक्षाच्चेति बोध्यम् ॥ ४५ ॥

[ भा० ] शब्दप्रामाण्यप्रसङ्गेनैव शब्दगतं विशेषमवधारयति—न नित्यत्वं० । "स तपोऽतप्यत, तस्मात् तपस्तेमानात् त्रयो वेदा अजायन्त" ( श० प० १३।५।८।३ ) इत्यादिश्रुतेर्वेदानां न नित्यत्वमित्यर्थः । वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि ॥ ४५ ॥

[ भा० सा० ] शब्दप्रामाण्यप्रसङ्गेन तद्गतं विशेषमाह—नेति । "तस्मात्तपस्तेपानाव त्रयो वेदा अजायन्त" इति श्रुतेर्वेदानां न नित्यत्वमित्यर्थः । तन्नित्यतावाक्यानि च तत्प्रवाहानुच्छेदपराणि ॥ ४५ ॥

## न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥ ४६ ॥

[ वृ० ] अनित्यत्वात्पौरुषेया वेदा इति, तत्राह—न पौरुषेयत्वं० । निराकृत ईश्वर इत्यभिसंधिः ॥ ४६ ॥

[ वृ० सा० ] अनित्यत्वे पौरुषेयत्वापत्तिस्तत्राह—नेति । ईश्वरनिराकरणादिति भावः । ४६ ।

[ भा० ] तर्हि किं पौरुषेया वेदाः ? नेत्याह—न पौरुषेयत्वं० । ईश्वर-प्रतिषेधादिति शेषः । सुगमम् ॥ ४६ ॥

[ भा० सा० ] तत्किं पौरुषेया वेदाः ? नेत्याह—नेति । ईश्वरप्रतिषेधादिति भावः ॥ ४६ ॥

## न मुक्तामुक्तयोरयोग्यत्वात् ॥ ४७ ॥

[ वृ० ] अन्य एव कर्ता भविष्यतीत्यत्राह—न मुक्तामुक्त० । मुक्तस्य निःसङ्ग-त्वात्कर्तृत्वायोगाद् अमुक्तस्य युगपदुपादानानभिज्ञत्वादिति ॥ ४७ ॥

[ वृ० सा० ] मुक्तेति । मुक्तस्य निःसङ्गत्वेनामुक्तस्य धर्माद्यनभिज्ञत्वेन कर्तृत्वाद्य-योग्यत्वात् ॥ ४७ ॥

[ भा० ] अपरः कर्ता भवत्वित्याकाङ्क्षायामाह—मुक्तामुक्त० । जीवन्मुक्त-धुरीणो विष्णुर्विशुद्धसत्त्वतया निरतिशयसर्वज्ञोऽपि वीतरागत्वात् सहस्रशाखवेद-निर्माणायोग्यः । अमुक्तस्त्वसर्वज्ञत्वादेवायोग्य इत्यर्थः ॥ ४७ ॥

[ भा० सा० ] अन्यः कर्तास्त्वित्यत आह—मुक्तेति । जीवन्मुक्तधुरीणो विष्णुर्विशुद्ध-सत्त्वतया निरतिशयसर्वज्ञोऽपि वीतरागत्वात् सहस्रशाखनिर्माणायोग्यः । न चासंख्यप्राणिपाल-नादिव्यवहारवदिदमपि तस्यास्त्विति वाच्यम्; स्वयंस्फुरद्वेदेभ्य एवास्य पालनादिप्रवृत्तिश्रुतेः । वेदज्ञानेनैव पालने प्रवृत्तिर्न तु रागात् । अमुक्तस्त्वसर्वज्ञत्वादेवायोग्य इत्यर्थः ॥ ४७ ॥

## नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥ ४८ ॥

[ वृ० ] अपौरुषेयत्वात्तर्हि नित्यत्वम्, अत आह—नापौरुषेय० । स्पष्टम् ॥ ४८ ॥

[वृ० सा०] नेति । नह्यपौरुषेयत्वनित्यत्वयोर्व्याप्तिरस्त्यङ्कुरादीनामपि कार्यत्वात् ।४८।

[ भा० ] नन्वेवमपौरुषेयत्वान्नित्यत्वमेवागतम्, तत्राह—नापौरु० । स्पष्टम् ॥४८॥

[ भा० सा० ] नन्वेवं नित्यत्वमेव स्यादत आह—नेति । स्पष्टम् ॥ ४८ ॥

## तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥ ४९ ॥

[ वृ० ] अङ्कुरादीनामपि सकर्तृकत्वं कार्यत्वादिति पक्षे मुक्तस्य कर्तृत्वमित्य-त्राह—तेषामपि० । अङ्कुरादीनां कर्तुरदृश्यत्वात्प्रत्यक्षबाधः । अयोग्यश्च कर्ता नास्ती-त्युक्तम् । आदिशब्दाद् व्याप्यत्वासिद्धिर्दर्शिता ॥ ४९ ॥

[ वृ० सा० ] तेषामपीति । तद्योगे कर्तृयोगे दृष्टस्याकर्तृत्वस्य बाधः, आदिशब्दाद-दृष्टसकर्तृकत्वकल्पनम् । कार्यत्वहेतुस्त्वप्रयोजक इति भावः ॥ ४९ ॥

[ भा० ] नन्वङ्कुरादिष्वपि कार्यत्वेन घटादिवत् पौरुषेयत्वमनुमेयम्, तत्राह—तेषामपि० । यत् पौरुषेयं तच्छरीरजन्यमिति व्याप्तिर्लोके दृष्टा, तस्या बाधादिरेवं सति स्यादित्यर्थः ॥ ४९ ॥

[ भा० सा० ] ननु कार्यत्वेन तेष्वपि पौरुषेयत्वमनुमेयमत आह—तेषामिति । एवं हि यत्पौरुषेयं तच्छरीरजन्यमिति व्याप्तेर्लोकदृष्टया बाधादिः स्यादित्यर्थः । शरीरं तु न प्रत्यक्ष-बाधात् ॥ ४९ ॥

**यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥ ५० ॥**

[वृ०] अनित्यत्वपौरुषेयत्वयोर्व्याप्तिर्नास्तीत्याह—यस्मिन्नदृष्टे० । यथा घटादिषु, न तु वृक्षादिषु । अदृष्टेऽपीति कर्तर्यदृष्टेऽपि । न कार्यमात्रं सकर्तृकम्, किं तु कार्यविशेषः ॥ ५० ॥

[ वृ० सा० ] किं तर्हि सकर्तृकं तत्राह—यस्मिन्निति । अदृष्टेऽपि कर्तरि अङ्कुरादौ तु न कृतमिति बुद्धिः, किन्तूत्पन्नमिति पौरुषेयं सकर्तृकम् ॥ ५० ॥

[ भा० ] नन्वादिपुरुषोच्चरितत्वाद्वेदा अपि पौरुषेया एवेत्याह—यस्मिन्न० । दृष्ट इवादृष्टेऽपि यस्मिन् वस्तुनि कृतबुद्धिर्बुद्धिपूर्वकत्वबुद्धिर्जायते तदेव पौरुषेयमिति व्यवह्रियत इत्यर्थः । एतदुक्तं भवति—न पुरुषोच्चरिततामात्रेण पौरुषेयत्वं श्वासप्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयत्वव्यवहाराभावात्, किन्तु बुद्धिपूर्वकत्वेन; वेदास्तु निःश्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयम्भुवः सकाशात् स्वयं भवन्ति; अतो न ते पौरुषेयाः । तथा श्रुतिः—"तस्यैतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" ( बृ० उ० २।४।१० ) इत्यादिरिति ॥ ५० ॥

[ भा० सा० ] नन्वादिपुरुषोच्चारितत्वाद् वेदा अपि पौरुषेया इत्यत आह—यस्मिन्निति । दृष्ट इवादृष्टेऽपि कर्तरि यत्र वस्तुनि कृतबुद्धिर्बुद्धिपूर्वकत्वबुद्धिर्जायते, तदेव पौरुषेयमित्यर्थः । पुरुषोच्चारितमात्रेण न पौरुषेयत्वम्, श्वासप्रश्वासयोः पौरुषेयत्वव्यवहारा-भावात् । किन्तु बुद्धिपूर्वकोच्चारितत्वेन वेदा अपि निःश्वसितवदेवादृष्टवशात् स्वयंभोः सकाशाद् भवन्ति, "महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" ( बृ० उ० २।४।१० ) इत्यादिश्रुतेः ॥५०॥

**निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ॥ ५१ ॥**

[ वृ० ] परतः प्रामाण्यं दूषयति—निजशक्त्यु० । निजशक्तिज्ञानजनकसामग्री-मात्राधीनं प्रामाण्यम्, न त्वधिकं गुणमपेक्षते, उत्पत्तिपक्षे । ज्ञप्तिपक्षेऽप्यौत्सर्गिकी ज्ञानग्राहकाणां प्रामाण्यबोधशक्तिः । तदभिव्यक्तेः स्वतः प्रामाण्यम्, झटिति प्रवृत्तेश्च । यत्रापि शङ्कानिवृत्तये प्रामाण्यजिज्ञासार्थं प्रमाणानुसरणम्, तत्रापि कारणदोषोत्सारणाय, न गुणाय । अत एवाप्रामाण्यं परतः, तत्र दोषस्यापि कारणत्वादिति ॥ ५१ ॥

[ वृ० सा० ] निजेति । निजशक्त्यैव ज्ञानजनकनिजशक्त्यैवाभिव्यक्तेः, प्रमात्वस्येति शेषः । स्वतःप्रामाण्यं प्रमात्वावच्छिन्नजनकत्वं न तु गुणाधीनम्, येन वेदप्रामाण्यार्थमाप्तकर्तृकत्वं वेदस्यापेक्ष्येत, अनात्मकर्तृकत्वं पुनरप्रामाण्यप्रयोजकमित्यधिकमाकरे ।। ५१ ।।

[ भा० ] नन्वेवं यथार्थवाक्यार्थज्ञानपूर्वकत्वाच्छुकवाक्यस्येव वेदानामपि प्रामाण्यं न स्यात्, तत्राह—निजशक्त्य० । वेदानां निजा स्वाभाविकी या यथार्थज्ञान-जननशक्तिस्तस्या मन्त्रायुर्वेदादावभिव्यक्तेरुपलम्भादखिलवेदानामेव स्वत एव प्रामाण्यं सिद्ध्यति, न वक्तृयथार्थज्ञानमूलकत्वादिनेत्यर्थः । तथा च न्यायसूत्रम्—"मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यम्" ( २।१।६७ ) इति ।। ५१ ।।

[ भा० सा० ] नन्वेवं यथार्थवाक्यार्थज्ञानापूर्वकत्वाद् वेदानां शुकवाक्यवत्प्रामाण्यं न स्यादत आह—निजेति । निजा स्वाभाविकी या यथार्थज्ञानजन्या शक्तिस्तया मन्त्रायुर्वेदादावभि-व्यक्तेरुपलम्भादखिलवेदानां स्वत एव प्रामाण्यं न वक्तृयथार्थज्ञानमूलकत्वेनेत्यर्थः ।। ५१ ।।

## नासतः ख्यानं नृशृङ्गवत् ।। ५२ ।।

[ वृ० ] बौद्धमतं दूषयति—नासतः० । इदं रजतमित्यसदेव शुक्तिरजततादात्म्यं प्रतिभाति । तन्न; असतोऽर्थक्रियाविरहाज्ज्ञानजनकत्वानुपपत्तेः, यथा मनुष्य-शृङ्गस्य ।। ५२ ।।

[ वृ० सा० ] इदं रजतमित्यादिभ्रमेषु बौद्धमतं दूषयति—नासत इति । असदेव शुक्तिरजततादात्म्यं भातीति यत्, तन्न; असतोऽयं क्रियाविरहितत्वेन जनकत्वानुपपत्तेः, नृशृङ्गस्येव ।। ५२ ।।

[ भा० ] 'गुणादीनाञ्च नात्यन्तबाधः" (सां०सू० ५।२६) इति प्रतिज्ञायां न्यायेन सुखादिसिद्धेरित्येको हेतुरुपन्यस्तः प्रपञ्चितश्च । साम्प्रतं तस्यामेव हेत्वन्तरमाह—नासतः । आस्तां तावत् पञ्चावयवेन सुखादिसिद्धिः । ज्ञानमात्रादपि तत्सिद्धिः । अत्यन्तासत्त्वे सुखादीनां ज्ञानमेव नोपपद्यते, नरशृङ्गादीनामभानादित्यर्थः । तथा च ब्रह्मसूत्रम्—"नाभाव उपलब्धेः" ( २।२।२८ ) इति । शुक्तिरजतस्वप्नमनोरथादौ च मनःपरिणामरूप एवार्थः प्रतीयते, नात्यन्तासन्निति वक्ष्यति ।। ५२ ।।

[ भा० सा० ] गुणादीनां च नात्यन्तबाध इत्यत्र हेत्वन्तरमाह—नेति । अत्यन्तासत्त्वे नृशृङ्गादिवत्सुखादीनां भानमेव न स्यादित्यर्थः । स्वप्नमनोरथशुक्तिरजतादौ च मनः परिणाम-रूप एवार्थो भाति नात्यन्तासन्निति भावः ।। ५२ ।।

## न सतो बाधदर्शनात् ।। ५३ ।।

[ वृ० ] प्राभाकरमतं दूषयति—न सतो० । इदं रजतमिति 'इदम्' इति पुरोवर्तिविषयम्, 'रजतम्' इति स्मरणम् । द्वे इमे संवित्ती । भेदाग्रहात्प्रवृत्तिः । न अभेदग्रहणात्प्रवृत्तिदर्शनात्, नेदं रजतमिति बाधाच्च । न च सम्यग्ज्ञानस्य बाधोऽस्ति । तथा च सत्ययं घट इति ज्ञाने जाते 'नायं घट' इति ज्ञानं स्यात् ।। ५३ ।।

[ वृ० सा० ] प्राभाकरमतं दूषयति—न सत इति। इदमिति रजतमिति च द्वे ज्ञाने, एकं ग्रहणमितरत् स्मरणम्, भेदाग्रहात् प्रवृत्तिर्न भेदगृह्यदिति प्राभाकराः। तत्र नेदं रजतमिति बाधदर्शनादधिकमित्यत्र ॥ ५३ ॥

[ भा० ] नन्वेवं गुणादिरत्यन्तं सन्नेव भवतु तथा च नात्यन्तबाध इत्यन्तपद-वैयर्थ्यमिति; तत्राह—न सतो० ।

अत्यन्तसतोऽपि गुणादेर्भानं न युक्तम्, विनाशादिकाले बाधदर्शनात्। चैतन्ये भासमानस्य जगतश्चैतन्य एव बाधदर्शनाच्च। "अथात आदेशो नेति नेति" ( बृ० उ० २।३।६ ), "नेह नानास्ति किञ्चन" (बृ० उ० ४।४।१९), "यत्र देवा न देवा ……माता न माता" ( ब्रह्मोप० ) इत्यादिश्रुतिभिन्र्यायैश्चेत्यर्थः ॥ ५३ ॥

[ भा० सा० ] ननु गुणादीनामत्यन्तसत्त्वमेवास्तु; अत आह—नेति। नात्यन्तसतो भानम्, प्रतिक्षणपरिणामितया पूर्वपूर्वधर्मः प्रतिक्षणं बाधदर्शनात्। "नेह नानास्ति" ( बृ० उ० ४।४।१९ ) इत्यादिश्रुतिभिरित्यर्थः। चैतन्ये भासमानस्य तत्रैव बाधदर्शनाच्च ॥ ५३ ॥

## नानिर्वचनीयस्य तदभावात् ॥ ५४ ॥

[ वृ० ] वेदान्तिमतं दूषयति—नानिर्वच०। इदं रजतमित्यसत्त्वेऽपरोक्ष-ज्ञानाभावात् सत्यत्वे बाधाभावात्, अतः सदसद्विलक्षणानिर्वचनीत्वम्। तथा च—

न सत्त्वे बाधसंवित्तिर्न भानमसतोऽपि च।
न द्वयात्म्यं विरुद्धत्वादतस्तत्त्वान्तरं कुतः ॥
मायामयत्वसिद्धौ तु प्रपञ्चस्य प्रमाणतः।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् ॥
अद्वैतागमवाक्यं तु तत्त्वावेदकलक्षणम्।
प्रमाणभावं भजते बाधवैधुर्यहेतुतः ॥
तस्मान्मायामयत्वेऽपि युक्ता ब्रह्मणि मानता।
अद्वैतागमवाक्यानामिति तावद् व्यवस्थितम् ॥

तन्न; इदं रजतमित्यनेनैव निर्वचनीयत्वात् 'न सन्नासन्' इत्यनिर्वचनीयत्वेन निर्वचनीयत्वाच्च ॥ ५४ ॥

[ वृ० सा० ] वेदान्तिमतं निराकरोति—नेति। तदभावान्न सत्, नासदित्य-निर्वचनीयत्वेन निर्वचनेनानिर्वचनीयाभावात् ॥ ५४ ॥

[ भा० ] नन्वेवमपि सदसद्भ्यां भिन्नमेव जगद्भवतु, तथाप्यत्यन्तबाधप्रतिषेधो पपत्तिरिति; तत्राह—नानिर्वच०।

सत्त्वेनासत्त्वेन चानिर्वचनीयम्, तादृशस्यापि भानं न घटते तदभावात्, सदसद्भिन्न-वस्त्वप्रसिद्धेरित्यर्थः। दृष्टानुसारेणैव कल्पनाया औचित्यादिति भावः ॥ ५४ ॥

[भा० सा०] ननु सदसद्भिन्नमेवास्तु जगत्, तत्राह—नेति। सत्त्वासत्त्वाभ्यामनिर्वचनीयस्यापि न मानं तदभावात्। तादृशवस्त्वप्रसिद्धेः। दृष्टानुसारेणैव कल्पनौचित्यादिति भावः ॥५४॥

## नान्यथाख्यातिः स्ववचोव्याघातात् ॥ ५५ ॥

[ वृ० ] न्यायमतं दूषयति—नान्यथा०। इदं रजतमिति शुक्तिरेव रजतात्मना भासत इति. न; अन्यदन्यात्मनावभासत इति संविद्विरुद्धम् ॥ ५५ ॥

[ वृ० सा० ] नैयायिकमतं निराकरोति—नान्यथेति। शुक्तिरेव रजतात्मनावभासत इति, रोपितरजतभेदं तत्रावभासत इति च स्ववचसोः परस्परविरोधात् ॥ ५५ ॥

[ भा० ] नन्वेवं किमन्यथाख्यातिरेवेष्टा; नेत्याह—नान्यथा०। अन्यद्वस्त्वन्यरूपेण भासत इत्यपि न युक्तम्, स्ववचोव्याघातात्। अन्यत्रान्यरूपस्य नृशृङ्गतुल्यत्वमन्यथा शब्देनोच्यतेऽन्यथा च तस्य भानमुच्यत इति स्ववच एव व्याहतम्। असतो भानासम्भवस्यान्यथाख्यातिवादिभिरपि वचनादित्यर्थः। पुरोवर्तिन्यसत्त्वेऽन्यत्र तत्सत्ताया भानाप्रयोजकत्वमिति भावः। न च सर्वत्रासतो भाने सामग्री न सम्भवति, सन्निकर्षाद्यभावादित्यतः क्वचित् सत्तामात्रमपेक्ष्यत इति वाच्यम्; अनादिवासनाधाराया एव भ्रमहेतुत्वसम्भवादिति ॥ ५५ ॥

[ भा० सा० ] नन्वेवं किमन्यथाख्यातिरिष्टा ? नेत्याह—नान्यथेति। अन्यद्वस्तु वस्त्वन्तररूपेण भासत इति न युक्तम्, असन्न भासते, सन्निकर्षाद्यभावात्, स्वसिद्धान्तव्याघातादित्यर्थः। असतः सम्बन्धस्य भानाङ्गीकारादिति भावः। सम्बन्धस्याप्यन्यत्र सत्त्वमिति चेत् ? विशेष्यविशेषणानुयोगिकत्वप्रतियोगिकत्वयोर्ग्रहेऽसंसर्गाग्रहेऽसत्ख्यात्यापत्तिः। तदग्रहेऽसंसर्गाग्रह एव पर्यवसानमित्यन्यथाख्यातिवचोव्याघात इति दिक्। अन्यरूपस्यान्यत्रासत्त्वादसन्निकर्ष इत्यर्थः। अन्यथा नृशृङ्गस्यापि मानापत्तिः, उभयोरप्यन्यत्र सत्त्वात्। तत्र तदसदिति चेत्; प्रकृतेऽपि तुल्यमित्यपि बोध्यम् ॥ ५५ ॥

## सदसत्ख्यातिर्बाधाबाधात् ॥ ५६ ॥

[ वृ० ] आरोपितरजतमेव तत्रावभासत इति स्वमतमाह—सदसद्०। इदं रजतमिति पुरोवर्तिविषयतया सत्, अबाधनात्, रजतविषयतया त्वसत्, बाधात्। तस्मात्सदसती तत्त्वम् ॥ ५६ ॥

[ वृ० सा० ] स्वमतमाह—सदिति। इद रजतं सदसदात्मकम्, नेदं रजतमिति हि रजतस्य बाधो न पुरोवर्तितेति ॥ ५६ ॥

[ भा० ] "नात्यन्तबाधः" (सां० सू० ५।२६) इति पूर्वोक्तं विवृण्वानः स्वसिद्धान्तमुपसंहरति—सदसत्०। सदसत्ख्यातिरेव सर्वेषां गुणादीनाम्। कुतः ? बाधाबाधात्। तत्र स्वरूपेणाबाधः सर्ववस्तूनां नित्यत्वात्। संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्येऽस्ति, यथा पटादिषु लौहित्यादेस्तद्वत्। तथाऽवस्थाभिरपि बाधोऽखिलपरिणामिनां कालादिष्वित्यर्थः।

बाधश्च प्रतिपन्नधर्मिणि निषेधबुद्धिविषयत्वम् । असत्त्वं त्वभावः । सोऽप्यधिकरण-स्वरूप इति । न च सदसत्त्वयोर्विरोध इति वाच्यम्; प्रकारभेदेनाविरोधात् । यथाहि लौहित्यं बिम्बरूपेण सत्, स्फटिकगतप्रतिबिम्बरूपेण चासदिति दृष्टम् । यथा वा रजतं वणिग्वीथीस्वरूपेण सच्छुक्त्यध्यस्तरूपेण चासत्, तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्यादावध्यस्तरूपेण चासदिति । तदुक्तम्—

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ (भाग० ३।२७।४) इति।

एवमेवावस्थाभेदेनापि सदसत्त्वमविरुद्धम् । यथाहि वृक्षादिः प्ररूढाद्यवस्थाभिः सन्नप्यङ्कुराद्यवस्थाभिरसन् भवति, तथैव प्रकृत्यादिकं सदसदात्मकमिति । तदुक्तम्—

अव्यक्तं कारणं यत् तन्नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः ॥
( वि० पु० १।२।१९ ) इति।

एतच्चास्माभिर्ब्रह्ममीमांसाभाष्ये ( २।२।२८ ), योगवार्त्तिके ( २।१२ ) च प्रपञ्चितमिति दिक् ॥ ५६ ॥

[ भा० सा० ] स्वसिद्धान्तमाह—सदिति । गुणादीनां सदसत्ख्यातिरेव, बाधाबाधात् । सर्ववस्तूनां स्वरूपेणाबाधः, चैतन्ये संसर्गतो बाधश्च, यथा स्फटिके लौहित्यस्य । बाधश्च प्रतिपन्नधर्मिणि निषेधबुद्धिविषयत्वम्, असत्त्वं तु तत्राभावः । सोऽप्यधिकरणस्वरूपः । यथा च लौहित्यं बिम्बरूपेण सत्, स्फटिकगतप्रतिबिम्बरूपेणासदिति दृष्टम्, तथेहापि प्रकारभेदात् सदसत्त्वयोर्न विरोधः । सर्वं जगत् स्वरूपतः सत्, चैतन्यादावध्यस्तरूपेणासदित्यभ्युपगमात् । एवमवस्थाभेदेनापि सदसत्त्वम् । यथा वृक्षः प्ररूढावस्थायां तेन रूपेण सन्नपि अङ्कुराद्यवस्थयाऽसत् । एवं प्रकृत्यादिकं सदसदात्मकम् । तदुक्तम्—

नित्यदा ह्यङ्गभूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ (भाग० ११।२२।४२) इति
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् । (वि० पु० १।२।१९) इति च।

अनेन च सूत्रेणासंसर्गाग्रहविषयरजतत्वादेः सदसत्त्वमुक्तम् । "माया नैवोभयात्मिका" इत्यस्यैकप्रकारेण सदसद्रूपामित्यर्थः । सदसद्भ्यामनिर्वाच्येत्यस्य सत्येनासत्येनेत्येवमनिर्वाच्या किन्तु उक्तरीत्योभयरूपेत्यर्थः । मिथ्याभूता कार्यरूपेण, कारणरूपेण सनातनी नित्येत्यर्थः ॥५६॥

## प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥

[ वृ० ] स्फोटं निराकरोति—प्रतीत्य० । प्रतीतिर्वर्णेषु, अप्रतीतिः स्फोटे तस्मान्न स्फोटात्मकः शब्दः । यदि वर्णाः किञ्चिदपि न प्रतिपादयन्ति, स्फोटप्रतिपादनमपि कुतः ? अथ प्रतिपादयन्ति, किमन्तर्गडुना स्फोटेन ? वर्णा एव प्रतिपादकाः सन्तु । नानात्वादपि न स्फोटसिद्धिः ॥ ५७ ॥

[ वृ० सा० ] स्फोटं निराकरोति—प्रतीतीति। प्रतीतिर्वर्णानाम्, अप्रतीतिः स्फोटस्य वर्णातिरिक्तस्य। तस्मान्न स्फोटः शब्दः, किन्तु वर्णा एव ॥ ५७ ॥

[ भा० ] अयं विचारः पर्याप्तः, इदानीं शब्दविचारः प्रसङ्गागत आगन्तुकतयाऽन्ते प्रस्तूयते—प्रतीत्य०। प्रत्येकवर्णेभ्योऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकपदं स्फोट इति योगैरभ्युपगम्यते। कम्बुग्रीवाद्यवयवेभ्योऽनिरिक्तो घटाद्यवयवीव। स च शब्दविशेषः पदाख्योऽर्थस्फुटीकरणात् स्फोट इत्युच्यते। स शब्दोऽप्रामाणिकः, कुतः ? प्रतीत्यप्रतीतिभ्याम्। स शब्दः किं प्रतीयते न वा ? आद्ये येन वर्णसमुदायेनानुपूर्वीविशेषविशिष्टेन सोऽभिव्यज्यते, तस्यैवार्थप्रत्यायकत्वमस्तु किमन्तर्गडुना तेन। अन्त्ये त्वज्ञातस्फोटस्य नास्त्यर्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पनेत्यर्थः ॥ ५७ ॥

[ भा० सा० ] योगमतं दूषयति—प्रतीतीति। प्रत्येकवर्णातिरिक्तं पदमखण्डं वाचकम्, एको घट इतिवदेकं पदमित्यनुभवात् वर्णानामाशुविनाशितया मिलनाभावात्। तदेवार्थस्फुटीकरणात् स्फोट इत्युच्यते पातञ्जले। स न प्रामाणिकः। स प्रतीयते न वा ? आद्ये येन वर्णसमुदायेनानुपूर्वीविशेषविशिष्टेन सोऽभिव्यज्यते तदेव वाचकमस्तु, किं तेन ? अन्ते त्वज्ञातस्यार्थाप्रत्यायकत्वाद्व्यर्था तत्कल्पना। एकं पदमिति तु एकं वनमितिवत्। अन्त्यवर्णोत्पत्तिकाले पूर्वपूर्ववर्णानां शब्दजशब्दरूपेणोत्पत्त्यङ्गीकारान्न पदप्रत्यक्षानुपपत्तिः। यावत्कालमनुभवस्तावत्कालस्थायित्वं वा। क्षणिकत्वमिति त्वश्रद्धेयमेव, अल्पकालस्थायित्वेन वा तथा व्यवहार इति दिक् ॥ ५७ ॥

## न शब्दनित्यत्वं कार्यताप्रतीतेः ॥ ५८ ॥

[ वृ० ] प्रत्यक्षबाधाद्वेदस्यानित्यत्वमुक्तम्। वर्णानामनित्यत्वं प्रतिपादयति—न शब्द०। प्रत्यक्षादेः शब्दश्रवणानन्तरं नास्तीति प्रतीतेः, अन्यथा घटस्यापि नित्यत्वं स्यात् ॥ ५८ ॥

[ वृ० सा० ] ते चानित्या इत्याह—नेति। उत्पन्नो गकार इत्यादिप्रतीतेः ॥ ५८ ॥

[ भा० ] पूर्वं वेदानां नित्यत्वं प्रतिषिद्धमिदानीं वर्णनित्यत्वमपि प्रतिषेधति—न शब्द०। स एवायं गकार इत्यादिप्रत्यभिज्ञाबलाद्वर्णनित्यत्वं न युक्तम्, उत्पन्नो गकार इत्यादिप्रत्ययेनानित्यत्वसिद्धेरित्यर्थः। प्रत्यभिज्ञा च तज्जातीयताविषयिणी। अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तेरिति ॥ ५८ ॥

[ भा० सा० ] इदानीं वर्णनित्यत्वं प्रतिषेधयति—नेति। कार्यतोत्पत्तिविनाशौ। प्रत्यभिज्ञा तु तज्जातीयताविषया। अन्यथा दीपकलिकादेरपि नित्यतापत्तेः ॥ ५८ ॥

## पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥ ५९ ॥

[ वृ० ] प्रकृतिपुरुषादन्यत्सर्वं कार्यमिति प्रतिपादनार्थं शङ्कते—पूर्वसिद्ध०। यथान्धकारस्थो घटो दीपेनाभिव्यज्यते, तथा वर्णा ध्वनिभिर्व्यज्यन्ते। तदभावान्न सन्तीति प्रतिभानं न त्वसत्त्वात् ॥ ५९ ॥

[ वृ० सा० ] आशङ्कते—पूर्वेति । यथान्धकारस्थो घटो दीपेनाभिव्यज्यते, तथा वर्णा ध्वनिभिर्व्यंज्यन्ते तदभावान्न सन्तीति प्रतिभानं न त्वसत्त्वात् ॥ ५९ ॥

[ भा० ] शङ्कते—पूर्वसिद्ध० । ननु पूर्वसिद्धसत्ताकस्यैव शब्दस्य ध्वन्यादिभिर्याऽभिव्यक्तिस्तन्मात्रमुत्पत्तिः प्रतीतेर्विषयः । अभिव्यक्तौ दृष्टान्तो दीपेनेव घटस्येति ॥ ५९॥

[ भा० सा० ] शङ्कते—पूर्वेति । पूर्वसिद्धसत्ताकस्यैव कण्ठताल्वाद्यभिघातादिना याभिव्यक्तिः सोत्पत्ति प्रतीतेर्विषयः । दृष्टान्तो दीपेनेवेति । एवं च ज्ञानगतोत्पत्त्यादेर्वर्णेष्वारोप इति भावः ॥ ५९ ॥

सत्कार्यसिद्धान्तश्चेत्सिद्धसाधनम् ॥ ६० ॥

[ वृ० ] समाधानमाह—सत्कार्य० । अभिव्यक्तिमाश्रित्य नित्यत्वमुच्यते, ततः सत्कार्यसिद्धान्तश्चेत्, सिद्धसाधनम् ॥ ६० ॥

[ वृ० सा० ] दूषयति—सत्कार्येति । अभिव्यक्तिमाश्रित्य नित्यत्वकथनस्य कोऽभिप्रायः ? किं सत् कार्यं न त्वसदिति, किं वा प्रकृतिपुरुषयोरिव नित्यत्वं वर्णानामिति ? नाद्यः, इष्टापत्तेः । अपरत्र वक्ष्यते ॥ ६० ॥

[ भा० ] परिहरति—सत्कार्य० । अभिव्यक्तिर्यद्यनागतावस्थात्यागेन वर्तमानावस्थालाभ इत्युच्यते, तदा सत्कार्यसिद्धान्तः । तादृशनित्यत्वं च सर्वकार्याणामेवेति सिद्धसाधनमित्यर्थः । यदि च वर्तमानतया सत एव ज्ञानमात्ररूपिण्यभिव्यक्तिरुच्यते, तदा घटादीनामपि नित्यतापत्तिः, कारणव्यापारेण ज्ञानस्यैवोत्पत्तिप्रतीतिविषयत्वौचित्यादिति भावः ॥ ६० ॥

[ भा० सा० ] समाधत्ते—सदिति । अभिव्यक्तिर्यद्यनागतावस्थात्यागेन वर्तमानावस्थालाभस्तदा कार्यमात्रस्य सेति सिद्धसाधनम् । यदि वर्तमानस्यैव ज्ञानमात्ररूपा सा, तदा घटादीनामपि नित्यतापत्तिः, कारणव्यापारेणैव तज्ज्ञानस्यैवोत्पत्तिप्रतीतिविषयत्वौचित्यादिति भावः ॥ ६० ॥

नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ॥ ६१ ॥

[ वृ० ] एक एवात्मा । तथा च—

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरेवात्मा तथैकः सन् पृथक् पृथक् ॥
( वि० पु० २।१६।२२ )

तन्निराकरोति—नाद्वैत० । जरामरणादिलिङ्गनियमात् । पूर्वत्र सिद्धवदुक्तम्, इदानीं साध्यत इत्यपौनरुक्त्यम् ॥ ६१ ॥

[ वृ० सा० ] एकात्मवादं प्रत्याह—नाद्वैतमिति । आत्मनोऽद्वैतमैक्यं न, कुतः ? लिङ्गाज्जरामरणादिति । आत्मभेदसिद्धे पूर्वत्रानैक्यं सिद्धवदुक्तमिह तु साध्यत इति न पुनरुक्तिः ॥ ६१ ॥

[ भा० ] आत्माऽद्वैते पूर्वानुक्तमपि बाधकमुपन्यसनीयमित्येतदर्थमात्माऽद्वैतनिरासः पुनरारभ्यते—नाद्वैत० । यद्यप्यात्मनामन्योन्यं भेदवाक्यवदभेदवाक्यान्यपि सन्ति, तथापि नाद्वैतं नात्यन्तमभेदः । अजादिवाक्यस्थैः प्रकृतित्यागात्यागादिलिङ्गैर्भेदस्यैव सिद्धेरित्यर्थः । नह्यत्यन्ताभेदे तानि लिङ्गान्युपपद्यन्ते । अभेदवाक्यानि तु साम्यादिश्रुत्यैकवाक्यतया वैधर्म्यादिलक्षणभेदपरतयोपपद्यन्ते, अभिमानादिनिवृत्त्यन्यथानुपपत्त्यापि तत्परत्वावधारणाच्चेति ॥ ६१ ॥

[ भा० सा० ] पुनरात्माद्वैतं निरस्यति—नाद्वैतमिति । अजामेकामित्यादि श्रुत्युक्तप्रवृत्तित्यागात्यागादिलिङ्गैर्भेदस्यैव प्रतीतेरित्यर्थः । औपाधिकभेदेन भेदस्यासंभव उक्त इव । अभेदवाक्यानि तु साम्यादिश्रुत्यैकवाक्यतया वैधर्म्यलक्षणाभेदपराणि ॥ ६१ ॥

## नानात्मनापि प्रत्यक्षबाधात् ॥ ६२ ॥

[ वृ० ] मा भूत्सजातीयाद्वैतम् । अनात्मानो भविष्यन्ति घटादयस्त्वात्मरूपा इति विजातोयाद्वैतं भविष्यतीत्यत्राह—नानात्म० । न अनात्मना घटादिना आत्मन एकत्वम्, घटादीनां बाह्यत्वेन भेददर्शनात् । एकत्वे घटादीनामात्मत्वमात्मनश्च परिणामित्वमिति ॥ ६२ ॥

[ वृ० सा० ] नेति । अनात्मना घटादिनापि नात्मन एकत्वम्, प्रत्यक्षबाधात् ॥ ६२ ॥

[ भा० ] आत्मनामभेदे लिङ्गं बाधकमुक्तम् । "आत्मैवेदं सर्वम्" ( छा० उ० ७।२५।२ ), "ब्रह्मैवेदं सर्वम्" ( नृ० ता० उ० २।१७ ) इति श्रुत्याऽऽत्मनोऽनात्मभिरद्वैते तु प्रत्यक्षमपि बाधकमस्तीत्याह—नाऽनात्मनि० । अनात्मनापि भोग्यप्रपञ्चेनात्मनो नाद्वैतं प्रत्यक्षेणापि बाधात् । आत्मनः सर्वभोग्याभेदे घटपटयोरप्यभेदः स्यात्, घटादेः पटाद्यभिन्नात्माभेदात् । स च भेदग्राहकप्रत्यक्षबाधित इत्यर्थः ॥ ६२ ॥

[भा० सा०] नेति । अनात्मना भोग्यप्रपञ्चेनापि नात्मनो द्वैतम्, प्रत्यक्षेणापि बाधात् । आत्मनः सर्वभोग्याभेदे घटपटयोरप्यभेदः स्यात्, घटादेः पटाद्यभिन्नात्माभेदात् । स च भेदग्राहकप्रत्यक्षेणापि बाधित इत्यर्थः । "एकमेवाद्वितीयम्" ( छा० उ० ६।२।१ ) इति श्रुत्याऽधिष्ठानाधिष्ठेययोरविभागरूपमेवाद्वैतं प्रतिपाद्यत इति बोध्यम् ॥ ६२ ॥

## नोभाभ्यां तेनैव ॥ ६३ ॥

[ वृ० ] सजातीयविजातीयाद्वैतं भविष्यतीत्यत्राह—नोभाभ्यां० । अबाधितप्रत्ययेनैव भेददर्शनात् ॥ ६३ ॥

[ वृ० सा० ] किञ्च—नेति । तेनैव प्रत्यक्षबाधेनैवोभाभ्यामात्मानात्मभ्यामैक्यं न । त्वं सुखी, अहं दुःखी, घटोऽयमित्याद्यबाधितप्रत्यया एवाऽऽत्मैक्यबाधकाः सन्तीति भावः ॥६३॥

[ भा० ] नोभाभ्यां० । उभाभ्यां समुच्चिताभ्यामप्यात्मानात्मभ्यां नात्यन्ताभेदस्तेनैव हेतुद्वयेनेत्यर्थः ॥ ६३ ॥

[ भा० सा० ] उक्तमेवोपसंहरति—नेति। उभाभ्यां समुदिताभ्यामप्यात्मानात्मभ्यां नाद्वैतम्। तेनैवोक्तहेतुद्वयेनैवेत्यर्थः ॥ ६३ ॥

## अन्यपरत्वमविवेकानां तत्र ॥ ६४ ॥

[ वृ० ] एवमद्वैतश्रुतिविरोध इत्यत्राह—अन्यपर०। अविवेकानामज्ञानाम्। तत्र तच्छ्रुतेरन्यपरत्वं सामान्यपरत्वम् ॥ ६४ ॥

[ वृ० सा० ] नन्वद्वैतश्रुतेः का गतिस्तत्राह—अन्येति। तत्रात्मैक्यश्रुतावात्मत्वैकत्वप्रतिपादिकायामविवेकानां मूढानामन्यपरत्वमात्मैकपरत्वं भातीति शेषः। तथा च न श्रुतिविरोध इति भावः ॥ ६४ ॥

[ भा० ] नन्वेवम् "आत्मैवेदम्" ( छा० उ० ७।२५।२ ) इत्यादिश्रुतीनां का गतिरिति, तत्राह—अन्यपरत्व०। अविवेकानामविवेकिपुरुषान् प्रति तत्राद्वैतेऽन्यपरत्वमुपासनार्थकानुवाद इत्यर्थः। लोके हि शरीरशरीरिणोर्भोग्यभोक्त्रोश्चाविवेकेनाभेदो व्यवह्रियतेऽहं गौरो ममात्मा भद्रसेन इत्यादिः। अतस्तमेव व्यवहारमनूद्य तानेव प्रति तथोपासनां श्रुतिर्विदधाति सत्त्वशुद्ध्याद्यर्थमिति। अत एव परमार्थदशायामुपास्यानामात्मत्वं प्रतिषेधति श्रुतिः—

यन्मनसा न मनुते येनाहुर्मनो मतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ( के० उ० १।५ )

इत्यादिनेति ॥ ६४ ॥

[ भा० सा० ] ननु "आत्मैवेदं सर्वम्" ( छा० उ० ७।२५।२ ) इति श्रुत्यसङ्गतिरत आह—अन्येति। उपासनार्थायां श्रुतावज्ञानामन्यतात्पर्यकत्वग्रह इहेत्यर्थः। यथा शरीरशरीरिणोर्भोग्यभोक्त्रोश्चाहं गौरो ममात्मा भद्रसेन इत्यादि व्यवहारस्तथा तथोपासनां श्रुतिर्विदधाति सत्त्वादिशुद्ध्यर्थमित्यर्थः ॥ ६४ ॥

## नात्माऽविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् ॥ ६५ ॥

[ वृ० ] एकात्मवादिनां जगदुपादानकारणमपि नास्तीत्यत्राह—नात्मा०। कूटस्थत्वान्नात्मा कारणम्। अविद्याया असत्यत्वान्न कारणत्वम्। सत्यत्वेऽद्वैतहानिः। संबन्धाभावान्नोभयं कारणम् ॥ ६५ ॥

[ वृ० सा० ] किं चैकात्मवादिनां जगदुपादानकारणमपि नोपपद्यत इत्याह—नात्मेति। नात्मा कूटस्थत्वात्, नाविद्या सतीति चेद् द्वैतापत्तिः, असती चेन्न कारणं वन्ध्यापुत्रवत्, अत एव नोभयमपि ॥ ६५ ॥

[ भा० ] एकात्मवादिनां जगदुपादानकारणमपि न सम्भवतीत्याह—नात्म०। केवल आत्मा आत्माश्रिता वाऽविद्या समुच्चितं वा कपालद्वयवदुभयं न जगदुपादानं सम्भवति, आत्मनोऽसङ्गत्वात्। सङ्गाख्यो हि यः संयोगविशेषस्तेनैव द्रव्याणां विकारो

भवति। अतोऽसङ्गत्वात् केवलस्यात्मनोऽद्वितीयस्य नोपादानत्वम्। नाविद्याद्वारापि सम्भवति, असङ्गत्वेनाविद्यायोगस्य प्रागेव निरस्तत्वात्। प्रत्येकोपादानत्ववदेवोभयोपादानत्वमप्यसङ्गत्वादेवासम्भवीत्यर्थः।

यदि चाविद्या द्रव्यरूपा पुरुषाश्रिता गगने वायुवदिष्यते तदात्माद्वैतहानिः; तथा प्रकृतिरेव सेति सिद्धसाधनं च। तादृशं चाविभागेनाद्वैतमस्माकमपीष्टमेव। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म" ( छा० उ० ६।२।१ ) इत्यादिश्रुत्यापि चाविभागरूपमेवाद्वैतं प्रतिपाद्यते। "न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्" ( बृ० उ० ४।३।२३ ) इति श्रुत्यन्तरात्। तथा चोक्तम्—

आसीज्ज्ञानमयोऽप्यर्थ एकमेवाविकल्पितम्।
तयोरेकतरो ह्यर्थः प्रकृतिश्चोभयात्मिका॥
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते। इति।

अविकल्पितमविभक्तम्। तस्माद्वेदान्तानामखण्डात्माद्वैतं नार्थः, तथाप्याधुनिका वेदान्तिनोऽत्रत्यपूर्वपक्षजातमेव ब्रह्ममीमांसासिद्धान्ततया कल्पयन्ति। तत् तु ब्रह्मसूत्रानुक्तत्वेन, प्रत्युत तद्विरोधेन चास्माभिस्तत्रैव निराकृतमिति। अत्र च ब्रह्ममीमांसासिद्धान्तो न दूष्यते, अपि तु वेदान्तेष्वापाततः सम्भावितोऽर्थ एव निराक्रियत इति स्मर्तव्यम्। एवमुत्तरसूत्रेष्वपि॥ ६५॥

[ भा० सा० ] अद्वैतवादिनां जगदुपादानकारणमप्यसंभवीत्याह—नात्मेति। केवल आत्मा, तदाश्रिताऽविद्या वा, समुच्चितं वा कपालद्वयवत्तदुभयं न जगदुपादानं संभवति, आत्मनोऽसङ्गत्वात्। सङ्गाख्येन संयोगविशेषेण द्रव्याणां विकारो भवति। अतोऽसङ्गस्याद्वितीयस्यात्मनो नोपादानत्वम्। नाप्यविद्याद्वारा, असङ्गत्वेन तद्योगाभावात्। नाप्यविद्यायाः, तस्या अद्रव्यत्वेन द्रव्योपादानायोगात्, द्रव्यत्वे तया द्वैतप्रसङ्गाच्च। किंच तस्यास्तत्त्वं न क्वापि दृष्टम्, शुक्तिरजतादिस्थले तस्या निमित्तत्वस्यैव दर्शनात्। मन एवोपादानम्, तद्धेतोः संस्कारस्य मनोधर्मत्वात्। अत एव नोभयमपि तथेत्यर्थः। अस्माकं त्वात्मनोऽधिष्ठानकारणत्वमेवात्मार्थतया प्रपञ्चस्यात्मन्येवाधिष्ठाने प्रकृत्युपादानकत्वस्वीकारान्न दोषः॥ ६५॥

**नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात्॥ ६६॥**

[ वृ० ] चिदानन्दस्वरूप आत्मेत्यत्राह—नैकस्या०। आनन्दः सुखम्। चित् ज्ञानम्। आनन्दचिद्रूपत्वे द्वैतत्वापत्तिः। न च आनन्दो न विषयजं सुखम्, चितिर्वा वृत्तिज्ञानम्, किन्त्वन्यदेवालौकिकमिति वाच्यम्; अलौकिकत्वेनाप्रामाणिकत्वात्, प्रामाणिकत्वे प्रमाणसत्त्वेनैव द्वैतत्वम्। किञ्च, आत्मन आनन्दरूपत्वम् आनन्दधर्मत्वं वा ? आनन्दधर्मत्वे द्वैतत्वापत्तिः, निर्गुणत्वादिश्रुतिविरोधश्च। आनन्दरूपत्वे संसारावस्थायां कथमानन्दो नानुभूयते। अविद्यातिरोधानादिति चेत्; अमूर्तत्वादविद्याया न तया कुड्यवत्तिरोधानसम्भवः। अथाभिभवस्तिरोधानशब्दार्थः। नित्यस्य विभुनो

नाभिभवः। अविद्याया मिथ्यात्वादात्मनः सत्यत्वात्तयोः संबन्धः, वस्त्ववस्तुनोः सम्बन्धाभावात्, संबन्धे वा निःसङ्गादिश्रुतिविरोधः। आनन्दानुभवे च कर्मकर्तृविरोधः। किञ्चानन्दात्मत्वे किं प्रमाणम्? किं प्रमाणानुसरणेन स्वयमेव प्रमाणरूपत्वादात्मन इति चेत्, तन्न; प्रमाणव्यवस्थार्थं प्रमेयस्वीकारात्। प्रमेयाभावात्किं प्रमाणेन परिच्छेत्तव्यम्? प्रमित्युपधानाभावाच्च प्रमाणत्वमेव नास्ति। चिद्रूपत्वं च नानन्दरूपत्वम्, द्वयोर्भेदात्। तयोरलौकिकत्वेनाभेदसिद्धिरित्यपि न, अलौकिकत्वादेव व्याप्तिग्रहणाभावात्। ततो नात्मनो द्विरूपत्वमिति। यदि च मुक्तावानन्दो नानुभूयते, किं तेन। अनुभूयते चेत्, अनुभवित्रनुभवानुभवनीया वाच्याः। यथा च यावद्देहभावित्वे नात्मसाक्षात्कारादपि समाधिरित्युच्यते, देहपातानन्तरमात्मनः स्थितिरिति क्व समाधिः? तथा च समाधौ सकलदुःखनिवृत्तेरानन्दलाभ इत्यभिमन्यते। देहाभावात्समाधिनाशे क्वानन्दानुभवः? एवं च मुक्तावानन्दानुभवो भ्रान्त इति ॥ ६६॥

[ वृ० सा० ] चिदानन्दरूप आत्मेति तन्मतं दूषयति-नैकस्येति। आनन्दः सुखम्, चित् ज्ञानम्, तयोर्लोके भेदात्। अलौकिकाभेदमिति चेत्; प्रमाणाभावे [कथं] सिद्ध्येत्। किंच, चित आनन्दरूपत्वे संसारदशायां कुतो नानुभवः? अविद्यातिरोधानादिति चेत्; सा असंबद्धा कथं तिरोदध्यात्, सम्बद्धा चेदसंगत्वश्रुतिविरोधः। किंच, मुक्तावानन्दोऽनुभूयते। न चाविवेके नानुभूयत आत्मतेति चेत्; एकस्य कर्तृकर्मत्वविरोधः, न चेत्; किमानन्दरूपतया ॥ ६६ ॥

[ भा० ] प्रकाशस्वरूप आत्मेति स्वयं सिद्धान्तितम् ( सां० सू० १।१४५ ), तत्र "सत्यं विज्ञानमानन्दं ब्रह्म" ( बृ० उ० ३।९।२८ ) इति श्रुतेरानन्दोऽप्यात्मनः स्वरूपमिति पूर्वपक्षं निराकरोति—नैकस्या०। एकधर्मिण आनन्दचैतन्योभयरूपत्वं न भवति, दुःखज्ञानकाले सुखाननुभवेन सुखज्ञानयोर्भेदादित्यर्थः। न च ज्ञानविशेषः सुखमिति वक्तुं शक्यते, आत्मस्वरूपज्ञानस्याखण्डत्वात्। अत एव चैतन्यानुभवकाले सुखस्यावरणमपि वक्तुं न शक्यते, अखण्डत्वेनानन्दावरणे दुःखं जानामीत्यनुभवानुपपत्तेः। न ह्यात्मनोंऽशभेदोऽस्ति, येनानन्दांशावरणेऽपि चैतन्यांशो भायादिति। न च श्रुतिबलेनैतेऽसत्तर्का इति वाच्यम्; "नानन्दं न निरानन्दम्" ( म० उ० ५।९८ ) इत्यादिश्रुत्या, "अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम्" इत्यादिस्मृत्या चानन्दाभावस्यापि प्रतिपादितत्वेन तर्कस्यैवात्रादर्तव्यत्वादिति ॥ ६६ ॥

[ मा० सा० ] अथ "विज्ञानमानन्दं ब्रह्म" ( बृ० उ० ३।९।२८ ) इतिश्रुतेरानन्दोऽप्यात्मनः स्वरूपमिति निराकरोति—नैकस्येति। दुःखज्ञानकाले सुखाननुभवेन सुखज्ञानयोर्भेदादित्यर्थः। न च तदा सुखस्यावरणम्, अखण्डैकत्वेन सुखावरणे ज्ञानस्याप्यावरणापत्त्या दुःखं जानामीत्यनुभवापत्तेः। न ह्यात्मनोंऽशभेदोऽस्ति। न च स्रक्चन्दनाद्याकारबुद्धिवृत्त्यभिव्यक्तं चैतन्यमेव सुखम्, शीताद्यार्तानामपि तत्र सुखप्रसङ्गात्, मोक्षे सुखाभ्युपगमविरोधाच्च। किं चैवं क्षुत्पिपासाद्याकारवृत्त्यभिव्यक्तचैतन्यस्यैव दुःखत्वापत्तौ दुःखरूपत्वमप्यात्मनः स्यात्।

न च चैतन्यग्राहककाले सुखं नियमेन गृह्यते एवं सुखज्ञानं त्वविद्ययाऽऽवृतमिति वाच्यम्; "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" ( तै० उ० २।४ ) इत्यादि श्रुत्युक्तानन्दज्ञानफलानां सर्वेषु सर्वदापत्तेः। नहि स्वकार्यं प्रति स्वगोचराज्ञानस्य प्रतिबन्धकता क्वापि दृष्टा, संस्काराद्यज्ञानेऽपि तत्फलदर्शनात्। किंचानन्दानुभव एव लोके पुरुषार्थो न तु तदनुभवाज्ञाननिवृत्तिरपि। अत एव "नानन्दं न निरानन्दम्" ( महोप० ५।९८ ) इति श्रुतिः, 'अदुःखमसुखं ब्रह्म" इति स्मृतिश्च संगच्छते ॥ ६६ ॥

## दुःखनिवृत्तेर्गौणः ॥ ६७ ॥

[ वृ० ] अथानन्दश्रुतेः का वार्ता ? तथा च—

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ ( तै० उ० २।४ )

इत्यत्राह—दुःख०। व्यक्तम् ॥ ६७ ॥

[ वृ० सा० ] अथ 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" ( तै० उ० २।४ ) इति, का गतिस्तत्राह— दुःखेति। सुखव्यपदेश इति शेषः ॥ ६७ ॥

[ भा० ] नन्वेवमानन्दरूपताश्रुतेः का गतिस्तत्राह —दुःख०। दुःखनिवृत्त्याऽऽत्मनि श्रौत आनन्दशब्दो गौण इत्यर्थः। तदुक्तम्—"सुखं दुःखसुखात्यये" इति। "न निरानन्दम्" ( म० उ० ५।९८ ) इति श्रुतिस्त्वौपाधिकानन्दपरा सत्यसङ्कल्पत्वादिश्रुतिवदिति। यत् तु निरुपाधिप्रियत्वेनात्मनः सुखरूपत्वानुमानं कश्चिदाह, तन्न; दुःखाभावरूपतयापि प्रेमोपपत्तेः, सुखत्वादिवदात्मत्वस्यापि प्रेमप्रयोजकत्वाच्च। अन्यथा परसुखेऽपि प्रेमापत्तेरिति ॥ ६७ ॥

[ भा० सा० ] आनन्दरूपताश्रुतिस्तु गौणीत्याह—दुःखेति। दुःखनिवृत्तावानन्दशब्दो गौण इत्यर्थः। गुणश्चात्र 'तत्प्रेय[:] पुत्रात्' इत्यादि श्रुतिसिद्धं परमप्रियत्वम्। न च निरुपाधिप्रियत्वेनैव तस्य सुखरूपत्वानुमानम्, दुःखाभावत्वरूपत्वेनापि तस्योपपत्तेः, सुखत्वादिवदात्मत्वस्यापि प्रेमप्रयोजकत्वाच्च। अन्यथा परसुखेऽपि प्रेमापत्तिः। "न निरानन्दम्" इति श्रुतिः स्वोपाधिकानन्दपरा, सत्यसङ्कल्पतादिश्रुतिवत्। अन्यथा तथाश्रुत्यादीनामप्यात्मधर्मत्वप्रसङ्ग इति दिक् ॥ ६७ ॥

## विमुक्तिप्रशंसा मन्दानाम् ॥ ६८ ॥

[ वृ० ] प्रकारान्तरमाह—विमुक्ति०। मन्दानां तामसानाम्। विमुक्तिप्रशंसा प्रवर्तनार्थं प्रोत्साहनमिति ॥ ६८ ॥

[ वृ० सा० ] प्रकारान्तरमाह—विमुक्तीति। मन्दानां राजसतामसानां विमुक्तिप्रशंसा प्रवर्तनार्थं प्रोत्साहनमित्यर्थः ॥ ६८ ॥

[ भा० ] गौणप्रयोगे बीजमाह—विमुक्ति०। मन्दानज्ञान् प्रति दुःखनिवृत्तिरूपामात्मस्वरूपमुक्तिं सुखत्वेन श्रुतिः स्तौति प्ररोचनार्थमित्यर्थः ॥ ६८ ॥

[ भा० सा० ] गौणप्रयोगफलमाह—विमुक्तीति ।""स्वरूपां मुक्ति सुखत्वेन श्रुतिः स्तौतीत्यर्थः ॥ ६८ ॥

## न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा, वास्यादिवच्चक्षुरादिवच्च ॥ ६९ ॥

[ वृ० ] मनोवैभवं निराकरोति—न व्यापकत्वं० । यच्च 'शिरसि मे वेदना, पादे मे सुखम्' इति ज्ञानं मनसो विभुत्वं प्रतिपादयति, तदाशुसंचारित्वात् क्रमाग्रहणनिमित्तम् । नानेन विभुत्वसिद्धिः ॥ ६९ ॥

[ वृ० सा० ] मनोवैभवं निराकरोति—नेति । यत्तु 'शिरसि मे वेदना पादे मे सुखम्' इत्यादि ज्ञानं मनसो विभुत्वसाधकमाहुस्तदाशुसंचारित्वान्मनसः क्रमाग्रहणनिमित्तमिति न तेन विभुत्वसिद्धिः ॥ ६९ ॥

[ भा० ] अन्तःकरणोपपत्तेः पूर्वोक्ताया आञ्जस्येनोपपत्तये मनोवैभवपूर्वपक्षमपाकरोति—न व्यापकत्वं० । मनसोऽन्तःकरणसामान्यस्य न विभुत्वम्, करणत्वात्, वास्यादिवत् । वाशब्दो व्यवस्थितविकल्पे । इन्द्रियत्वादप्यन्तःकरणविशेषस्य तृतीयस्य न विभुत्वमित्यर्थः । देहव्यापि ज्ञानादिकं तु मध्यमपरिमाणेनैवोपपद्यत इति ॥ ६९ ॥

[ भा० सा० ] अथ योगमतसिद्धि मनोवैभवं निराकरोति—नेति । मनसोऽन्तःकरणसामान्यस्य न व्यापकत्वं करणत्वाद् वास्यादिवत् । अन्तःकरणविशेषस्य तृतीयस्यापि न तत्त्वादित्यर्थः । वाशब्दो व्यवस्थितविकल्पे । देहव्यापिज्ञानार्थं तु मध्यमपरिमाणता स्वभावता च ॥ ६९ ॥

## सक्रियत्वाद् गतिश्रुतेः ॥ ७० ॥

[ वृ० ] दूषणान्तरमाह—सक्रिय० । सक्रियत्वादित्यनुमानं दर्शितम् । गतिश्रुतेरिति शब्दो दर्शितः ॥ ७० ॥

[ वृ० सा० ] सक्रियत्वादिति । सक्रियत्वादित्यनुमानं दर्शितम्, गतिश्रुतेरिति सक्रियत्वे मानं दर्शितम् ॥ ७० ॥

[ भा० ] अत्राप्रयोजकत्वशङ्कायामनुकूलतर्कमाह—सक्रिय० । आत्मनो लोकान्तरगमनश्रवणेन तदुपाधिभूतस्यान्तःकरणस्य सक्रियत्वसिद्धेर्न विभुत्वं सम्भवतीत्यर्थः ॥ ७० ॥

[ भा० सा० ] तत्रानुकूलतर्कमाह—सक्रियत्वादिति । अन्तःकरणोपाधिकस्यात्मनो लोकान्तरगतिश्रवणेन तदुपाधिभूतस्यान्तःकरणस्य सक्रियत्वे सिद्धे न विभुत्वं संभवतीत्यर्थः ॥ ७० ॥

## न निर्भागत्वं तद्योगाद् घटादिवत् ॥ ७१ ॥

[ वृ० ] अणुत्वेऽपि कारणाभावान्नित्यं भविष्यतीत्यत्राह न निर्भाग० । न निर्भागत्वं नाकारणवत्त्वम् । तद्योगाद् भागयोगात् । किमस्य कारणम् ? अहङ्कारः । षट्केन युगपद्योगात्परमाणूनां सभागत्वसिद्धिः । तस्माद् घटादिवदनित्यं मनः ॥ ७१ ॥

[ वृ० सा० ] नेति । मनसो नाकारणवत्त्वं कारणयोगात् । किमस्य कारणमिति चेत्; अहङ्कार इति गृहाण ॥ ७१ ॥

[ भा० ] कार्यत्वोपपत्तये मनसो निरवयवत्वमपि निराकरोति—न निर्भाग० । तच्छब्दः पूर्वसूत्रस्थेन्द्रियं परामृशति । मनसो न निरवयवत्वम्, अनेकेन्द्रियेष्वेकदा योगात् । किन्तु घटवन्मध्यमपरिमाणं सावयवमित्यर्थः । कारणावस्थं चान्तःकरणमण्वेवेति बोध्यम् ॥ ७? ॥

[ भा० सा० ] मनसो निरवयवत्वमपि निराचष्टे—नेति । तदिन्द्रियमनसो न निरवयवत्वम्, अनेकेन्द्रियेष्वेकदा योगात् । किन्तु घटवत् सावयवं मध्यमपरिमाणं चेत्यर्थः । कारणावस्थमन्तःकरणमण्वेवेति बोध्यम् ॥ ७१ ॥

## प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम् ॥ ७२ ॥

[ वृ० ] नित्यानित्यविभागमाह—प्रकृति० । स्पष्टम् ॥ ७२ ॥

[ वृ० सा० ] किञ्च—प्रकृतीति । स्पष्टम् ॥ ७२ ॥

[ भा० ] मनःकालादीनां नित्यत्वं प्रतिषेधति—प्रकृति० । सुगमम् । कारणावस्थं चान्तःकरणाकाशादिकं प्रकृतिरेवोच्यते, न तु मन आदिकं व्यवसायाद्यसाधारणधर्माभावात् ॥ ७२ ॥

[ भा० सा० ] मन आदीनां नित्यत्वं प्रतिषेधति—प्रकृतीति । स्पष्टम् । कारणावस्थं चान्तःकरणमाकाशादिप्रकृतिर्न बुद्ध्यादिकम्, व्यवसायाद्यसाधारणधर्माभावात् ॥ ७२ ॥

## न भागलाभो भागिनो निर्भागत्वश्रुतेः ॥ ७३ ॥

[ वृ० ] दिक्कालादीनां नित्यत्वात्कथं सर्वमनित्यमित्यत्राह—न भाग० । न कारणलाभो भागिनो जगत्कारणस्य प्रधानस्य निर्भागत्वश्रुतेः । 'मूलकारणत्वान्नास्य कारणान्तरम्' इति श्रुतेः ॥ ७३ ॥

[ वृ० सा० ] प्रकृतेः कथं नित्यत्वं तत्राह—नेति । भागाः कारणानि यस्य कार्यत्वेन सन्ति तस्य प्रधानस्य न कारणलाभो निर्भागत्वश्रुतेः "मायां तु प्रकृतिं विद्यात्" ( श्वे० उ० ४।१० ) इति सावधारणप्रकृतित्वश्रुतेः, प्रधानस्य सकारणत्वेनावस्थानाच्च ॥ ७३ ॥

[ भा० ] ननु—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ ( श्वे० उ० ४।१० )

इत्यादिश्रुतिभिः पुम्प्रकृत्योरपि सावयवत्वादनित्यत्वमिति, तत्राह—न भाग० । भागिनः पुरुषस्य प्रधानस्य चावयवो न युज्यते, निरवयवत्वश्रुतेः ।

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" ( श्वे० उ० ६।१९ )

इत्यादिनेत्यर्थः । उक्तश्रुतिश्चाकाशजलयोरिव पितापुत्रचेतनयोरिव चाविभागमात्रेणांशांशिभावं बोधयतीति ॥ ७३ ॥

[ भा० सा० ] ननु—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥" (श्वे० उ० ४।१०)

इति श्रुतेः पुंप्रकृत्योरपि सावयवत्वादनित्यत्वम् ? अत आह—नेति । पुंप्रकृतिविषये भागिनो भागलाभोऽवयवावयविभावो न युज्यते, "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" ( श्वे० उ० ६।१९ ) इत्यादिना निरवयवत्वश्रुतेरित्यर्थः । उक्तश्रुतिश्चाकाशजलयोरिव पितापुत्रचेतनयोरिव चाविभागमात्रेणांशांशिभावं बोधयतीति दिक् ॥ ७३ ॥

## नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मकत्वात् ॥ ७४ ॥

[ वृ० ] आनन्दाभिव्यक्तिर्मुक्तिरित्येतद्दूषयति—नानन्दा० । मुक्तौ धर्मधर्मिभावाभावाद् नाभिव्यक्तिः । सा किं सर्वदास्ति ? संसारदशायामपि मुक्तिप्रसङ्गः । अथ मुक्तौ क्रियते ? कार्यस्यावश्यं नाशात्पुनरनिर्मोक्ष इति ॥ ७४ ॥

[ वृ० सा० ] आनन्दाभिव्यक्तिर्मुक्तिरिति मतं दूषयति—नेति । किमात्मस्वरूप आनन्द उतान्यः ? आद्ये संसारदशायां मुक्तिप्रसङ्गः, अन्त्ये कार्यभावस्यावश्यं नाशादनिर्मोक्षापत्तिः ॥ ७४ ॥

[ भा० ] दुःखनिवृत्तिर्मोक्ष इत्युक्तम् ( १।१ सूत्रे ), तदवधारणाय तत्र मोक्षे परेषां मतानि निराकरोति—नानन्दा० । आत्मन्यानन्दरूपोऽभिव्यक्तिरूपश्च धर्मो नास्ति; स्वरूपं च नित्यमेवेति न साधनसाध्यम् । अतो नानन्दाभिव्यक्तिर्मोक्ष इत्यर्थः ॥ ७४ ॥

[भा० सा० ] मोक्षविषये परमतं निराकरोति—नेति । आत्मन्यानन्दरूपोऽभिव्यक्तिरूपश्च धर्मो नास्ति, स्वरूपं च नित्यमेव, न साधनसाध्यमतो न सा मुक्तिरित्यर्थः । आनन्दाभिव्यक्तिश्च ब्रह्मलोकादौ गौणी मुक्तिः । अत एव "विद्वान् हर्षशोकौ जहाति" इति श्रुतिरिति भावः । किं चात्मन्यभिव्यक्तिः नित्याऽनित्या वा ? आद्ये सिद्धत्वेन साधनवैकल्यम् ? अन्त्ये जन्यभावस्य विनाशितया मोक्षस्य नाशापत्तिरिति दिक् ॥ ७४ ॥

## न विशेषगुणोच्छित्तिस्तद्वत् ॥ ७५ ॥

[ वृ० ] विशेषगुणोच्छित्तिर्मोक्ष इति दूषयति—न विशेष० । विशेषनिषेधात् सामान्यगुणस्वीकारः । तथा च गुणयोगादनिर्मोक्षः ॥ ७५ ॥

[ वृ० सा० ] विशेषगुणोच्छेदो मोक्ष इति मतं निरस्यति—नेति । तद्वदिति न मुक्तिरित्यर्थः, सामान्यगुणस्वीकारे प्रमाणाभावादिति भावः ॥ ७५ ॥

[ भा० ] न विशेष० । अशेषविशेषगुणोच्छेदोऽपि न मुक्तिस्तद्वद् निर्धर्मत्वादेवेत्यर्थः । ननु तर्हि दुःखनिवृत्तिरेव कथं मोक्ष उक्तो दुःखाभावस्यापि धर्मत्वादिति चेन्न; अस्माभिर्भोग्यतासम्बन्धेनैव दुःखाभावस्य पुरुषार्थतावचनादिति ॥ ७५ ॥

[ भा० सा० ] नेति । अशेषविशेषगुणोच्छेदोऽपि न मुक्तिः, निर्धर्मत्वादेवेत्यर्थः । अस्माकं तु भोग्यतासम्बन्धेनैव दुःखाभावः पुरुषार्थ इति न दुःखमादाय निर्धर्मत्वहानिः ॥ ७५ ॥

## न विशेषगतिर्निष्क्रियस्य ॥ ७६ ॥

[ वृ० ] देहपरिमाण आत्मा, तस्य देहमात्राद् गतिरेव मुक्तिरिति । तद्दूषयति—न विशेष० । नोर्ध्वंगत्या मुक्तिः, "निर्गुणनिष्क्रियनिर्धर्मक आत्मा" इति श्रुतेः कुतो मुक्तिः ? हस्तिकृमिदेहपरिमाणत्वेन संकोचविकाशाभ्यां सावयवत्वेनानित्यश्च स्यात् ॥ ७६ ॥

[ वृ० सा० ] देहपरिमाणस्य स्वात्मनो देहान्निष्क्रान्तस्य सततोर्ध्वगमनं मुक्तिरिति बौद्धमतं दूषयति—एवमिति । देहपरिमाणत्वे स्वात्मनो हस्तिकृमिदेहप्रवेशे उपचयापचययोरावश्यकत्वेन सावयवत्वं वाच्यम् । ततश्चानित्यता स्यादतो व्यापकत्वमात्मन उचितम् । ततो निष्क्रियत्वादूर्ध्वं गमनं [न] संभवतीति भावः ॥ ७६ ॥

[ भा० ] न विशेष० । ब्रह्मलोकगतिरपि न मोक्षः, आत्मनो निष्क्रियत्वेन गत्यभावात् । लिङ्गशरीराभ्युपगमे च न मोक्षो घटत इत्यर्थः ॥ ७६ ॥

[ भा० सा० ] नेति । ब्रह्मलोकगतिर्मुक्तिर्न, आत्मनो निष्क्रियस्य गत्यभावात् । लिङ्गशरीराभ्युपगमे च न मोक्ष इत्यर्थः ॥ ७६ ॥

## नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥ ७७ ॥

[ वृ० ] बौद्धमुक्तिं दूषयति—नाकारो० । स किमाकारो ज्ञानस्वरूपः ? तथा च ज्ञानस्याप्युच्छेद इति कस्य मुक्तिः ? अथ धर्मः, क्षणिकत्वात्सर्वदा तन्नाशे संसारिणामपि मुक्तिः स्यात् । अथ वासनावशात्तदा न मुच्यते, वासनोच्छित्तिरेव मोक्षोऽस्तु किमाकारोपरागोच्छित्त्या ? आदिशब्दात् स्वच्छसंवित्प्रवाहस्यापि नश्वरत्वात् कस्य मुक्तिरिति ॥ ७७ ॥

[ वृ० सा० ] बौद्धमुक्तिं दूषयति—नाकारेति । आकारस्य विषयस्य उपरागः सम्बन्धस्तदुच्छित्तिर्न मुक्तिः । पूर्वविषययोः सम्बन्धोच्छेदस्य सर्वक्षणिकत्वेन संसारेऽपि सुलभत्वात्, स्वच्छसंवित्प्रवाहस्यापि क्षणिकत्वात्, आत्मनोऽपि क्षणिकत्वेन कस्य मुक्तिरित्यादिदोषाच्च ॥ ७७ ॥

[ भा० ] नाकारो० । क्षणिकज्ञानमेवात्मा तस्य विषयाकारता बन्धस्तद्वासनाख्योपरागस्य नाशो मोक्ष इति यन्नास्तिकमतं तदपि न; क्षणिकत्वादिदोषेण मोक्षस्यापुरुषार्थत्वादित्यर्थः ॥ ७७ ॥

[ भा० सा० ] नेति । क्षणिकज्ञानमेवात्मा, तस्य विषयाकारता बन्धः, तद्वासनाख्योपरागनाशो मोक्ष इति नास्तिकमतमपि न, क्षणिकत्वादिदोषेणाकारोच्छेदकाले आकारिणोऽप्युच्छेदादित्यर्थः ॥ ७७ ॥

## न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥ ७८ ॥

[ वृ० ] बौद्धविशेषस्य मुक्तिं दूषयति—न सर्वो० । स्पष्टम् ॥ ७८ ॥

[ वृ० सा० ] आत्मनि सर्वोच्छेदो मुक्तिरिति मतं दूषयति—नेति। को हि सर्वस्यापराधो येन तदुच्छित्तिः प्रार्थनीया स्यात् ॥ ७८ ॥

[ भा० ] नास्तिकस्यैव मुक्त्यन्तरं दूषयति- न सर्वो०। ज्ञानरूपस्यात्मनः सामग्र्येणैवोच्छित्तिरपि न मोक्षः, आत्मनाशस्य लोके पुरुषार्थत्वादर्शनादित्यर्थः ॥ ७८ ॥

[ भा० सा० ] नेति। ज्ञानरूपस्यात्मनः सामग्र्येण नाशोऽपि न मुक्तिः, आत्मनाशस्य लोकेऽपुरुषार्थत्वादित्यर्थः ॥ ७८ ॥

## एवं शून्यमपि ॥ ७९ ॥

[ वृ० ] शून्यं मुक्तिरिति दूषयति—एवं०। अपुरुषार्थत्वादेः। आदिशब्दादनुष्ठानाभावः सूचितः। यद्यात्मा स्वीक्रियते, तदा तत्परिपन्थिनि द्वेषः, तदनुकूले च स्नेह इति तयोर्बन्धहेतुत्वादनिर्मोक्षः स्यात्। मैवम्; नहि रागद्वेषमात्राद् बन्धः, किन्तु तद्विशेषात्। यथा बौद्धपक्ष एव न संवित्संतानमात्राद् बन्धः, स्वच्छसंवित्संतानस्य मोक्षाङ्गत्वात्; तथा कैवल्यात्मपरिपन्थिनि द्वेषान्निरुपहितात्मस्थितौ रागान्न बन्धः, प्रत्युत मोक्षहेतुत्वमेवेति ॥ ७९ ॥

[ वृ० सा० ] एवमिति। अपुरुषार्थत्वादिदोषादसम्भवाच्चेत्यर्थः ॥ ७९ ॥

[ भा० ] एवं०। ज्ञानं ज्ञेयात्मकाखिलप्रपञ्चनाशोऽप्येवम्, आत्मनाशेनापुरुषार्थत्वान्न मोक्ष इत्यर्थः ॥ ७९ ॥

[ भा० सा० ] एवमिति। ज्ञाने ज्ञेयात्मकाखिलप्रपञ्चनाशोऽप्येवम्, आत्मनाशस्यापुरुषार्थत्वान्न मोक्ष इत्यर्थः ॥ ७९ ॥

## संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥ ८० ॥

[ वृ० ] कालदेशकर्मविशेषान्मुक्तिरिति। तद् दूषयति—संयोगाश्च०। देशसंयोगस्य वियोगान्तत्वात् पुनः संसारः। आदिशब्दात् कालकर्मणोरपि परिग्रहः। कालयोगस्याप्येवम्। कर्मणश्च क्षयित्वात्पुनः संसार इति ॥ ८० ॥

[ वृ० सा० ] लोकोत्तरदेशे लोकोत्तरस्रक्चन्दनवनितादिलाभ एव मुक्तिरिति दूषयति—संयोगाश्चेति। स्पष्टम् ॥ ८० ॥

[ भा० ] संयोगाश्च०। प्रकृष्टदेशधनाङ्गनादिस्वाम्यमपि न मोक्षः, यतः—

"संयोगाश्च वियोगान्ता मरणान्तं च जीवनम्" ( ना० पु० १।६१।३७ )

इति श्रूयत इत्यर्थः। तथा च विनाशित्वात् स्वाम्यं न मुक्तिरिति ॥ ८० ॥

[ भा० सा० ] संयोगाश्चेति। प्रकृष्टदेशधनादिस्वाम्यमपि न मोक्षः, यतः "संयोगाश्च वियोगान्ता मरणान्तं च जीवितम्" ( ना० पु० १।६१।३७ ) इत्युक्तेरित्यर्थः। एवं च विनाशित्वान्न सा मुक्तिरिति भावः ॥ ८० ॥

न भागियोगोऽभागस्य ॥ ८१ ॥

[ वृ० ] भागस्य जीवात्मनो भागिनि ब्रह्मणि योगो मुक्तिरिति । तद् दूषयति—न भाग० । न ब्रह्मणो भागो जीवात्मा, ब्रह्मणो भागाभावात् । योगस्य वियोगान्तत्वात्पुनर्बन्धप्रसङ्गः । अथ संसारकारणाभावान्न वियोग इति, एवं स एवास्तु, किं भागयोगकल्पनया ॥ ८१ ॥

[ वृ० सा० ] भागस्य जीवस्य भागिनि ब्रह्मणि योगो मुक्तिरिति दूषयति —नेति । ब्रह्मजीवयोर्भागिभागत्वकल्पनायां मानाभावाद् योगस्य वियोगान्तत्वाच्च ॥ ८१ ॥

[ भा० ] न भागि० । भागस्यांशस्य जीवस्य भागिन्यंशिनि परमात्मनि लयो न मोक्षः, संयोगा हि वियोगान्ता इत्युक्तहेतोः, ईश्वरानभ्युपगमाच्च, तथा स्वलयस्यापुरुषार्थत्वाच्चेत्यर्थः ॥ ८१ ॥

[ भा० सा० ] नेति । भागस्यांशस्य जीवस्य भागिन्यंशिनि परमात्मनि लयो न मोक्षः । स्वलयस्यापुरुषार्थत्वात् । सुखदुःखाभावयोरेव स्वतः पुरुषार्थत्वादित्यर्थः ॥ ८१ ॥

नाणिमादियोगोऽप्यवश्यंभावित्वात्तदुच्छित्तेरितरवियोगवत् ॥ ८२ ॥

[ वृ० ] अणिमादिसिद्धिरेव मुक्तिरित्यत्राह—नाणिमा० । तेषामपि कार्यत्वादनित्यत्वम् । आदिशब्दाल्लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायित्वमिति ॥ ८२ ॥

[ वृ० सा० ] नेति । सूत्रे स्पष्टे ॥ ८२ ॥ ८३ ॥

[ भा० ] नाणिमा० । अणिमाद्यैश्वर्यसम्बन्धोऽपि न मुक्तिः, ऐश्वर्यान्तरसम्बन्धवदेव तस्याप्युच्छेदनियमादित्यर्थः ॥ ८२ ॥

[ भा० सा० ] नेति । स्पष्टम् ॥ ८२ ॥

नेन्द्रादिपदयोगोऽपि तद्वत् ॥ ८३ ॥

[ वृ० ] परमैश्वर्यपदप्राप्तिरेव मुक्तिरित्यत्राह—नेन्द्रादि० । अनित्यत्वात् ॥ ८३ ॥

[ भा० ] नेन्द्रादि० । इन्द्राद्यैश्वर्यलाभोऽपि न मुक्तिः, इतरैश्वर्यवत् क्षयिष्णुत्वादित्यर्थः ॥ ८३ ॥

[ भा० सा० ] नेति । क्षयिष्णुत्वादित्यर्थः ॥ ८३ ॥

न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः ॥ ८४ ॥

[ वृ० ] केचिद् भौतिकानीन्द्रियाणीति । तन्निरस्यति—न भूत० । तथा च—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥ ( मु० उ० २।१।३ )

भूतप्रकृतित्वमिति तु येनेन्द्रियेण यद्भूतकारणं तन्मात्रं गृह्यते, तस्य तत्प्रकृतित्वाभिमानाद् व्यपदेशः ॥ ८४ ॥

[ वृ० सा० ] इन्द्रियाणि भौतिकानीति निरस्यति—नेति । भूतप्रकृतित्वमित्यत्र बहुव्रीहेस्त्वप्रत्ययः, सात्त्विकाहङ्कारकार्यत्वं हीन्द्रियाणां श्रूयते पुराणादिषु । भूतप्रकृतित्वमिति लौकिको व्यपदेशस्तु येनेन्द्रियेण यद्भूतकारणं तन्मात्रं गृह्यते तस्य तत्प्रकृतित्वाभिमानकृतः ॥८४॥

[ भा० ] इन्द्रियाणामाहङ्कारिकत्वं यदुक्तं तत्र परविप्रतिपत्तिं निराकरोति—न भूत० । सुगमा योजना । पूर्वं ( सां० सू० २।२० ) चैतद् व्याख्यातम् ॥ ८४ ॥

[ भा० सा० ] इन्द्रियाणामाहङ्कारिकत्वे परविप्रतिपत्तिं निराकरोति—नेति । स्पष्टं व्याख्यातम् । येनेन्द्रियेण यद्भूतगुणो गृह्यते तद्भूतप्रकृतिकं तदित्येवंभूतं प्रकृतिकत्वमत्र परपक्षत्वेन निराकरणादपौनरुक्त्यम् ॥ ८४ ॥

न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥ ८५ ॥

[ वृ० ] षट्पदार्थज्ञानान्मुक्तिरित्यत्राह—न षट्० । "द्रव्यगुणकर्मसामान्यविशेषसमवाया इति । तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति द्रव्याणि । रूपरसगन्धस्पर्शाः संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दा गुणाः । उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि कर्माणि । परमपरं च सामान्यम् । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । अयुतसिद्धानां यः संबन्ध इह प्रत्ययहेतुः स समवायः" इति नास्ति नियमोऽनियतपदार्थवादित्वात् सांख्यानाम् । न च तद्बोधान्मुक्तिः, आत्मज्ञानादेव मुक्तेः ॥ ८५ ॥

[ वृ० सा० ] षट्पदार्थास्तज्ज्ञानान्मुक्तिः, षोडशपदार्थास्तज्ज्ञानान्मुक्तिरिति वैशेपिकनैयायिकमतदूषणाय सूत्रे । षडिति । निराकार्याः ॥ ८५ ॥

[ भा० ] शक्त्यादिकमपि तत्त्वमस्तीत्याशयेन परेषां पदार्थप्रतिनियमं तन्मात्रज्ञानान्मुक्तिं च निराकरोति—न षट्पदार्थ० । द्रव्यगुणकर्मसामान्यविशेषसमवाया एव पदार्था इति यद्वैशेषिकाणां नियमो यश्च तज्ज्ञानान्मोक्ष इत्यभ्युपगमः, सोऽप्रामाणिकः; शक्त्याद्यतिरेकात्, पृथिव्यादिनवद्रव्येभ्यः प्रकृतेरतिरेकाच्चेत्यर्थः । गन्धादिमत्त्वेनैव हि पृथिव्यादिव्यवहारो गन्धादिश्च साम्यावस्थायां नास्ति । अतः पृथिवीत्वादिजातिरपि घटत्वादिवत् कार्यमात्रवृत्तिरिति । तदुक्तम्—

नाहो न रात्रिर्न नभो न भूमिर्नासीत् तमो ज्योतिरभून्न चान्यत् ।
शब्दादिबुद्ध्याद्युपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥

( वि० पु० १।२।२३ ) इति ॥ ८५ ॥

[ भा० सा० ] शक्त्यादिकमपि तत्त्वमस्तीत्याशयेन परेषां पदार्थनियमं तन्मात्रज्ञानान्मोक्षं च निराकरोति—नेति । "द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् पदार्थाः" ( वै० सू० १।१।४ ) इति वैशेषिकाणां नियमो यश्च तज्ज्ञानान्मोक्ष इत्यभ्युपगमः, सोऽयुक्तः;

शक्त्यादेरतिरेकात्, प्रकृत्यात्मविवेकादेव मोक्षस्योक्तत्वाच्चेत्यर्थः। "अजामेकाम्" ( श्वे० उ० ४।५ ) इत्यादिश्रुत्या षडतिरिक्तस्य प्रधानस्याङ्गीकाराच्चेति भावः॥ ८५॥

षोडशादिष्वप्येवम् ॥ ८६ ॥

[ वृ० ] षोडशपदार्थज्ञानान्मुक्तिरित्यत्राह—षोडशादि०। "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" ( न्या० सू० १।१।१ ) इति। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयम्। समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः। यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्। लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः। स चतुर्विधः, सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः। विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः। प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः। यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। स प्रतिपक्षस्थापनाहीनो वितण्डा। सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः। वचनविघातोऽर्थविकल्पोपपत्त्या छलम्। तत् त्रिविधम्—वाक्छलं सामान्यच्छलमुपचारच्छलं च। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः। साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः। विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्। प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि"। इयन्त इति न नियमः, न वा तद्बोधान्मुक्तिः। आदिशब्दादन्येऽपि नियतपदार्था निराकार्याः॥ ८६॥

[ वृ० सा० ] षोडशेति। आदिशब्दादन्येऽपि नियतपदार्थाः॥ ८६॥

[ भा० ] षोडश०। न्यायपाशुपतादिमतेषु षोडशादिष्वपि न नियमो न वा तन्मात्रज्ञानान्मुक्तिः, उक्तरूपेण पदार्थाधिक्यादित्यर्थः। अस्मन्मते तु नित्यं पदार्थद्वयमेव। नित्यानित्यसाधारणास्तु पदार्थाः पञ्चविंशतिरेवेति नियमः। पञ्चविंशतिद्रव्येष्वेव गुणकर्मसामान्यशक्त्यादीनामन्तर्भाव इति॥ ८६॥

[ भा० सा० ] षोडशेति। न्यायपाशुपतादिसिद्धषोडशादिष्वपि न नियमो न वा तन्मात्रज्ञानान्मुक्तिरित्यर्थः। अस्माकं तु पञ्चविंशतिद्रव्येष्वेव गुणकर्मसामान्यशक्त्यादीनामन्तर्भावः॥ ८६॥

## नाणुनित्यता तत्कार्यत्वश्रुतेः ॥ ८७ ॥

[ वृ० ] नित्याश्चतुर्विधाः परमाणवः, तैरेव महाभूतारम्भात्किं प्रधानेनेत्यत आह—नाणुनित्य० । "प्रधानात्सर्वमजायत", "प्रकृतिपुरुषादन्यत्सर्वमनित्यम्" इति श्रुतेः कार्यत्वात्परमाणूनां न नित्यत्वं कारणत्वं वा ॥ ८७ ॥

[ वृ० सा० ] नित्यैश्चतुर्विधैर्नैयमैः परमाणुभिर्जगदारम्भ इति दूषयति—नाण्विति । प्रकृतिपुरुषयोरेव नित्यत्वश्रवणे नेतरस्य सर्वस्य कार्यत्वावगमादित्यर्थः ॥ ८७ ॥

[ भा० ] पञ्चभूतानां पूर्वोक्तकार्यत्वोपपत्त्यर्थं वैशेषिकाद्यभ्युपगतं पार्थिवाद्यणुनित्यत्वमपाकरोति – नाणु० । पृथिव्याद्यणूनां नित्यता नास्ति, तेषामणूनामपि कार्यत्वश्रुतेरित्यर्थः । यद्यप्यस्माभिः सा श्रुतिर्न दृश्यते काललुप्तत्वादिना, तथाप्याचार्यवाक्यान्मनुस्मरणाच्चानुमेया । यथा मनुः—

अण्व्यो मात्रा विनाशिन्यो दशार्धानां च याः स्मृताः ।
ताभिः सार्द्धमिदं सर्वं सम्भवत्यनुपूर्वशः ॥ (मनु० १।२७)

इति । दशार्द्धानां पृथिव्यादिपञ्चभूतानाम् । न चात्र वाक्येऽणुशब्देन द्व्यणुकाद्येव ग्राह्यमिति वाच्यम्; सङ्कोचे प्रमाणाभावादिति । अत्राणुशब्दो भूतपरमाणुपर एव । वैशेषिकाद्यभिमतं च तस्य नित्यत्वमनेन सूत्रेण निराक्रियते, न त्वणुपरिमाणद्रव्यसामान्यस्य नित्यत्वं रजोगुणस्य चाञ्चल्यानुरोधेनाणुत्वसिद्धेः । मध्यमपरिमाणत्वे नित्यत्वस्य विभुत्वे च क्रियाया अनुपपत्तेरिति ॥ ८७ ॥

[ भा० सा० ] वैशेषिकाद्यभ्युपगतपरमाणुनित्यतामपाकरोति—नेति । सा श्रुतिः काललुप्तेत्याचार्यवचनाज्ज्ञायते ।

अण्व्यो मात्रा विनाशिन्यो दशार्धानां च याः स्मृताः ।
ताभिः सार्द्धमिदं सर्वं सम्भवत्यनुपूर्वशः ॥ ( मनु० १।२७ ).

इति मनुस्मृतेश्च । दशार्धानां पञ्चभूतानाम् । अत्र सूत्रेऽणुशब्दो भूतपरमाणुपर एव, न त्वणुपरिमाणद्रव्यसामान्यपरः, रजोगुणस्य चाञ्चल्यानुरोधेनाणुत्वसिद्धेः । मध्यमपरिमाणत्वे नित्यत्वस्य विभुत्वे च क्रियाया अनुपपत्तेः । न चेदं द्व्यणुकादिपरम्, संकोचे मानाभावात् ॥८७॥

## न तन्निर्भागत्वं कार्यत्वात् ॥ ८८ ॥

[ वृ० ] एवं च परमाणुत्वमेव न भवतीत्याह न तन्नि० । निर्भागत्वं निरवयवत्वम् । यत्कार्यं न तन्निर्भागि, यथा पट इति ॥ ८८ ॥

[ वृ० सा० ] कार्यत्वादेव च परमाणुर्न निरवयव इत्याह – नेति । परमाणूनामिति शेषः । यत्कार्यं तन्न निर्भागं यथा घट इति ॥ ८८ ॥

[ भा० ] ननु निरवयवस्य परमाणोः कथं कार्यत्वं घटते ? तत्राह—न निर्भाग०। श्रुतिसिद्धकार्यत्वान्यथानुपपत्त्या पृथिव्याद्यणूनां न निरवयवत्वमित्यर्थः । अत एव

तन्मात्राख्यसूक्ष्मद्रव्याण्येव पार्थिवाद्यणूनामवयवा इति पातञ्जलभाष्ये ( यो० सू० १।४५,३।४४ ) व्यासदेवैः प्रतिपादितम् । पृथिवीपरमाणुर्जलपरमाणुरित्यादिव्यवहारस्तु पृथिव्यादीनामपकर्षकाष्ठाभिप्रायेणैव । अतः प्रकृतिपर्यन्तमणुत्वेऽपि न क्षतिरिति । यद्यपि तन्मात्रेष्वपि गन्धाद्यस्ति, तथापि तस्याप्रत्यक्षतया न पृथिवीत्वादिनियामकत्वम्, व्यक्तगन्धादेरेव पृथिवीत्वादिसिद्धेः । अतो न तन्मात्राणि पृथिव्यादयः । तेषु च सूक्ष्मभूतव्यवहारो भूतसाक्षात्कारणत्वादिनैवेत्यपि बोध्यम् ॥ ८८ ॥

[ भा० सा० ] ननु निरवयवस्य कथं कार्यत्वमत आह—नेति । कार्यत्वान्यथानुपपत्त्या तेषामप्यवयवाः सन्ति । पृथिवीपरमाणुरिति पृथिव्यादीनामपकर्षकाष्ठाभिप्रायेण । ते चावयवास्तन्मात्ररूपाः । तेषु च न पृथिवीत्वादि । व्यक्तगन्धादेरेव पृथिवीत्वादिनियामकत्वात् । तेषु सूक्ष्मभूतव्यवहारस्तु भूतानां साक्षात्कारणत्वात् । प्रकृतिपर्यन्तं चोत्तरोत्तरमणुत्वाधिक्यं द्रष्टव्यम् ॥ ८८ ॥

## न रूपनिबन्धनात्प्रत्यक्षत्वनियमः ॥ ८९ ॥

[ वृ० ] उद्भूतरूपवत्त्वाच्च प्रत्यक्षमित्यत आह—न रूप० । 'इहायं पक्षी' इत्याकाशस्य प्रत्यक्षत्वाद् व्यभिचारादुद्भूतरूपनिबन्धनान्न प्रत्यक्षत्वनियमः । अलौकिके च समाधिबलजे योगिप्रत्यक्षे न पर्यनुयोगोऽस्ति ॥ ८९ ॥

[ वृ० सा० ] उद्भूतरूपनिबन्धनं द्रव्यप्रत्यक्षत्वमिति दूषयति—नेति । इहायं पक्षीत्याकाशस्य प्रत्यक्षत्वादिति ॥ ८९ ॥

[ भा० ] प्रकृतिपुरुषसाक्षात्कारो न सम्भवति, रूपस्य द्रव्यसाक्षात्कारहेतुत्वादिति नास्तिकाक्षेपं निराकरोति—न रूप० । रूपादेव निमित्तात् प्रत्यक्षतेति नियमो नास्ति, धर्मादिनापि साक्षात्कारसम्भवादित्यर्थः । व्यञ्जकानियमस्याञ्जनादौ दृष्टत्वेनादोषत्वात् । अतो बहिर्द्रव्यलौकिकप्रत्यक्षं प्रत्येवोद्भूतरूपं व्यञ्जकमिति भावः ॥ ८९ ॥

[ भा० सा० ] ननु रूपत्वाभावात् प्रकृतिपुरुषसाक्षात्कारो नेति नास्तिकाक्षेपं निराकरोति—नेति । रूपादेव निमित्तात् प्रत्यक्षमिति नियमो नास्ति, धर्मादीनामपि साक्षात्कारसंभवादित्यर्थः । प्रत्यक्षं प्रत्युद्भूतरूपस्य व्यञ्जकत्वादिति भावः ॥ ८९ ॥

## न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥ ९० ॥

[ वृ० ] अणुमहद्दीर्घं ह्रस्वमिति चतुर्विधं परिमाणं नास्तीत्याह—न परिमाण० । महदणुभ्यां कार्यकारणयोगाद् व्यवहारसिद्धेः । एतत्प्रभेदा एवान्ये परिमाणभेदा इति ॥९०॥

[ वृ० सा० ] अणु महद्दीर्घं ह्रस्वमिति चतुर्धा परिमाणमिति दूषयति—नेति । महदणुभ्यामेव तयोः कार्यकारणयोर्योगादन्येषां परिमाणानां महदणुभेदत्वेनैवोपपत्तेः ॥ ९० ॥

[ भा० ] नन्वेवं किमणुपरिमाणं वस्त्वस्ति न वेत्याकाङ्क्षायां परिमाणनिर्णयं करोति—न परिमाण० । अणु महद्दीर्घं ह्रस्वमिति परिमाणचातुर्विध्यं नास्ति ।

द्वैविध्यं तु वर्तत एव। द्वाभ्यां तद्योगात्—द्वाभ्यामेवाणुमहत्परिमाणाभ्यां चातुर्विध्यसम्भवादित्यर्थः। महत्परिमाणस्यावान्तरभेदावेव हि ह्रस्वदीर्घौ, अन्यथा वक्रादिरूपैः परिमाणानन्त्यप्रसङ्गादिति। तत्रास्मन्नयेऽणुपरिमाणमाकाशस्य कारणं गुणविशेषं वर्जयित्वा भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यम्। अन्यत्र यथायोग्यं मध्यमादिपरममहत्त्वान्तपरिमाणानि, तानि च महत्त्वस्यैवावान्तरभेदा इति॥ ९०॥

[ भा० सा० ] अणु महद् दीर्घं ह्रस्वं चेति परिमाणचातुर्विध्यं नास्ति, द्वाभ्यामणुमहत्परिमाणाभ्यामेव तद्योगाच्चातुर्विध्यसम्भवादित्यर्थः। महत्त्वस्य भेदावेव ह्रस्वदीर्घौ, अन्यथा वक्रादिभिः परिमाणानन्त्यप्रसङ्गः। तत्राणुपरिमाणं मूलकारणेषु सत्त्वादिगुणेषु। अन्यत्र यथायोग्यं मध्यमादिपरममहत्त्वान्तानि च महत्त्वस्यैवावान्तरभेदाः। पुरुषैकत्वं प्रकृत्यैकत्वं च पुरुषत्वादिसामान्येनेत्युक्तम्॥ ९०॥

## अनित्यत्वेऽपि स्थिरतायोगात्प्रत्यभिज्ञानं सामान्यस्य॥ ९१॥

[ वृ० ] प्रकृतिपुरुषव्यतिरिक्तं सामान्यं नित्यमस्तीत्याह—अनित्यत्वे०। यथा 'सोऽयं देवदत्तः' इति न सामान्यविषया प्रत्यभिज्ञा, तथाऽनित्यत्वेऽपि सामान्यस्य बहुकालस्थैर्याज्ज्वालादिषु प्रत्यभिज्ञानमिति॥ ९१॥

[ वृ० सा० ] प्रकृतिपुरुषाभ्यामन्यत् सामान्यं नित्यमिति, तद्दूषयति अनित्यत्वेऽपीति। यथा सोऽयं देवदत्त इति न सामान्यविषया प्रत्यभिज्ञा, किन्तु व्यक्तिविषया, व्यक्तेः स्थिरत्वात्। तथा सामान्यस्यापि स्थिरत्वात् प्रत्यभिज्ञा, न तु नित्यत्वात्॥ ९१॥

[ भा० ] पुरुषैकत्वं सामान्येनेति कण्ठत एवोक्तम्, प्रकृतेरेकत्वं सामान्येनेत्यर्थादुक्तम्, तदर्थं सामान्येषु नास्तिकविप्रतिपत्तिं निराकरोति—अनित्यत्वे०। व्यक्तीनामनित्यत्वेऽपि स एवायं घट इति स्थिरतायोगेन यत् प्रत्यभिज्ञानं तत् सामान्यस्य; सामान्यविषयकमेव तत् प्रत्यभिज्ञानमित्यर्थः॥ ९१॥

[ भा० सा० ] तत्र सामान्येषु नास्तिकविप्रतिपत्तिं निराकरोति—अनित्यत्व इति। व्यक्तीनामनित्यत्वेऽपि प्रतिक्षणपरिणामितयाऽस्थिरत्वेऽपि स एवायं घट इति स्थिरतायोगेन यत्प्रत्यभिज्ञानं तत्सामान्यस्य सामान्यविषयकमेव प्रत्यभिज्ञानमित्यर्थः॥ ९१॥

## न तदपलापस्तस्मात्॥ ९२॥

[ वृ० ] सामान्यासत्त्वं निराकरोति—न तदप०। न सामान्यापलापः, प्रत्यभिज्ञानात् परोक्तयुक्तेः प्रत्यक्षबाधात्॥ ९२॥

[ वृ० सा० ] नेति। तस्मात् प्रत्यक्षात् तदपलापः सामान्यापलापो न कार्यः, अबाधितप्रत्यक्षस्य विषयसाधकत्वादिति भावः॥ ९२॥

[ भा० ] तस्मान्न सामान्यापलाप युक्त इत्याह—न तदप०। सुगमम्॥ ९२॥

[ भा० सा० ] इदमनुगतप्रत्ययस्याप्युपलक्षणम्, तदेवाह—नेति। स्पष्टम्॥ ९२॥

नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥ ९३ ॥

[ वृ० ] अस्त्येकाकारा बुद्धिः, सामान्यनिवृत्तिपरेत्यत्राह—नान्यनि० । अभावरूपत्वे प्रतियोगिस्मरणाधीनं ज्ञानं लभ्येत, न तु विधिमुखतयेति । तथा च—

सिद्धश्चागौरपोह्येत, गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ।
गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः ॥ ९३ ॥ ( श्लो० वा० ८३ )

[ वृ० सा० ] अन्यापोहो जातिरिति निरस्यति—नान्येति । गोत्वादेरगोभेदरूपत्वं न, कुतः ? भावप्रतीतेः । अगोरूपप्रतियोगिस्मरणं विनैव भावरूपतया तत्प्रतीतेः । अत एवोक्तम्—

सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो न भावः प्रतिषिध्यते ॥
गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः ॥
( श्लो० वा० ८३ ) इति ॥ ९३ ॥

[ भा० ] नन्वतद्व्यावृत्तिरूपेणाभावेनैव प्रत्यभिज्ञोपपादनीया, सैव च सामान्यशब्दार्थोऽस्तु, तत्राह—नान्य० । स एवायमिति भावप्रत्ययानिवृत्तिरूपत्वं न सामान्यस्येत्यर्थः । अन्यथा हि नायमघट इत्येव प्रतीयेत । किञ्चान्यव्यावृत्तिशब्दस्याघटव्यावृत्तिरित्यर्थो वाच्यः । तत्राघटत्वं घटसामान्यभिन्नत्वमिति सामान्याभ्युपगम एवापतित इति ॥ ९३ ॥

[ भा० सा० ] नन्वतद्व्यावृत्तिरूपेणाभावेनैव प्रत्यभिज्ञास्तु, स एव सामान्यमस्त्वत आह—नान्येति । स एवायमिति भावत्वेन प्रत्ययान्न तत्तद्रूपवत्त्वं तस्येत्यर्थः । अन्यथा नायमघट इत्येव प्रतीयेतेति भावः । किञ्चान्यव्यावृत्तिशब्दस्याघटव्यावृत्तिरित्यर्थः । तत्राघटत्वं घटसामान्यभिन्नत्वमिति सामान्याभ्युपगम एवायातः ॥ ९३ ॥

न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ॥ ९४ ॥

[ वृ० ] सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यतीत्यत आह—न तत्त्वा० । भूयोऽवयवसामान्ययोगः सादृश्यं न तत्त्वान्तरम्, प्रत्यक्षेणैव बहुतरतथावयवग्रहणात् 'तत्सदृशोऽयम्' इति ज्ञानोत्पादात् ॥ ९४ ॥

[ वृ० सा० ] सादृश्यं पदार्थान्तरमिति निरस्यति—नेति । तत्तद्द्रव्यगुणादिरूपस्यैव प्रत्यक्षेणोपलम्भादित्यर्थः ॥ ९४ ॥

[ भा० ] ननु सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यति, तत्राह—न तत्त्वा० । भूयोऽवयवादिसामान्यादतिरिक्तं न सादृश्यमस्ति, प्रत्यक्षत एव सामान्यरूपतयोपलम्भादित्यर्थः ॥ ९४ ॥

[ भा० सा० ] ननु सादृश्यनिबन्धना प्रत्यभिज्ञाऽस्त्वत आह—नेति । भूयोऽवयवादिसामान्याद्भिन्नं न सादृश्यमपेक्षते, सादृश्यस्य तद्रूपतयैवोपलम्भादित्यर्थः । अवयवसामान्यमेकजातीयावयवत्वम्, अवयवपदं धर्ममात्रोपलक्षणम् ॥ ९४ ॥

## निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात्तदुपलब्धेः ॥ ९५ ॥

[ वृ० ] प्रकारन्तरामाह—निज० । अस्ति पदार्थानां निजा शक्तिः । सा तुल्यपिण्डान्तरदर्शनादभिव्यक्ता विशिष्टा सती 'सदृशोऽयम्' इति सादृश्योपलब्धेः कारणम्, न तु तत्त्वान्तरं सादृश्यम् ॥ ९५ ॥

[ वृ० सा० ] निजेति । निजशक्त्यभिव्यक्तिरिति, अभिव्यक्ता निजशक्तिरित्यर्थः । अभिव्यक्ता तत्तत्कार्यानुकूलतया सिद्धा । वैशिष्ट्यात् तादृशशक्तिसम्बन्धात् । तदुपलब्धेः सादृश्योपलम्भादित्यर्थः । तथा च तत्तत्पदार्थनिष्ठा शक्तिरेव सादृश्यप्रतीतिविषय इति भावः ॥ ९५ ॥

[ भा० ] ननु स्वाभाविकी शक्तिरेव सादृश्यमस्तु, न तु तत्सामान्यमित्याशङ्कामपाकरोति—निजशक्त्य० । वस्तुनः स्वाभाविकशक्तिविशेषोत्पादोऽपि न सादृश्यम्, शक्त्युपलब्धितः सादृश्योपलब्धेर्विलक्षणत्वात् । शक्तिज्ञानं हि नान्यधर्मिज्ञानसापेक्षम्; सादृश्यज्ञानं पुनः प्रतियोगिज्ञानमपेक्षतेऽभावज्ञानवदिति ज्ञानयोर्वैलक्षण्यमित्यर्थः । किञ्च, धर्मिणः शक्तिसामान्यं न सादृश्यं बाल्यावस्थायामपि युवसादृश्यापत्तेः । किन्तु युवादिकालीनः शक्तिविशेषो युवादिसादृश्यमिति वक्तव्यम्; तथा प्रतिव्यक्त्यनन्तशक्तिकल्पनापेक्षया सर्वव्यक्तिसाधारणैकसामान्यकल्पनैव युक्तेति ॥ ९५ ॥

[ भा० सा० ] स्वाभाविकी शक्तिरेव सादृश्यमित्यपाकरोति—निजेति । निजस्य शक्तिविशेषस्योत्पादोऽपि न सादृश्यम् । शक्त्युपलब्धितः सादृश्योपलब्धेर्विलक्षणत्वात् । शक्तिज्ञानं प्रतियोगिज्ञानापेक्षम् । इदं तु सापेक्षमभावज्ञानवदिति वैलक्षण्यमित्यर्थः ॥ ९५ ॥

## न संज्ञासंज्ञिसंबन्धोऽपि ॥ ९६ ॥

[ वृ० ] संज्ञासंज्ञिसंबन्धज्ञानहेतुः सादृश्यमिति तत्सिद्धिरित्यत्राह—न संज्ञा० । न संबन्धज्ञानहेतुः सादृश्यं व्यभिचारात्, अन्यत्राप्युपदेशादेः संज्ञासंज्ञिसम्बन्धनिश्चयात् । करणव्युत्पत्त्या विषयिणो ज्ञानस्योपलक्षणम् ॥ ९६ ॥

[ वृ० सा० ] नेति । नित्य इति शेषः ॥ ९६ ॥

[ भा० ] ननु तथापि घटादिव्यक्तीनां सादृश्यमस्तु; तत्राह—न संज्ञा० । यथोक्तः संज्ञासंज्ञिनोः सम्बन्धोऽपि न सादृश्यम्, वैशिष्ट्यात् तदुपलब्धेरेवेत्यर्थः । संज्ञासंज्ञिभावमजानतोऽपि सादृश्यज्ञानादिति ॥ ९६ ॥

[ भा० सा० ] ननु घटादिसंज्ञकत्वमेव घटादिसामान्यमस्त्वत आह—नेति । संज्ञासंज्ञिभावमजानतोऽपि सामान्यज्ञानादित्यर्थः । किञ्च, तस्यानित्यत्वात् सैवेयं दीपकलिकेति वर्तमानवस्तुन्यतीतवस्तुसादृश्येन प्रत्यभिज्ञानुपपत्तिरेवेत्यर्थः ॥ ९६ ॥

## न संबन्धनित्यतोभयानित्यत्वात् ॥ ९७ ॥

[ वृ० ] शब्दार्थयोर्नित्यः संबन्ध इति निरस्यति—न संबन्ध०। शब्दार्थयोरनित्यत्वात्कथं संबन्धो नित्यः स्यात् ? ॥ ९७ ॥

[ वृ० सा० ] किं बहुना शब्दार्थयोः सम्बन्ध एव [न] इत्याह—नेति। स्पष्टम् ॥९७॥

[ भा० ] अपि च—न सम्बन्ध०। संज्ञासंज्ञिनोरनित्यत्वात् तत्सम्बन्धस्यापि न नित्यता। अतः कथं तेनातीतवस्तुसादृश्यं वर्तमानवस्तुनि स्यादित्यर्थः ॥ ९७ ॥

[ भा० सा० ] तदाह—नेति। उभयोः संज्ञासंज्ञिनोरित्यर्थः ॥ ९७ ॥

## नाजः संबन्धो धर्मिग्राहकप्रमाणबाधात् ॥ ९८ ॥

[ वृ० ] अजसंबन्धमपाकरोति—नाजः०। संयोगो भवन् कर्मजो भवेत्, न च नित्यस्य व्यापकस्य क्रियास्ति। महदादयश्चानित्याः, कथं तत्संयोगो नित्यः स्यात् ? आत्मनां च निर्धर्मकत्वान्न तैः प्रधानेन संयोगोऽस्ति। किं च येन प्रमाणेन वस्तु गृह्यते तेनैव संयोगग्रहणमिति धर्मिग्राहकप्रमाणबाधः ॥ ९८ ॥

[ वृ० सा० ] अजसम्बन्धं निराकरोति—नाज इति। विशिष्टप्रतीत्या विशेषणविशेष्याधीनसम्बन्धस्यैव सिद्धे तस्य च विशेषणविशेष्याभावे सम्भवात् सम्बन्धस्याजत्वमयुक्तमिति ॥ ९८ ॥

[ भा० ] ननु सम्बन्ध्यनित्यत्वेऽपि सम्बन्धो नित्यः स्यात्, किमत्र बाधकम्; तत्राह—नाजः०। कादाचित्कविभागे सत्येव सम्बन्धः सिध्यति, अन्यथा वक्ष्यमाणरीत्या स्वरूपेणैवोपपत्तौ सम्बन्धकल्पनानवकाशात्। स च कादाचित्को विभागो न सम्बन्धनित्यत्वे सम्भवति। अतः सम्बन्धग्राहकप्रमाणेनैव बाधान्न नित्यः सम्बन्ध इत्यर्थः ॥ ९८ ॥

[ भा० सा० ] ननु सम्बन्ध्यनित्यत्वेऽपि सम्बन्धो नित्योऽस्त्वत आह—नाज इति। कादाचित्कविभागे सत्येव सम्बन्धः सिद्ध्यति। अन्यथा वक्ष्यमाणरीत्या स्वरूपेणैवोपपत्तौ सम्बन्धकल्पनानवकाशात्। कादाचित्कविभागश्च न सम्बन्धनित्यत्वे सम्भवति। अतः सम्बन्धग्राहकप्रमाणेनैवानित्यसम्बन्धसिद्धिरित्यर्थः। आत्माकाशादीनामविभागलक्षणो गौणः सम्बन्ध इति भावः ॥ ९८ ॥

## न समवायोऽस्ति प्रमाणाभावात् ॥ ९९ ॥

[ वृ० ] समवायं निरस्यति—न समवायो०। समवायः संबद्धोऽसंबद्धो वा। असंबद्धत्वे कथमन्यं संबन्धिनं कुर्यात्। असंबद्धत्वेऽन्यसंबन्धस्यासंभवात् समवाय एव वक्तव्यः, तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थानान्नास्ति समवायः। यस्त्वविभागेन प्रतिभासः, स संयोगविशेषवैचित्र्यात्, यथा तप्तायःपिण्डे वह्निः ॥ ९९ ॥

[ वृ० सा० ] समवायं निरस्यति—नेति। स्पष्टम् ॥ ९९ ॥

[ भा० ] नन्वेवं नित्ययोर्गुणगुणिनोर्नित्यः समवायो नोपपद्येत, तत्राह—न समवायो० । सुगमम् ॥ ९९ ॥

[ भा० सा० ] नन्वेवं समवायो नित्यो न सिद्ध्येदत आह—नेति । समवाये प्रमाणाभाव इत्यर्थः ॥ ९९ ॥

## उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥ १०० ॥

[ वृ० ] यदि समवायो नास्ति, कथं शुक्लः पट इति, अश्वो गच्छतीति, गौरोऽयमिति ज्ञानमित्यत्राह – उभयत्रा० । उभयत्रापि तादात्म्येनैवोपपत्तेः, अन्यथा सामानाधिकरण्यं न स्यादिति ॥ १०० ॥

[ वृ० सा० ] प्रमाणाभावमेवोपपादयति—उभयत्रेति । समवाये हि शुक्लो घट इत्यादि प्रत्यक्षं प्रमाणम्, विशिष्टप्रतीतिर्विशेषणविशेष्योभयसम्बन्धविषया, विशिष्टप्रतीतित्वात्, दण्डीति प्रतीतिवदित्यनुमानं चोभयत्रापि तादात्म्येनैवान्यथासिद्धिः । इह तन्तुषु पट इत्यादिप्रतीतिस्तु स्ववासनामात्रकल्पिता नार्थसाधिका । किं च समवायः सम्बद्धः सम्बन्धिनौ सम्बन्धयेत्, असम्बद्धो वा ? आद्ये तस्यापि सम्बन्धान्तरं वाच्यमित्येवमनवस्था । समवायस्य स्वरूपमेव सम्बन्धश्चेत्; आदावेव कुतो न तत् । असम्बद्धस्य सम्बन्धत्वं त्वन्याय्यमेवेति ॥ १०० ॥

[ भा० ] ननु वैशिष्ट्यप्रत्यक्षं विशिष्टबुद्ध्यान्यथानुपपत्तिश्च प्रमाणम्; तत्राह—उभयत्रा० । उभयत्रापि वैशिष्ट्यप्रत्यक्षे तदनुमाने च स्वरूपेणैवान्यथासिद्धेर्न तदुभयं समवाये प्रमाणमित्यर्थः । अयं भावः—यथा समवायवैशिष्ट्यबुद्धिः समवायस्वरूपेणैवेष्यतेऽनवस्थाभयादिति, तत्र प्रत्यक्षानुमाने अन्यथासिद्धे । एवं गुणगुणिप्रभृतीनां विशिष्टबुद्धिरपि गुणादिस्वरूपेणैवेष्यताम् । अतस्तत्रापि प्रत्यक्षानुमाने अन्यथासिद्धे इति। नन्वेवं संयोगोऽपि न सिद्ध्यति भूतलादौ घटादिप्रत्ययस्यापि स्वरूपेणैवान्यथासिद्धेरिति चेन्न; वियोगकालेऽपि भूतलघटयोः स्वरूपतादवस्थ्येन विशिष्टबुद्धिप्रसङ्गात् । समवायस्थले च समवेतस्य कदापि स्वाश्रयवियोगो नास्तीति नायं दोषः ।

कश्चित्तु तादात्म्यसम्बन्धेनात्र समवायस्यान्यथासिद्धिमाह, तन्न; शब्दमात्रतादात्म्यं ह्यत्र नात्यन्तं वक्तव्यम्, गुणवियोगेऽपि गुणिसत्त्वाद् वैशिष्ट्याप्रत्ययाच्च । किन्तु भेदाभेदबुद्धिनियामकः सम्बन्धविशेष एवागत्या वक्तव्यः । तथा च तस्य समवाय इति वा तादात्म्यमिति वा नाममात्रं भिन्नम् । सम्बन्धिद्वयातिरिक्तः सम्बन्धस्तु सिद्ध एवेति । यदि च तादात्म्यं स्वरूपमेवोच्यते, तदास्माभिरपि तदेवोक्तमिति शब्दमात्रभेद इति ॥ १०० ॥

[ भा० सा० ] ननु गुणगुणिनोः घटरूपवान् घटस्वरूपमिति प्रत्यक्षं प्रमाणं समवाये तथा तदनुपपत्तिरूपमनुमानं चेत्यत आह—उभयत्रेति । स्वरूपेणैवान्यथासिद्धेर्न तदुभयं समवाये प्रमाणमित्यर्थः । यथा समवायवैशिष्ट्यबुद्धिः समवायस्वरूपेणैवेष्यतेऽनवस्थाभयात्, एवं गुण-

गुण्यादेर्विशिष्टबुद्धिरपि गुणादिस्वरूपेणैवेष्यत इति भावः। अत्रेदं तत्त्वम्—स्वरूपे सम्बन्धत्वमपि धर्मः स्वीक्रियते, तेन रूपेण च तस्य सम्बन्धिद्वयनिरूप्यत्वम्। विशिष्टबुद्धिनियामकत्वं च तत्तद्रूपेण सम्बन्धितासम्बन्धित्वेन रूपेण। वाच्यता त्र आधारतादिनियामकता च, संयोगस्तु भूतलादिस्वरूपेणान्यथासिद्धः। विभागकालेऽपि भूतलघटस्वरूपतादवस्थ्येन विशिष्टबुद्धिप्रसङ्गात्। समवायस्थले तु सतोः सम्बन्धिनोः न कदापि वियोग इति नायं दोषः, सत्त्वादीनां क्षोभात्सृष्टिरित्युक्तं तत्र क्रियाया मानाभावः॥ १००॥

## नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवापरोक्षप्रतीतेः॥ १०१॥

[ वृ० ] अनुमेया क्रिया स्यादित्यत्राह - नानुमेय०। निकटस्थस्य क्रियाक्रियावतोरेवापरोक्षप्रतीतेः, अन्यथा सिद्धस्य प्रत्यक्षस्य बाधात्। यदि संयोगविभागाभ्यां कर्मानुमीयते, तयोरुभयवृत्तित्वाद् वृक्षमूलादग्रं गच्छति पुरुषे वृक्षेऽपि कर्मानुमीयेत। ननु पुरुषकर्मणा संयोगविभागसिद्धौ किमर्थं वृक्षे कर्म स्वीकर्तव्यम्? उत्पत्तौ भवेदेवम्, अव्यभिचारात्तु संयोगविभागाभ्यां वृक्षे कर्मानुमानं न निवर्तते; किंच अन्धकारे 'भुजाग्रं मे कम्पते' इत्यादौ कम्पनमात्रज्ञानं भ्रान्तिः। सूर्यक्रियानुपलम्भश्चातिदूरादिदोषात्॥ १०१॥

[ वृ० सा० ] देशान्तरसंयोगविभागाभ्यामनुमेयैव क्रिया न प्रत्यक्षा, सूर्यक्रियावदिति मतं निरस्यति—नानुमेयत्वमिति। नेदिष्ठस्यातिनिकटवर्तिनः, तत्तद्वतोः क्रियाक्रियावतोः। तथा चानुभवापलापो नोचित इति भावः। सूर्यक्रिया तु दूरस्थत्वान्न प्रत्यक्षा॥ १०१॥

[ भा० ] प्रकृतेः क्षोभात् प्रकृतिपुरुषसंयोगस्तस्मात् सृष्टिरिति सिद्धान्तः। तत्रायं नास्तिकानामाक्षेपः—नास्ति क्षोभाख्या कस्यापि क्रिया, सर्वं वस्तु क्षणिकं यत्रोत्पद्यते तत्रैव विनश्यतीत्यतो न देशान्तरसंयोगोन्नेया क्रिया सिद्ध्यतीति, तत्राह - नानुमेयत्व०।

न देशान्तरसंयोगादिना क्रियाया अनुमेयत्वमेव, यतो नेदिष्ठस्य निकटस्थस्य द्रष्टुः क्रियाक्रियावतोः प्रत्यक्षेणापि प्रतीतिरस्ति, वृक्षश्चलतीत्यादिरित्यर्थः॥ १०१॥

[ भा० सा० ] सर्वस्य वस्तुनः क्षणिकत्वेन कस्याप्युत्तरदेशसंयोगाभावेन तेन क्रियानुमानसम्भवान्नानुमेयैव हि क्रियेत्यत आह—नेति। न तेन क्रियाया अनुमेयत्वमेव, यतो निकटस्थस्य क्रियातद्वतोः प्रत्यक्षेणैव प्रतीतेर्वृक्षश्चलतीत्यादिरित्यर्थः॥ १०१॥

## न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात्॥ १०२॥

[ वृ० ] पञ्चभूतारब्धं शरीरमित्यत्राह न पाञ्च०। बहूनां भिन्नजातीयानाम्। उपष्टम्भकत्वे तु चतुर्णां निमित्तत्वमस्त्येव। तेन च पाञ्चभौतिकत्वमुच्यत इति॥१०२॥

[ वृ० सा० ] पञ्चभूतारब्धं शरीरमिति दूषयति—नेति। उपादानत्वायोगादित्यर्थः। किञ्च, शरीरस्य पाञ्चभौतिकत्वे घटाकाशसंयोगस्थे वा प्रत्यक्षत्वापत्तिः, योग्यसमवेतस्यैव प्रत्यक्षत्वनियमात्॥ १०२॥

[ भा० ] तृतीयाध्याये शरीरस्य पाञ्चभौतिकत्वादिरूपैर्मतभेदा एवोक्ताः ( सां० सू० ३।१७–१९ ), न तु विशेषोऽवधृतः । तेष्वत्र परपक्षं प्रतिषेधति—न पञ्च० । बहूनां भिन्नजातीयानां चोपादानत्वं घटपटादिस्थले न दृष्टमिति सजातीयमेवोपादानम् । इतरच्च भूतचतुष्टयमुपष्टम्भकमित्याशयेन पाञ्चभौतिकव्यवहारः । एकोपादानकत्वेऽपि पृथिव्येवोपादानं सर्वशरीरस्येति वक्ष्यति ( सां० सू० ५।११२ ) ॥ १०२ ॥

[ भा० सा० ] पूर्वमेकभौतिकं शरीरमुक्तं तत्र परपक्षं निषेधति—नेति । बहूनां भिन्नजातीयानामुपादानत्वं घटादौ न तथा न दृष्टमिति सजातीयमेवोपादानम्, इतरच्चतुष्टयमुपष्टम्भकमित्याशयः ॥ १०२ ॥

## न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥

[ वृ० ] नास्ति सूक्ष्मशरीरं प्रमाणाभावादित्यत्राह—न स्थूल० । मनसो निराश्रयस्य गत्यभावान्मरणे देहप्राप्तये मनस आश्रयो वक्तव्यः । स एवातिवाहिकं सूक्ष्मशरीरमिति । श्रुतिरपि ( ? ) "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः" ( म० भा० वन० २९७।१७ ) । पुरि स्थूलशरीरे शेत इति पुरुषः सूक्ष्मदेहः ॥ १०३ ॥

[ वृ० सा० ] शरीरं द्विविधमित्याह—नेति । मनसो निराश्रयस्य गत्यभावाद् देहान्तरगमने आश्रयो वाच्यः, स एवातिवाहिकं सूक्ष्मं च शरीरमित्युच्यते । "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलाद्" ( महा० वन० २९७।१७ ) इत्यत्र पुरुषपदवाच्यमपि तत्, 'पुरि स्थूलशरीरे शेते' इति व्युत्पत्तेः । नेन्द्रियाणां प्राप्यकारित्वनियमः, चक्षुषस्तैजसत्वेन विषयदेशे गमनसम्भवेऽपि श्रोत्रादेस्तदभावात् । किन्तु शब्द एव वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा श्रोत्रदेशं गतः श्रोत्रेण गृह्यते, गन्धोऽपि साश्रयो घ्राणदेशमागतो घ्राणेन, एवमन्यत्रापि ॥ १०३ ॥

[ भा० ] स्थूलमेव शरीरमिति केचित्; तन्निराकरोति—न स्थूल० । इन्द्रियाश्रयत्वं शरीरत्वम्—

यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट् ।
तस्माच्छरीरमित्याहुस्तस्य मूर्ति मनीषिणः ॥ ( मनु० १।१७ )

इति मनुवाक्यात् । एतादृशं च शरीरं स्थूलं प्रत्यक्षमेवेति न नियमः । कुतः, आतिवाहिकस्याप्रत्यक्षतया सूक्ष्मस्य भौतिकस्य शरीरान्तरस्यापि सत्त्वादित्यर्थः । लोकाल्लोकान्तरं लिङ्गदेहमतिवाहयतीत्यातिवाहिकम् । भूताश्रयतां विना चित्रादिवद् गमनाभावस्य प्रागेवोक्तत्वात् । इदं च सूत्रं तस्यैव स्पष्टीकरणमात्रार्थम् । लिङ्गस्य च शरीरत्वं भोगाश्रयतया पुरुषप्रतिबिम्बाश्रयतया वेति बोध्यम् । आतिवाहिकशरीरे च प्रमाणम्—

"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः" ।
( क० उ० १।६।१७ )

"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः ।" ( म० भा० वन० २९७।१७ )

इति श्रुतिस्मृती। नहि लिङ्गशरीरस्य सकलशरीरव्यापिनः स्वतोऽङ्गुष्ठमात्रत्वं सम्भवति। अत आधारस्याङ्गुष्ठमात्रत्वमर्थात् सिद्धयति। यथा दीपस्य सर्वगृहव्यापित्वेऽपि कलिकाकारत्वं तैलवर्त्यादिसूक्ष्मांशस्य दशोपरि सम्पिण्डितस्य पार्थिवभागस्य कलिकाकारतया, तथैव लिङ्गदेहस्य देहव्यापित्वेऽप्यङ्गुष्ठपरिमाणत्वं सूक्ष्मभूतस्याङ्गुष्ठपरिमाणत्वेनानुमेयमिति ॥ १०३ ॥

[ भा० सा० ] स्थूलमेव शरीरमिति केचित्, तत्राह—नेति। भोगायतनमिन्द्रियाश्रयं च शरीरं तत्स्थूलमिति न; आतिवाहिकस्य सूक्ष्मस्य लिङ्गदेहस्यापि सत्त्वात्। पुरुषप्रतिबिम्बसहितानन्तःकरणादिसप्तदशपदार्थानतिवाहयति लोकाल्लोकान्तरं नयतीत्यातिवाहिकम्। तत्सप्तदशावयवकमवयव्यन्तररूपम्। तस्य सकलदेहव्यापित्वेऽप्याकर्षणे संकुचिततया "अङ्गुष्ठमात्रः पुरुषः" ( क० उ० १।६।१७ ) इत्याद्युक्तिः। अत एव गजपिपीलिकादिशरीरादावेकस्यैव लिङ्गदेहस्य संकोचविकासाभ्यां समावेश इति दिक् ॥ १०३ ॥

**नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥ १०४ ॥**

[ वृ० ] अप्राप्तप्रकाशकमिन्द्रियं दूरे शब्दोपलम्भात् काचाभ्रस्फटिकान्तरितोपलब्धेश्चेत्यत्राह—नाप्राप्त०। नाप्राप्तार्थप्रकाशकत्वं यत्प्राप्तप्रकाशकत्वम्। श्रोत्रं वृत्तिद्वारेण शब्देन सह संबध्यते। काचादयस्तु स्वच्छत्वान्न चक्षुःप्रसारं प्रतिबध्नन्ति। दूरे च वृत्तिद्वारेण वस्तुग्रहणम्। यद्यप्राप्तेर्न गृह्णाति, कुड्यव्यवहितवद् दूरत्वेनाप्राप्तेरविशेषादव्यवहितमपि न गृह्णीतेति। अथाप्राप्तेरपि गृह्णाति। अविशेषाज्जगदुदरवर्ति सर्वं गृह्णीयादिति ॥ १०४ ॥

[ वृ० सा० ] दूरे शब्द इत्यादिप्रतीतिस्तु भ्रान्तिरेव, कारणशब्दविषयिणी वेत्यादि मतं निरस्यति—नाप्राप्तेति। अप्राप्तानां विषयासम्बद्धानां प्रकाशकत्वमिन्द्रियाणां न, अप्राप्तेरसम्बन्धात्, अथ व्याप्तत्वादिन्द्रियाणामस्त्येव सम्बन्धस्तत्राह—सर्वप्राप्तेः। तथा च जगदुदरवर्ति सर्वमेव गृह्णीयुः। तस्माद्विलक्षणः सम्बन्ध आवश्यक इति भावः ॥ १०४ ॥

[ भा० ] गोलकेभ्योऽतिरिक्तानीन्द्रियाणि प्रागुक्तानि तदुपपादनायेन्द्रियाणामप्राप्तप्रकाशकत्वं निराकरोति—नाप्राप्त०। स्वासम्बद्धार्थानीन्द्रियाणि न प्रकाशयन्ति; अप्राप्तेः, प्रदीपादीनामप्राप्तप्रकाशकत्वादर्शनात्। अप्राप्तप्रकाशकत्वे व्यवहितादिसर्ववस्तुप्रकाशकत्वप्रसङ्गाच्चेत्यर्थः। अतो दूरस्थसूर्यादिसम्बन्धार्थं गोलकातिरिक्तमिन्द्रियमिति भावः। करणानां चार्थप्रकाशकत्वं पुरुषेऽर्थसमर्पणद्वारैव। स्वतो जडत्वाद् दर्पणस्य मुखप्रकाशकत्ववत्। अथवार्थप्रतिबिम्बोद्ग्रहणमेवाऽर्थप्रकाशकत्वमिति ॥१०४॥

[ भा० सा० ] इन्द्रियाणां गोलकातिरिक्तत्वोपपत्तये तेषामप्राप्तप्रकाशकत्वं निराकरोति—नेति। इन्द्रियाणां न स्वासम्बद्धार्थप्रकाशकत्वम्, प्रदीपादौ तथा दृष्टत्वात्। किञ्च,

तथा सति व्यवहितादिसर्ववस्तुप्रकाशकत्वप्रसङ्गादित्यर्थः । अतो दूरस्थसम्बन्धार्थं गोलकातिरिक्तमिन्द्रियमिति भावः । करणानामर्थप्रकाशकत्वं च पुरुषेऽर्थसमर्पणद्वारैवेति बोध्यम् ॥ १०४ ॥

न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥ १०५ ॥

[ वृ० ] यदि प्रसारि चक्षुः, तैजसं तर्हीत्यत्राह—न तेजो० । तेजस इवापसर्पणाद् दूरेऽपि प्रकाशकत्वात्तैजसमित्यभिमानः । वस्तुतस्तु वृत्तिद्वारेण सम्बन्धात् तत्सिद्धेः प्रमेयसिद्धेः ॥ १०५ ॥

[ वृ० सा० ] यदि चक्षुर्विषयपर्यन्तं गच्छति, तर्हि अतिवेगवत्त्वात्तैजसं स्यादत आह—नेति । तेजस इवापसर्पणाद् दूरगमनात् ॥ १०५ ॥

[ भा० ] नन्वेवं चक्षुषस्तैजसत्वमेव युक्तम्, तेजस एव किरणरूपेणाशु दूरापसर्पणदर्शनादिति शङ्कां निराकरोति—न तेजो० । तेजसोऽपसर्पणं दृष्टमिति कृत्वा तैजसं चक्षुर्न वाच्यम्; कुतः, अतैजसत्वेऽपि प्राणवदेव वृत्तिभेदेनापसर्पणोपपत्तेरित्यर्थः । यथा हि प्राणः शरीरं सन्त्यज्यैव नासाग्राद् बहिः कियद्दूरं प्राणनाख्यवृत्त्यापसरति, एवमेवातैजसद्रव्यमपि चक्षुर्देहमसन्त्यज्यापि वृत्त्याख्यपरिणामविशेषेण झटित्येव दूरस्थं सूर्यादिकं प्रत्यपसरेदिति ॥ १०५ ॥

[ भा० सा० ] चक्षुषस्तैजसत्वं दूषयति—नेति । तेजसोऽपसर्पणं दृष्टमिति कृत्वा चक्षुर्न तैजसं वाच्यम्; अतैजसत्वेऽपि प्राणवदेव वृत्तिभेदेनापसरणोपपत्तेः । यथा प्राणः शरीरमसंत्यज्यैव नासाग्राद् बहिः कियद् दूरं प्राणनाख्यवृत्त्यापसरति, एवं चक्षुरपि देहमसन्त्यज्यैव वृत्त्याख्यपरिणामविशेषेण झटित्येव दूरस्थं प्रत्यपसरति । अनेन तेज उपादानकत्वं दूषितम् ॥ १०५ ॥

प्राप्तार्थप्रकाशलिङ्गाद् वृत्तिसिद्धिः ॥ १०६ ॥

[ वृ० ] अथ वृत्तेरप्रत्यक्षत्वात् कथं वृत्तिसिद्धिरित्यत्राह—प्राप्तार्थ० । व्यक्तम् ॥ १०६ ॥

[ वृ० सा० ] स च वृत्तिरित्याह—प्राप्तार्थेति । व्यक्तम् ॥ १०६ ॥

[ भा० ] नन्वेवम्भूतवृत्तौ किं प्रमाणम्, तत्राह—प्राप्तार्थ० । सुगमम् ॥ १०६ ॥

[ भा० सा० ] एवंभूतवृत्तौ प्रमाणमाह—प्राप्तार्थेति । स्पष्टम् ॥ १०६ ॥

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति ॥ १०७ ॥

[ वृ० ] वृत्तिः किं दीपज्वालेव भागरूपा गुणान्तरं वेत्यत्राह—भागगुणाभ्यां० । कार्यानुमेया वृत्तिस्तत्त्वान्तरमाहङ्कारिकम्, अनियतः पदार्थो यतः । असम्बद्धस्य ज्ञानायोगात् तदर्थं सर्पति । तथा च—

वृत्तयः प्रसरद्रूपाः स्फारिताक्षस्य यत्र च ।
अदृष्टानुग्रहात्तत्र सम्बद्धार्थावबोधिकाः ॥ १०७ ॥

[ वृ० सा० ] वृत्तिस्वरूपमाह—भागेति । कार्यानुमेया वृत्तिस्तत्त्वान्तरं नाहङ्कारिको न भागो न वा गुणः । अनियतपदार्थवादिनो हि सांख्याः । वाचासम्बद्धस्य ज्ञानायोगात् सर्पति इति शब्दो यथानुभवकल्पनार्थः । तथा चाहुः—

वृत्तयः प्रसरद्रूपाः स्फारिताक्षस्य यत्र च ।
अदृष्टानुग्रहात्तत्र संबद्धार्थावबोधिकाः ॥ इति ॥ १०७ ॥

[ भा० ] देहमपरित्यज्यापि गमनोपपत्तये वृत्तेः स्वरूपं दर्शयति —भागगुणा० । सम्बन्धार्थं सर्पतीति हेतोश्चक्षुरादेर्भागो विस्फुलिङ्गवद्विभक्तांशो रूपादिवद् गुणश्च न वृत्तिः, किन्तु तदेकदेशभूता भागगुणाभ्यां भिन्ना वृत्तिः । विभागे हि सति तद्द्वारा चक्षुषः सूर्यादिसम्बन्धो न घटते, गुणत्वे च सर्पणाख्यक्रियानुपपत्तेरित्यर्थः । एतेन बुद्धिवृत्तिरपि प्रदीपशिखावद् द्रव्यरूप एव परिणामः स्वच्छतयार्थाकारतोद्ग्राही निर्मलवस्त्रवदिति सिद्धम् ॥ १०७ ॥

[ भा० सा० ] देहमपरित्यज्य गमनोपपत्तये वृत्तेः स्वरूपं दर्शयति—भागेति । अर्थप्रकाशहेतोश्चक्षुरादेर्वृत्तिः । नाग्नेर्विस्फुलिङ्गवद्भागो विभक्तांशः, नापि रूपादिवद् गुणः, किन्तु तदेकदेशभूता । भागत्वेऽपि सति तद्द्वारा चक्षुषः सूर्यादिसम्बन्धो न घटते, गुणत्वे च सर्पणाख्यक्रियानुपपत्तेरित्यर्थः । एवं च वृत्तिरपि प्रदीपशिखावद् द्रव्यस्वरूप एव परिणामः स्वच्छतयार्थाकारतार्हो निर्मलवस्त्रवदिति सिद्धम् ॥ १०७ ॥

## न द्रव्ये नियमस्तद्योगात् ॥ १०८ ॥

[ वृ० ] कथममूर्तया वृत्तेः सर्पणक्रियेत्यत्राह—न द्रव्ये० । अनियतत्वात्पदार्थानां न द्रव्य एव क्रियानियमः, किन्तु यत्र प्रमाणं दृश्यते तदनुमन्यामहे । वृत्तौ च क्रिया दृष्टा, अन्यथा वस्तूपलम्भाभावात् ॥ १०८ ॥

[ वृ० सा० ] अमूर्ता वृत्तिः कथं सर्पति, तत्राह—नेति । द्रव्ये एव क्रियेति न नियमः, किन्तु तद्योगात् क्रियायोगात् क्रियानियमः यत्र प्रमाणं दृश्यते तत्र क्रियेत्यर्थः । वृत्तिक्रियायां च विषयप्रकाशः साधक इति भावः ॥ १०८ ॥

[ भा० ] नन्वेवं वृत्तीनां द्रव्यत्वे कथमिच्छादिरूपबुद्धिगुणेषु वृत्तिव्यवहारस्तत्राह—न द्रव्य० । वृत्तिर्द्रव्यमेवेति नियमो नास्तिः, कुतः ? तद्योगात् । तत्र वृत्तौ योगार्थसत्त्वात् । "वृत्तिवर्तनजीवने" इति हि यौगिकोऽयं शब्दः । जीवनं च स्वस्थितिहेतुर्व्यापारः । "जीव बलप्राणधारणयोः" इत्यनुशासनात्, वैश्यवृत्तिः शूद्रवृत्तिरित्यादिव्यवहाराच्च । तत्र यथा द्रव्यरूपया वृत्त्या बुद्धिर्जीवति, तथेच्छादिभिरपीति तेऽपि वृत्तयः, सर्वनिरोधेनैव चित्तमरणादित्यर्थः ॥ १०८ ॥

[ भा० सा० ] ननु तासां द्रव्यत्वे कथमिच्छादिरूपबुद्धिगुणेषु वृत्तिव्यवहारोऽत आह—नेति । न वृत्तिर्द्रव्यमेवेति नियमः, कुतस्तद्योगात्तत्र वर्तनं जीवनं वृत्तिरितियोगसत्त्वात् ।

जीवनं च स्वस्थितिहेतुर्व्यापारः । एवं च यथा द्रव्यरूपया वृत्त्या बुद्धिर्जीवति तथेच्छादिभिरपीति तेऽपि वृत्तयः, सर्वनिरोधेनैव चित्तमरणादित्यर्थः । इन्द्रियाणां भौतिकत्वस्यापि श्रवणात् ॥१०८॥

न देशभेदेऽप्यन्योपादानतास्मदादिवन्नियमः ॥ १०९ ॥

[ वृ० ] देशभेदे भौतिकानीन्द्रियाणि भविष्यन्ति, यथा वृश्चिकदष्टस्य देशभेदे मरणमित्यत्राह—न देशभेदे० । स्वशरीर एव व्याप्तिर्गृहीता—आहङ्कारिकाणीन्द्रियाणीति । तद्व्यभिचारे धूमोऽप्यग्निं व्यभिचरेत् ॥ १०९ ॥

[ वृ० सा० ] देशभेदे भौतिकानीन्द्रियाणि भविष्यन्ति, यथा वृश्चिकदष्टस्य मरणमिति, तत्राह—नेति । अन्योपादानकत्वमिन्द्रियाणामिति शेषः । किन्त्वस्मदादिवदस्मदादीन्द्रियाणामिव नियम आहङ्कारिकत्वमेव । आहङ्कारिकाणीन्द्रियाणीति स्वशरीरे व्याप्तिर्गृहीता, तद्व्यभिचारे धूमोऽप्यग्निं व्यभिचरेदिति भावः ॥ १०९ ॥

[ भा० ] इन्द्रियाणां भौतिकत्वस्यापि श्रवणात् कदाचिल्लोकविशेषभेदेन श्रुतिव्यवस्था शङ्क्येत, तत्राह—न देशभेदे० । न ब्रह्मलोकादिदेशभेदतोऽपीन्द्रियाणामहङ्कारातिरिक्तोपादानकत्वं किन्त्वस्मदादीनां भूर्लोकस्थानामिव सर्वेषामेवाहङ्कारिकत्वनियमः; देशभेदेनैकस्यैव लिङ्गशरीरस्य सञ्चारमात्रश्रवणादित्यर्थः ॥ १०९ ॥

[ भा० सा० ] कदाचिल्लोकभेदेन श्रुतिव्यवस्था चाङ्क्येतेत्यत आह—नेति । न ब्रह्मलोकादिभेदेनापि इन्द्रियाणामहङ्कारातिरिक्तोपादानकत्वम्, किन्तु भूर्लोकस्थानामिव सर्वेषामाहङ्कारिकत्वनियमः । देशभेदेनैकस्यैव लिङ्गदेहस्य संचारश्रवणादित्यर्थः ॥ १०९ ॥

निमित्तव्यपदेशात्तद्व्यपदेशः ॥ ११० ॥

[ वृ० ] पाञ्चभौतिकमिति व्यपदेशे हेतुमाह—निमित्त० । पञ्चोपादानता निषिद्धा, न निमित्तता । तेन पाञ्चभौतिकमिति व्यपदेशः ॥ ११० ॥

[वृ० सा०] यदि न पञ्चभूतोपादानकं शरीरं तर्हि पाञ्चभौतिकमिति व्यवहारः कथम्? तत्राह—निमित्तेति । पञ्चभूतेति निमित्तव्यपदेशात् तद्व्यपदेशः, पाञ्चभौतिकेति नैमित्तिकव्यपदेशः । उपादानतैव निषिध्यते, न निमित्ततेति भावः ॥ ११० ॥

[ भा० ] नन्वेवं भौतिकत्वश्रुतिः कथमुपपद्यताम्, तत्राह—निमित्त० । निमित्तेऽपि प्राधान्यविवक्षयोपादानत्वव्यपदेशो भवति—यथेन्धनादग्निरिति । अतो भूतोपादानत्वव्यपदेश इत्यर्थः । तेन आदिभूतोपष्टम्भेनैव हि तदनुगताहङ्काराच्चक्षुरादीन्द्रियाणि सम्भवन्ति, यथा पार्थिवोपष्टम्भेन तदनुगतात् तेजसोऽग्निर्भवतीति । "अन्नमयं हि सोम्य मनः" ( छा० उ० ६।५।४ ) इत्यादिश्रुतिस्तदुक्तयुक्तिश्चात्र प्रमाणम् ॥ ११० ॥

[ भा० सा० ] नन्वेवं भौतिकत्वश्रुतेः का गतिरत आह—निमित्तेति । निमित्तकारणेऽपि प्राधान्यविवक्षयोपादानत्वव्यपदेशः । तेज आदिभूतोपष्टम्भेनैव तदनुगताहङ्काराच्चक्षुरादीन्द्रियाणि संभवन्ति, यथा पार्थिवेन्धनोपष्टम्भेन तदनुगतात्तेजसोऽग्निर्भवतीति ॥ ११० ॥

## ऊष्मजाण्डजजरायुजोद्भिज्जसंकल्पजसांसिद्धिकं चेति न नियमः ॥ १११ ॥

[ वृ० ] ऊष्मजा० । ऊष्मजो दन्दशूकादिः । अण्डजाः पक्षिसर्पादयः । जरायुजो मनुष्यादिः । उद्भिजा वृक्षादयः । संकल्पजो मन्वादिः । सांसिद्धिको मन्त्रौषधादिसिद्धः । चत्वार्येवेति न नियमः ॥ १११ ॥

[ वृ० सा० ] शरीरभेदानाह—ऊष्मेति । साङ्कल्पिकं मन्वादिशरीरम्, सांसिद्धिकं मन्त्रौषधादिसिद्धिजं च इति हेतोश्चत्वार्येवेति न नियमः ॥ १११ ॥

[ भा० ] स्थूलशरीरगतं विशेषं प्रसङ्गादवधारयति—ऊष्मजा० । तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति—"अण्डजं जीवजमुद्भिज्जम्" ( छा० उ० ६।३।१ ) इति श्रुतावण्डजादिरूपं शरीरत्रैविध्यं प्रायिकाभिप्रायेणोक्तम्, न तु नियमः, यत ऊष्मजादिषड्विधमेव शरीरं भवतीत्यर्थः । तत्रोष्मजा दन्दशूकादयः । अण्डजाः पक्षिसर्पादयः । जरायुजा मनुष्यादयः । उद्भिज्जा वृक्षादयः । सङ्कल्पजाः सनकादयः । सांसिद्धिका मन्त्रतपआदिसिद्धिजाः—यथा रक्तबीजशरीरोत्पन्नशरीरादय इति ॥ १११ ॥

[ भा० सा० ] स्थूलशरीरभेदमाह—ऊष्मेति । "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति—अण्डजं जरायुजमुद्भिज्जम्" ( छा० उ० ६।३।१ ) इति श्रुतौ त्रैविध्यं प्रायिकम्, ऊष्मजादिषु षड्विधशरीरमित्यर्थः । ऊष्मजाः शूकादयः, अण्डजाः पक्षिसर्पादयः, जरायुजा मनुष्यादयः, उद्भिज्जाः वृक्षादयः, सङ्कल्पजाः सनकादयः, सांसिद्धिका मन्त्रौषधादिसिद्धिजाः, यथा रक्तबीजरक्तोत्पन्नरक्तबीजादयः ॥ १११ ॥

## सर्वेषु पृथिव्युपादानमसाधारण्यात्तद्व्यपदेशः पूर्ववत् ॥ ११२ ॥

[ वृ० ] देहे किं भूतं प्रधानमित्यत्राह—सर्वेषु० । सर्वेष्विति बाहुल्येन, "सूर्यादिलोके तैजसं शरीरम्" इति श्रुतेः । तत्रापि बहुतरपार्थिवावयवावष्टम्भकत्वम्, अल्पत्वे चानुपभोगात् । पूर्ववदिति सर्वमेवोक्तम् ॥ ११२ ॥

[ वृ० सा० ] सर्वेष्विति । सर्वेषु शरीरेषु पार्थिवमित्यसाधारणव्यपदेशात् सूर्यादिलोकस्थे तैजसादिशरीरेऽपि पार्थिवावयवावष्टम्भकत्वमेव, तेज आदेः उपभोगे पार्थिवावयवानामेवोपयोगात् । तद्व्यपदेश इतरभूतव्यपदेशः, पूर्ववत् निमित्ततयेत्यर्थः ॥ ११२ ॥

[ भा० ] शरीरस्यैकमात्रभूतोपादानकत्वं पूर्वोक्तमनेनैव प्रसङ्गेन विशिष्याह—सर्वेषु० । सर्वेषु शरीरेषु पृथिव्येवोपादानम् । असाधारण्यात्, आधिक्यादिभिरुत्कर्षात् । अत्रापि शरीरे पञ्चचतुरादिभौतिकत्वव्यपदेशः पूर्ववत् । इन्द्रियाणां भौतिकत्ववदुपष्टम्भकत्वमात्रेणेत्यर्थः ॥ ११२ ॥

[ भा० सा० ] शरीरस्यैकमात्रभूतोपादानकत्वं विशिष्याह—सर्वेष्विति । सर्वेषु शरीरेषु पृथिव्येवोपादानमसाधारण्यादाधिक्यादिभिरुत्कर्षात् । शरीरे च चतुरादिभौतिकत्वव्यपदेशस्तु पूर्ववत्, इतरेतराणामुपष्टम्भकत्वादित्यर्थः । अत्र सर्वपदेन प्रागुक्तोष्मजाद्येव ॥ ११२ ॥

## न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ॥ ११३ ॥

[ वृ० ] देहे प्राणदर्शनात्तस्य देहारम्भकत्वशङ्कामपनयति—न देहा० । भौतिकवायोर्देहारम्भकत्वम्, न तु प्राणवायोर्भौतिकत्वम्, "प्राणात्सर्वमजायत" इति श्रुतेः। यावद्देहभावित्वे चारम्भकत्वभ्रमः। सर्वेन्द्रियशक्त्या प्राणो धार्यत इति यावदिन्द्रियं तावत्तत्सिद्धिः प्राणधारणसिद्धिः ॥ ११३ ॥

[ वृ० सा० ] प्राणो वायुरिति मतं निरस्यति—नेति । देहजनकस्य वायोर्न प्राणत्वम्, सर्वेन्द्रियशक्तितः सर्वेन्द्रियशक्तिरूपेण तत्सिद्धेः प्राणसिद्धेः । सामान्यकरणवृत्तिः प्राण इति भावः ॥ ११३ ॥

[ भा० ] ननु प्राणस्य शरीरे प्राधान्यात् प्राण एव देहारम्भकोऽस्तु, तत्राह—न देहा० । प्राणो न देहारम्भकः । इन्द्रियं विना प्राणानवस्थानेनान्वयव्यतिरेकाभ्यामिन्द्रियाणां शक्तिविशेषादेव प्राणसिद्धेः, प्राणोत्पत्तेरित्यर्थः । अयं भावः—करणवृत्तिरूपः प्राणः करणवियोगे न तिष्ठति । अतो मृतदेहे करणाभावेन प्राणाभावान्न प्राणो देहारम्भक इति ॥ ११३ ॥

[भा० सा०] ननु प्राणस्य शरीरे प्राधान्याद् प्राण एव देहारम्भकोऽस्त्वत आह—नेति। प्राणो न देहारम्भकः, इन्द्रियशक्तिकमन्तःकरणं विना प्राणानवस्थानेनान्वयव्यतिरेकाभ्यामिन्द्रियशक्तिकाद् बुद्धितत्त्वादेव प्राणादिव्यापारसिद्धेस्तदन्यप्राणाभावात् । एवं च बुद्ध्यभावेऽपि मृतस्य स्थूलदेहस्य सत्त्वात् स न प्राणोपादानक इत्यर्थः ॥ ११३ ॥

## भोक्तुरधिष्ठानाद् भोगायतनन्निर्माणमन्यथा पूतिभावप्रसक्तेः ॥ ११४ ॥

[ वृ० ] देहे निष्पन्ने आत्माधिष्ठानम्, आत्माधिष्ठिते वा देहनिष्पत्तिरिति निर्णयमाह—भोक्तुरधि० । स्फुटम् ॥ ११४ ॥

[ वृ० सा० ] भोक्तुरिति । योनौ बीजमारभ्येत्यादिः । अधिष्ठानात् सम्बन्धविशेषात् । पूतिभावो दुर्गन्धिता ॥ ११४ ॥

[ भा० ] नन्वेवं प्राणस्य देहाकारणत्वे प्राणं विनापि देह उत्पद्येत, तत्राह—भोक्तुरधि० । भोक्तुः प्राणिनोऽधिष्ठानाद् व्यापारादेव भोगायतनस्य शरीरस्य निर्माणं भवति । अन्यथा प्राणव्यापाराभावे शुक्रशोणितयोः पूतिभावप्रसङ्गात्, मृतदेहवदित्यर्थः । तथा च रससञ्चारादिव्यापारविशेषैः प्राणो देहस्य निमित्तकारणं धारकत्वादिति भावः ॥ ११४ ॥

[ भा० सा० ] नन्वेवं प्राणं विनापि देहोत्पत्तिः स्यादत आह—भोक्तुरिति । भोक्तुरधिष्ठानात् व्यापारादेव भोगायतनस्य शरीरस्य निर्माणमन्यथा मृतदेहवत् शुक्रशोणितयोः पूतिभावप्रसङ्गादित्यर्थः । एवं च रससञ्चारादिव्यापारविशेषः । प्राणो देहस्य निमित्तकारणं धारकत्वादिति भावः ॥ ११४ ॥

## भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥ ११५ ॥

[ वृ० ] प्रधानमूलत्वाच्छरीरस्य तद्द्वारेणैवाधिष्ठानं भविष्यतीत्यत्राह—भृत्यद्वारा० । जडे भृत्येऽवलम्बिनी सर्वत्र स्वस्थितिर्यथा, तथा जडस्य प्रधानस्याधिष्ठानान्न पूतिभावविरोधः ॥ ११५ ॥

[ वृ० सा० ] पुरुषस्य भृत्यप्रायं प्रधानं तद्द्वारैवाधिष्ठानमस्तु न तु स्वातन्त्र्येण बीजादौ, तत्राह—भृत्यद्वारेति । प्रधानद्वारा पुरुषस्याधिष्ठितिः, नैकान्ताद् व्यभिचारात्, सर्वत्र विद्यमानत्वादिति यावत् । न पूतिभावविरोधिनीति शेषः ॥ ११५ ॥

[ भा० ] ननु प्राणस्यैवाधिष्ठानत्वं सम्भवति व्यापारवत्त्वात्, न प्राणिनः कूटस्थत्वात्, निर्व्यापारस्याधिष्ठाने प्रयोजनाभावाच्चेति; तत्राह--भृत्यद्वारा० । देहनिर्माणे व्यापाररूपमधिष्ठानं स्वामिनश्चेतनस्यैकान्तात् साक्षान्नास्ति, किन्तु प्राणरूपभृत्यद्वारा । यथा राज्ञः पुरनिर्माण इत्यर्थः । तथा च प्राणस्याधिष्ठातृत्वं साक्षात्, पुरुषस्याधिष्ठातृत्वं प्राणसंयोगमात्रेणेति सिद्धम् । कुलालादीनां घटादिनिर्माणेष्वप्येवम् । विशेषस्त्वयं तत्र चेतनस्य बुद्ध्यादेश्चाप्युपयोगोऽस्ति बुद्धिपूर्वकसृष्टित्वादिति । यद्यपि प्राणाधिष्ठानादेव देहनिर्माणम्, तथापि प्राणद्वारा प्राणिसंयोगोऽप्यपेक्ष्यते। पुरुषार्थमेव प्राणेन देहनिर्माणादित्याशयेन भोक्तुरधिष्ठानादित्युक्तम् ॥ ११५ ॥

[ भा० सा० ] ननु प्राणिनः कूटस्थत्वेन निर्व्यापारकत्वात् कथमधिष्ठानम्, किन्तु प्राणस्यैवेत्यत आह—भृत्येति । स्वामिनः प्राणिनोऽधिष्ठितिरधिष्ठातृत्वमेकान्तात् साक्षान्नास्ति, किन्तु प्राणरूपभृत्यद्वारा, यथा राज्ञः पुरनिर्माणे इत्यर्थः । एवं च प्राणः साक्षादधिष्ठाता पुरुषस्तु प्राणसंयोगमात्रेणेति सिद्धम् । यद्यपि प्राणाधिष्ठानादेव देहनिर्माणं तथापि प्राणद्वारा प्राणिसंयोगोऽप्यपेक्ष्यते, पुरुषार्थमेव प्राणेन देहनिर्माणादित्याशयः । प्राणप्रवेशकाले च समस्तलिङ्गशरीरस्यैव प्रवेशः, प्राणसाहित्येनैव तद्व्यापारादिति बोध्यम् ॥ ११५ ॥

## समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥ ११६ ॥

[ वृ० ] ब्रह्मरूपनिरूपणायान्येषां तुल्यरूपमाह—समाधि० । ब्रह्मणा सह तुल्यरूपता, सर्वत्र बाह्यासंवेदनात्, न तु ब्रह्मरूपता ॥ ११६ ॥

[ वृ० सा० ] सुषुप्तिदृष्टान्तेन मोक्षे दुःखाभावं वक्तुमाह—समाधीति । ब्रह्मरूपता दुःखासंवेदनम् ॥ ११६ ॥

[ भा० ] विमुक्तमोक्षार्थं प्रधानस्येत्युक्तं प्राक् (सां० सू० २।१) । तत्र कथमात्मा नित्यमुक्तो बन्धदर्शनादिति परेषामाक्षेपे नित्यमुक्तिमुपपादयितुमाह—समाधि० । समाधिरसम्प्रज्ञातावस्था । सुषुप्तिश्चात्र समग्रसुषुप्तिः । मोक्षश्च विदेहकैवल्यम् । आस्ववस्थासु पुरुषाणां ब्रह्मरूपता बुद्धिवृत्तिविलयतस्तदौपाधिकपरिच्छेदविगमेन स्वस्वरूपपूर्णतयाऽवस्थानम्, यथा घटध्वंसे घटाकाशस्य पूर्णतेत्यर्थः । तदेतदुक्तम्—

"तन्निवृत्तावुपशान्तोपरागः स्वस्थः" ( सां० सू० २।३४ ) इति। तथा च ब्रह्मत्वमेव पुरुषाणां स्वभावो नैमित्तिकत्वाभावात्, स्फटिकस्य शौक्ल्यमिव। बुद्धिवृत्तिसम्बन्धकाले तु परिच्छिन्नचिद्रूपत्वेनाभिव्यक्त्या परिच्छेदाभिमानः। तथा वृत्तिप्रतिबिम्बवशाद् दुःखादिमालिन्यमिव च भवतीति तत् सर्वमौपाधिकमेव। उपाध्याख्यनिमित्तान्वय-व्यतिरेकानुविधानात् स्फटिकलौहित्यवदिति भावः। तथा च योगसूत्रम् —"वृत्ति-सारूप्यमितरत्र" ( १।४ ) इति। अस्मच्छास्त्रे च ब्रह्मशब्द औपाधिकपरिच्छेद-मालिन्यादिरहितपरिपूर्णचेतनसामान्यवाची, न तु ब्रह्ममीमांसायामिवैश्वर्योपलक्षित-पुरुषमात्रवाचीति विवेक्तव्यम्।

अत्रैते श्लोकाः शिष्यव्युत्पत्त्यर्थमुच्यन्ते—

चिदाकाशेऽनभिव्यक्ते नानाकारैरितस्ततः।
धीरटन्ती सह व्यक्त्या चिदटन्तीं प्रदर्शयेत्॥
वस्तुतस्तु सदा पूर्णमेकरूपं च चिन्नभः।
वृत्तिशून्यप्रदेशेषु दृश्याभावान्न पश्यति॥
चक्षुषो रूपवत् पुंसो दृश्या वृत्तिर्हि नेतरत्।
समाध्यादौ च सा नास्तीत्यतः पूर्णः पुमांस्तदा॥ ११६॥

[ भा० सा० ] आत्मनो बन्धदर्शनेऽपि नित्यमुक्तत्वमुपपादयति—समाधीति। समाधिरसम्प्रज्ञातावस्था, सुषुप्तिः समासुषुप्तिः, मोक्षो विदेहकैवल्यम्। आस्ववस्थासु पुरुषाणां ब्रह्मरूपता, तत्र बुद्धिवृत्तिविलयात्। औपाधिकपरिच्छेदादिविगमेन स्वस्वरूपपूर्णतयाऽवस्थानम्, यथा घटध्वंसे घटाकाशस्य पूर्णतयेत्यर्थः। एवं च ब्रह्मत्वमेव पुरुषाणां स्वभावोऽनैमित्तकत्वात्, यथा स्फटिकस्य शौक्ल्यम्। बुद्धिवृत्तिसम्बन्धकाले तु परिच्छिन्नचिद्रूपत्वेनाभिव्यक्त्या परिच्छेदाभिमानो वृत्तिप्रतिबिम्बवशाद् दुःखादि मालिन्यमिव भवतीति दुःखित्वाभिमानः। तत्सर्वं स्फटिकलौहित्यवदुपाध्यन्वयव्यतिरेकानुविधानादौपाधिकमेव। ब्रह्मशब्दश्चास्माकमौपा-धिकपरिच्छेदादिरहितपूर्णचैतन्यसामान्यवाचीति दिक्॥ ११६॥

**द्वयोः सबीजत्वमन्यस्य तद्धतिः॥ ११७॥**

[ वृ० ] ब्रह्मणः स्वरूपमाह—द्वयोः०। द्वयोः समाधि-सुषुप्त्योः, सबीजत्वं संस्कारवत्त्वम्, अन्यस्य मोक्षस्य, तद्धतिः बीजहानम्॥ ११७॥

[ वृ० सा० ] मोक्षे विशेषमाह—द्वयोरिति। सबीजत्वं पुनर्दुःखप्रयोजकसंस्कारवत्त्वम्। तद्धतिः संस्कारहतिः॥ ११७॥

[ भा० ] तर्हि कः सुषुप्तिसमाधिभ्यां मोक्षस्य विशेषस्तत्राह—द्वयोः०। द्वयोः समाधिसुषुप्त्योः सबीजं बन्धबीजसहितं ब्रह्मत्वमन्यत्र मोक्षे बीजस्याभाव इति विशेष इत्यर्थः। ननु चेत् समाध्यादौ बन्धबीजमस्ति, तर्हि तेनैव परिच्छेदात् कथं ब्रह्मत्वमि-

चेन्न; बन्धबीजस्य कर्मादेस्तदानीमुपाधावेवावस्थानात्। न तु चेतनेषु। पुरुषे च तेषामप्रतिबिम्बनादिति। जाग्रदाद्यवस्थायां तु बुद्धिवृत्तिप्रतिबिम्बवशादौपाधिको बन्ध इत्यसकृदावेदितम्।

ननु पातञ्जले तद्भाष्ये चासम्प्रज्ञातयोगो निर्बीज उक्तः। अत्र कथं सबीज उच्यत इति चेन्न; असम्प्रज्ञाते क्रमेण बीजक्षयो भवतीत्याशयेनैव तत्र निर्बीजत्व-वचनात्। अन्यथा सर्वासामेवासम्प्रज्ञातव्यक्तीनां निर्बीजत्वे व्युत्थानानुपपत्तेरिति ॥११७॥

[ भा० सा० ] ताभ्यां मोक्षस्य विशेषमाह—द्वयोरिति। द्वयोः समाधिसुषुप्त्योः सबीजं बन्धबीजमस्ति। अन्यत्र मोक्षे बीजस्यापि हतिर्नाश इत्यर्थः। तयोरपि बन्धबीजस्य वासनाकर्मादि रूपादावेवावस्थानम्, चेतनेषु पुरुषेषु तेषामप्रतिबिम्बनादिति तयोर्बन्धबीज-सत्त्वेऽपि न ब्रह्मत्वक्षतिः। जाग्रदाद्यवस्थायां तु बुद्धिवृत्तिप्रतिबिम्बवशादौपाधिको बन्ध इति निरूपितम्। यत्तु पातञ्जले असम्प्रज्ञातयोगस्य निर्बीजकत्वमुक्तम्, तत्तु चरमासम्प्रज्ञातव्यक्त्य-भिप्रायकम्। इह तु पूर्वपूर्वासम्प्रज्ञातक्रमेण बीजक्षय इति पूर्वपूर्वासम्प्रज्ञातव्यक्त्यभिप्रायेण सबीजत्वमुक्तम्। सर्वासां निर्बीजत्वेऽभ्युत्थानानुपपत्तेरिति न तद्विरोधः ॥ ११७ ॥

## द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ ॥ ११८ ॥

[ वृ० ] समाधि-सुषुप्त्योर्दृष्टा निरुद्धवृत्तिकत्वात्कृतकृत्यता, न तु मोक्षस्येत्यत्राह—द्वयोरिव०। त्रयस्यापि मोक्षस्यापि दृष्टत्वात् श्रुत्यनुमानप्रतिपादनात्कृतकृत्यता, न तु द्वौ सुषुप्तिसमाधी। सबीजत्वात् तयोः कृतकृत्यता गौणीति ॥ ११८॥

[ वृ० सा० ] मोक्षे प्रमाणमस्तीत्याह—द्वयोरिति। यथा सुषुप्तिः प्रत्यक्षसिद्धा, यथा वा समाधिरागमसिद्धः, तथा मोक्षोऽपि शास्त्रसिद्धः। तत्रापि द्वौ सुषुप्तिसमाधी नात्यन्त-पुरुषार्थौ, सबीजत्वात्। किन्तु मोक्ष एव, निर्बीजत्वादिति भावः ॥ ११८ ॥

[ भा० ] ननु समाधिसुषुप्ती दृष्टे स्तः, मोक्षे तु किं प्रमाणमिति नास्तिकाक्षेपं परिहरति—द्वयोरिव०। समाधिसुषुप्तिदृष्टान्तेन मोक्षस्यापि दृष्टत्वादनुमितत्वान्न तु द्वौ सुषुप्तिसमाधी एव, किन्तु मोक्षोऽप्यस्तीत्यर्थः। अनुमानं चेत्थम्—सुषुप्त्यादौ यो ब्रह्मभावस्तत्त्यागश्चित्तगताद्रागादिदोषवशादेव भवति। स चेद्दोषो ज्ञानेन नाशितस्तर्हि सुषुप्त्यादिसदृश्येवावस्था स्थिरा भवति, सैव मोक्ष इति ॥ ११८ ॥

[ भा० सा० ] मोक्षे प्रमाणमाह—द्वयोरिति। समाधिसुषुप्तिदृष्टान्तेन मोक्षस्यापि दृष्टत्वादनुमितत्वान्न द्वावेव समाधिसुषुप्ती, किन्तु मोक्षोऽपीत्यर्थः। अनुमानं चेत्थम्—सुषुप्त्यादौ यो ब्रह्मभावस्तत्त्यागश्चित्तगताद्रागादिदोषवशादेव भवति। स चेद् दोषो ज्ञानेन नाशितस्तर्हि सुषुप्त्यादिसदृश्येवावस्था स्थिरा भवति, सैव मोक्ष इति ॥ ११८ ॥

## वासनया न स्वार्थख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ॥ ११९ ॥

[ वृ० ] रागादीनां बन्धहेतुत्वात् किं वासनयेत्यत आह—वासनया०। न दोषादेव

बन्ध इति वक्तव्यम्। वासनयाऽनर्थख्यापनमवश्यं कर्तव्यम्। दोषाणामेव निमित्तस्य प्रधानस्य मुक्तौ बाधकत्वं वक्तव्यम्। मुख्यं च वासनेति ॥ ११९ ॥

[ वृ॰ सा॰ ] रागादीनामेव बन्धहेतुत्वात् किं संस्कारापरपर्यायवासनयेत्यत आह—वासनयेति। दोषयोगेऽपि वासनयैवानर्थख्यापनं सौन्दर्यज्ञानकारणमिति शेषः। अतो न रागादेरेव बन्धहेतुत्वम्, किन्तु निमित्तस्यारागादेरपि निमित्तस्यावासनायाः प्रधानबन्धकत्वं मोक्षबाधकत्वम्। तस्माद्वासनोच्छेद एव यतितव्यमिति भावः ॥ ११९ ॥

[ भा॰ ] ननु वासनाख्यबीजसत्त्वेऽपि वैराग्यादिना वासनाकौण्ठ्यादर्थाकारा वृत्तिः समाधौ मा भवतु, सुषुप्ते तु वासनाप्राबल्यादर्थज्ञानं भविष्यत्येवेति न सुषुप्तौ ब्रह्मरूपता युक्तेति; तत्राह—वासनया॰। यथा वैराग्ये तथा निद्रादोषयोगेऽपि सति वासनया न स्वार्थख्यापनं स्वविषयस्मरणं भवति। यतो न निमित्तस्य गुणीभूतस्य संस्कारस्य बलवत्तरनिद्रादोषबाधकत्वं सम्भवतीत्यर्थः। बलवत्तर एव हि दोषो वासनां दुर्बलां स्वकार्यकुण्ठां करोतीति भावः ॥ ११९ ॥

[ भा॰ सा॰ ] ननु समाधौ वैराग्यादिना वासनाकुण्ठीभावादर्थाकारा वृत्तिर्नात्र, सुषुप्ते तु वासनाप्राबल्यादर्थज्ञानं भविष्यत्येवेति कथं तत्र ब्रह्मरूपतेत्यत आह—वासनयेति। वैराग्यवद् निद्रादोषेणापि योगाद्वासनया न पुरुषस्य स्वार्थख्यापनं भवति। यतो निमित्तस्य गुणभूतस्य संस्कारस्य बलवत्तरप्रधाननिद्रादोषबाधकत्वं न सम्भवतीत्यर्थः। बलवत्तर एव हि दोषो वासनां दुर्बलां स्वकार्यकुण्ठां करोतीति भावः ॥ ११९ ॥

**एकः संस्कारः क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः ॥ १२० ॥**

[ वृ॰ ] इष्वादिक्षेपे वेगाख्यात् संस्कारात्कर्म, कर्मणा च संस्कार इत्यनेके संस्काराः। तन्निषेधति—एकः॰। एकसंस्कारपक्षे इषोर्निपात इत्युक्तम्। परिणामपक्षे च एकस्यैव मन्दतरादि-परिणामात् पात इति बहुकल्पनायां गौरवमिति ॥ १२० ॥

[ वृ॰ सा॰ ] इष्वादिक्षेपे वेगाख्यसंस्कारात् क्रिया, क्रियातश्च स इत्यनेकसंस्कारास्तान्निरस्यति—एक इति। स्पष्टम् ॥ १२० ॥

[ भा॰ ] संस्कारलेशतो जीवन्मुक्तस्य शरीरधारणमिति तृतीयाध्याये प्रोक्तम्। तत्रायमाक्षेपः—जीवन्मुक्तस्य शश्वदेकस्मिन्नप्यर्थेऽस्मदादीनामिव भोगो दृश्यते सोऽनुपपन्नः, प्रथमं भोगमुत्पाद्यैव पूर्वसंस्कारनाशात् संस्कारान्तरस्य च ज्ञानप्रतिबन्धेन कर्मवदनुदयादिति; तत्राह—एकः संस्कारः॰। येन संस्कारेण देवादिशरीरभोग आरब्धः, स एक एव संस्कारस्तच्छरीरसाध्यस्य प्रारब्धभोगस्य समापकः। स च कर्मवदेव भोगसमाप्तिनाश्यो न तु प्रतिक्रियं प्रतिभोगव्यक्तिसंस्कारनानात्वम्, बहुव्यक्तिकल्पनागौरवप्रसङ्गादित्यर्थः। कुलालचक्रभ्रमणस्थलेऽप्येवं वेगाख्यः संस्कार एक एव भ्रमणसमाप्तिपर्यन्तस्थायी बोध्यः ॥ १२० ॥

[ भा० सा० ] ननु जीवन्मुक्तस्यापि भोगो दृश्यते; सोऽनुपपन्नः, प्रथमभोगमुत्पाद्य पूर्वसंस्कारनाशात्। आत्मज्ञानेन सर्वत्रोपेक्षया च संस्कारान्तरोत्पत्त्यसंभवादत आह—एक इति। येन संस्कारेण यच्छरीरमारब्धं स एक एव संस्कारस्तच्छरीरसाध्यसर्वभोगजनकः, कर्मवदेव सर्वभोगसमाप्तिनाश्यश्च। न तु भोगव्यक्तिसंस्कारनानात्वं बहुव्यक्तिकल्पनागौरवप्रसङ्गा-दित्यर्थः। कुलालचक्रभ्रमणस्थलेऽपि एक एव वेगाख्यः संस्कारो भ्रमणसमाप्तिपर्यन्तस्थायी बोध्यः ॥ १२० ॥

## न बाह्यबुद्धिनियमः ॥ १२१ ॥

[ वृ० ] एको विषयः, यत्र एका बुद्धिः, सत्सदिति प्रत्ययस्याविशेषादित्यत आह—न बाह्य०। यथा सदिति प्रत्ययोऽबाधितः, तथा घटपटादि-प्रत्ययोऽपि। सदिति प्रत्ययश्च सामान्यविषयः। तस्मान्न बाह्यबुद्धावेकस्यैवेति नियमः ॥ १२१ ॥

[ वृ० सा० ] नन्वेकस्मात्संस्कारादेका क्रिया, ततः संस्कार इति लोके बुद्धिरस्ति, तत्राह—नेति। एकस्मादेव बाह्याः क्रिया इत्यपि बुद्धिरस्ति। तस्माल्लाघवादेक एव संस्कारः ॥ १२१ ॥

## वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत् ॥ १२२ ॥

[ वृ० ] पाञ्चभौतिकं जीवशरीरम्। कतिभूतारब्धं स्थावरमित्यत्राह—वृक्षगुल्म०। पूर्ववदिति भोगायतनत्वात्पाञ्चभौतिकम्। भोगायतनत्वं च जन्मान्तरीय-क्रियाविशेषात्, "जीवात्मान एव स्थावराश्रयतामुगपच्छन्ति" इति श्रुतेः ॥ १२२ ॥

[ वृ० सा० ] जङ्गमशरीरन्यायं स्थावरेऽतिदिशति—वृक्षेति। वीरुत् झटिति वृक्ष-प्रसारिणी लता ॥ १२२ ॥

[ भा० ] उद्भिज्जं शरीरमस्तीत्युक्तम्, तत्र बाह्यबुद्ध्यभावाच्छरीरत्वं नास्तीति नास्तिकाक्षेपमपाकरोति—न बाह्य०। वृक्षगुल्म०। न बाह्यज्ञानं यत्रास्ति तदेव शरीरमिति नियमः, किन्तु वृक्षादीनामन्तःसंज्ञानामपि भोक्तृभोगायतनत्वं शरीरत्वं मन्तव्यम्। यतः पूर्ववत् पूर्वोक्तो यो भोक्त्रधिष्ठानं विना मनुष्यादिशरीरस्य पूतिभाव-स्तद्वदेव वृक्षादिशरीरेष्वपि शुष्कतादिकमित्यर्थः। तथा च श्रुतिः—"अस्य तदेकां शाखां जीवो जहात्यथ सा शुष्यति" ( छा० उ० ६।११।३२ ) इत्यादिरिति। 'न बाह्यबुद्धिनियमः' इत्यंशस्य पृथक्सूत्रत्वेऽपि सूत्रद्वयमेकीकृत्येत्थमेव व्याख्येयम्। सूत्रभेदस्तु दैर्घ्यभयादिति बोध्यम् ॥ १२१-१२२ ॥

[ भा० सा० ] ननूद्भिज्जशरीरे बाह्यबुद्ध्यभावान्न शरीरत्वमत आह—नेति। वृक्षगुल्मेति। न बाह्यबुद्धिवदेव शरीरमिति नियमः, किन्तु अन्तर्बुद्धीनामपि वृक्षादीनां भोक्तृभोगायतनत्वरूपं शरीरत्वं पूर्ववत्। यथा मनुष्यादिशरीरस्य भोक्त्रयधिष्ठानं विना पूतिभावस्य तथैतेषु शुष्कतादिक-

मित्यर्थः। "अस्य यां शाखां जीवो जहात्यथ सा शुष्यति" (छा० उ० ६।११।३२) इति श्रुतेः॥ १२१-१२२॥

## स्मृतेश्च ॥ १२३ ॥

[ वृ० ] अत्र प्रमाणभूता स्मृतिरप्यस्तीत्याह—स्मृतेश्च। व्यक्तम्। तथा च—

अभिवादितश्च यो विप्र आशिषं न प्रयच्छति।
श्मशाने जायते वृक्षो गृध्रकङ्कनिषेवितः॥
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥

(मनु० १२।८-९)॥ १२३॥

[ वृ० सा० ] अत्र प्रमाणमाह—स्मृतेश्चेति।

अभिवादितश्च यो विप्र आशिषं न प्रयच्छति।
श्मशाने जायते वृक्षो गृध्रकङ्कनिषेवितः॥
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥ (मनु० १२।८-९)

इत्यादिस्मृतेस्तेषामपि शरीरित्वावगमात्॥ १२३॥

[ भा० ] स्मृतेश्च०। शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥ (मनु० १२।९)
इत्यादिस्मृतेरपि वृक्षादिषु भोक्तृभोगायतनत्वमित्यर्थः॥ १२३॥

[ भा० सा० ] स्मृतेश्चेति। शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥ (मनु० १२।९)
इत्यादिस्मृतेश्च। तत्रापि शरीरत्वं भोक्तृभोगायतनत्वरूपमित्यर्थः॥ १२३॥

## न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः॥ १२४॥

[ वृ० ] वृक्षादीनां देहत्वे कर्माधिकारिता स्यादित्यत आह—न देहमात्रतः०। जीवदेहा अपि चाण्डालादयो न कर्माधिकारिणः, किं पुनः स्थावरा इति, विशिष्टदेहस्य कर्माधिकारित्वात्॥ १२४॥

[ वृ० सा० ] वृक्षादीनां शरीरित्वे कर्माधिकारापत्तिं निरस्यति—नेति। अर्थी समर्थो विद्वानपर्युदस्तोऽधिकारीति भावः॥ १२४॥

[ भा० ] ननु वृक्षादिष्वप्येवं चेतनत्वेन धर्माधर्मोत्पत्तिप्रसङ्गस्तत्राह—न देह०। न देहमात्रेण धर्माधर्मोत्पत्तियोग्यत्वं जीवस्य; कुतः, वैशिष्ट्यश्रुतेः। ब्राह्मणादिदेहविशिष्टत्वेनैवाधिकारश्रवणादित्यर्थः॥ १२४॥

[ भा० सा० ] नन्वेवं वृक्षादिषु धर्माधर्मोत्पत्तिरपि स्यादत आह—नेति। ब्राह्मण्यादिदेहविशिष्टत्वेनैव कर्माधिकारश्रुतेरित्यर्थः॥ १२४॥

## त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥ १२५ ॥

[ वृ० ] देहभेदमाह—त्रिधा०। वीतरागाणां फलसंन्यासेन कर्मकरणात् कर्मदेहः। पश्वादीनामुपभोगदेहः। भोगिनां कर्माधिकारिणां कर्मोपभोगदेहः ॥ १२५ ॥

[ वृ० सा० ] देहभेदमाह—त्रिधेति। वीतरागाणां फलन्यासेन कर्म कुर्वतां कर्मदेहः, पश्वादीनामुपभोगदेहः, भोगिनां कर्मिणामुभयदेहः ॥ १२५ ॥

[ भा० ] देहभेदेनैव कर्माधिकारं दर्शयन् देहत्रैविध्यमाह—त्रिधा०। त्रयाणामुत्तमाधममध्यमानां सर्वप्राणिनां त्रिप्रकारो देहविभागः—कर्मदेहभोगदेहोभयदेहा इतीत्यर्थः। तत्र कर्मदेहः परमर्षीणाम्, भोगदेह इन्द्रादीनामुभयदेहश्च राजर्षीणामिति। अत्र प्राधान्येन त्रिधा विभागः, अन्यथा सर्वस्यैव भोगदेहत्वापत्तेः ॥ १२५ ॥

[ भा० सा० ] देहभेदेनैव कर्माधिकारं दर्शयन् तत्त्रैविध्यमाह—त्रिधेति। त्रयाणाम् उत्तममध्यमाधमानां सर्वप्राणिनां त्रिप्रकारको देहविभागः। तत्र कर्मदेहः पुरुषाणाम्, भोगदेह इन्द्रादीनां स्थावरादीनां च, उभयदेहो राजर्षीणाम्। प्राधान्येनायं विभागः ॥ १२५ ॥

## न किञ्चिदप्यनुशयिनः ॥ १२६ ॥

[ वृ० ] चतुर्थमनधिकारिणं देहमाह—न किञ्चिद०। 'विद्यादनुशयं द्वेषे पश्चात्तापानुबन्धयोः' इति शाश्वतः। अनुशयिनो योगिनो न किञ्चिदपि, सर्वानधिकारात् ॥ १२६ ॥

[ वृ० सा० ] चतुर्थं देहमाह—नेति। अनुशयः प्रारब्धकर्मशेषः, सोऽस्यास्तीत्यनुशयी, तस्य ज्ञानिन इत्यर्थः। न किञ्चिदपि कर्मेति शेषः। ज्ञानी प्रारब्धशेषं भुञ्जानो न विधिनिषेधेष्व[धि]क्रियत इति भावः ॥ १२६ ॥

[ भा० ] चतुर्थमपि शरीरमाह—न किञ्चि०। "विद्यादनुशयं द्वेष्यं पश्चात्तापानुतापयोः।" ( शा० को० ३२० ) इति वाक्यादनुशयो वैराग्यम्। विरक्तानां शरीरमेतत्त्रयविलक्षणमित्यर्थः। यथा दत्तात्रेयजडभरतादीनामिति ॥ १२६ ॥

[ भा० सा० ] चतुर्थमप्याह—नेति। अनुशयो वैराग्यम्। विरक्तानां शरीरमेतत्त्रयविलक्षणं ज्ञानमात्रप्रधानं यथा जडभरतादेरित्यर्थः। बीजादिसंलग्नजीवेष्वनुशयित्वव्यवहारस्तु तत्सादृश्याद् गौणः ॥ १२६ ॥

## न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ॥ १२७ ॥

[ वृ० ] नित्यां बुद्धिं निराकरोति—न बुद्ध्यादि०। व्याप्तिस्वरूपस्य व्यभिचारे सर्वत्रानाश्वासः। तथा चाश्रयविशेषे चन्दनप्रभवस्य वह्नेरनुष्णत्वं स्यात् ॥ १२७ ॥

[ वृ० सा० ] जीवसम्बन्धिन्यो ज्ञानेच्छाकृतयो यद्यप्यनित्यास्तथापि क्वचिन्नित्या भविष्यन्तीत्यत आह—नेति। यद्यपि आश्रयविशेषः सेत्स्यति, तथापि ज्ञानादयो नित्या एव तत्र स्युः, स्वकीयज्ञानादिषु व्याप्तिग्रहादन्यथा चन्दनप्रभववह्नेरनुष्णत्वमपि स्यादिति ॥ १२७ ॥

[ भा० ] उक्तस्येश्वराभावस्य स्थापनाय पराभ्युपगतं ज्ञानेच्छाकृत्यादिनित्यत्वं प्रतिषेधति—न बुद्धयादि० । बुद्धिरत्राध्यवसायाख्या वृत्तिः । तथा च ज्ञानेच्छाकृत्यादीनामाश्रयविशेषे परैरीश्वरोपाधितयाभ्युपगतेऽपि नित्यत्वं नास्ति, अस्मदादिबुद्धिदृष्टान्तेन सर्वेषामेव बुद्धीच्छादीनामनित्यत्वानुमानात् । यथा लौकिकवह्निदृष्टान्तेनावरणतेजसोऽप्यनित्यत्वानुमानमित्यर्थः ॥ १२७ ॥

[ भा० सा० ] उक्तस्येश्वराभावस्य स्थापनाय ज्ञानेच्छाकृत्यादिनित्यत्वं प्रतिषेधति—नेति । बुद्धिरध्यवसायाख्या वृत्तिः । तथा च ज्ञानेच्छाकृत्यादीनामाश्रयविशेषेण पराभ्युपगते ईश्वरेऽपि नित्यत्वं नास्ति, अस्मदादिबुद्धिदृष्टान्तेन सर्वबुद्धयादीनामनित्यत्वानुमानात् । यथा लौकिकवह्निदृष्टान्तेनावरणतेजसोऽप्यनित्यत्वानुमानमित्यर्थः ॥ १२७ ॥

## आश्रयासिद्धेश्च ॥ १२८ ॥

[ वृ० ] दूषणान्तरमाह—आश्रया० । ईश्वरस्यासत्त्वात्, आत्मनां च धर्माभावात्, प्रकृतिधर्माणां परिणामित्वात्, महदादीनामनित्यत्वात् । न चानित्याश्रया धर्मा नित्या भवितुमर्हन्ति, तस्मान्नित्यबुद्धेराश्रयो नास्ति ॥ १२८ ॥

[ वृ० सा० ] आश्रयोऽपि नास्तीत्याह—आश्रयेति । ईश्वरस्य निराकृतत्वात् ॥१२८॥

[ भा० ] आस्तां तावज्ज्ञानेच्छादेर्नित्यत्वम्, तदाश्रय ईश्वरोपाधिरेवासिद्धः, ईश्वरस्यासिद्धेरित्यत आह—आश्रय० । सुगमम् ॥ १२८ ॥

[ भा० सा० ] हेत्वन्तरमाह—आश्रयेति । आश्रयः ईश्वरः ॥ १२८ ॥

## योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥ १२९ ॥

[ वृ० ] मणिमन्त्रौषधितपःप्रभावात्सिद्धिर्दृष्टा, न तु योगसिद्धयो दृष्टाः, इत्यत्राह—योगसिद्धयो० । अणिमादिसिद्धि-कायव्यूह-परपुरप्रवेशादयो दृष्टाः, ते च मन्त्रादिभ्यः क्षुद्रसिद्धिप्रदेभ्योऽसम्भवन्तो योगमेवावलम्बन्त इति नापलपनीयाः ॥ १२९ ॥

[ वृ० सा० ] मणिमन्त्रौषधितपःप्रभावजसिद्धयो दृष्टा न तु योगसिद्धयस्तत्राह—योगेति । अणिमादिसिद्धिकायव्यूहपरपुरप्रवेशादयो दृष्टास्ते च मन्त्रादिभ्यः क्षुद्रसिद्धिप्रदेभ्यो सम्भवन्तो योगमेवावलम्बन्त इति भावः ॥ १२९ ॥

[ भा० ] नन्वेवं ब्रह्माण्डादिसर्जनसमर्थं सर्वज्ञत्वादिकं कथं जन्यं सम्भाव्येतापि, लोके तपआदिभिरेवमैश्वर्यादर्शनादिति; तत्राह—योगसिद्ध० । औषधादिसिद्धिदृष्टान्तेन योगजा अप्यणिमादिसिद्धयः सृष्टयाद्युपयोगिन्यः सिद्धयन्तीत्यर्थः ॥ १२९ ॥

[ भा० सा० ] नन्वेवमनेकब्रह्माण्डादिसर्जनसमर्थं सर्वज्ञं विना कथं सृष्टिः, लोके तपआदिभिरेवमैश्वर्याभावादत आह—योगेति । औषधादिसिद्धिवद् योगजा अप्यणिमादिसिद्धयः सृष्टयाद्युपयोगिन्यः सिद्धयन्तीत्यर्थः ॥ १२९ ॥

**न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्येऽपि च सांहत्येऽपि च ॥ १३० ॥**

[ वृ० ] पृथग्भूतानां चैतन्यादर्शनेऽपि संहताः शरीरभावमापन्नाश्चेतयिष्यन्तीत्यत्राह—न भूतचैतन्यं० । यस्य स्वल्पा शक्तिरस्ति, तस्य समुदायान्महच्छक्तिर्जायते; यथा तन्तूनां स्वल्पशक्तिमतां समुदायाद् गजबन्धनशक्तिर्दृश्यते । न तथा भूतानां पृथक् चैतन्यं दृष्टं येन सांहत्ये चैतन्योद्भवः स्यात् । संहतत्वाविशेषान्मृतदेहस्यापि चैतन्यप्रसङ्गः । तस्मादन्य एव चेतनः । उक्तमप्यर्थं प्रसङ्गानुप्रसङ्गेन व्यवहितमिति स्मारितम्, तेन न पुनरुक्तम् । सांहत्ये चेति वीप्साऽध्यायपरिसमाप्तौ ॥ १३० ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ परपक्षनिर्जयाध्यायः पञ्चमः ।

[ वृ० सा० ] पृथग्भूतानां चैतन्यादर्शनेऽपि देहाकारपरिणतेषु तेषु स्यादित्यत आह—नेति । यत्र हि प्रत्येकं स्वल्पा शक्तिर्दृश्यते, भवति तत्र संघातेऽधिकारशक्तिः । यथा तन्तूनां स्वल्पशक्तिमतां समुदायाद् गजबन्धनशक्तिः । न च तथाभूतानां पृथक् चैतन्यं दृष्टम्, येन सांहत्ये चैतन्योद्भवः स्यात् । उक्तोऽप्यर्थो व्यवहित इति पुनः स्मारितः । वीप्सा अध्यायसमाप्त्यर्था ॥ १३० ॥

इति वेदान्तिमहादेवकृते सांख्यप्रवचनवृत्तिसारे
पञ्चमोऽध्यायः ॥ ५ ॥

[ भा० ] पुरुषसिद्धिप्रतिकूलतया भूतचैतन्यवादिनं प्रत्याचष्टे - न भूत० । संहतभावावस्थायामपि पञ्चभूतेषु चैतन्यं नास्ति, विभागकाले प्रत्येकं चैतन्यादृष्टेरित्यर्थः । तृतीयाध्याये ( ३।२०-२२ ) चेदं स्वसिद्धान्तविधयोक्तम्, अत्र च परमतनिराकरणायेति न पौनरुक्त्यं दोषायेति । वीप्साऽध्यायसमाप्तौ ॥ १३० ॥

स्वसिद्धान्तविरुद्धार्थभाषिणो ये कुवादिनः ।
पञ्चमे तान् निराकृत्य स्वसिद्धान्तो दृढीकृतः ॥

इति विज्ञानभिक्षुनिर्मिते कापिलसांख्यप्रवचनस्य भाष्ये
परपक्षनिर्जयाध्यायः पञ्चमः ॥

[ भा० सा० ] पुरुषसिद्धिप्रतिकूलतया पुनर्भूतचैतन्यं प्रत्याचष्टे—नेति । संहतभावावस्थायामपि भूतेषु चैतन्यं नास्ति, विभागकाले प्रत्येकं चैतन्यादृष्टेरिति भावः । वीप्साध्यायसमाप्तौ । पूर्वं स्वपक्षतयोक्तानामपि परमतनिराकरणतयोक्तेर्न पौनरुक्त्यम् ॥ १३० ॥

इति पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

———

# षष्ठोऽध्यायः

## अस्त्यात्मा नास्तित्वसाधनाभावात् ॥ १ ॥

[ वृ० ] सकलशास्त्रार्थे कथिते परपक्षनिर्जयानन्तरं तमेवार्थं संकलय्य तन्त्रन्यायेन वक्तुं षष्ठाध्यायारम्भः । अस्त्यात्मा० । स्पष्टम् ॥ १ ॥

[ वृ० सा० ] षष्ठस्तन्त्राध्यायः । तत्र प्रायशः पूर्वोक्त एवार्थ उपसंह्रियते । सूत्राण्यपि प्रायशः स्पष्टानि । क्वचिद् व्याख्यायन्ते ।

अस्त्यात्मेति । मम देह इति ज्ञानपूर्वकात् शब्दाभिलाषादित्यर्थः ॥ १ ॥

[ भा० ] अध्यायचतुष्केण समस्तशास्त्रार्थं प्रतिज्ञाय पञ्चमाध्याये परपक्षनिराकरणेन प्रसाध्येदानीं तमेव सारभूतशास्त्रार्थं षष्ठाध्यायेन सङ्कलयन्नुपसंहरति। उक्तार्थानां हि पुनस्तन्त्राख्ये विस्तरे कृते शिष्याणामसन्दिग्धाविपर्यस्तो दृढतरो बोध उत्पद्यत इत्यतः स्थूणानिखननन्यायादनुक्तयुक्त्याद्युपन्यासाच्च नात्र पौनरुक्त्यं दोषाय। अस्त्यात्मा० । जानामीत्येवं प्रतीयमानतया पुरुषः सामान्यतः सिद्ध एवास्ति, बाधकप्रमाणाभावात् । अतस्तद्विवेकमात्रं कर्तव्यमित्यर्थः ॥ १ ॥

[ भा० सा० ] बोधाय संकलय्योपसंहरति—अस्तीति । जानामीत्येवं प्रतीत्या पुरुषः सिद्धः । बाधकप्रमाणाभावाच्चेत्यर्थः ॥ १ ॥

## देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ॥ २ ॥

[ वृ० ] सामान्येनात्मन्यविप्रतिपत्तेस्तद्विशेषनिरूपणायाह—देहादि० । देहाभेदपक्षे बाल्य-कौमार-यौवन-वार्धक्य-देहभेदादनेकात्मत्वप्रसङ्गः, मृते देहनाशात् तस्य जन्मान्तरवैचित्र्यानुपपत्तिः । श्रुतिश्च—

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥
( श्वे० उ० ३।११ ) ॥ २ ॥

[ भा० ] तत्र विवेके प्रमाणद्वयमाह सूत्राभ्याम्—देहादि० । असावात्मा द्रष्टा देहादिप्रकृत्यन्तेभ्योऽत्यन्तं भिन्नो वैचित्र्यात्, परिणामित्वापरिणामित्वादिवैधर्म्यादित्यर्थः। प्रकृत्यादयस्तावत् प्रत्यक्षानुमानागमैः परिणामितयैव सिद्धाः, पुरुषस्यापरिणामित्वं तु सदा ज्ञातविषयत्वादनुमीयते । तथाहि—यथा चक्षुषो रूपमेव विषयो न सन्निकर्षसाम्येऽपि रसादिरेवं पुरुषस्य स्वबुद्धिवृत्तिरेव विषयो न तु सन्निकर्षसाम्येऽप्यन्यद्वस्त्विति फलबलात् कल्प्यम् । बुद्धिवृत्त्यारूढतयैव त्वन्यद्भोग्यं भवति पुरुषस्य,

न स्वतः, सर्वदा सर्वभानापत्तेः । ताश्च बुद्धिवृत्तयो नाज्ञातास्तिष्ठन्ति, ज्ञानेच्छासुखादीनामज्ञातसत्तास्वीकारे तेष्वपि घटादाविव संशयादिप्रसङ्गादहं जानामि न वा, सुखी न वेत्यादिरूपेण । अतस्तेषां सदा ज्ञातत्वात् तद्द्रष्टा चेतनोऽपरिणामीत्यायातम् । चेतनस्य परिणामित्वे कदाचिदान्ध्यपरिणामेन सत्या अपि बुद्धिवृत्तेरदर्शनेन संशयाद्यापत्तेरिति । एवं पारार्थ्यापारार्थ्यादिकमपि पूर्वोक्तं वैधर्म्यजातं बोध्यम् ॥ २ ॥

[भा० सा०] तत्र विवेकं साधयति—देहादीति । आत्मा देहादिप्रकृत्यन्तेभ्यो भिन्नः, वैचित्र्यात् । परिणामित्वादिवैधर्म्यादित्यर्थः । तत्र प्रकृत्यादीनां प्रत्यक्षानुमानागमैः परिणामित्वं सिद्धम् । पुरुषस्यापरिणामित्वं तु सदा ज्ञानविषयत्वादनुमीयते । तथाहि—यथा चक्षुषो रूपमेव विषयो न सन्निकर्षसाम्येऽपि रसादि, एवं पुरुषस्य स्वबुद्धिवृत्तिविषय एव भोग्यो न तु सन्निकर्षसाम्येऽप्यन्यद्वस्तु, इति फलबलात् क्लृप्तम् । तद्बुद्धिवृत्त्यारूढमेव तद्भोग्यं न स्वतः, वृत्त्यभावकाले घटाद्यदर्शनात् । बुद्धिवृत्तयश्च नाज्ञातास्तिष्ठन्ति । ज्ञानसुखादीनामज्ञातसत्तास्वीकारे तेष्वपि घटादाविवाहं जानामि न वा, सुखी न वेत्यादिसंशयप्रसङ्गात् । नापि स्वप्रकाशाः, कर्तृकर्मविरोधात् । अतस्तासां द्रष्टा चेतनोऽपरिणामी । परिणामित्वे कदाचिदान्ध्यपरिणामेन सत्या अपि बुद्धिवृत्तेरदर्शनापत्तेः । एवं पुरुषस्य सदा ज्ञातवृत्तित्वे सिद्धे चित्स्वरूपमेककमात्मद्रव्यलाघवात् सिद्धयति । एवं चाज्ञानस्य चित्तधर्मतया तत्कार्यधर्माधर्मसुखेच्छादिकं चित्तधर्म एव, सामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभावे लाघवादिति । एवं पारार्थ्यापारार्थ्यप्रकाशाप्रकाशारूपत्वमपि वैधर्म्यं बोध्यम् । देहादेः प्रकाशरूपत्वे देहादिधर्माणां सदैव भानप्रसङ्गः । सुषुप्तौ देहादेश्चैतन्याननुभावाच्च । आत्मनस्तु प्रकाशरूपत्वेऽपि निर्धर्मकतयान्यसंगाद्यभावेन च सदा धर्मादिमानप्रसङ्ग इति दिक् ॥ २ ॥

## षष्ठीव्यपदेशादपि ॥ ३ ॥

[ वृ० ] हेत्वन्तरमाह—षष्ठी० । मम देह इति ज्ञानमस्ति, भेदे च षष्ठी श्रूयते । 'स्थूलोऽहम्' इति सामानाधिकरण्यमस्त्वीति चेत्, न; देहे प्रत्युपभोगात्तन्निमित्तोऽयं गौणः प्रत्ययः ॥ ३ ॥

[ भा० ] षष्ठी० । ममेदं शरीरं ममेयं बुद्धिरित्यादेर्विदुषां षष्ठीव्यपदेशादपि देहादिभ्य आत्मा भिन्नः । अत्यन्ताभेदे षष्ठ्यनुपपत्तेरित्यर्थः । तदुक्तं विष्णुपुराणे—

त्वं किमेतच्छिरः किन्नु शिरस्तव तथोदरम् ।
किमु पादादिकं त्वं वै तवैतद्धि महीपते ॥
समस्तावयवेभ्यस्त्वं पृथग् भूप व्यवस्थितः ।
कोऽहमित्यत्र निपुणो भूत्वा चिन्तय पार्थिव ॥

( वि० पु० २।१३।९८–९९ )

इति। न च स्थूलोऽहमित्यादिरपि विद्वद्व्यपदेशोऽस्तीति वाच्यम्; श्रुत्या बाधिततया ममात्मा भद्रसेन इतिवद् गौणत्वेनैव तदुपपत्तेरिति ॥ ३ ॥

[ भा० सा० ] षष्ठीति। ममेदं शरीरं ममेयं बुद्धिरित्यादेर्विदुषामपि षष्ठीव्यपदेशाद् देहादिभ्य आत्मा भिन्नः। अत्यन्ताभेदे षष्ठ्यनुपपत्तेरित्यर्थः। षष्ठी चेयं स्वत्वे ममेदं धनमितिवत्। गौरोऽहमिति विदुषां व्यवहारोऽपि ममात्मा भद्रसेन इतिवद् गौणः ॥ ३ ॥

## न; शिलापुत्रवद्धर्मिग्राहकमानबाधात् ॥ ४ ॥

[ वृ० ] 'शिलापुत्रस्य शरीरम्' इत्यभेदेऽपि षष्ठीश्रुतेर्न भेदः, इत्यत्राह—न शिला०। न, तत्र प्रत्यक्षेणैवाभेदप्रतीतेः षष्ठी बाधितेति गौणः प्रयोगः। मुख्यसम्भवाद् गौणोऽत्र नास्ति ॥ ४ ॥

[ वृ० सा० ] नेति। शिलापुत्रकस्य शरीरमितिवन्न भेदव्यपदेशो गौणः, किन्तु मुख्यः। धर्मिण आत्मनो ग्राहकेण शरीराद्भिभेदग्राहकेण मानेन प्रत्यक्षानुमानशब्दरूपेण गौणत्वस्य बाधात्। शिलापुत्रकस्य शरीरमित्यत्र तु प्रत्यक्षेण वा भेदग्रहात्। कृशोऽहमित्यादिस्तु प्रेम्ण-स्तादात्म्याभिमान इति भावः ॥ ४ ॥

[ भा० ] ननु पुरुषस्य चैतन्यम्, राहोः शिरः, शिलापुत्रस्य शरीरमित्यादि-व्यपदेशवदयमपि भवतु; तत्राह—न शिला०। शिलापुत्रस्य शरीरमित्यादिवदयं षष्ठीव्यपदेशो न भवति, शिलापुत्रादिस्थले धर्मिग्राहकप्रमाणेन बाधाद्विकल्पमात्रम्। मम शरीरमिति व्यपदेशे तु प्रमाणबाधो नास्ति, देहात्मताया एव बाधादित्यर्थः। यस्तु शास्त्रेषु ममकारप्रतिषेधः स स्वाम्यस्यानित्यतया वाचारम्भणमात्रत्वेनासत्यतापर एवेति भावः। पुरुषस्य चैतन्यमित्यत्राप्यस्ति धर्मिग्राहकमानबाधः, अनवस्थाभयेन लाघवाच्च देहादिव्यतिरिक्ततयाऽऽत्मसिद्धौ चैतन्यस्वरूपतावगाहनादिति ॥ ४ ॥

[ भा० सा० ] ननु पुरुषस्य चैतन्यं राहोः शिर इति व्यपदेशवदयमपि भवतु, तत्राह—नेति। शिलापुत्रस्य शरीरमितिवदियं षष्ठी न। तत्र धर्मिग्राहकप्रमाणेन बाधाद्वि-कल्पमात्रत्वाङ्गीकारेऽपि मम शरीरमिति व्यपदेशेन प्रमाणाबाधः। देहात्मतया, एवं श्रुत्यादिप्रमाणैर्बाधादित्यर्थः। यस्तु शास्त्रेषु ममकारप्रतिषेधः, स स्वस्वाम्यानित्यतयाऽ-सत्यतापर एवेति भावः। पुरुषस्य चैतन्यमित्यत्राप्यस्ति धर्मिग्राहकमानबाधः। अनवस्थाभिया लाघवाच्च देहादिव्यतिरिक्तात्मसिद्धौ तस्य चैतन्यरूपतावगाहनादिति ॥ ४ ॥

## अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥ ५ ॥

[ वृ० ] सुखोत्कर्षात् कृतकृत्यता स्यादित्यत्राह—अत्यन्त०। सुखोत्कर्षस्यापि क्षयित्वान्न कृतकृत्यता। अत्यन्तदुःखनिवृत्तिस्तु तथा, अपुनरावृत्तेः ॥ ५ ॥

[ वृ० सा० ] अत्यन्तेति। न तु सुखोत्कर्षात्, तस्य क्षयित्वात् ॥ ५ ॥

[ भा० ] देहादिव्यतिरिक्ततया पुरुषमवधार्य तन्मुक्तिमवधारयति—अत्यन्त०। सुगमम् ॥ ५ ॥

[ भा० सा० ] अथ तन्मुक्तिमाह—अत्यन्तेति। स्पष्टम् ॥ ५ ॥

## यथा दुःखात् क्लेशः पुरुषस्य न तथा सुखादभिलाषः ॥ ६ ॥

[ वृ० ] सुखाभावस्यापि विद्यमानत्वात् पुरुषार्थत्वमित्यत्राह—यथा०। सुखे दुःखस्यावश्यम्भावात्। यदि सुखे सति दुःखमवश्यम्भवेत्, कस्तर्हि सुखमभिलषेत्? तस्माद् दुःखबहुलत्वात् सुखस्य दुःखनिवृत्तिरेव पुरुषार्थः ॥ ६ ॥

[ वृ० सा० ] यथेति। यथा सुखेऽपि दुःखाद् दुःखावश्यम्भावाद् द्वेषः, तथा दुःखेऽपि सुखादल्पाल्लभ्यमानादभिलाषो न। सुखं हि बहुलतरदुःखमिश्रितमिति न सुखेऽभिलाष इति भावः ॥ ६ ॥

[ भा० ] ननु दुःखनिवृत्त्या सुखस्यापि निवर्तनात् तुल्यायव्ययत्वेन न सा पुरुषार्थ इति, तत्राह—यथा दुःखात्०। विषयविधया हेतुतायां पञ्चम्यौ। क्लेशश्चात्र द्वेषः। यथा दुःखे द्वेषो बलवत्तरो नैवं सुखेऽभिलाषो बलवत्तरोऽपि तु तदपेक्षया दुर्बल इत्यर्थः। तथा च सुखाभिलाषं बाधित्वापि दुःखनिवृत्तावेवेच्छां जनयतीति न तुल्यायव्ययत्वमिति। तदुक्तम्—

"अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे" ( कु० सं० १।५२ )

इति। या तु नरकादिदुःखदर्शनेऽपि क्षुद्रसुखप्रवृत्तिः सा रागादिदोषवशादेवेति ॥ ६ ॥

[ भा० सा० ] ननु दुःखनिवृत्तौ सुखस्यापि निवृत्तेस्तुल्यायव्ययत्वेन न सा पुरुषार्थोऽत आह—यथेति। विषयविधया हेतुतायां पञ्चम्यौ। यथा दुःखे द्वेषो बलवत्तरो नैवं सुखेऽभिलाषो बलवत्तरः, किन्तु ततो दुर्बलः। एवं सुखाभिलाषं बाधित्वापि दुःखे द्वेषो दुःखनिवृत्तावेवेच्छां जनयतीति न तुल्यायव्ययत्वमित्यर्थः। या तु नरकादिदुःखदर्शनेऽपि क्षुद्रसुखे प्रवृत्तिः, सा रागादिदोषादेवेति बोध्यम् ॥ ६ ॥

## कुत्राऽपि कोऽपि सुखीति ॥ ७ ॥

[ वृ० ] सुखस्य हेयत्वमाह—कुत्रापि०। स्वयमेव चिन्त्यताम् ॥ ७ ॥

[ वृ० सा० ] ननु कस्यचिद् दुःखामिश्रितमपि सुखं भविष्यतीत्यत आह—नेति। दुःखामिश्रितेति सुखी स्यादिति ॥ ७ ॥

[ भा० ] सुखापेक्षया दुःखस्य बहुत्वादपि दुःखनिवृत्तिरेव पुरुषार्थ इत्याह—कुत्रापि०। अनन्ततृणवृक्षपशुपक्षिमनुष्यादिमध्ये स्वल्पो मनुष्यदेवादिरेव सुखी भवतीत्यर्थः। इति हेतौ ॥ ७ ॥

[ भा० सा० ] सुखापेक्षया दुःखस्य बहुत्वादपि तन्निवृत्तिः पुरुषार्थ इत्याह—नेति। अनन्तेषु जीवेषु स्वल्पो देवादिरेवेषत्सुखीत्यर्थः। इति हेतौ ॥ ७ ॥

## तदपि दुःखशबलमिति दुःखपक्षे निक्षिपन्ते विवेचकाः ॥ ८ ॥

[ वृ० ] प्रत्यक्षमेव वनितादीनां सुखहेतुत्वमित्यत्राह—तदपि०। स्रगादीनामर्जने क्षयादौ च दुःखमिति स्वसंवेदनमेव प्रमाणमिति ॥ ८ ॥

[ वृ० सा० ] नन्वस्तु दुःखामिश्रणम्, सुखं तु काम्यं भवेदत आह—तदपीति। स्वर्गाद्यर्थार्जनक्षयभवं दुःखमस्त्येवेति भावः ॥ ८ ॥

[ भा० ] तदपि कादाचित्कं क्वाचित्कसुखं मधुविषसम्पृक्तान्नवद्विचारकाणां हेयमेवेत्याह—तदपि०। तदपि पूर्वसूत्रोक्तं सुखमपि दुःखमिश्रितमित्यतो दुःखकोटौ सुखदुःखविवेचका निःक्षिपन्त इत्यर्थः। तदुक्तं योगसूत्रेण—"परिणामतापसंस्कार-दुःखैर्गुणवृत्तिनिरोधाच्च सर्वमेव दुःखं विवेकिनः" ( यो० सू० २।१५ ) इति। विष्णुपुराणेऽपि—

यद्यत् प्रीतिकरं पुंसां वस्तु मैत्रेय जायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥

( वि० पु० ६।५।५५ ) इति ॥ ८ ॥

[ भा० सा० ] तदपि सुखं मधुविषसम्पृक्तान्नवद् हेयमेव विचारकाणामित्याह—तदपीति। सुखमपि दुःखकोटावेव सुखदुःखविवेचका निक्षिपन्तीत्यर्थः।

यद्यत् प्रीतिकरं पुंसां वस्तु मैत्रेय जायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥

( वि० पु० ४३।१६ ) इति स्मृतेः ॥ ८ ॥

## सुखलाभाभावादपुरुषार्थत्वमिति चेन्नैवं द्वैविध्यात् ॥ ९ ॥

[ वृ० ] सुखमेव परमपुरुषार्थो न त्वभाव इत्यत्राह—सुखलाभा०। रागिणां सुखं वीतरागाणां दुःखाभाव इति ॥ ९ ॥

[ वृ० सा० ] सुखस्यैव पुरुषार्थत्वं लोके दृष्टं न दुःखाभावस्येत्यत आह—सुखेति। रागिणां सुखं पुमर्थः, वीतरागिणां पुनर्दुःखाभावः ॥ ९ ॥

[ भा० ] केवला दुःखनिवृत्तिर्न पुरुषार्थः, किन्तु सुखोपरक्तेति मतमपाकरोति—सुखलाभा०। सुखलाभाभावान्मोक्षाख्यदुःखाभावस्यापुरुषार्थत्वमिति चेन्न; पुरुषार्थस्य द्वैविध्याद् द्विप्रकारत्वात्, सुखत्वदुःखाभावत्वाभ्यामित्यर्थः। सुखी स्यां दुःखी न स्यामिति हि पृथगेव लोकानां प्रार्थना दृश्यत इति ॥ ९ ॥

[ भा० सा० ] सुखोपरक्तैव दुःखनिवृत्तिः पुरुषार्थं इत्यपाकरोति—सुखेति। सुखदुःखाभाववत्त्वाभ्यां पुरुषार्थस्य द्वैविध्यमित्यर्थः। सुखी स्याम्, दुःखी मा स्यामिति यथायोग्यं प्रार्थनादर्शनादिति भावः ॥ ९ ॥

निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः ॥ १० ॥

[ वृ० ] विशेषगुणोच्छित्तिर्मुक्तिरित्यत्राह—निर्गुण०। विशेषगुणनिषेधात् सामान्यगुणस्वीकारः। तथा च असङ्गादिश्रुति( बृ० उ० ४।३।१५ )विरोधः स्यात् ॥ १० ॥

[ वृ० सा० ] निर्गुणत्वमिति। विशेषगुणोच्छित्तिर्मुक्तिरिति पक्षे सामान्यगुणस्वीकार आपतेत्, स च श्रुतिविरुद्धः ॥ १० ॥

[ भा० ] शङ्कते—निर्गुण०। नन्वात्मनो निर्गुणत्वं सुखदुःखमोहाद्यखिलगुणशून्यत्वं नित्यमेव सिद्धम्, असङ्गत्वश्रुतेः—विकारहेतुसंयोगाभावश्रवणात्, तं विना च गुणाख्यविकारासम्भवात्। अतो न दुःखनिवृत्तिरपि पुरुषार्थो घटत इत्यर्थः।

ननु संयोगं विना स्वयमेव विकारो भवत्विति चेन्न;

दाहाय नानलो वह्नेर्नापः क्लेदाय चाम्भसः।
तद्द्रव्यमेव तद्द्रव्यविकाराय न वै यतः॥
किञ्च स्वयं विकारित्वे मोक्षो नैवोपपद्यते।
स्वयं मोहविकारेण पुनर्बन्धप्रसङ्गतः॥ इति।

तथा चोक्तं कौर्मे—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि॥

( कू० पु० २।२।१२–१३ ) इति ॥ १० ॥

[ भा० सा० ] शङ्कते—निर्गुणत्वमिति। "असङ्गो ह्ययं पुरुषः निर्गुणः" ( बृ० उ० ४।३।१६ ) इत्यादिश्रुतेरात्मनः सुखदुःखाद्यखिलगुणशून्यत्वं नित्यसिद्धम्, सङ्गं विना गुणाख्यविकारासम्भवात्। विकारित्वे च मोक्षानुपपत्तिः, पुनर्बन्धप्रसङ्गात्। एवं च नित्यसिद्धतया दुःखनिवृत्तिरपि न पुरुषार्थ इत्यर्थः ॥ १० ॥

परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥ ११ ॥

[ वृ० ] यद्यसङ्गः पुरुषः, कथं धर्मात् स्वर्गोऽधर्मान्नरकम्? इत्यत्राह—परधर्म०। परधर्मत्वेऽपि प्रकृतिधर्मत्वेऽपि प्रकृतिपुरुषाविवेकात्तच्छायापत्त्यात्मनः स्वर्गादिप्राप्तिरित्यभिमानः ॥ ११ ॥

[ वृ० सा० ] नन्वसङ्गत्वे पुरुषस्य धर्मात् स्वर्गोऽधर्मान्नरकमिति कथं तत्राह—परेति।

प्रकृतिधर्मत्वेऽपि प्रकृतिपुरुषाविवेकात्तच्छायापत्त्यात्मनः स्वर्गादिप्राप्तिरित्यभिमानः ॥ ११ ॥

[ भा० ] समाधत्ते—परधर्मत्वे० । सुखदुःखादिगुणानां चित्तधर्मत्वेऽपि तत्रात्मनि सिद्धिः प्रतिबिम्बरूपेणावस्थितिः । अविवेकान्निमित्तात्, प्रकृतिपुरुषसंयोगद्वारेत्यर्थः । एतच्च प्रथमाध्याये (सां०सू० १।५५) प्रतिपादितम्, "निमित्तत्वमविवेकस्य न दृष्टहानिः" (सां०सू० ३।७४) इति तृतीयाध्यायसूत्रे चेति । तथा च स्फटिके लौहित्यमिव पुरुषे प्रतिबिम्बरूपेण दुःखसत्त्वात् तन्निवृत्तिरेव पुरुषार्थः । प्रतिबिम्बद्वारकदुःखसम्बन्धस्यैव भोगतया प्रतिबिम्बरूपेणैव दुःखस्य हेयत्वादिति ॥ ११ ॥

[ भा० सा० ] समाधत्ते—परेति । दुःखादीनां चित्तधर्मत्वेऽपि तत्रात्मनि सिद्धिः, प्रतिबिम्बरूपेणावस्थितिः । अविवेकात् प्रकृतिपुरुषसंयोगद्वारेत्यर्थः । एवं च स्फटिके लौहित्यमिव पुरुषे प्रतिबिम्बरूपेण दुःखसत्त्वात्तन्निवृत्तिः । पुरुषार्थंप्रतिबिम्बद्वारकदुःखसंयोगस्यैव भोगतया प्रतिबिम्बरूपेणैव दुःखस्य हेयत्वम्, दुःखं मा भुञ्जीथेति प्रार्थनाविषयत्वं च ॥ ११ ॥

अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥ १२ ॥

[ वृ० ] अविवेकः किं सादिरनादिर्वेत्यत्राह—अनादि० । यदि सादिरविवेको भवेत्, तदुत्पत्तेः पूर्वं मोक्षः स्यात्, तदुत्पत्तौ च बन्ध इति मुक्तस्यापि बन्ध इत्येको दोषः । अविवेकप्रागभावस्यापि विद्यमानत्वान्मुक्तिसिद्धावविवेकनाशार्थमनुष्ठानं व्यर्थमिति द्वितीयो दोषः ॥ १२ ॥

[ वृ० सा० ] अनादिरिति । यदि सादिरविवेको भवेत्तर्हि तदुत्पत्तेः पूर्वं मोक्षः स्यात्, तदुत्पत्तौ च बन्ध इति । मुक्तस्य पुनर्बन्धापत्तिरेको दोषः । अविवेकाभावस्यापि विद्यमानत्वान्मुक्तसिद्धावविवेकनाशार्थं यत्नोऽनर्थकः स्यादिति द्वितीयो दोषः ॥ १२ ॥

[ भा० ] अविवेकमूलः पुरुषे गुणबन्धोऽविवेकस्तु किंमूलक इत्याकाङ्क्षायामाह—अनादि० । अगृहीतासंसर्गकमुभयविषयकज्ञानमविवेकः । स च प्रवाहरूपेणानादिश्चित्तधर्मः प्रलये वासनारूपेण तिष्ठति । अन्यथा तस्य सादित्वे दोषद्वयप्रसङ्गात् । सादित्वे हि स्वत एवोत्पादे मुक्तस्यापि बन्धापत्तिः । कर्मादिजन्यत्वे च कर्मादिकं प्रत्यपि कारणत्वेनाविवेकान्तरान्वेषणेऽनवस्थेत्यर्थः । अयं चाविवेको वृत्तिरूपः प्रतिबिम्बात्मना पुरुषधर्मं इव भवतीत्यतः पुरुषस्य बन्धप्रयोजक इति प्रागेवोक्तम्, वक्ष्यते ( ६।६८ ) च ॥ १२ ॥

[ भा० सा० ] अथाविवेके मूलमाह—अनादिरिति । अगृहीतासंसर्गकमुभयविषयकं ज्ञानमविवेकः । स प्रवाहादिरूपेणानादिश्चित्तधर्मंप्रत्यये वासनारूपेण तिष्ठति । सादित्वे हि स्वत एवोत्पादे मुक्तस्यापि बन्धापत्तिः । कर्मादिजन्यत्वे च कर्मादिकं प्रति तस्य कारणत्वानुपपत्तिरिति दोषद्वयमित्यर्थः । अयं चाविवेको वृत्तिरूपः प्रतिबिम्बात्मना पुरुषधर्मं इवेति न बन्धकारणमिति बोध्यम् ॥ १२ ॥

न नित्यः स्यादात्मवदन्यथानुच्छित्तिः ॥ १३ ।

[ वृ० ] न नित्य० । नित्यो द्विधा—कूटस्थनित्य आत्मा, परिणामिनित्या प्रकृतिः । न द्वयमप्यविवेकः, किन्त्वनित्य एव नाशात् । अन्यथा नित्यत्वेऽनुच्छित्तिः । आत्मवदित्युपलक्षणम्, प्रकृतिवदित्यपि द्रष्टव्यम् ॥ १३ ॥

[ वृ० सा० ] नेति । आत्मवन्न कूटस्थनित्यः, नापि प्रकृतिवत्परिणामिनित्यः, अन्यथा नित्यत्वेऽनुच्छित्तिः स्यात् ॥ १३ ॥

[ भा० ] ननु चेदनादिस्तर्हि नित्यः स्यादिति; तत्राह—न नित्यः० । आत्मवन्नित्योऽखण्डानादिर्न भवति, किन्तु प्रवाहरूपेणानादिः । अन्यथाऽनादिभावस्योच्छेदानुपपत्तेरित्यर्थः ॥ १३ ॥

[ भा० सा० ] नन्वेवमात्मवदविवेको नित्यः स्यादत आह—नेति । आत्मवन्नित्योऽखण्डानादिर्न, किन्तु प्रवाहरूपेणानादिः । अन्यथा तस्य श्रुतिसिद्ध उच्छेदोऽनुपपन्नः स्यादित्यर्थः ॥ १३ ॥

प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥ १४ ॥

[ वृ० ] अविवेकनाशः केनेत्यत्राह—प्रतिनियत० । यथा ध्वान्तस्य नाशकः प्रकाश इति ॥ १४ ॥

[ वृ० सा० ] यथा ध्वान्तस्य नाशकः प्रकाश एवमस्याविवेकस्य नाशकमाह—प्रतीति ॥ १४ ॥

[ भा० ] बन्धकारणमुक्त्वा मोक्षकारणमाह—प्रतिनियत० । अस्य बन्धकारणविवेकस्य शुक्तिरजतादिस्थले प्रतिनियतं यन्नाशकारणं विवेकस्तन्नाश्यत्वं तमोवत् । अन्धकारो हि प्रतिनियतेनालोकेनैव नाश्यते, नान्यसाधनेनेत्यर्थः । तदुक्तं विष्णुपुराणे—

अन्धन्तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ॥

( वि० पु० ६।५।६२ ) इति ॥ १४ ॥

[ भा० सा० ] अथ मोक्षकारणमाह—प्रतीति । अस्य बन्धजनकस्याविवेकस्य शुक्तिरजतादिस्थले प्रतिनियतं यन्नाशकारणं विवेकस्तन्नाश्यत्वम् । अतमस आलोकेनानाश्यत्वम् । एवं च विवेक एव तन्नाशद्वारा मोक्षकारणमिति भावः ।

अन्धन्तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ॥ (वि० पु० ६।५।६२ )

इति स्मृतेः ॥ १४ ॥

## अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ॥ १५ ॥

[ वृ० ] अत्र को नाशक इत्यत्राह—अत्रापि० । अव्यभिचाराद्विवेक एव नाशक इति ॥ १५ ॥

[ वृ० सा० ] अत्रापीति । विवेकख्यातिरिति शेषः ॥ १५ ॥

[ भा० ] विवेकेनैवाविवेको नाश्यत इति प्रतिनियमस्य ग्राहकमप्याह—अत्रापि० । ध्वान्तालोकयोरिव प्रकृतेऽपि प्रतिनियमः शुक्तिरजतादिष्वन्वयव्यतिरेकाभ्यामेव ग्राह्य इत्यर्थः । अथवैवं व्याख्येयम्—ननु विवेकस्यापि किं प्रतिनियतं कारणम् ? तत्राह—अत्रापि विवेकेऽपि कारणनियमोऽन्वयव्यतिरेकाभ्यामेव सिद्धः । श्रवणमननिदिध्यासनरूपमेव कारणं न तु कर्मादीति । कर्मादिकं तु वहिरङ्गमेवेत्यर्थः ॥ १५ ॥

[भा० सा० ] विवेकेऽपि प्रतिनियतकारणमस्तीत्याह—अत्रापीति । अत्रापि विवेकेऽपि श्रवणमननिदिध्यासनानां प्रतिनियमोऽन्वयव्यतिरेकाभ्यामेव, न तु कर्मादीनामित्यर्थः ॥ १५ ॥

## प्रकारान्तरासम्भवादविवेक एव बन्धः ॥ १६ ॥

[ वृ० ] किमविवेकाद् बद्ध आत्मा, अथान्यदपि बन्धकारणमस्तीत्यत्राह—प्रकारा० । व्यक्तम् ॥ १६ ॥

[ वृ० सा० ] प्रकारेति । बन्धः संसारोऽविवेक एवेति कार्यकारणयोरभेदोपचारात् । धर्मादिकं तु सहकारीति भावः ॥ १६ ॥

[ भा० ] बन्धस्य स्वाभाविकत्वादिकं न सम्भवतीति प्रथमपादोक्तं स्मारयति—प्रकारा० । बन्धोऽत्र दुःखयोगाख्यबन्धकारणम् । शेषं सुगमम् ॥ १६ ॥

[ भा० सा० ] उपसंहरति—प्रकारान्तरेति । बन्धो दुःखत्रयात्मकाख्यबन्धकारणमित्यर्थः ॥ १६ ॥

## न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः ॥ १७ ॥

[ वृ० ] मुक्तेः कार्यत्वात्तन्नाशे पुनर्बन्ध इत्यत्राह न मुक्तस्य० । श्रुतिश्च—"आत्मा ज्ञातव्यो प्रकृतितो विवेक्तव्यः न पुनरावर्तते" ( छा० उ० ८।१५।१ ) इति । न्याय्यश्च भावकार्यस्यैव नाशः, दुःखनिवृत्तिस्त्वभावरूपेति ॥ १७ ॥

[ वृ० सा० ] मुक्तेः कार्यत्वान्नाशमाशङ्क्याह—नेति । अपिशब्दाद्विवेकख्यात्या मुक्तिः समुच्चीयते, उभयत्राप्यनावृत्तिश्रुतेः; "आत्मा ज्ञातव्यः प्रकृतितो विवेक्तव्यो न पुनरावर्तते" ( छा० उ० ८।१५।१ ) इत्यादि : भावकार्यस्यैव नाशनियम इति भावः ॥ १७ ॥

[ भा० ] ननु मुक्तेरपि कार्यतया विनाशापत्त्या पुनर्बन्धः स्यादिति; तत्राह—न मुक्तस्य० । भावकार्यस्यैव विनाशितया मोक्षस्य नाशो नास्ति, "न स पुनरावर्तते" ( छा० उ० ८।१५।१ ) इति श्रुतेरित्यर्थः । अपिशब्दः पूर्वसूत्रोक्तार्थसमुच्चये ॥ १७ ॥

[ मा० सा० ] ननु मुक्तेः कार्यत्वे विनाशः स्यादत आह—नेति । ध्वंसरूपस्यानावृत्तिश्रुतेः, "न स पुनरावर्तते" इति श्रुतेरित्यर्थः ॥ १७ ॥

## अपुरुषार्थत्वमन्यथा ॥ १८ ॥

[ वृ० ] विपक्षे दोषमाह—अपुरुषार्थं० । अन्यथा मुक्तस्यापि बद्धत्वम्, अत एवापुरुषार्थत्वम् ॥ १८ ॥

[ वृ० सा० ] विपक्षे दोषमाह—अपुरुषार्थत्वमिति । सुषुप्तिसमाधितुल्यत्वात् ॥ १८ ॥

[भा०] अपुरुषार्थं० । अन्यथा मुक्तस्यापि पुनर्बन्धे प्रलयवदेव मोक्षस्यापुरुषार्थत्वं परमपुरुषार्थत्वाभावो वा स्यादित्यर्थः ॥ १८ ॥

[ मा० सा० ] अपुरुषार्थत्वमिति । मुक्तस्यापि पुनर्बन्धे प्रलयवदेवास्य पुरुषार्थत्वं न स्यादित्यर्थः ॥ १८ ॥

## अविशेषापत्तिरुभयोः ॥ १९ ॥

[ वृ० ] दूषणान्तरमाह—अविशेषा० । उभयोः संसारि-मुक्तयोर्बन्धयोगाविशेषात् ॥ १९ ॥

[ वृ० सा० ] एतदेव स्पष्टयति—अविशेषेति । उभयोः संसारिमुक्तयोः ॥ १९ ॥

[भा०] अपुरुषार्थत्वे हेतुमाह—अविशेषा० । भाविबन्धत्वसाम्येनोभयोर्मुक्तबद्धयोर्विशेषो न स्यात् । ततश्चापुरुषार्थत्वमित्यर्थः ॥ १९ ॥

[ भा० सा० ] तत्र हेतुमाह—अविशेषेति । उभयोः बन्धमुक्तयोः ॥ १९ ॥

## मुक्तिरन्तरायध्वस्तेर्न परः ॥ २० ॥

[ वृ० ] व्याध्यादयो योगान्तरायाः । तथा च पतञ्जलिः—"व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" ( यो० सू० १।३० ) । व्याधिर्ज्वरादिः, स्त्यानमकर्मण्यता, संशय उभयकोटिस्पृग् ज्ञानम्, प्रमादः समाधावनवधानम्, आलस्यं कायगुरुत्वम्, अविरतिः विषयतृष्णा, भ्रान्तिदर्शनं मिथ्याज्ञानम्, अलब्धभूमिकत्वं समाधिभूमेरलाभः, अनवस्थितत्वं लब्धभूमेर्मनसि भ्रंशित्वम् । मुक्तौ किमेषां ध्वंसमात्रं धर्मान्तरप्राप्तिर्वेत्यत्राह—मुक्ति० । धर्मान्तरपक्षे कूटस्थत्वप्रच्यवः ॥ २० ॥

[ वृ० सा० ] मुक्तावन्तरायाणां ध्वंसमात्रं धर्मान्तरप्राप्तिर्वा ? तत्राह—मुक्तिरिति । अन्तरायध्वंस एव मुक्तौ न परः, धर्म इति शेषः । धर्मान्तरपक्षे कूटस्थत्वव्याहतिरिति भावः ।

अन्तरायास्तु पतञ्जलिनोक्ताः—"व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" ( यो० सू० १।३० ) इति। व्याधिर्ज्वरादिः, स्त्यानमकर्मण्यता, संशय उभयकोटिस्पृग् ज्ञानम्, प्रमादः समाधावनवधानम्, आलस्यं कायबुद्धिगुरुत्वम्, अविरतिर्विषयतृष्णा, भ्रान्तिदर्शनं मिथ्याज्ञानम्, अलब्धभूमिकत्वं समाधिभूमेरलाभः, अनवस्थितत्वं लब्धभूमेर्मनसि भ्रंशित्वम् ॥ २० ॥

[ भा० ] नन्वेवं बद्धमुक्तयोर्विशेषाभ्युपगमे नित्यमुक्तत्वं कथमुच्यते; तत्राह—मुक्ति०। वक्ष्यमाणान्तरायस्य ध्वंसादतिरिक्तः पदार्थो न मुक्तिरित्यर्थः। यथाहि स्वभावशुक्लस्य स्फटिकस्य जपोपाधिनिमित्तं रक्तत्वं शौक्ल्यावरकरूपं विघ्नमात्रम्, न तु जपोपधानेन शौक्ल्यं नश्यति, जपापाये चोत्पद्यते; तथैव स्वभावनिर्दुःखस्यात्मनो बुद्ध्युपाधिकं दुःखप्रतिबिम्बं तदावरकरूपं विघ्नमात्रम्, न तु बुद्ध्युपधानेन दुःखं जायते तदपाये च नश्यतीति। अतो नित्यमुक्त आत्मा, बन्धमोक्षौ तु व्यावहारिकावित्यविरोध इति ॥ २० ॥

[ भा० सा० ] नन्वेवं पुरुषस्य नित्यमुक्तत्वासंगतिरत आह—मुक्तिरिति। वक्ष्यमाणान्तरायध्वंसादतिरिक्तः पदार्थो न मुक्तिरित्यर्थः। यथा स्वभावशुद्धस्य स्फटिकस्य जपोपाधिनिमित्तं रक्तत्वं शौक्ल्यावरकं विघ्नमात्रम्, नतु तेन शौक्ल्यं नश्यति तदपाये चोत्पद्यते। तथा स्वभावनिर्दुःखस्यात्मनो बुद्ध्युपाधिकं दुःखप्रतिबिम्बं तदावरकं विघ्नमात्रम्, न तु तेन दुःखं जायते तदपाये च नश्यतीति। नित्यमुक्तश्चात्मा, बन्धमोक्षौ तु व्यावहारिकावित्यविरोध इति भावः ॥ २० ॥

## तत्राप्यविरोधः ॥ २१ ॥

[ वृ० ] अभ्युपगम्याह—तत्राप्य०। भवतु धर्मयोगः, तथापि न काचित् क्षतिः। मुक्तावनावृत्तिरुक्ता, सा धर्मान्तरयोगेऽप्यस्तीति ॥ २१ ॥

[ वृ० सा० ] धर्मान्तरयोगेऽपि प्रौढिवादेनाह—तत्रापीति। अनावृत्तिश्रुतेरिति भावः ॥ २१ ॥

[ भा० ] नन्वेवं बन्धमोक्षयोर्मिथ्यात्वे मोक्षस्य पुरुषार्थताप्रतिपादकश्रुत्यादिविरोध इत्याह—तत्राप्य०। तत्राप्यन्तरायध्वंसस्य मोक्षत्वेऽपि पुरुषार्थत्वाविरोध इत्यर्थः। दुःखयोगवियोगावेव हि पुरुषे कल्पितौ, न तु दुःखभोगोऽपि। भोगश्च प्रतिबिम्बरूपेण दुःखसम्बन्ध इत्यतः प्रतिबिम्बरूपेण दुःखनिवृत्तिर्यथार्थैव पुरुषार्थः। स एवान्तरायध्वंसः। तादृशश्च मोक्षो यथार्थ एवेति भावः ॥ २१ ॥

[ भा० सा० ] ननु तयोर्मिथ्यात्वे मोक्षस्य पुरुषार्थताप्रतिपादकश्रुत्या विरोधोऽत आह—तत्रापीति। अन्तरायध्वंसस्य मोक्षत्वेऽपि पुरुषार्थत्वाविरोध इत्यर्थः। दुःखयोगवियोगावेव चेतने कल्पितौ, न तु दुःखभोगोऽपि। भोगश्च प्रतिबिम्बरूपेण दुःखसम्बन्ध इति तन्निवृत्तिर्यथार्थ एव पुरुषार्थः। स एवान्तरायध्वंस इति भावः ॥ २१ ॥

## अधिकारित्रैविध्यान्न नियमः ॥ २२ ॥

[ वृ० ] श्रवण-मनन-निदिध्यासनं किं सर्वपुरुषसाधारणं न वेत्यत्राह— अधिकारि०। त्रिविधास्त्वधिकारिणो मृदुमध्याधिमात्राः। अधिमात्रस्य श्रवणमात्रान्मुक्तिः, मध्यमस्य द्वाभ्याम्, मन्दस्य त्रिभिः। न सर्वं सर्वस्य ॥ २२ ॥

[ वृ० सा० ] श्रवणमनननिदिध्यासनानि सर्वैः कार्याणीति न नियम इत्याह— अधिकारीति। मृदुमध्याधिमात्रा अधिकारिणः। तत्राधिमात्रस्य श्रवणमात्रान्मुक्तिः, मध्यस्य द्वाभ्याम्, मन्दस्य त्रिभिः॥ २२ ॥

[ भा० ] नन्वन्तरायध्वंसमात्रं चेन्मुक्तिस्तर्हि श्रवणमात्रेणैव तत्सिद्धिः स्यात्। अज्ञानप्रतिबद्धकण्ठचामीकरसिद्धिवदिति; तत्राह—अधिकारि०। उत्तममध्यमाधमास्त्रिविधा ज्ञानाधिकारिणः। तेन श्रवणमात्रानन्तरमेव मानससाक्षात्कारः सर्वेषामिति न नियम इत्यर्थः। अतो मन्दाधिकारदोषाद्विरोचनादीनां श्रवणमात्राच्चित्तविलायनक्षमं मानसज्ञानं नोत्पन्नम्। न तु श्रवणस्य ज्ञानजननासामर्थ्यादिति ॥ २२ ॥

[ भा० सा० ] ननु श्रवणमननाभ्यामेव साक्षात्कारसंभवाद्योगवैयर्थ्यमत आह— अधिकारीति। उत्तमानां श्रवणमननसहकृतमनसैव साक्षात्कारसंभवेऽपि मध्यमाधमयोर्न तथा नियम इत्यर्थः॥ २२ ॥

## दार्ढ्यार्थमुत्तरेषाम् ॥ २३ ॥

[ वृ० ] पक्षान्तरमाह—दार्ढ्यार्थं०। उत्तरेषां मन्दानां दार्ढ्यार्थं साधनत्रयमुक्तम्। श्रुतिरपि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृ० उ० २।४।५; ४।५।६ ) इति ॥ २३ ॥

[ वृ० सा० ] एतदेवोपपादयति—दार्ढ्यार्थमिति। उत्तरेषां मन्दानां मनननिदिध्यासने इति शेषः॥ २३ ॥

[ भा० ] न केवलं श्रवणमात्रं ज्ञाने, दृष्टकारणमन्यदपीत्याह—दार्ढ्यार्थं०। श्रवणादुत्तरेषां मनननिदिध्यासनादीनामन्तरायध्वंसस्यात्यन्तिकत्वरूपदार्ढ्यार्थं नियम इत्यनुषज्यते ॥ २३ ॥

[ भा० सा० ] किञ्च कोमलकाष्ठवज्जातेऽपि साक्षात्कारे तद्दार्ढ्यार्थमुत्तरसाधनानामपि नियम एवेत्याह—दार्ढ्यार्थमिति। नियम इति शेषः॥ २३ ॥

## स्थिरसुखमासनमिति न नियमः ॥ २४ ॥

[ वृ० ] स्वस्तिकादीनां मध्ये किमासनमनुष्ठेयमित्यत्राह—स्थिरसुख०। ( स्वस्तिकादिनियमो नास्ति ) इतिशब्दो हेत्वर्थः। ततश्च स्थैर्यार्थं सुखार्थं वा आसनानुष्ठानम्, तदेवास्तु व्यापकत्वादिति ॥ २४ ॥

[ वृ० सा० ] स्थिरेति । इति हेतोः स्वस्तिकादीनां न नियमः ।। २४ ।।

[ भा० ] उत्तराण्येव साधनान्याह—स्थिरसुख० । आसने पद्मासनादिनियमो नास्ति । यतः स्थिरं सुखं च यत् तदेवासनमित्यर्थः ।। २४ ।।

[ भा० सा० ] उत्तरसाधनान्येवाह—स्थिरेति । पद्मासनादिनियमो न, स्थिरं सुखं च यत्तदेवासनं यत इत्यर्थः ।। २४ ।।

## ध्यानं निर्विषयं मनः ।। २५ ।।

[ वृ० ] एकाग्रतया विषयचिन्तनं ध्यानम्, निर्विषयं वा मनो ध्यानमित्यत्राह—ध्यानं० । निर्विषयं गलितवृत्तिकम् । समाधावत्र ध्यानशब्द इति ।। २५ ।।

[ वृ० सा० ] समाधिलक्षणमाह—ध्यानमिति । ध्यानं समाधिः ।। २५ ।।

[ भा० ] मुख्यं साधनमाह—ध्यानं० । वृत्तिशून्यं यदन्तःकरणं भवति तदेव ध्यानम्, योगश्चित्तवृत्तिनिरोधरूप इत्यर्थः । एतत्साधनत्वेन ध्यानस्य वक्ष्यमाणत्वादिति ।। २५ ।।

[ भा० सा० ] मुख्यं साधनमाह—ध्यानमिति । इतरवृत्तिशून्यता या मनसस्तदेव ध्यानमित्यर्थः । ध्यानमत्र ध्यानकार्यम् ।। २५ ।।

## उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ।। २६ ।।

[ वृ० ] वृत्तिनिरोधतुल्यत्वे सुषुप्तिसमाध्योः को विशेष इत्यत्राह—उभयथा० । उपरागो विषयवासना, तन्निरोधः समाधाविति विशेषः ।। २६ ।।

[ वृ० सा० ] सुषुप्तितः समाधेर्विशेषमाह—उभयथापीति । वृत्तिनिरोधस्योभयत्र तुल्यत्वेऽपि समाधावुपरागाख्यविषयवासनानिरोधाद्विशेषः ।। २६ ।।

[ भा० ] ननु योगायोगयोः पुरुषस्यैकरूप्यात् किं योगेनेत्याशङ्क्य समाधत्ते—उभयथा० । उपरागनिरोधाद् वृत्तिप्रतिबिम्बापगमाद्योगावस्थायामयोगावस्थातो विशेषः पुरुषस्येति सिद्धान्तदलार्थः । शेषं व्याख्यातप्रायम् ।। २६ ।।

[ भा० सा० ] ननु योगायोगयोः पुरुषस्यैकरूप्यात् किं योगेन ? इत्यत्र ज्ञानफलकत्वे सत्येव फलान्तरमाह—उभयथेति । योगायोगयोः पुरुषस्य विशेष इति चेन्न; उपरागनिरोधाद् दुःखात्मवृत्तिप्रतिबिम्बापगमात्तयोर्विशेषः पुरुषस्येत्यर्थः ।। २६ ।।

## निःसङ्गेऽप्युपरागोऽविवेकात् ।। २७ ।।

[ वृ० ] निःसङ्गत्वादात्मन उपरागाभावात् सर्वदा मुक्तिरित्यत्राह—निःसङ्गे० । प्रकृतिपुरुषाविवेकात् प्रकृत्युपरागेणात्मन उपराग इत्यभिमानः ।। २७ ।।

[ वृ० सा० ] निःसङ्गेऽपीति । स्पष्टम् ।। २७ ।।

[ भा० ] ननु निःसङ्गे कथमुपरागस्तत्राह निःसङ्गे० । निःसङ्गे यद्यपि पारमार्थिक उपरागो नास्ति, तथाप्युपराग इव भवतीति कृत्वा प्रतिबिम्ब एवोपराग इति व्यवह्रियते । उपरागविवेकिभिरित्यर्थः ।। २७ ।।

[ भा० सा० ] ननु निःसङ्गे कथमुपरागोऽत आह— निःसङ्ग इति । पारमार्थिकोप-रागाभावेऽपि तत्सादृश्यात् प्रतिबिम्बेऽप्युपरागव्यवहार उपरागविवेकिनामित्यर्थः ।। २७ ।।

## जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः ।। २८ ।।

[ वृ० ] उपरागोऽपि न तात्त्विक इत्यत्राह –जपास्फटिक० । तयोः संसर्गा-दुपरागो युक्तः । आत्मनस्त्वसंसर्गान्नोपरागः, किन्त्वभिमानः, आत्मन्यहङ्काराध्यास इत्यर्थः ।। २८ ।।

[ वृ० सा० ] कीदृगुपराग इत्याह—जपेति । तयोर्हि संसर्गादुपरागो युक्तः, आत्मनस्त्व-संसर्गान्नोपरागः, किन्त्वभिमानः ।। २८ ।।

[ भा० ] एतदेव विवृणोति—जपास्फटिक० । यथा जपास्फटिकयोर्नोपरागः, किन्तु जपाप्रतिबिम्बवशादुपरागाभिमानमात्रं रक्तः स्फटिक इति, तथैव बुद्धिपुरुषयो-र्नोपरागः, किन्तु बुद्धिप्रतिबिम्बवशादुपरागाभिमानोऽविवेकवशादित्यर्थः । अत उपरागतुल्यतया वृत्तिप्रतिबिम्ब एव पुरुषोपराग इति सूत्रद्वयपर्यवसितोऽर्थः । एष एव च दुःखात्मकवृत्तेरुपरागो दुःखनिवृत्त्याख्यमोक्षस्यान्तरायस्तस्य च ध्वंसश्चित्तलयात् । सोऽपि च चित्तवृत्तिनिरोधाख्येनासम्प्रज्ञातयोगेनेत्यतो योगादेवान्तरायध्वंसो भवतीति योगशास्त्रस्यापि सिद्धान्तः ।। २८ ।।

[ भा० सा० ] तदेवाह—जपेति । यथा जपास्फटिकयोर्नोपरागः, किन्तु प्रतिबिम्ब-वशात्तदभिमानमात्रस्तु स्फटिक इति । एवमत्रापि बुद्धिवृत्तिप्रतिबिम्बवशादुपरागाभिमानस्तुल्य-त्वात् । एवं चोपरागतुल्यतया वृत्तिप्रतिबिम्ब एव पुरुषे विषयोपराग इत्यर्थः । एवं दुःखात्म-वृत्तेरुपरागो दुःखनिवृत्त्याख्यमोक्षस्यान्तरायस्तस्य च ध्वंसश्चित्तक्षयात् । सोऽपि तद्वृत्तिनिरोधा-ख्येनासम्प्रज्ञातयोगेनेति योगादेवान्तरायध्वंस इति भावः ।। २८ ।।

## ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ।। २९ ।।

[ वृ० ] कथमभिमाननाश इत्यत्राह—ध्यान० । निरोधः निवृत्तिः । आदिशब्दात् समाधिग्रहणम् ।। २९ ।।

[वृ० सा०] ध्यानेति । तन्निरोधः विषयोपरागनिरोधः । आदिशब्दात् समाधिः ।।२९।।

[ भा० ] "ध्यानं निर्विषयं मनः" ( सां० सू० ६।२५ ) इति योग उक्तस्तस्य साधनान्याचक्षाण एव यथोक्तोपरागस्य निरोधोपायमाह—ध्यानधारणा० ।

समाधिद्वारा ध्यानं योगस्य कारणम्, ध्यानस्य च कारणं धारणा, तस्याश्च कारणमभ्यासश्चित्तस्थैर्यसाधनानुष्ठानम्, अभ्यासस्यापि कारणं विषयवैराग्यम्, तस्यापि

दोषदर्शनयमनियमादिकमिति पातञ्जलोक्तप्रक्रियया तन्निरोध उपरागनिरोधो भवति। चित्तवृत्तिनिरोधाख्ययोगद्वारेत्यर्थः ॥ २९ ॥

[ भा० सा० ] तन्निरोधोपायमाह—ध्यानेति । समाधिद्वारा ध्यानं योगस्य कारणम्, ध्यानस्य कारणं धारणा, तस्याश्चाभ्यासश्चित्तस्थैर्यसाधनानुष्ठानलक्षणस्तस्य विषयवैराग्यं तस्य दोषदर्शनमिति योगोक्तप्रक्रियया चित्तवृत्तिनिरोधो भवतीत्यर्थः ॥ २९ ॥

**लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥ ३० ॥**

[ वृ० ] एकदेशिमतमुक्त्वा स्वमतमाह—लयविक्षेप० । लयः सुषुप्तिः, विक्षेपो जागरितम् । तयोर्व्यावृत्त्या अहङ्कारादेर्नाशः ॥ ३० ॥

[ वृ० सा० ] ध्यानादीनामवधिमाह—लयेति । लयः सुषुप्तिः, विक्षेपः स्वप्नजागरिते। अवस्थात्रयव्यावृत्तिपर्यन्तं ध्यानादीन्यनुष्ठेयानि ॥ ३० ॥

[ भा० ] चित्तनिष्ठध्यानादिना पुरुषस्योपरागनिरोधे पूर्वाचार्यसिद्धं द्वारं दर्शयति—लयविक्षेप० । ध्यानादिना चित्तस्य निद्रावृत्तेः प्रमाणादिवृत्तेश्च निवृत्त्या वृत्त्युपरागनिरोधो भवति । बिम्बनिरोधे प्रतिबिम्बस्यापि निरोधादिति पूर्वाचार्या आहुरित्यर्थः । यथा पतञ्जलिः - "योगश्चित्तवृत्तिनिरोधः", "तदा द्रष्टुः स्वरूपेऽवस्थानम्", "वृत्तिसारूप्यमितरत्र" ( यो० सू० १।२-४ ) इति सूत्रत्रयेणैतदेवाह । तथा—

नित्यः सर्वत्रगो ह्यात्मा बुद्धिसन्निधिमत्तया ।
यथा यथा भवेद् बुद्धिरात्मा तद्वदिहेष्यते ॥

इत्यादिस्मृतयोऽप्येतदाहुरिति । तदेवमसम्प्रज्ञातयोगादेव मोक्षान्तरायध्वंस इति प्रघट्टकार्थः ॥ ३० ॥

[ भा० सा० ] अत्र सम्मतिमाह—लयेति । लयो धर्मः सुषुप्तिः, विक्षेपो जागरणम्, तत्रत्यवृत्तिनिरोधेन वृत्तिनिवृत्त्या यदुपरागनिरोधो भवति, बिम्बनिरोधे प्रतिबिम्बस्यापि निरोधादिति पूर्वाचार्या योगप्रवर्तका आहुरित्यर्थः । तदेवमसंप्रज्ञातयोगादेव साक्षात्कारद्वारा मोक्षान्तरायध्वंस इति प्रघट्टकार्थः ॥ ३० ॥

**न स्थाननियमश्चित्तप्रसादात् ॥ ३१ ॥**

[ वृ० ] गुहादिस्थानेषु केषु ध्यानादयः कर्तव्या इत्यत्राह—न स्थान० । यत्र चित्तप्रसादो न भवति, तत्र न कर्तव्यमनुष्ठानम् ॥ ३१ ॥

[ वृ० सा० ] तत्र च स्थाननियमो नास्तीत्याह—नेति । यत्रैव चित्तप्रसादस्तत्र ध्यानाद्यनुष्ठेयं न नदीपुलिनादिनियमः ॥ ३१ ॥

[ भा० ] ध्यानादौ गुहादिस्थाननियमो नास्तीत्याह—न स्थान० । चित्तप्रसादादेव ध्यानादिकम् । अतस्तत्र न गुहादिस्थाननियम इत्यर्थः । शास्त्रे त्वौत्सर्गिकाभिप्रायेणै-

वारण्यगिरिगुहादिस्थानं योगस्योद्दिष्टमिति । अत एव ब्रह्मसूत्रमपि—"यत्रैकाग्रता तत्राविशेषात्" ( ४।१।११ ) इति ॥ ३१ ॥

[ भा० सा० ] ध्यानादौ गुहादिस्थाननियमो नेत्याह—नेति । यत्र चित्तप्रसादस्तदेव स्थानमित्यर्थः । शास्त्रेण गुहारण्यादिस्थानकथनमुत्सर्गं इति भावः ॥ ३१ ॥

## प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ॥ ३२ ॥

[ वृ० ] अहङ्कारादीनामुपादानत्वमस्तु, कुतं प्रकृत्येत्यत्राह—प्रकृते० । अन्येषामहङ्कारादीनां कार्यत्वश्रुतेस्तेषामपि कारणे प्रकृतिरित्यसकृदावेदितम् ॥ ३२ ॥

[ वृ० सा० ] प्रकृतेरिति । अन्येषां महदादीनाम् ॥ ३२ ॥

[ भा० ] समाप्तो मोक्षविचारः, इदानीं पुरुषापरिणामित्वाय जगत्कारणं विचारयति—प्रकृते० । महदादीनां कार्यत्वश्रवणात् तेषां मूलकारणतया प्रकृतिः सिद्ध्यतीत्यर्थः ॥ ३२ ॥

[ भा० सा० ] इदानीं पुरुषापरिणामित्वाय जगत्कारणमुपसंहरति—प्रकृतेरिति महदादीनां कार्यत्वश्रवणात् तन्मूलकारणतया प्रकृतिः सिद्ध्यतीत्यर्थः ॥ ३२ ॥

## नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ॥ ३३ ॥

[ वृ० ] प्रकृतिपुरुषयोः पूर्वकालभावित्वाविशेषात् कः कारणमित्यत्राह—नित्यत्वेऽपि० । गुणवत्त्वसंसर्गित्वे कारणयोग्यता । सा चात्मनि नास्तीति प्रकृतिः कारणम् ॥ ३३ ॥

[ वृ० सा० ] नित्यत्व इति । नात्मन उपादानता । गुणवत्त्वसंसर्गित्वाभावादित्यर्थः ॥ ३३ ॥

[ भा० ] पुरुष एवोपादानं भवतु, तत्राह—नित्यत्वे० । गुणवत्त्वं सङ्गित्वं चोपादानयोग्यता, तयोरभावात्पुरुषस्य नित्यत्वेऽपि नोपादानत्वमित्यर्थः ॥ ३३ ॥

[ भा० सा० ] पुरुषस्तु नोपादानमित्याह—नित्यत्वेऽपीति । गुणवत्त्वं सङ्गित्वं चोपादानयोग्यता । तदभावात् पुरुषस्य नित्यत्वेऽपि नोपादानमित्यर्थः ॥ ३३ ॥

## श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥

[ वृ० ] आत्मनश्चेत्तृत्वाद् भोक्तृत्वादि युज्यते, न जडस्य प्रधानस्येत्यत्राह—श्रुतिविरोधा० । व्यक्तम् ॥ ३४ ॥

[ वृ० सा० ] आत्मनः स्वत एव कर्तृत्वभोक्तृत्वे किं प्रकृत्युपरागेणेति दूषयति—श्रुतीति । कुतर्कंयुक्तम्, अपसदः दुष्टा सभा, तत्र आत्मज्ञानं न युक्तम्, श्रुतिविरोधात् स्वतः कर्तृत्वादावनिर्मोक्षप्रसङ्गाच्च ।

आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ।
नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥ इत्युक्तेः ॥ ३४ ॥

[ भा० ] ननु "बह्वीः प्रजाः पुरुषात् सम्प्रसूताः" ( मु० उ० २।१।५ ) इत्यादि-श्रुतेः पुरुषस्य कारणत्वावगमाद्विवर्तादिवादा आश्रयणीयाः, इत्याशङ्क्याह–श्रुतिविरो०।

पुरुषकारणतायां ये ये पक्षा, सम्भावितास्ते सर्वे श्रुतिविरुद्धा इत्यतस्तदभ्युपगन्तृणां कुतार्किकाद्यधमानामात्मस्वरूपज्ञानं न भवतीत्यर्थः। एतेनात्मनि सुखदुःखादि-गुणोपादानत्ववादिनोऽपि कुतार्किका एव, तेषामप्यात्मयथार्थज्ञानं नास्तीत्यवगन्तव्यम्। आत्मकारणताश्रुतयश्च शक्तिशक्तिमदभेदेनोपासनार्था एव, "अजामेकाम्" ( श्वे० उ० ४।५ ) इत्यादिश्रुतिभिः प्रधानकारणासिद्धेः। यदि चाकाशस्याभ्राद्यधिष्ठानकारणतावदात्मनः कारणत्वमुच्यते तदा तन्न निराकुर्मः, परिणामस्यैव प्रतिषेधादिति ॥ ३४ ॥

[ भा० सा० ] ननु "बह्वीः प्रजाः पुरुषात्सम्प्रसूताः" ( मु० उ० २।१।५ ) इति-श्रुतेर्विरोधात्(?)कुतार्किकाद्यधमस्य पुरुषो जगत्कारणमिति वदतो नात्मस्वरूपज्ञानमित्यर्थः। एवमात्मनि सुखदुःखाद्याश्रयत्ववादिनोऽप्येवमेवेति ध्वनितम्। आत्मकारणताश्रुतयश्च शक्ति-शक्तिमदभेदेनोपासनार्था एव, "अजामेकाम्" ( श्वे० उ० ४।५ ) इत्यादिश्रुत्या प्रधान-कारणतासिद्धेः। यदि त्वाकाशस्याभ्राद्यधिष्ठानकारणत्ववदात्मनः कारणत्वं तदेष्टापत्तिः, परिणामस्यैव प्रतिषेधादिति भावः ॥ ३४ ॥

## पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ॥ ३५ ॥

[ वृ० ] तन्मात्राणां महाभूतकार्यत्वदर्शनात् कथं प्रकृतेः कारणत्वमित्यत्राह— पारम्पर्ये०। यथा घटादेर्मृत्पिण्डकार्यत्वेऽपि पारम्पर्येण परमाणूपादानत्वं तथात्रापीति ॥ ३५ ॥

[ वृ० सा० ] पारम्पर्य इति। यथा घटादेर्मृत्पिण्डकार्यत्वेऽपि पारम्पर्येण परमाणूना-मुपादानत्वं तथा प्रधानस्येत्यर्थः ॥ ३५ ॥

[ भा० ] स्थावरजङ्गमादिषु पृथिव्यादीनामेव कारणत्वदर्शनात् कथं प्रकृतेः सर्वोपादानत्वम्; तत्राह–पारम्पर्ये०। स्थावरादिषु परम्परया कारणत्वेऽपि तेषु प्रधानस्यानुमानादुपादानत्वमक्षतम्। यथाङ्कुरादिद्वारकत्वेऽपि स्थावरादिषु पार्थिवा-द्यणूनामनुगमादुपादानत्वमित्यर्थः ॥ ३५ ॥

[ भा० सा० ] ननु स्थावरजङ्गमादिषु पृथिव्यादीनां कारणत्वदर्शनात् कथं प्रकृतेः सर्वोपादानत्वमत आह–पारम्पर्य इति। स्थावरादिषु परम्परया कारणत्वेऽपि तेषु प्रधाना-नुगमादुपादानत्वं द्व्यणुकादिद्वारत्वेऽप्यणूनामिवेत्यर्थः ॥ ३५ ॥

## सर्वत्र कार्यदर्शनाद् विभुत्वम् ॥ ३६ ॥

[ वृ० ] प्रकृतिर्व्यापिका न वेत्यत्राह—सर्वत्र०। स्पष्टम् ॥ ३६ ॥

[ वृ० सा० ] सर्वत्रेति। प्रधानस्येति शेषः ॥ ३६ ॥

[ भा० ] अणुन्यायेन प्रकृतेर्व्यापकत्वे प्रमाणमाह—सर्वत्र० । अव्यवस्थया सर्वत्र विकारदर्शनात् प्रधानस्य विभुत्वम्, यथाऽणोर्घटादिव्यापित्वमित्यर्थः । एतच्च प्रागेव ( सां० सू०, अ० २ ) व्याख्यातम् ॥ ३६ ॥

[ भा० सा० ] अणुन्यायेन प्रकृतेर्व्यापकत्वमाह—सर्वत्रेति । अव्यवस्थया सर्वत्र कार्यदर्शनादणूनामिव प्रधानस्यापि व्यापकत्वमित्यर्थः ॥ ३६ ॥

## गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥ ३७ ॥

[ वृ० ] विपक्षे दोषमाह—गतियोगे० । गतिः क्रिया, तद्योगो यस्यास्ति तदव्यापकम् । प्रकृतेर्गतिमत्त्वे कार्यत्वं परमाणुवत्, न त्वाद्यकारणता ॥ ३७ ॥

[ वृ० सा० ] विपक्षे बाधकमाह—गतीति । गतिः क्रिया, तत्प्रयोजकाविभुत्वयोगेऽणूनामिव कार्यता स्यात् । अणूनां कार्यत्वे च पराक्रान्तमन्यत्र ॥ ३७ ॥

[ भा० ] ननु परिच्छिन्नत्वेऽपि यत्र कार्यमुत्पद्यते तत्र गच्छतीति वक्तव्यम्; तत्राह—गतियोगे० । गतिस्वीकारेऽपि परिच्छिन्नतया मूलकारणत्वाभावः पार्थिवाद्यणुदृष्टान्तेनेत्यर्थः । अथवेत्थं व्याख्येयम्—ननु त्रिगुणात्मकप्रधानस्यान्योन्यसंयोगार्थं श्रुतिस्मृतिषु क्रिया क्षोभाख्या श्रूयते, क्रियावत्त्वाच्च तन्त्वादिदृष्टान्तेन मूलकारणत्वाभाव इत्याशङ्क्य परिहरति—गतियोगेऽप्याद्यकारणताहानिरणुवत् । गतिः क्रिया तत्सत्त्वेऽपि मूलकारणताया अहानिर्यथा वैशेषिकमते पार्थिवाद्यणूनामित्यर्थः ॥ ३७ ॥

[ भा० सा० ] ननु त्रिगुणात्मकस्य तस्यान्योन्यसंयोगार्थं श्रुतिस्मृतिषु क्षोभाख्या क्रिया श्रूयते, क्रियावत्त्वाच्च तन्त्वादिदृष्टान्तेन न मूलकारणत्वं स्यादत आह—गतीति । परमाणुवदेव क्रियावत्त्वेऽपि न मूलकारणत्वहानिरित्यर्थः ॥ ३७ ॥

## प्रसिद्धाधिक्यं प्रधानस्य न नियमः ॥ ३८ ॥

[ वृ० ] प्रकृतेरुपादानत्वे द्रव्यस्योपादानत्वात्तदन्तर्भावः स्यादित्यत्राह—प्रसिद्धा० । प्रसिद्धेभ्यो द्रव्येभ्योऽधिकं प्रधानम्, अनियतत्वात् पदार्थस्य । उपादानकारणता च न समवायिकारणता, किन्तु प्रधानता, वैशेषिकसमवायस्यानभ्युपगमात् ॥ ३८ ॥

[ वृ० सा० ] प्रसिद्धेति । प्रसिद्धाधिक्यम् इष्टम् । यतोऽस्माकं पृथिव्यादीनि द्रव्याणीत्यादिर्न नियमः ॥ ३८ ॥

[ भा० ] ननु पृथिव्यादीनां नवानामेव द्रव्याणां दर्शनात् कथं पृथिवीत्वादिशून्यं प्रधानाख्यं द्रव्यं घटेत ? न च प्रधानं द्रव्यमेव मास्त्विति वाच्यम्; संयोगविभागपरिणामादिभिर्द्रव्यत्वसिद्धेरिति; तत्राह—प्रसिद्धा० ।

प्रसिद्धनवद्रव्याधिक्यमेव प्रधानस्यातो नवैव द्रव्याणीति न नियम इत्यर्थः। अष्टानामेव कार्यत्वश्रवणं चात्र तर्क इति भावः ॥ ३८ ॥

[ भा० सा० ] ननु द्रव्याणां नवत्वान्न प्रधानस्य द्रव्यत्वमत आह—प्रसिद्धेति। प्रसिद्धनवद्रव्याधिक्यमेव प्रधानस्य। नवैव द्रव्याणीति न नियम इत्यर्थः ॥ ३८ ॥

## सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥ ३९ ॥

[ वृ० ] प्रकृतिः किं गुणात्मिका, गुणधर्मिणी वेत्यत्राह—सत्त्वादीना०। तादात्म्यात् ॥ ३९ ॥

[ वृ० सा० ] सत्त्वादयो न प्रकृतिधर्माः, किन्तु सत्त्वरजस्तमोरूपैव प्रकृतिरित्याह—सत्त्वादीनामिति। सत्त्वादीनां सत्त्वरजस्तमसां तद्रूपत्वात् तत्तादात्म्यात्। निष्प्रयोजनप्रवृत्त्यभ्युपगमे मोक्षानुपपत्तेः ॥ ३९ ॥

[ भा० ] किं सत्त्वादयो गुणा एव प्रकृतिरथवा गुणत्रयरूपद्रव्यत्रयाधारभूता प्रकृतिरिति संशयेऽवधारयति—सत्त्वादीना०। सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति, प्रकृतिस्वरूपत्वादित्यर्थः। यद्यपि श्रुतिस्मृतिषूभयमेव श्रूयते, तथापि तर्कतः स्वरूपत्वमेवावधार्यते न तु धर्मत्वम्। तथाहि—सत्त्वादित्रयं किं प्रकृतेः कार्यरूपो धर्मोऽथवाऽऽकाशस्य वायुवत् संयोगमात्रेण नित्य एव धर्मः स्यात्? आद्ये एकस्या एव प्रकृतेर्द्रव्यान्तरसङ्गं विना विचित्रगुणत्रयोत्पत्त्यसम्भवः, दृष्टविरुद्धकल्पनानौचित्यं च। अन्त्ये नित्येभ्य एव सत्त्वादिभ्योऽन्योन्यसङ्गेन विचित्रसकलकार्योपपत्तौ तदतिरिक्त प्रकृतिकल्पनावैयर्थ्यमिति सत्त्वादीनां प्रकृतिकार्यत्वादिवचनानि चांशतः प्रकाशादिकार्योपहितत्तयाभिव्यक्त्यादिकमेव बोधयन्ति, यथा पृथिवीतो द्वीपोत्पत्तिरिति ॥ ३९ ॥

[ भा सा० ] तस्य द्रव्यत्वं च संयोगविभागपरिमाणाश्रयत्वाज्ज्ञायते। सत्त्वादयः किं प्रकृतेः? कृत, उत) तद्रूपैव प्रकृतिरिति संशये आह—सत्त्वादीनामिति। यद्यपि श्रुतिस्मृत्योरुभयं श्रूयते, तथापि लाघवतर्केण तद्रूपत्वमेव न तु तद्धर्मत्वम्। तथा हि—उक्तयुक्त्या द्रव्यरूपं सत्त्वादि न प्रकृतेः कर्मरूपो धर्मः, तस्या द्रव्याक्षरसङ्गं विना विचित्रगुणोत्पादकत्वासंभवात्। दृष्टविरुद्धकल्पना त्वनुचिता। नाप्याकाशस्यवायुवत् संयोगमात्रेण धर्मः, तदा तेभ्य एवान्योन्यसङ्गेन विचित्रसकलकार्योत्पत्तौ तदतिरिक्तप्रकृतिकल्पनाया वैयर्थ्यात्। तत्र सत्त्वादीनां कार्यकारणोभयरूपतया सत्त्वादिषु प्रकृतिकार्यत्वव्याख्यानामविरोधः। तत्र साम्यावस्थमश्रु(पिचु?)तुल्यं सत्त्ववैषम्यावस्थस्य तन्तुतुल्यस्य महत्तत्त्वादिकारणसत्त्वस्य कारणम्। एवं रजस्तमसी अपि। अतद्धर्मत्वमित्यस्य तत्कार्यमात्रत्वाभाव इत्यर्थः। तद्रूपत्वात् प्रकृतेरपि सत्त्वं रजस्तम इति। "एषैव प्रकृतिः सत्" इति स्मृतेः। सत्त्वादिरूपत्वादित्यर्थः। अत एवाष्टाविंशतितत्त्वानीत्युपपन्नम् ॥ ३९ ॥

**अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥ ४० ॥**

[ वृ० ] उपभोगार्थं प्रवृत्तिर्दृष्टा, न तु जडस्योपभोग इत्यत्राह—अनुप० । कृतव्याख्यानमेतत्तृतीयेऽध्याये प्रधानेत्यादिसूत्रे ( ३।५८ ) ॥ ४० ॥

[ भा० ] प्रधानप्रवृत्तेः प्रयोजनमवधारयति, निष्प्रयोजनप्रवृत्त्यभ्युपगमे मोक्षानुपपत्तेरिति—अनुपभोगे० । तृतीयाध्यायस्थे प्रधानसृष्टिः परार्थेत्यादिसूत्रे ( ३।५८ ) व्याख्यातमिदम् ॥ ४० ॥

**कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥ ४१ ॥**

[ वृ० ] प्रकृतेरेकत्वात् कथं सृष्टिवैचित्र्यमित्यत्राह—कर्मवैचित्र्यात्० । उपादानाऽभेदेऽपि निमित्तभेदेन भेदः । यथा सुवर्णाभेदेऽपि कर्मभेदेन मुकुटग्रैवेयकादिभेदः ॥ ४१ ॥

[ वृ० सा० ] निष्प्रयोजनेति । अनुपेति । कर्मेति । स्पष्टम् ॥ ४०-४१ ॥

[ भा० ] विचित्रसृष्टौ निमित्तकारणमाह—कर्मवैचि० । कर्म धर्माधर्मौ । सुगममन्यत् ॥ ४१ ॥

[ भा० सा० ] विचित्रसृष्टौ निमित्तकारणमाह—कर्मेति । कर्म धर्माधर्मौ ॥ ४१ ॥

**साम्यवैषम्याभ्यां कार्यद्वयम् ॥ ४२ ॥**

[ वृ० ] कथं सृष्टिप्रलयावित्यत्राह—साम्यवैषम्या० । साम्यात् प्रकृतेः सदृशपरिणामात् प्रलयः । वैषम्यात् प्रकृतेर्महदादिभावेन विसदृशपरिणामात् सृष्टिः ॥ ४२ ॥

[ वृ० सा० ] प्रकृतेः सदृशपरिणामात प्रलयः, महदादिभावेन विसदृशपरिणामात् सृष्टिः ॥ ४२ ॥

[ भा० ] ननु भवतु प्रधानात् सृष्टिः, प्रलयस्तु कस्मात् ? नह्येकस्मात् कारणाद्विरुद्धकार्यद्वयं घटते; तत्राह—साम्य० । सत्त्वादिगुणत्रयं प्रधानम्, तेषां च वैषम्यं न्यूनातिरिक्तभावेन संहननम् । तदभावः साम्यम् । ताभ्यां हेतुभ्यामेकस्मादेव सृष्टिप्रलयरूपं विरुद्धकार्यद्वयं भवतीत्यर्थः । स्थितिस्तु सृष्टिमध्ये प्रविष्टेत्याशयेन तत्कारणत्वं प्रधानस्य न पृथग्विचारितम् ॥ ४२ ॥

[ भा० सा० ] नन्वस्तु प्रधानात्सृष्टिः, प्रलयस्तु कस्मादत आह—साम्येति । सत्त्वादिगुणत्रयं प्रधानम्, तेषां वैषम्यं न्यूनातिरिक्तभावेन संहननमारम्भकसंयोगः, तत्सृष्टिसंयोगः, तदभावः साम्यं तेन प्रलय इति । एकस्मादप्यवस्थाभेदेन विरुद्धं कार्यद्वयं भवतीत्यर्थः । स्थितिस्तु सृष्टिमध्ये प्रविष्टेति तत्कारणत्वं न पृथग् विचारितम् ॥ ४२ ॥

**विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥ ४३ ॥**

[ वृ० ] प्रलयमाह—विमुक्त० । यथा लोको बन्धमोक्षार्थं यतते, मुक्तबन्धश्च कृतार्थत्वादुदास्ते, तथा प्रधानमपि ॥ ४३ ॥

[ वृ० सा० ] विमुक्त इति। विमुक्तबोधाद् विमुक्तोऽयमिति बोधादिव मुक्तं प्रति प्रधानस्य न सृष्टिः। सृष्टिः प्रवृत्तिर्लोकवत्। लोके हिं कश्चित्कस्यचिद् बन्धमोक्षार्थं यतते, जाते च मोक्षे उदास्ते, तथा प्रधानम् ॥ ४३ ॥

[ भा० ] ननु प्रधानस्य सृष्टिस्वाभाव्याज्ज्ञानोत्तरमपि संसारः स्यात्; तत्राह – विमुक्त०। विमुक्ततया पुरुषसाक्षात्काराद्धेतोः प्रधानस्य तत्पुरुषार्थं पुनः सृष्टिर्न भवति, कृतार्थत्वात्, लोकवत्। यथा लोका अमात्यादयो राज्ञोऽर्थं सम्पाद्य कृतार्थाः सन्तो न पुनः राजार्थं प्रवर्तन्ते, तथैव प्रधानमित्यर्थः। विमुक्तमोक्षार्थं(?)हि प्रधानप्रवृत्तिरित्युक्तम् ( सां० सू० २।१ )। स च ज्ञानान्निष्पन्न इति भावः ॥ ४३ ॥

[ मा० सा० ] ननु प्रधानस्य सृष्टिस्वभावत्वे ज्ञानोत्तरमपि संसारः स्यादत आह— विमुक्तेति। विमुक्तस्यापि नित्यमुक्तस्यापि अन्तरायध्वंसफलसाक्षात्कारादुत्तरं न सृष्टिः, कृतार्थत्वात्। तन्मोक्षार्थं प्रधानप्रवृत्तेः। यथा लोका अमात्यादयो राज्ञः कञ्चिदर्थं संपाद्य कृतार्थाः सन्तो न पुनस्तदर्थं प्रवर्तन्ते, तद्वदित्यर्थः ॥ ४३ ॥

**नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ॥ ४४ ॥**

[ वृ० ] व्यापकत्वात् प्रकृतिपुरुषयोः सम्बन्धोऽस्त्येवेति मोक्षेऽपि भोगप्रसङ्ग इत्यत्राह – नान्योप०। भवेदेवं यद्यन्यस्य प्रधानस्य उपसर्पणमात्रमुपभोगनिमित्तं स्यात्। न चैवम्, किन्तूपभोग्यनिमित्त उपभोगः। स च मोक्षे नास्तीति ॥ ४४ ॥

[ वृ० सा० ] नान्येति। अन्यस्य बद्धस्य पुरुषस्योपसर्पणेऽपि तदर्थं सृष्टिप्रवृत्तावपि निमित्ताभावादविवेकाभावात् ॥ ४४ ॥

[ भा० ] ननु प्रधानस्य सृष्ट्युपरमो नास्ति, अज्ञानां संसारदर्शनात्। तथा च प्रधानस्य सृष्ट्या मुक्तस्यापि पुनर्बन्धः स्यात्; तत्राह—नान्योप०।

कार्यकारणसङ्घातादिसृष्ट्याऽन्यान् प्रति प्रधानस्योपसर्पणेऽपि न मुक्तस्योपभोगो भवति, निमित्ताभावात्। उपभोगे निमित्तानां स्वोपाधिसंयोगविशेषतत्कारणाविवेकादीनामभावादित्यर्थः। इदमेव हि मुक्तं प्रति प्रधानसृष्ट्युपरमो यत् तद्भोगहेतोः स्वोपाधिपरिणामविशेषस्य जन्माख्यस्यानुत्पादनमिति ॥ ४४ ॥

[ मा० सा० ] नन्वेकस्य ज्ञानेऽप्यज्ञानां संसारदर्शनाद् मुक्तस्यापि भोगः स्यादित्यत आह— नान्येति। अन्यान्प्रति प्रधानस्योपसर्पणेऽपि सृष्टिप्रवर्तकत्वेऽपि न मुक्तस्य भोगः। उपभोगनिमित्तानामविवेकतत्कृतसोपाधिसंयोगविशेषाणामभावादित्यर्थः। अयमेव हि मुक्तं प्रति प्रधानस्य सृष्ट्युपरमो यत्तद्भोगहेतोः स्वपरिणामविशेषस्यानुत्पादः ॥ ४४ ॥

**पुरुषबहुत्वं व्यवस्थातः ॥ ४५ ॥**

[ वृ० ] एक एवात्मा, तथा च—"एकमेव परं ब्रह्म सत्यमन्यद्विकल्पितम्", "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" ( ई० उ० ७ )। एतदपाकरोति—पुरुष०। एतत् प्रथमाध्याये जन्मादिसूत्रे ( १।१४९ ) वर्णितम्। तथा च—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥
( श्वे० उ० ४।५ ) ॥४५॥

[ वृ० सा० ] पुरुषेति । स्पष्टम् ॥ ४५ ॥

[ भा० ] नन्वियं व्यवस्था तदा घटेत यदि पुरुषबहुत्वं स्यात्, तदेव त्वात्माद्वैत-श्रुतिबाधितमित्याशङ्कयाह—पुरुष० । "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि-यन्ति" ( श्वे० उ० ३।१० ) इत्यादिश्रुत्युक्तबन्धमोक्षव्यवस्थात एव पुरुषबहुत्वं सिद्धय-तीत्यर्थः ॥ ४५ ॥

[ भा० सा० ] नन्वद्वैतश्रुत्या पुरुषैक्यादिकमयु(कमु)क्तमत आह— पुरुषेति । 'ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति" ( श्वे० उ० ३।१० ) इत्यादिश्रुत्युक्तबन्धमोक्ष-विवक्षया पुरुषबहुत्वं सिद्धयतीत्यर्थः ॥ ४५ ॥

## उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम् ॥ ४६ ॥

[वृ०] उपाधिभेदान्नानात्वं भविष्यतीत्यत्राह—उपाधिश्चे० । तत्सिद्धौ भेदसिद्धौ । उपाधिमिथ्यात्वे कुतो भेदसिद्धिः ? सत्यत्वे तु तेनैव पुनर्द्वैतम् ॥ ४६ ॥

[ वृ० सा० ] उपाधीति । तत्सिद्धौ भेदसिद्धौ ॥ ४६ ॥

[ भा० ] ननूपाधिभेदाद् बन्धमोक्षव्यवस्था स्यात्; तत्राह—उपाधिश्चेत्० । उपाधिश्चेत् स्वीक्रियते तर्ह्युपाधिसिद्धयैव पुनरद्वैतभङ्ग इत्यर्थः । वस्तुतस्तूपाधिभेदेऽपि व्यवस्था न सम्भवतीति प्रथमाध्याय एव ( १।१४९-१५२ ) प्रपञ्चितम् ॥ ४६ ॥

[ भा० सा० ] नन्वौपाधिकी बन्धमोक्षव्यवस्था, इत्यत आह—उपाधीति । स्पष्टम् । अद्वैतश्रुतीनां तु स्वविभक्तवस्तुराहित्ये द्वितीयसङ्ख्याशून्यत्वे स्वजातीयपारमार्थिकवस्तुशून्यत्वे च तात्पर्यम् । पारमार्थिकत्वं च कूटस्थनित्यत्वम् ॥ ४६ ॥

## द्वाभ्यामपि प्रमाणविरोधः ॥ ४७ ॥

[ वृ० ] दूषणान्तरमाह—द्वाभ्यामपि० । सत्यासत्याभ्याम् । सत्यत्वेऽद्वैत-सिद्धान्तहानिः । असत्यत्वे कुतो नानात्वव्यवस्था ॥ ४७ ॥

[ वृ० सा० ] द्वाभ्यामिति । द्वाभ्यां सत्यत्वासत्यत्वाभ्यामुपाधेः सत्यत्वेऽद्वैतबोधक-प्रमाणविरोधः, उपाधेरसत्यत्वे तु तस्य भेदाव्यवस्थापकत्वेन भेदग्राहिप्रत्यक्षादिविरोधः ॥ ४७ ॥

[ भा० ] ननूपाधयोऽप्याविद्यका इति न तैरद्वैतभङ्ग इत्याशङ्कायामाह—द्वाभ्यामपि० । पुरुषोऽविद्येति द्वाभ्यामप्यङ्गीकृताभ्यामद्वैतप्रमाणस्य श्रुतेर्विरोधस्तदवस्थ एवेत्यर्थः ॥ ४७ ॥

[ भा० सा० ] ननूपाधीनामाविद्यकत्वेन नाद्वैतभोगोऽत आह—द्वाभ्यामिति। अविद्यया पुरुषयोर्द्वयोरङ्गीकारेऽद्वैतप्रमाणस्य श्रुतेर्विरोध इत्यर्थः। अविद्याऽसत्त्वे तु नानाव्यवस्थाहानिरिति भावः ॥ ४७ ॥

## द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ॥ ४८ ॥

[ वृ० ] नाद्वैतश्रुतिविरोधो द्वैतहानिश्चेत्यत्राह—द्वाभ्याम०। अद्वैतश्रुतेः सामान्यपरत्वात् प्रशंसापरत्वाद्वा अन्यार्थत्वेन न विरोधः। उपाधिसत्यत्वे च न द्वैतहानिरिति नास्ति विरोधः। तस्मान्न पूर्वमात्मैकत्वं नोत्तरं च श्रुतिविरोधः। अद्वैतत्वे प्रमाणासत्त्वान्न तत्सिद्धिरिति भिन्नोऽस्तीत्यर्थः ॥ ४८ ॥

[ वृ० सा० ] स्वमते त्वाह—द्वाभ्यामिति। पूर्वमात्मैकत्वमुत्तरमुपाधिभेदान्नानात्वं च न; उभयत्रापि साधकाभावात्। किन्तु स्वत एव सत्य आत्मभेद आत्मैक्यश्रुतिः, आत्मत्वैकत्वविषयाऽभेदप्रत्यक्षं त्वनौपाधिकसत्यभेदविषयमिति श्रुतिप्रत्यक्षाभ्यामविरोधात् ॥ ४८ ॥

[ भा० ] अपरमपि दूषणद्वयमाह—द्वाभ्याम०। द्वाभ्यामप्यङ्गीकृताभ्यां हेतुभ्यां पूर्वं पूर्वपक्षो भवतां न घटते, अस्माभिरपि प्रकृतिः पुरुषश्चेति द्वयोरेवाङ्गीकारात्। विकारस्यानित्यतया वाचारम्भणमात्रताया अस्माभिरपीष्टत्वात्। ननु पुरुषनानात्वस्वीकारात् प्रकृतेर्नित्यत्वस्वीकाराच्चास्त्येवास्माद्विरोध इत्याशङ्क्य दूषणान्तरमाह—उत्तरं चेत्यादिना। अद्वैतवादिनामुत्तरं सिद्धान्तश्च न घटते, आत्मसाधकप्रमाणस्याभावात्। तदङ्गीकारे च तेनैवाद्वैतहानिरिति जितं नैरात्म्यवादिभिरित्यर्थः ॥ ४८ ॥

[ भा० सा० ] दूषणान्तरमाह—द्वाभ्यामिति। द्वाभ्यामप्यङ्गीकृताभ्यां न पूर्वं नास्मासु भवतां पूर्वपक्षः, अस्माभिरपि द्वयोः प्रकृतिपुरुषयोरङ्गीकारेणाविरोधात्। विकारस्य वाचारम्भणमात्रत्वेन नियतस्वभावोऽस्माकमपीष्टः। न च पुरुषनानात्वस्वीकाराद्विरोधः; भेदस्य चिद्भास्यत्वेन व्यावहारिकतया सिद्धत्वे रूपपारमार्थिकसत्त्वस्यास्माभिरपीष्टत्वात्। व्यवहारदशायामपि श्रुतिः सामान्यपरेत्युक्तम्। भेदस्याधिकरणस्वरूपतया चेतनानामन्योन(न्य) भेदस्य चिन्मात्ररूपत्वाच्च। प्रकृतिनित्यतापि प्रकृतिसामान्याभिप्रायिकैवेत्याहुः। एवमुत्तरमद्वैतवादिनां सिद्धान्तश्च न घटते। द्वयोः स्वीकारेऽद्वैतहानेरित्यर्थः। किञ्चात्मसाधकप्रमाणाभावः ॥ ४८ ॥

## प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ॥ ४९ ॥

[ वृ० ] न प्रमाणाभावः, स्वप्रकाशमेव प्रमाणमस्तीत्यत्राह—प्रकाश०। व्यक्तम् ॥ ४९ ॥

[ वृ० सा० ] प्रकाशेति। अद्वैतं कथं सिद्धयेदनात्मनाऽऽत्मना वा ? नाद्यः, जडत्वात्। अन्त्ये प्रकाश्यत्वप्रकाशकत्वयोर्विरोधः ॥ ४९ ॥

[ भा० ] ननु स्वप्रकाशत आत्मा सेत्स्यति; तत्राह—प्रकाश० । चैतन्यरूपप्रकाशतश्चैतन्यसिद्धौ कर्मकर्तृविरोध इत्यर्थः । प्रकाश्यप्रकाशसम्बन्धे हि प्रकाशनमालोकादिषु दृष्टम्, स्वस्य साक्षात् स्वस्मिन् सम्बन्धश्च विरुद्ध इति । अस्मन्मते तु बुद्धिवृत्त्याख्यप्रमाणाङ्गीकारात् तद्द्वारा प्रतिबिम्बरूपस्य स्वस्य बिम्बरूपे स्वस्मिन् सम्बन्धो घटते । यथा सूर्ये जलद्वारा प्रतिबिम्बरूपस्वसम्बन्ध इति भावः । आत्मनः स्वप्रकाशत्वश्रुति( क० उ० २।२।१५ )स्त्वनन्योपाधिकप्रकाशादिपरा बोध्या ॥ ४९ ॥

[ भा० सा० ] ननु स्वप्रकाशतया स सेत्स्यतीत्याह—प्रकाशत इति । चैतन्यरूपप्रकाशतश्चैतन्यसिद्धौ कर्तृकर्मविरोध इत्यर्थः । सम्बन्धे हि प्रकाशनमालोकादिषु दृष्टं स्वस्य साक्षात्स्वस्मिन् सम्बन्धे च विरोधः । घटो द्रव्यमित्यादौ तादात्म्यसम्बन्धविषयेऽपि सम्बन्धितावच्छेदकभेदात् सम्बन्धिनोर्भेदस्यैव कल्पनम् । अस्मन्मते तु बुद्धिवृत्तिरूपप्रमाणाङ्गीकाराद् तद्द्वारा प्रतिबिम्बरूपस्य बिम्बरूपेऽस्मिन् सम्बन्धो घटते । यथा सूर्ये जलद्वारा प्रतिबिम्बरूपस्वसम्बन्ध इति भावः । आत्मनः स्वप्रकाशत्वश्रुतिस्त्वौपाधिकप्रकाशपरा । सर्वं ज्ञानं सदित्यादिशब्दजन्यज्ञानेऽपि ज्ञानत्वेन विषयता, सर्वं ज्ञानं सदित्यादिरूपेण च विषयितेत्यस्त्येव भेदः । प्रकाशस्वरूपपुरुषस्य साक्षाद् विषयत्वे तु न कश्चित्प्रकारभेदः ॥ ४९ ॥

**जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः ॥ ५० ॥**

[ वृ० ] दूषणान्तरमाह—जडव्यावृत्तो० । जडादन्यश्चिद्रूपो जडं प्रकाशयतीति जडव्यावृत्तत्वेन प्रकाशरूपत्वम्, न तु प्रकाशधर्मत्वमुक्तम् । अत एव "स एष नेति" ( बृ० उ० ३।९।२९ ) इत्युच्यते निषेधमुखेन, न तु विधिमुखतयेति । अथाऽलौकिकप्रकाशरूपत्वम्, तत्र व्याप्तिग्रहणाभावाद् दृष्टान्ताभावः । अथ योगिगम्यं तत्; असम्प्रज्ञातयोगिनो ज्ञानचेष्टाभावाल्लिङ्गं नास्ति; तेन च लौकिक एवार्थोऽनुमीयते । न च सोऽप्यनुभवरूपं चैतन्यं प्रतिपादयितुं शक्नोति । तथा च—

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥ ( का० द० १।१०२ )

एवमचेतनव्यावृत्तत्वाच्चेतन इत्युच्यते, न तु चितिसमवायश्चैतन्यरूपत्वं वा, असम्प्रज्ञातावस्थायां निरुद्धवृत्तित्वेनाऽप्यलौकिकचैतन्यमिति व्यवहारादन्यथासिद्धेः । सम्प्रज्ञातावस्थायां तु वृत्तिज्ञानेनैव चैतन्यमिति व्यपदेशः । एवं दुःखनिवृत्तावानन्दरूपत्वमिति प्रयोगः । यदि भावात्मकमानन्दरूपत्वम्, तत् किं सुखमात्रे प्रयोगः ? तथा सत्यज्ञातस्य सुखस्यादर्शनात् सुखं तज्ज्ञानं ज्ञाता चेति कुतोऽद्वैतम् । अथ सुखविशेषे आनन्दव्यपदेशः, सुखं च चैतन्यरूपं चेति न दृष्टम् । अविवेचकानामेवैतत् । विवेचकास्त्वेवं मन्यन्ते—दृष्टेनैव व्यावृत्तिरूपत्वेनैवोपपत्तावदृष्टालौकिककल्पना गुर्वीति । यदि चैतन्यं न स्यात्, वस्तुसंवेदनमेव न स्यात् । मैवम्; यथा अलावुवेणुतन्तूनां तथाविधसंयोगविशेषः शब्दकारणम्, न तु त्रयाणां संयोगादतिरिक्तं किञ्चिदस्ति,

तथा पाञ्चभौतिकत्वाविशेषेऽपि जन्तुरूपेण परिणतानां पिण्डानां तथाविधसम्बन्धाच्चैतन्यमिति। प्रकाशत्वे चात्मनोऽप्यंशे जडत्वमिति ॥ ५० ॥

[ वृ० सा० ] जडेति। जडव्यावृत्तत्वमेव चिद्रूपत्वं न तु प्रकाशधर्मत्वम्। अत एव नेति नेतीत्युच्यते। न विधिमुखेन। एवमानन्दताप्यनानन्दव्यावृत्तिरेव। न तु भावरूपं सुखम्, अज्ञायमानसुखस्यादर्शनेन ज्ञानादीनामावश्यकत्वेन मुक्तावपि द्वैतापत्तेः। अलौकिकं सुखं मुक्तौ स्वप्रकाशं च तदित्यत्र मानाभावः ॥ ५० ॥

[ भा० ] ननु नास्ति कर्मकर्तृविरोधः, स्वनिष्ठप्रकाशधर्मद्वारा स्वस्य स्वसम्बन्धसम्भवात्। यथा वैशेषिकाणां स्वनिष्ठज्ञानद्वारा स्वस्य स्वयं विषय इति; तत्राह—जडव्यावृत्तो०। चेतने प्रकाशरूपधर्मः सूर्यादिष्विव नास्ति, किन्तु चित्स्वरूप एव पदार्थो जडं प्रकाशयति। यतो जडव्यावृत्तिमात्रेण चिदित्युच्यते, न तु जडविलक्षणधर्मवत्तयेत्यर्थः। अत एव निर्धर्मतया "स एष नेति नेति" ( बृ० उ० ३।९।२६ ) इत्येव श्रुत्योपदिश्यते, न तु विधिमुखतयेति। तथा च स्मृतिरपि—

"इदं तदिति निर्देष्टुं गुरुणापि न शक्यते" इति।

जडव्यावृत्ताविति पाठेऽपि हेतौ सप्तम्यामयमेवार्थः। अस्मिंश्च सूत्रे जडमेव प्रकाशयति चिद्रूपो न स्वात्मानमिति नार्थः, तथा सति हि तस्याज्ञेयत्वेन साधकाभावरूपं बाधकं परेषूपन्यासानर्हम्, स्वस्यापि तुल्यन्यायत्वादिति ॥ ५० ॥

[ भा० सा० ] नन्वात्मा प्रकाशधर्मेति न तद्विरोधः, स्वनिष्ठप्रकाशधर्मद्वारा स्वस्य स्वसम्बन्धसम्भवात्। अत आह—जडेति। सूर्यादाविव तत्र न प्रकाशो धर्मः। किन्तु चिद्रूप एव जडं प्रकाशयति, उक्तरीत्यात्मानं च। यतः स जडव्यावृत्तोऽतश्चिदित्युच्यते, न तु जडविलक्षणधर्मवत्तयेत्यर्थः, "इदं तदिति निर्देष्टुं गुरुणापि न शक्यते" इति स्मृतेः ॥ ५० ॥

## न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥ ५१ ॥

[ वृ० ] एवञ्च स्वप्रकाशश्रुतिर्बाधिता स्यादित्यत्राह—न श्रुति०। जडस्य त्रिगुणात्मकत्वेन रागहेतुत्वात् प्रमाणादयश्च त्रिगुणात्मकत्वेन हेया इति, रागोच्छित्तिश्च कर्तव्येति। तत्सिद्धेः स्वप्रकाशश्रुतेरन्यथासिद्धेः ॥ ५१ ॥

[ वृ० सा० ] नन्वानन्दरूपत्वे श्रुतिर्विद्यते, नेत्याह—नेति। रागिणां हि सुखे रागः, मुक्तौ च विरागः। ततश्च विषयवैराग्यायात्मनोऽनानन्दस्यापि तत्सिद्धेरानन्दत्वकथनात्। श्रुताविति शेषः। वस्तुत आनन्दश्रुतिर्दुःखाभावे औपचारिकेति भावः ॥ ५१ ॥

[ भा० ] नन्वेवं प्रमाणाद्यनुरोधेन द्वैतसिद्धावद्वैतश्रुतेः का गतिस्तत्राह—न श्रुति०। अद्वैतश्रुतिविरोधस्तु नास्ति, रागिणां पुरुषातिरिक्ते वैराग्यायैव श्रुतिभिरद्वैतसाधनात्। पुरुषज्ञान इव द्वैताभावज्ञाने स्वतन्त्रफलान्तराश्रवणात्। तच्च वैराग्यं सदद्वैतेनैवोपपद्यते, सत्त्वं च कूटस्थत्वमित्यर्थः। अत एव श्रुतिरपि सदद्वैतमेव छान्दोग्ये ( ६।२।१ ) प्रतिपादितवतीति भावः ॥ ५१ ॥

[ भा० सा० ] नन्वेवं गौण्या अद्वैतश्रुतेः फलाभावोऽत आह—नेति । निष्प्रयोजनरूपो नाद्वैतश्रुतिविरोधः, पुरुषातिरिक्ते रागिणां वैराग्यायैव ताभिरद्वैतसाधनात् । वैराग्यं च तदद्वैतेनैवोपपद्यते । सत्त्वं च कूटस्थत्वमित्यर्थः, "सदेव सोम्येदमग्र आसीत्" इति सदद्वैतस्यैव श्रुत्युक्तेः ॥ ५१ ॥

## जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात् ॥ ५२ ॥

[ वृ० ] जगतो मिथ्यात्वात् कथमन्यथा सिद्धिरित्यत्राह—जगत्सत्य० । दुष्टकारणजन्यं यथा पीतशङ्खज्ञानम् । बाधकं च 'नेदं रजतम्' इति ज्ञानम् । न चेदं तथा, प्रकृत्यादीनामदुष्टत्वात् । 'नेदं जगत्' इति प्रत्ययाभावाद् बाधकं च नास्ति । संक्षेपाज्जगदुच्यते—ऊर्ध्वं भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति । अधो महातल-रसातल-तलातल-पाताल-सुतल-वितलातला इति । मध्ये जम्बूद्वीपः । तन्मध्ये सुमेरुः । तत्पूर्वादि-चतुर्दिक्षु मन्दर-गन्धमादन-विपुल-सुपार्श्वनामानो विष्कम्भपर्वताः । मेरुदक्षिणे भारतवर्ष-हिमालयपर्वत-किम्पुरुषवर्ष-हेमकूटपर्वत-हरिवर्ष-निषधपर्वताः । मेरोरुत्तरे कुरुवर्ष-शृङ्गिपर्वत-हिरण्मयवर्ष-श्वेतपर्वत-रम्यकवर्ष-नीलपर्वताः । मेरोः पूर्वं भद्राश्ववर्षो माल्यवान् पर्वतः । मेरोः पश्चिमे केतुमालवर्षो गन्धमादनपर्वतः । मेरोरध इलावृतवर्षः । लक्षयोजनो जम्बूद्वीपः, तद्वेष्टनेन तत्तुल्यो लवणसमुद्रः । तद्वेष्टनेन तद्द्विगुणः कुशद्वीपः, तद्वेष्टनेन तत्तुल्यः सुरासमुद्रः । तद्वेष्टनेन तद्द्विगुणः क्रौञ्चद्वीपः, तद्वेष्टनेन तत्तुल्यो दधिसमुद्रः । तद्वेष्टनेन तद्द्विगुणः पुष्करद्वीपः, तद्वेष्टनेन तत्तुल्यः स्वादूदकसमुद्रः । लोकालोकपर्वतवेष्टनेन ब्रह्माण्डकटाहेन सर्वतः परिवृतं जगदिति ॥ ५२ ॥

[ वृ० सा० ] जगत्सत्यत्वमाह—जगदिति । दुष्टकारणजन्यं हि पीतः शङ्ख इत्यादि ज्ञानम्, न पीतः शङ्ख इत्यादि ज्ञानबाध्यं च । तद्विपर्ययोऽसत्यः, जगति तु न तथेति भावः ॥ ५२ ॥

[ भा० ] न केवलमुक्तयुक्त्यैवाद्वैतवादिनो हेयाः, जगदसत्यताग्राहकप्रमाणाभावेनापीत्याह—जगत्सत्यत्व० । निद्रादिदोषदुष्टान्तःकरणादिजन्यत्वेन स्वाप्नविषय-शङ्खपीतिमादीनामसत्यत्वं लोके दृष्टम्, तच्च महदादिप्रपञ्चे नास्ति; तत्कारणस्य प्रकृतेर्हिरण्यगर्भबुद्धेश्चादुष्टत्वात्, "यथापूर्वमकल्पयत्" ( ऋ० सं० १०।१९०।२ ) इत्यादिश्रवणात् । ननु "नेह नानास्ति किञ्चन" ( बृ० उ० ४।४।१९ ) इत्यादिश्रुत्या बाधितत्वेनाविद्यादिनामा कश्चनानादिर्दोषः कल्पनीयस्तत्राह—बाधकाभावादिति । अयं भावः—"नेह नानास्ति किञ्चन" इत्यादिश्रुतयो याः परैः प्रपञ्चबाधकतयाऽभिप्रेयन्ते, ताः प्रकरणानुसारेण विभागादिप्रतिषेधका एव न तु प्रपञ्चात्यन्ततुच्छतापराः, स्वस्यापि बाधापत्त्या स्वार्थासाधकत्वप्रसङ्गात् । नहि स्वप्नकालीनगन्धस्य बाधे

तज्ज्ञापितोऽप्यर्थः पुनर्न सन्दिह्यत इति । तस्मादात्माविघातकतया श्रुतयो न प्रपञ्चस्यात्यन्तबाधपरा इति ।

तत्र "नेह नानास्ति किञ्चन" इत्यादिश्रुतेर्ब्रह्मविभक्तं किमपि नास्तीत्यर्थः, "सर्वं समाप्नोषि ततोऽसि सर्वः" ( गीता ११।४० ) इत्यादिस्मृत्यैकवाक्यत्वात् । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छा० उ० ६।१।४ ) इत्यादिश्रुतेस्तु नित्यतारूपपारमार्थिकसत्ताविरहोऽर्थः, अन्यथा मृत्तिकादृष्टान्तासिद्धेः । नहि लोके मृत्तिकाविकाराणामत्यन्ततुच्छत्वं सिद्धम्, येन दृष्टान्तता स्यादिति ।

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ( मा० का० २।३२ )

इत्यादिश्रुतेस्त्वात्मातिरिक्तस्य कूटस्थनित्यतारूपातिपरमार्थसत्ताविरहोऽर्थः । किञ्चात्मनो निरोधाद्यभावोऽर्थः, अन्यथैतादृशज्ञानस्य मोक्षफलकत्वप्रतिपादनविरोधात् । नहि मोक्षो मिथ्येति प्रतिपाद्य मोक्षस्य फलत्वमप्रमत्तः प्रतिपादयतीति । याश्चात्मैक्यश्रुतयस्तास्तु प्रथमाध्याये ( सां० सू० १।१४९–१५४ ) एव व्याख्याताः । ब्रह्ममीमांसाभाष्ये चैता अन्याश्च श्रुतयोऽस्माभिर्व्याख्याता इति दिक् ॥ ५२ ॥

[ मा० सा० ] अथ जगत्सत्त्वे प्रमाणमाह—जगदिति । निद्रादिदोषदुष्टान्तःकरणजन्यत्वेन स्वाप्नविषयशङ्खपीतिमादेरसत्यत्वेऽपि महदादिप्रपञ्चकारणस्य प्रकृतेः, "धाता यथापूर्वमकल्पयत्" ( ऋ० सं० १०।१९०।२ ) इत्यादिश्रुतिसिद्धहिरण्यगर्भबुद्धेश्चादुष्टत्वात् । ननु "नेह नानास्ति किञ्चन" ( बृ० उ० ४।४।१९ ) इत्यादिश्रुतिविरोधादविद्यादिनामा दोषः कल्प्येतेत्याह—बाधकाभावादिति । श्रुतयस्तु विभागादिप्रतिषेधिका एव न प्रपञ्चात्यन्ततुच्छतापराः, स्वस्यापि बाधापत्त्या स्वार्थासाधकत्वापत्तेः । आत्मातिरिक्तकूटस्थनित्यतारूपपरमार्थसत्ताविरहो वा तासामर्थः । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छा० उ० ६।१।४ ) इति श्रुतेः स्थिरतारूपपारमार्थिकसत्ताविरहोऽर्थः, अन्यथा मृद्विकाराणां लोकेऽत्यन्ततुच्छत्वसिद्ध्या मृद्विकारदृष्टान्तासिद्धेः ॥ ५२ ॥

## प्रकारान्तरासम्भवात् सदुत्पत्तिः ॥ ५३ ॥

[ वृ० ] पूर्वोक्तमपि शिष्यहिताय पुनः प्रतिपादयति—प्रकारा० । प्रकारान्तरं च पूर्वमेव ( सां० सू० १।११४–११८ ) दूषितम् ॥ ५३ ॥

[ वृ० सा० ] प्रकारान्तरेति । प्रकारान्तरं च पूर्वमेव निरस्तम् ॥ ५३ ॥

[ भा० ] न केवलं वर्तमानदशायामेव प्रपञ्चः सन्नपि तु सदैवेत्याह—प्रकारा० । पूर्वोक्तयुक्तिभिरसदुत्पादासम्भवात् सूक्ष्मरूपेण सदेवोत्पद्यतेऽभिव्यक्तं भवतीत्यर्थः ॥ ५३ ॥

[ भा० सा० ] न केवलवर्तमानतादशायामेव प्रपञ्चः सन्, अपि तु सदैवेत्याह— प्रकारेति । इदं च प्रागेव व्याख्यातम् । एवं च सदैव सन्निति भावः ॥ ५३ ॥

अहङ्कारः कर्ता न पुरुषः ॥ ५४ ॥

[ वृ० ] अहं करोमीति प्रत्यक्षात् किमहङ्कारः कर्ता? अथाऽहङ्कारशब्देनात्मोच्यते, स एव कर्तेति? अत्राह—अहङ्कारः० । पुरुषस्यापरिणामित्वात् । कृतिचैतन्ययोः सामानाधिकरण्यं च वृक्षस्तिष्ठतीत्यादौ व्यभिचरति ॥ ५४ ॥

[ वृ० सा० ] अहङ्कार इति । अहङ्कारो बुद्धिः ॥ ५४ ॥

[ भा० ] कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्येऽपि व्यवस्थामुपपादयति सूत्राभ्याम्—अहङ्कारः० । अभिमानवृत्तिकमन्तःकरणमहङ्कारः, स एव कृतिमान्; अभिमानोत्तरमेव प्रायशः प्रवृत्तिदर्शनात्, न तु पुरुषोऽपरिणामित्वादित्यर्थः । पूर्वं च 'धर्मादिकं बुद्धेः' इति यदुक्तं तदेकस्यैवान्तःकरणस्य वृत्तिमात्रभेदाशयेन ॥ ५४ ॥

[ भा० सा० ] कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्येऽपि व्यवस्थामाह—अहङ्कार इति । अभिमानवृत्तिकमन्तःकरणमहङ्कारः । स एव कृतिमान्, अभिमानोत्तरमेव प्रायः प्रवृत्तिदर्शनात् । न तु पुरुषोऽपरिणामित्वादित्यर्थः । या तु पूर्वं धर्मादीनां बुद्धिवृत्तितोक्ता सा त्वेकस्यैवान्तःकरणस्य वृत्तिः, भेदात्त्रैविध्यमाश्रिता ॥ ५४ ॥

चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात् ॥ ५५ ॥

[ वृ० ] एककर्मक्षयेऽपि यावद्देहभावित्वात् कर्मणोऽपरापरकर्मोत्पत्त्या चानिर्मोक्ष इत्यत्राह—चिदवसाना० । अविवेकात् कर्मार्जनं तेन च भुक्तिरिति । चिदवसाना आत्मज्ञानावसाना । विवेकोत्पत्तौ क्वाऽपरकर्मार्जनम्? तदभावात् क्वोपभोगः? कृतकर्मणो ज्ञानादेव नाशः । तथा च—

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥
( गीता ४।३७ ) इति ॥ ५५ ॥

[ वृ० सा० ] ननु सत्यामपि विवेकख्यातौ सुखादिभोगो दृश्यते, स कथम्? तत्राह—चिदिति । चिद् देहादिज्ञानमवसानमवधिर्यस्याः, यावद्देहादिमानं तावद्भोग इत्यर्थः । तदिति प्रारब्धमुच्यते, बुद्धिस्थत्वात्, "तस्य तावदेव चिरं यावन्न विमोक्षेऽथ सम्पत्स्ये" इत्यादिश्रुतेः । ज्ञानिनोऽपि प्रारब्धकर्मफलभोग आवश्यक इति भावः ॥ ५५ ॥

[ भा० ] चिदव० । अहङ्कारस्य कर्तृत्वेऽपि भोगश्चित्येव पर्यवसन्नो भवति, अहङ्कारस्य संहतत्वेन परार्थत्वात् । नन्वेवमन्यनिष्ठकर्मणान्यस्य भोगे पुरुषविशेषनियमो न स्यात्, तत्राह—तत्कर्मार्जितत्वादिति । अहङ्कारेणासञ्जितं तस्याश्चितो यत् कर्म तज्जन्यत्वाद्भोगस्येत्यर्थः । तथा च योऽहङ्कारो यं पुरुषमादायाचेतनेऽहं

ममेति वृत्तिं करोति तस्याहङ्कारस्य कर्म तस्यात्मन उच्यते। तेनैव च कर्मणा तत्रात्मनि भोगोऽर्प्यत इति नातिप्रसङ्ग इत्याशयः ॥ ५५ ॥

[ भा० सा० ] चिदवसानेति। अहङ्कारस्य कर्तृत्वेऽपि भोगश्चित्येव पर्यवसन्नः, अहङ्कारस्य संहतत्वेन परार्थत्वात्। नन्वेवमन्यकर्मणान्यस्य भोगेऽतिप्रसङ्गोऽत आह—तत्कर्मार्जितत्वादिति। अहङ्कारेणार्जितं तस्मिन् यत्कर्म तज्जन्यत्वाद्भोगस्येत्यर्थः। योऽहङ्कारो यं पुरुषमादायाहं ममेति वृत्तिं करोति तस्याहङ्कारस्य कर्म तदात्मन उच्यते। तेन च कर्मणा तदात्मनि भोग इति नातिप्रसङ्ग इति भावः ॥ ५५ ॥

## चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात् ॥ ५६ ॥

[ वृ० ] अतिशयवत्त्वाच्चन्द्रादिलोकप्राप्तिरेव पुरुषार्थो भविष्यतीत्यत्राह—चन्द्रादि०। आदिशब्दाद् ब्रह्मलोकादयो ग्राह्याः। निमित्तमविवेक-कर्मादीति ॥ ५६ ॥

[ वृ० सा० ] चन्द्रादीति। निमित्तमविवेकादि ॥ ५६ ॥

[ भा० ] ब्रह्मलोकान्तगतिभिर्नास्ति निष्कृतिरिति पूर्वोक्ते कारणं दर्शयति—चन्द्रादि०। निमित्तमविवेककर्मादिकम्। सुगममन्यत् ॥ ५६ ॥

[भा० सा०] ब्रह्मलोकादिगत्यापि न निष्कृतिरिति पूर्वोक्ते हेतुं दर्शयति—चन्द्रादीति। निमित्तमविवेकः ॥ ५६ ॥

## लोकस्य नोपदेशात्तत्सिद्धिः पूर्ववत् ॥ ५७ ॥

[ वृ० ] गुरूपसम्पन्नस्य शब्दश्रवणादेव मोक्षो भविष्यतीति किं मननादिनेत्यत्राह—लोकस्य०। पूर्वमेवोक्तं मन्दानां न श्रवणमात्रान्मुक्तिः, किन्तु मननादिना। अनेन यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधय उपलक्षणीयाः ॥५७॥

[ वृ० सा० ] लोकस्येति। लोकस्य मन्दाधिकारिणः, उपदेशात् श्रवणमात्रात्, न मुक्तिः। किन्तु पूर्वं यथोक्तं तथैतद्बोध्यं मनननिदिध्यासने अपेक्षिते, इत्यर्थः ॥ ५७ ॥

[ भा० ] ननु तत्तल्लोकवासिजनोपदेशादनावृत्तिः स्यात्, तत्राह—लोकस्य०। यथा पूर्वस्य मनुष्यलोकस्योपदेशमात्रान्न सिद्धिर्ज्ञाननिष्पत्तिरेवं तत्तल्लोकस्थलोकस्योपदेशमात्रात् तद्गतानां ज्ञाननिष्पत्तिर्न नियमेन भवतीत्यर्थः ॥ ५७ ॥

[ भा० सा० ] ननु तत्तल्लोकवासिजनोपदेशादनावृत्तिः स्यादत आह—लोकस्येति। यथा पूर्वस्य मनुष्यलोकस्योपदेशमात्रान्न ज्ञाननिष्पत्तिरेवं तत्तल्लोकस्थलोकस्योपदेशमात्रादपि न ज्ञानं नियमेनेत्यर्थः ॥ ५७ ॥

## पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥

[ वृ० ] कथं तर्हि उपदेशमात्रान्मुक्तिः श्रूयत इत्यत्राह—पारम्पर्येण०। प्रथमभावित्वात् श्रवणस्य पारम्पर्येण कारणत्वसिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥

[ वृ० सा० ] तर्हि श्रुत्वा मुच्यत इति कथमुपपद्यते ? तत्राह—पारम्पर्येणेति । तत्सिद्धौ विमुक्तिश्रुतिः पारम्पर्येण, उत्तमाधिकारिविषया वा ॥ ५८ ॥

[ भा० ] नन्वेवं ब्रह्मलोकादनावृत्तिरिति श्रुतेः का गतिस्तत्राह—पारम्पर्येण० । ब्रह्मलोकादिगतानां श्रवणमननादिपरम्परया प्रायशो ज्ञानसिद्धौ सत्यां विमुक्तिश्रवणम्, न तु साक्षाद् गतिमात्रेणेत्यर्थः । प्रायिकत्वादन्यलोकाद्विशेष इति ॥ ५८ ॥

[ भा० सा० ] नन्वेवं ब्रह्मलोकादनावृत्तिश्रुतेः का गतिरत आह— ब्रह्मलोकादिगतानां श्रवणमननादिपरम्परया ज्ञानसिद्धौ 'न स पुनरावर्तते'' ( छा० उ० ८।१५।१ ) इत्यादि मुक्तिश्रवणम्, न तु साक्षाद् गतिमात्रेणेत्यर्थः । तल्लोके ज्ञानस्य प्रायिकत्वादन्य लोकाद्विशेषः ॥ ५८ ॥

## गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो व्योमवत् ॥ ५९ ॥

[ वृ० ] यथा च व्यापकत्वात् प्रकृतेर्जगत्कारणत्वम्, एवं व्यापकत्वादात्मनः सर्वदेशे भोगप्रसङ्ग इत्यत्राह—गतिश्रुते० । यथा घटाद्युपाधियोगाद् घटे गच्छति घटाकाशं गच्छतीति ज्ञानम्, तथा देहावच्छेदेन तद्गत्याऽऽत्मगतिरिति । कर्मवशाद् यत्र देशे उपभोगस्तत्र देहगमनादात्मनो भोगलाभः । यद्यात्मा व्यापकश्चिद्रूपः, सर्वदा सर्वत्र सर्वार्थेषु समकालं ज्ञानं प्रसज्येत, न चैवं दृश्यते । तन्न; भवेदेवं यद्यात्मा व्यापकस्वरूपेण वृत्तिज्ञानं जनयति, न चैवम्; किन्तु देहादिपरिच्छिन्न एव । यथा सूर्यः प्रकाशस्वभावोऽपि मेरोर्दक्षिणस्थो नोत्तरभागं प्रकाशयति, उत्तरस्थो न दक्षिणभागम्, अव्यापकत्वात् । यदा तु ज्ञानादिना दग्धकर्माशयत्वेन नष्टदेहादिसंघातो नीरजस्तमस्को व्यापको भवति, न तदा वृत्तिज्ञानं जनयति, अविकारित्वात्, किन्तु स्वयमेव जगत्प्रकाशस्वभावः । यदा चाकाशं व्यापकं प्रादेशिकधूमादिसम्बन्धेन न मलिनं भवति, किन्तु घटाद्यवच्छिन्नं सद् घटाद्युदरवर्ति सर्वं मलिनमित्यनुमन्यते । तत्रापि नाकाशं मलिनम्, तस्य लेपाभावात्, किन्त्वविवेकानां मिथ्याभिमानमात्रम्, घटभङ्गे तथा दर्शनात् । तथात्मा व्यापकः, नास्य धर्मादिसम्बन्धो नापि ज्ञानम्, किन्तु शरीरावच्छेदेन । मरुद्वह्नियोगवज्जीवसम्बन्धेन मनोयोगाज्जीवात्मेत्युच्यते । मनसाऽविनाभूता प्रकृतिरिति प्राकृतधर्माधर्मज्ञानाज्ञानसुखदुःखाद्यहङ्कारेन्द्रियवद्विषय-जन्मादिमानिव लक्ष्यते । सात्त्विकांशेन प्रकृतेः स्वच्छत्वात् तत्प्रतिबिम्बित आत्मा प्रकृतिकर्तृत्वादिकमात्मन्यभिमन्यते । मिथ्याभिमानोऽपि प्रकृतिप्रतिबिम्बिते आत्मनि, न त्वात्मनि । यथा निष्कम्पोऽपि चन्द्रो जलप्रतिबिम्बितो जलकम्पात् कम्पत इति मिथ्याप्रत्ययः, यथा वा मुखं निर्मलमपि मलिनदर्पणे प्रतिबिम्बितं मलिनमित्यभिमन्यते । विवेचकास्तु कैवल्यदर्शिन आत्मनोऽपरिणामित्वादसङ्गत्वाच्च कर्तृत्वादिकं मिथ्येति

पश्यन्ति । यदा तु ध्यानपरिपाकवशाद् वासनाह्रासक्रमेण मनोलयाद्वासनानाशाद् देहभङ्गेऽप्यन्यदेहानुत्पादस्तदा जीवात्मनोऽपि परमात्मना सहैकत्वेन व्यापकत्वात् क्व धर्माधर्मयोगः कर्तृत्वादिकं वा । किन्तु, अवाग्गोचरत्वेऽप्यस्याऽपरोक्षबोधानन्दरूपत्वमिति भण्यते, अन्यथा प्रतिपादयितुमशक्यत्वादिति ।। ५९ ।।

[ वृ॰ सा॰ ] गतीति । व्यापकत्वेऽप्यात्मन उपाधियोगाद् देहादियोगाद् भोगो देशकालयोगः, यथा व्योम घटादौ गच्छतीव, तथात्मापि देहावच्छिन्नो गच्छतीवेति विशिष्टदेशकालसम्बन्ध्युपभोगमान् भवति, कुतः ? गतिश्रुतेः, "ऊर्ध्वं गच्छन्ति सत्त्वस्थाः" ( गीता १४।१८ ) इत्यादेः ।। ५९ ।।

[ भा॰ ] परिपूर्णत्वेऽप्यात्मनो गतिश्रुतिमुपपादयति—गतिश्रुतेश्च॰ । व्यापकत्वेऽप्यात्मनो गतिश्रवणानुरोधेन भोगदेशस्य कालवशाल्लाभः सिद्ध्यति, व्योमवदुपाधियोगेनेत्यर्थः । यथा ह्याकाशस्य पूर्णत्वेऽपि देशविशेषगतिर्घटाद्युपाधियोगाद्व्यवह्रियते, तथैवेति । तथा च श्रुतिः—

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ।।
( ब्र॰ वि॰ उ॰ १३ ) इति ।। ५९ ।।

[ भा॰ सा॰ ] परिपूर्णत्वेऽप्यात्मनो गतिश्रुतिमुपादयति—गतीति । व्यापकत्वेऽप्यात्मनो गतिश्रवणानुरोधेन भोगदेशस्य कालवशाल्लाभः, व्योमवदुपाधियोगेनेत्यर्थः ।

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ।। ( ब्र॰ वि॰ उ॰ १३ )

इति श्रुतेः ।। ५९ ।।

## अनधिष्ठितस्य पूतिभावप्रसङ्गान्न तत्सिद्धिः ।। ६० ।।

[ वृ॰ ] देहोत्पत्तेः पूर्वं निराश्रयत्वादधिष्ठानासम्भवादुत्पत्त्यनन्तरमात्माधिष्ठानमित्यत्राह—अनधिष्ठित॰ । व्यापकस्य नित्यस्य पूर्वपश्चाद्भावायोगाद् देहोत्पत्तिसमकालमेवाधिष्ठानान्न तत्सिद्धिर्नानधिष्ठानसिद्धिः । ततश्च न पूतिभाव इति ।। ६० ।।

[ वृ॰ सा॰ ] अनधिष्ठितेति । न तत्सिद्धिः नानधिष्ठानसिद्धिः ।। ६० ।।

[ भा॰ ] "भोक्तुरधिष्ठानाद्भोगायतननिर्माणम्" ( सां॰ सू॰ ५।११४ ) इति यदुक्तं तत् प्रपञ्चयति सूत्राभ्याम्—अनधिष्ठि॰ । भोक्त्रनधिष्ठितस्य शुक्रादेः पूतिभावप्रसङ्गान्न पूर्वोक्तभोगायतनसिद्धिरित्यर्थः ।। ६० ।।

[ भा॰ सा॰ ] भोक्त्रधिष्ठानाद्भोगायतननिर्माणमिति प्रपञ्चयति—अनधिष्ठितस्येति । भोक्त्रनधिष्ठितस्य शुक्रादेः पूतिभावप्रसङ्गान्न तस्यानधिष्ठितस्य स्वकार्यभोगसम्पादकत्वमित्यर्थः ।। ६० ।।

अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ॥ ६१ ॥

[ वृ० ] अदृष्टवशादेव पूतिभावो न भविष्यतीत्यत्राह—अदृष्ट० । निराश्रयस्यादृष्टस्यासामर्थ्याद् देहासम्बद्धत्वेन न कार्यकरणम् । यथा जलस्यासम्बद्धस्य नाङ्कुरजनकत्वम् । आदिशब्दादग्नेर्ग्रहणम् ॥ ६१ ॥

[ वृ० सा० ] अदृष्टवशादेव पूतिभावो न भविष्यतीत्यत आह—अदृष्टेति । बीजाद्यस्यारम्भ आत्मा नाधितिष्ठति, किन्तु अदृष्टद्वारा इति चेत् ? न; असम्बद्धस्यादृष्टस्य तदसम्भवात्, कारणत्वासंभवात् । अयमर्थः—अवश्यमदृष्टस्य तत्र सम्बन्धो वाच्यः, स च स्वाश्रयसंयोगविशेषादिरूप एवेति । जलादिवदिति दृष्टान्तः, यथा जलादि अङ्कुरजनकमपि बीजासम्बद्धमङ्कुरं न जनयति, तद्वत् ॥ ६१ ॥

[ भा० ] नन्वधिष्ठानं विनैवादृष्टद्वारा भोक्तृभ्यो भोगायतननिर्माणं भवतु, तत्राह—अदृष्टद्वारा० । शुक्रादौ साक्षादसम्बद्धस्यादृष्टस्य शरीरादिनिर्माणे भोक्तृद्वारत्वासम्भवाद् बीजासम्बद्धानां जलादीनामङ्कुरोत्पत्तौ कर्षकादिद्वारत्ववदित्यर्थः । अतः स्वाश्रयसंयोगसम्बन्धेनैवादृष्टसम्बन्धः शुक्रादिषु वक्तव्यः । तथा च सिद्धमदृष्टवदात्मसंयोगरूपेणाधिष्ठानस्य भोगोपकरणनिर्माणहेतुत्वमिति भावः ॥ ६१ ॥

[ भा० सा० ] ननु तं विनैवादृष्टद्वारा भोक्तृभ्यस्तन्निर्माणमस्त्वत आह—अदृष्टेति । शुक्रादौ साक्षादसम्बद्धस्यादृष्टस्य न शरीरादिनिर्माणत्वम्, यथा बीजासम्बद्धस्य जलस्याङ्कुराजनकत्वमित्यर्थः ॥ ६१ ॥

निर्गुणत्वात्तदसम्भवादहङ्कारधर्मा ह्येते ॥ ६२ ॥

[ वृ० ] किमाश्रया धर्मादयः कार्यजनका इत्यत्राह—निर्गुणत्वा० । निर्गुणत्वादात्मनस्तद्धर्मासम्भवादेते धर्मादयोऽहङ्कारधर्माः । कार्यकारणयोरभेदाद् बुद्धिधर्मा एवाऽहङ्कारधर्मा इत्युक्तम् ॥ ६२ ॥

[ वृ० सा० ] निर्गुणत्वादिति । निर्गुणत्वादात्मनः, तदसम्भवात् तस्मिन्नसम्भवात् । एते धर्मादयोऽहङ्कारधर्माः । कार्यकारणयोरभेदाद् बुद्धिधर्मा एवाहङ्कारधर्मा इत्युक्तम् ॥ ६२ ॥

[ भा० ] वैशेषिकादिनयेनादृष्टस्य सम्बन्धघटकतयाऽऽत्मनोऽधिष्ठातृत्वं स्थापितम्, स्वसिद्धान्ते त्वदृष्टादीनामात्मधर्मत्वाभावात् तद्द्वारा भोक्तुर्हेतुत्वमेव न सम्भवतीत्याह—निर्गुणत्वात्० । भोक्तुर्निर्गुणत्वेनादृष्टासम्भवाच्च नादृष्टद्वारकत्वम् । हि यस्मादेतेऽदृष्टादयोऽहङ्कारस्यान्तःकरणसामान्यस्यैव धर्मा इत्यर्थः । तथा चास्मन्मते द्वारनैरपेक्ष्येण संयोगमात्रेण साक्षादेव भोक्तुरधिष्ठानं सिद्ध्यतीति भावः ॥ ६२ ॥

[ भा० सा० ] नन्वदृष्टवदात्मसंयोगेन तर्हि तन्निर्माणमस्तु, अत आह—निर्गुणत्वादिति । निर्गुणत्वेन तत्रात्मन्यसम्भवात्, अन्तःकरणधर्मतया दृष्टादीनां तदाश्रयेणाविवेकविषयभोक्तुरधिष्ठातृत्वमित्यर्थः ॥ ६२ ॥

**विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥ ६३ ॥**

[ वृ० ] किमात्मनः स्वरूपेण जीवत्वमन्यथा वा ? इत्यत्राह—विशिष्टस्य०। स्वरूपेण जीवत्वे कर्तृत्वाद् भोक्तृत्वात् कौटस्थ्यहानिः, अन्वयव्यतिरेकाच्च। देहावच्छेदेन वायुवह्निसंयोगादिवेन्द्रियसंयोगेन विशिष्टस्यैव जीवत्वम् ॥ ६३ ॥

[ वृ० सा० ] विशिष्टस्येति। जीवत्वं कर्तृत्वभोक्तृत्वविशिष्टस्य न तु देहादिविशिष्टस्य, स्वरूपेण कौटस्थ्यहानेः। अन्वयव्यतिरेकाभ्यां च देहाभिमानिन एव कर्तृत्वभोक्तृत्वोपलम्भात् ॥ ६३ ॥

[ भा० ] ननु चेत् पुरुषो व्यापकस्तर्हि—

वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ( श्वे० उ० ५.९ )

इति श्रुतिप्रतिपादितं जीवपरिच्छिन्नत्वमनुपपन्नम्, तथेश्वरप्रतिषेधात् पुरुषाणां चैकरूप्याज्जीवात्मपरमात्मविभागोऽपि शास्त्रीयोऽनुपपन्न इति। तामिमामाशङ्कां परिहर्तुमाह—विशिष्टस्य०। "जीव बलप्राणधारणयोः" इति व्युत्पत्त्या जीवत्वं प्राणित्वम्, तच्चाहङ्कारविशिष्टपुरुषस्य धर्मो न तु केवलपुरुषस्य। कुतः ? अन्वयव्यतिरेकात्, अहङ्कारवतामेव सामर्थ्यातिशयप्राणधारणयोर्दर्शनात्, तच्छून्यानां च चित्तवृत्तिनिरोधस्यैव दर्शनात्। प्रवृत्तिहेतुरागोत्पादकस्याहङ्कारस्याभावादित्यर्थः। तथा चान्तःकरणोपाधिकं जीवस्य परिच्छिन्नत्वं परमात्माख्यात् केवलपुरुषाद्भिन्नत्वं चेति भावः।

अनेन सूत्रेण विशिष्टस्य भोक्तृत्वं वा त्वमहम्प्रत्ययगोचरत्वं वा नोक्तम्, साक्षात्काररूपस्य भोगस्याहङ्कारधर्मत्वाभावात्, त्वमहंधर्मिपुरस्कारेण विवेकानुपपत्तेश्च। किन्तु—

यदा त्वभेदविज्ञानं जीवात्मपरमात्मनोः।
भवेत् तदा मुनिश्रेष्ठाः पाशच्छेदो भविष्यति ॥
आत्मानं द्विविधं प्राहुः परापरविभेदतः।
परस्तु निर्गुणः प्रोक्तो ह्यहङ्कारयुतोऽपरः ॥

इत्यादिवाक्यशतोक्तो जीवात्मपरमात्मविभाग एव प्रदर्शितः। तत्र जीवतायामहङ्कार उपलक्षणमेवेति ॥ ६३ ॥

[ भा० सा० ] ननु पुरुषस्य व्यापकत्वे जीवस्य परिच्छिन्नत्वबोधकश्रुतीनामनुपपत्तिः, जीवात्मपरमात्मविभागश्च शास्त्रीयोऽनुपपन्नोऽस्त आह—विशिष्टस्येति। विशिष्टस्य अहङ्कारविशिष्टस्य अन्वयव्यतिरेकात्, "जीव बलप्राणधारणयोः" इत्युक्तेरहङ्कारवतामेव सामर्थ्यातिशयप्राणधारणयोर्दर्शनात्, तच्छून्यानां चित्तवृत्तिविरोधस्यैव दर्शनात्, प्रवृत्तिहेतुरागोत्पादकस्याहङ्कारस्याभावादित्यर्थः। यद्वान्तःकरणवियोगे मोक्षे प्रलये च न जीवनम्, तद्योगे च जीवन-

मित्यन्वयव्यतिरेकौ। एवं च तदुपाधिकं जीवस्य परिच्छिन्नत्वं स्वतःकरणत्वं परमात्मत्वं चेति भावः। अनेन च जीवात्मपरमात्मविभागः श्रुतिसिद्धो दर्शितः। तदुक्तम्—

परस्तु निर्गुणः प्रोक्तो ह्यहङ्कारयुतोऽपरः॥
यदा त्वभेदविज्ञानं जीवात्मपरमात्मनोः।
भवेत्तदा मुनिश्रेष्ठाः पाशच्छेदो भविष्यति॥ इति॥ ६३॥

## अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना प्रमाणाभावात्॥ ६४॥

[ वृ० ] ऐश्वर्यशालित्वाज्जीवात्मैवेश्वरः, स एव जगन्निर्मास्यति। तथा च—

ईश्वरः सर्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ ( गीता १६।६१ )

इत्यत्राह—अहङ्कार०। प्रमाणाभावादिति जगदुपादानज्ञानाभावादित्यर्थः। अव्यापकत्वादनेकेश्वरकल्पनापि स्यात्॥ ६४॥

[ वृ० सा० ] अहङ्कार इति। प्रकृतेर्महान्, महतोऽहङ्कार इत्युक्तोऽहङ्कारस्तदभिन्नो यः कर्ता तदधीना कार्यस्य तन्मात्रादेः सिद्धिः, नेश्वराधीना, कार्यत्वस्य चेतनकार्यत्वव्याप्यत्वे प्रमाणाभावात्॥ ६४॥

[ भा० ] इदानीं महदहङ्कारयोः कार्यभेदं प्रतिपिपादयिषुरादावहङ्कारकार्यमाह— अहङ्कार०। अहङ्काररूपो यः कर्ता तदधीनैव कार्यसिद्धिः सृष्टिसंहारनिष्पत्तिर्भवति, तादृशबलस्याहङ्कारकार्यत्वात्, अनहङ्कृतेषु तत्सामर्थ्यादर्शनात्। न तु वैशेषिकाद्युक्तानहङ्कृतपरमेश्वराधीना, अनहङ्कृतस्रष्टृत्वे नित्येश्वरे च प्रमाणाभावादित्यर्थः। "अहं बहु स्यां प्रजायेय" ( छा० उ० ६।२।३ ) इति ह्यहङ्कारपूर्विकैव सृष्टिः श्रूयते, तत्राहंशब्दस्यानुकरणमात्रत्वे प्रमाणाभाव इति। अनेन सूत्रेणाहङ्कारोपाधिकं ब्रह्मरुद्रयोः सृष्टिसंहारकर्तृत्वं श्रुतिस्मृतिसिद्धमपि प्रतिपादितम्॥ ६४॥

[ भा० सा० ] अथ महदहङ्कारयोरेव तदितरज्जगत्कार्यं नेश्वरस्येति ब्रह्मादित्रयस्यैव व्यावहारिकेश्वरत्वं प्रतिपादयिष्यन् अहङ्कारकार्यमाह—अहङ्कार इति। अहङ्कारनिष्ठेति तद्रूपकर्त्रधीनैव कार्यसिद्धिः सृष्टिसंहारनिष्पत्तिः, तादृशबलस्याहङ्कारकार्यत्वात्। अनहङ्कृतेषु तत्सामर्थ्यादर्शनात्। न तु वैशेषिकाद्युक्तानहङ्कृतेश्वराधीना। अनहङ्कृतस्य स्रष्टृत्वे नित्येश्वरे च प्रमाणाभावादित्यर्थः। "अहं बहुस्यां प्रजायेय" इति चाहङ्कारपूर्विकैव सृष्टिः श्रूयते। एवं चाहङ्कारोपाधिकब्रह्मरुद्रयोरेव सृष्टिसंहारकर्तृत्वमुक्तं भवति॥ ६४॥

## अदृष्टोद्भूतिवत् समानत्वम्॥ ६५॥

[ वृ० ] कार्यत्वाच्चेतनकार्यत्वमप्यनैकान्तिकमित्यत्राह— अदृष्टो०। अदृष्टोद्भूतिवत् कर्तृत्वात्, तस्यापि सकर्तृत्वेऽदृष्टोद्भूत्यन्तरस्य सहकारित्वं तस्यास्तस्या अप्यन्यस्या इत्यनवस्था। सादित्वाच्च संसारस्य नानादितापरिहारः॥ ६५॥

[ वृ० सा० ] एतदेव स्पष्टयति—अदृष्टेति । न दृष्टः कर्ता यस्य । क्षित्यङ्कुरादौ हि न चेतनः कर्तास्ति, अनुपलब्धेः ॥ ६५ ॥

[ भा० ] ननु भवत्वहङ्कारोऽन्येषां कर्ताऽहङ्कारस्य तु कः कर्ता; तत्राह—अदृष्टो० । यथा सर्गादिषु प्रकृतिक्षोभककर्माभिव्यक्तिः कालविशेषमात्राद्भवति, तद्बोधककर्मान्तरस्य कल्पनेऽनवस्थाप्रसङ्गात्, तथैवाहङ्कारः कालमात्रनिमित्तादेव जायते, न तु तस्यापि कर्त्रन्तरमस्तीति समानत्वमावयोरित्यर्थः ॥ ६५ ॥

[ भा० सा० ] अहङ्कारस्य कः कर्ता इत्यत आह—अदृष्टेति । यथा सर्गादौ प्रकृतिक्षोभककर्माभिव्यक्तिः कालविशेषादेव भवति, एवमहङ्कारः कालमात्रनिमित्तादेव न तु कर्त्रन्तरादिति समानमावयोरित्यर्थः । ईश्वरस्य कर्मव्यञ्जकत्वे तस्य वैषम्यनैर्घृण्यापत्तेः । कर्मसापेक्षत्वेन हि ईश्वरस्य तत्परिह्रियते । तच्चेदीश्वर एवाधिष्ठितं तर्हि तदापद्यत एवेत्यर्थः ॥ ६५ ॥

## महतोऽन्यत् ॥ ६६ ॥

[ वृ० ] अहङ्कारस्य कारणत्वे किं महान्तं प्रत्यपि कारणत्वमित्यत्राह—महतो० । न स्वस्य कारणं कार्यं भवति ॥ ६६ ॥

[ वृ० सा० ] महत इति । अहङ्कारस्य कार्यं महतोऽन्यत्, न हि स्वकारणं स्वकार्यं भवति ॥ ६६ ॥

[ भा० ] महतो० । अहङ्कारकार्यात् सृष्ट्यादेर्यदन्यत् पालनादिकं तन्महत्तत्त्वाद्भवति, विशुद्धसत्त्वतयाऽभिमानरागाद्यभावेन परानुग्रहमात्रप्रयोजकत्वादित्यर्थः । अनेन च सूत्रेण महत्तत्त्वोपाधिकं विष्णोः पालकत्वमुपपादितम् । महत्तत्त्वोपाधिकत्वात् तु विष्णुर्महान् परमेश्वरो ब्रह्मेति च गीयते । तदुक्तम्—

"यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्" ( भाग० ३।२६।२०१ ) इति ।

अत्र शास्त्रे कारणब्रह्म तु पुरुषसामान्यं निर्गुणमेवेष्यते, ईश्वरानभ्युपगमात् । तत्र च कारणशब्दः स्वशक्तिप्रकृत्युपाधिको वा निमित्तकारणवापरो वा, पुरुषार्थस्य प्रकृतिप्रवर्तकत्वादिति मन्तव्यम् ॥ ६६ ॥

[ भा० सा० ] महत इति । अहङ्कारकार्यसृष्ट्यादेर्यदन्यद् पालनान्तर्यामित्वादिकं तन्महत्तत्त्वात्, विशुद्धसत्त्वतयाभिमानकारणाद्यभावेन परानुग्रहमात्रप्रयोजनकत्वात्, निरतिशयज्ञानबलैश्वर्याच्चेत्यर्थः । महत्तत्त्वोपाधिकश्च विष्णुर्महान् परमेश्वर इति गीयते, "यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्" ( भाग० ३।२६।२१ ) इति स्मृतेः । अत्र शास्त्रे कारणं ब्रह्म निर्गुणं पुरुषसामान्यमेवोच्यते । तत्र चकारशब्दो निमित्तकारणतापरः, जले आकाशादिवदधिष्ठानकारणतापरश्च ॥ ६६ ॥

कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ॥ ६७ ॥

[ वृ० ] स्वीया प्रकृतिः, स्वामी पुरुषः। तयोः सम्बन्धः किं स्वाभाविकः ? अन्यनिमित्तको वा ? स्वाभाविकत्वे स्वभावस्याऽनपायादनिर्मोक्ष इत्यत्राह— कर्मनिमित्तः०। प्रकृतिरित्युपलक्षणम्, पुरुषस्येत्यपि द्रष्टव्यम्। कर्मणश्च स्वस्वामिसम्बधकारणत्वे विवेकात् कर्मक्षये स्वस्वामिसम्बन्धाभावान्मुक्तिः। अनित्यस्य सादित्वान्नानादितापरिहारः, नित्यस्य पुनरस्तीत्यनादिरित्युक्तम् ॥ ६७ ॥

[ वृ० सा० ] कर्मेति। पुरुषस्येति पूरणीयम्। स्पष्टमन्यत् ॥ ६७ ॥

[ भा० ] "अविवेकनिमित्तकः प्रकृतिपुरुषयोर्भोग्यभोक्तृभावः" इति प्रागुक्तम् (सां० सू० १।५५)। तत्राविवेक एव किन्निमित्तक इत्याकाङ्क्षायामविवेकधाराकल्पनेऽनवस्थापत्तिरित्याशङ्कायाः प्रामाणिकत्वेन परिहारः सर्ववादिसाधारण इत्याह— कर्मनिमित्तः०।

येषां सांख्यैकदेशिनां प्रकृतेः पुरुषस्य च स्वस्वामिभावो भोग्यभोक्तृभावः कर्मनिमित्तकस्तन्मतेऽपि स प्रवाहरूपेणानादिरेव, बीजाङ्कुरवत् प्रामाणिकत्वादित्यर्थः। आकस्मिकत्वे मुक्तस्यापि पुनर्भोगापत्तेरिति ॥ ६७ ॥

[ भा० सा० ] ननु स्वामिपुरुषार्थं प्रकृतेः प्रवृत्तिः स्वत एव भवतीति प्रागुक्तम्, तत्र स्वस्वामिभावो भोक्तृभोग्यभावः। स च प्रकृतिप्रवृत्तेः प्रकाममस्तीत्यत आह—कर्मनिमित्त इति। कर्मनिमित्तकः स वृत्तितद्वासनाप्रवाहरूपेणानादिरेव बीजाङ्कुरवत् प्रामाणिकत्वादित्यर्थः। आकस्मिकत्वे मुक्तस्यापि भोगापत्तेरिति भावः ॥ ६७ ॥

अविवेकनिमित्तको वा पञ्चशिखः ॥ ६८ ॥

[ वृ० ] मतान्तरमाह—अविवेक०। स्वस्वामिभाव इत्यनुवर्तते ॥ ६८ ॥

[ वृ० सा० ] अविवेक इति। अविवेकनिमित्त इति बहुव्रीहिः ॥ ६८ ॥

[ भा० ] अविवेकनिमित्तकत्वमतेऽप्येतदनादित्वं समानमित्याह—अविवेक०। अविवेकनिमित्तो वा स्वस्वामिभाव इति पञ्चशिख आह। तन्मतेऽप्यनादिरित्यर्थः। एतदेव स्वमतं प्रागुक्तत्वात्। अविवेकश्च प्रलयेऽपि कर्मवदेवास्ति वासनारूपेणेति। विवेकप्रागभावोऽविवेक इति मते तु बीजाङ्कुरवदनादित्वं न घटते। अखण्डप्रागभावस्यैवाखिलभोगहेतुत्वादिति ॥ ६८ ॥

[ भा० सा० ] इदं सांख्यैकदेशिमतम्, मतान्तरमाह—अविवेकेति। अत्राप्यनादित्वं तुल्यमेव। इदमेव स्वमतं प्रागुक्तत्वात् ॥ ६८ ॥

## लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ॥ ६९ ॥

[ वृ० ] एकदेशिमतमाह—लिङ्गशरीर०। लयनाल्लिङ्गमिति सूक्ष्मातिवाहिकं शरीरम्। यावत् स्थूलशरीरे सूक्ष्मशरीरस्य गमनमस्ति, तावत् स्वस्वामिसम्बन्धाद् बन्ध इत्युच्यते ॥ ६९ ॥

[ वृ० सा० ] एकदेशिमतमाह—लिङ्गेति। यावत् स्थूलशरीरे सूक्ष्मशरीरमस्ति, तावत् प्रकृतिपुरुषयोः स्वस्वामिसम्बन्ध इति ॥ ६९ ॥

[ भा० ] लिङ्ग०। सनन्दनाचार्यस्तु लिङ्गशरीरनिमित्तकः प्रकृतिपुरुषयोर्भोग्यभोक्तृभाव इत्याह, लिङ्गशरीरद्वारैव भोगादिति। तन्मतेऽप्यनादिः स इत्यर्थः। यद्यपि प्रलये लिङ्गशरीरं नास्ति, तथापि तत्कारणमविवेककर्मादिकं पूर्वसर्गीयलिङ्गशरीरजन्यमस्ति। तद्द्वारा बीजाङ्कुरतुल्यत्वं स्वस्वामिभावलिङ्गशरीरयोरित्याशयः ॥ ६९ ॥

[ भा० सा० ] लिङ्गेति। लिङ्गशरीरनिमित्तकः प्रकृतिपुरुषयोर्भोग्यभोक्तृभावः। लिङ्गशरीरद्वारैव भोगादिति मतेऽप्यनादिः स इत्यर्थः। मतद्वयेऽपि स्वत्वं स्वभोग्यभोक्तृवृत्तिवासनावत्त्वं स्वामित्वं स्वनिष्ठवासनाकवृत्तिभोक्तृत्वम्, वृत्तिवासनानां च कर्मजन्यत्ववद् अविवेकजन्यत्ववच्च लिङ्गशरीरजन्यत्वमपि जन्मादिद्वारास्तीति बोध्यम् ॥ ६९ ॥

## यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥ ७० ॥

[ वृ० ] स्वमतमाह—यद्वा तद्वा०। यद्वा तद्वेति कर्मक्षयाद्वा, ज्ञानाद्वा, अन्यतो वा इति स्वस्वामिसम्बन्धोच्छित्त्या संसारोच्छित्तिः पुरुषार्थः। तदुच्छित्तिः पुरुषार्थ इति वीप्साऽध्यायसमाप्तौ ॥ ७० ॥

एष सत्कार्यसिद्धान्तः पूर्वमेव निरूपितः।
तन्त्रतः प्रतिपाद्यत्वान्नहि स्यात् पुनरुक्तता ॥
वृत्तिः कृताऽनिरुद्धेन सांख्यसूत्रस्य धीमता।
मूढसत्त्वविवेकाय ह्यात्मनश्च विमुक्तये ॥

॥ इति कापिलसांख्यप्रवचनसूत्रवृत्तौ तन्त्रार्थसंक्षेपाध्यायः षष्ठः ॥

[ वृ० सा० ] स्वमतमाह—यद्वेति। यत् तद् इत्यव्ययं हेतौ। यतस्ततः स्वस्वामिभावोऽस्तु प्रकृतिपुरुषयोः, तस्य तु बन्धहेतुत्वात् तदुच्छित्तिः पुरुषार्थ इति मम मतम्। वीप्साऽध्यायसमाप्त्यर्था ॥ ७० ॥

इति श्रीस्वयंप्रकाशतीर्थाङ्घ्रिलब्धवेदान्तिसत्पदेन महादेवेन विरचिते
सांख्यप्रवचनसूत्रवृत्तिसारे तन्त्राध्यायः षष्ठः समाप्तः ॥ ६ ॥

[ भा० ] शास्त्रवाक्यार्थमुपसंहरति—यद्वा तद्वा० । कर्मनिमित्तो वाऽविवेकादिनिमित्तो वा भवतु प्रकृतिपुरुषयोर्भोग्यभोक्तृभावः, सर्वथाप्यनादितया दुरुच्छेद्यस्य तस्योच्छेदः परमपुरुषार्थ इत्यर्थः । तदेतदादौ प्रतिज्ञातम्—"त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" (सां० सू० १।१) इति । नन्वत्र सुख-दुःखसाधारणभोगनिवृत्तिः पुरुषार्थ उच्यते, तत्र दुःखमात्रनिवृत्तिरिति कथं तत्रोक्तस्यात्रोपसंहार इति चेन्न; शब्दभेदेऽप्यर्थभेदात् । सुखं हि तावद् दुःखपक्षे निक्षिप्तमिति सुखभोगोऽपि दुःखभोग एव; दुःखभोगोऽपि प्रतिबिम्बरूपेण पुरुषे दुःखसम्बन्ध एव स्वतो नित्यनिर्दुःखत्वेन च प्रथमसूत्रेऽपि प्रतिबिम्बरूपेणैव दुःखनिवृत्तिर्विवक्षितेत्येक एवार्थ उपक्रमोपसंहारसूत्रयोरिति । बहुलांशस्य द्विरावृत्तिः शास्त्रसमाप्त्यर्था ।

शास्त्रमुख्यार्थविस्तारस्तन्त्राख्येऽनुक्तपूरणैः ।
षष्ठाध्याये कृतः पश्चाद्वाक्यार्थश्चोपसंहृतः ॥ ७० ॥

तदिदं सांख्यशास्त्रं कपिलमूर्तिर्भगवान् विष्णुरखिललोकहिताय प्रकाशितवान् । यत् तत्र वेदान्तिब्रुवः कश्चिदाह—सांख्यप्रणेता कपिलो न विष्णुः, किन्त्वग्न्यवतारः कपिलान्तरम्—"अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्तकः" ( म० भा० वन २२०।२१ ) इति स्मृतेरिति, तल्लोकव्यामोहनमात्रम्—

एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।
प्रसंख्यानाय तत्त्वानां सम्मतायात्मदर्शनम् ॥ ( भाग० ३।२४।३६ )

इत्यादिस्मृतिषु विष्ण्ववतारस्य देवहूतिपुत्रस्यैव सांख्योपदेष्टृत्वावगमात् ( द्र० दे० भा० ८।३ अ० ), कपिलद्वयकल्पनागौरवाच्च । तत्र चाग्निशब्दोऽन्याख्यशक्त्यावेशादेव प्रयुक्तः । यथा—"कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" ( गीता ११ ) इति श्रीकृष्णवाक्ये कालशक्त्यावेशादेव कालशब्दः, अन्यथा विश्वरूपदर्शककृष्णस्यापि विष्ण्ववतारकृष्णाद् भेदापत्तेरिति दिक् ।

सांख्यकुल्यां समापूर्य वेदान्तमथितामृतैः ।
कपिलर्षिर्ज्ञानयज्ञे ऋषीनापाययत् पुरा ॥ १ ॥

तद्वचःश्रद्धया तस्मिन् गुरौ च स्थिरभावतः ।
तत्प्रसादलवेनेदं तच्छास्त्रं विवृतं मया ॥ २ ॥

इति श्रीविज्ञानभिक्षुविरचिते कापिलसांख्यप्रवचनस्य भाष्ये तन्त्राध्यायः षष्ठः ॥

॥ इति सांख्यप्रवचनभाष्यं समाप्तम् ॥

[ भा० सा० ] शास्त्रार्थमुपसंहरति–यद्वेति । कर्माविवेकलिङ्गशरीरिणां यत्किञ्चिन्निमित्तकोऽस्तु तयोर्भोग्यभोक्तृभावः, एवं स्वस्वामिभावो यद्वा तद्वा यत्किञ्चिद् भवतु, चेतने साक्षाद् दुःखादिसम्बन्धो वा प्रतिबन्धरूपो वा सर्वथाप्यनादितया दुरुच्छेदस्योच्छेदः परमपुरुषार्थः । दुःखं मा मेति प्रार्थनादर्शनादित्यर्थः । बहुलांशस्य द्विरावृत्तिः शास्त्रसमाप्त्यर्थी । अस्य प्रणेता कपिलो देवहूतिपुत्रो विष्णववतार एव,

एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।
प्रसंख्यानाय तत्त्वानां संमतायात्मदर्शने ॥ ( भाग० ३।२४।३६ ) इति स्मृतेः ।
अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्तकः ॥ ( म० भा० वन० २२३।२१ )

इति स्मृतेरग्न्यवतारूपकपिलान्तरमेवेत्यन्ये । अग्न्याख्यशक्त्यावेशादग्निरिति रूपकं तस्यैवेति परे ॥ ७० ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टपर्यालोचिते भिक्षुभाष्यसारसंग्रहे
षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

लघुसांख्यवृत्तिः समाप्तिमगमत् ।
श्रीसाम्बशिवार्पणमस्तु ॥

—:०:—

ब्रह्मनिष्ठ-स्वामिदेवतीर्थ( काष्ठजिह्व-स्वामी )-प्रणीतः

सांख्यषडध्यायीसाररूपः

# सांख्यतरङ्गः

अथ श्रेयस्करं व्याख्यास्यामः ॥ अथशब्दोऽयं स्वरूपतो मङ्गलमाह शिवशब्दवत् । यथात्र शवतिर्गतिकर्मा ज्ञानमीश्वरमाह, इकारश्चित्कलाम्, तयोर्योगेन शिवमिति मङ्गलनाम संपद्यते तथैवाथशब्दे वर्णाग्र्योऽकारः पुरुषमाह, तवर्गद्वितीयश्चेश्वरेण सङ्गतां प्रकृतिमाह, सृष्ट्यादौ तयोर्योगेनाथशब्दो मङ्गलरूपः संपद्यते। अतिशयेन प्रशस्यं श्रेयस्तस्य करं साधकं वर्णयिष्यामः। तत्स्वरूपं गर्भोपनिषदाह—

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः।
नानायोनिसहस्राणि मयोषितानि यानि वै ॥
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा।
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥
अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः।
सांख्यं योगं समभ्यस्ये पुरुषं पञ्चविंशकम् ॥

( गर्भोप० ४ ) इति।

अथ निर्वचनम्—मयोषितानि तेषु मात्रादयोऽनुभूताः, अवाङ्मुखः प्रसवाय, इदानीं जन्तुरहं किमपि कर्तुमनन्वितोऽस्मि। समन्वितः सन् सांख्यं योगं सम्यगनुष्ठास्ये, पञ्चविंशं पुरुषमेव वा तत्सारं समभ्यस्ये येन पुनर्नेमां कष्टकाष्ठां यास्यामीत्यन्तर्गर्भसत्त्वं प्रतिजानीते।

कस्मात् सांख्यमित्युच्यते ? सम्यक् क्रमपूर्वं ख्यानं कथनं यस्यां सा संख्या क्रमपूर्वा विचारणा, यत्तामधिकृत्य कृतं तस्मात्सांख्यमित्युच्यते शास्त्रम्। कथं तदभ्यसेत् ? उच्यते; दर्पणे नगराभास इव पुरुषे यद्यपि प्रकृतिगुणा भासन्ते, तथापि पुरुषो न तैर्लिप्त इति सततं भावयतो दुःखहेतुपरम्परा लयमेति। कथम् ? दुःखस्य हेतुर्देहधारणम्, यदीदं न स्यात् तर्हि कथं भोगो घटेत। तस्यापि हेतुः शुभाशुभम्, तद्धेतू रागद्वेषौ, आभ्यामेवायं जनः प्रवर्तितः शुभाशुभे कर्मणि प्रवर्तते। एतयोरपि कारणं मिथ्याज्ञानम्, यत् प्रियं प्राप्य रज्यते तथाप्रियं प्राप्य विरज्यते द्वेष्टि वा। तस्य कारणं गुणसङ्ग एव। स च पुरुषे मिथ्याकल्पितोऽस्ति, येनायं नानायोनिषु संसरन्नाद्यापि दुःखस्यान्तं गच्छतीति। तदिदं सांख्यशास्त्रं षड्भिरध्यायैः षडैश्वर्यरूपैः

सिद्धानामाचार्यो भगवान् कपिलो देवहूर्ति मातरं प्रोवाच। तस्येदमाद्यस्याध्यायस्यादिमं सूत्रम्—"अथ त्रिविधदुःखस्यात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।"

अन्तं नाशमतिक्रान्ता अत्यन्तानपायिन्यपुनरावर्तिनी निवृत्तिरत्यन्तनिवृत्तिः, सैवात्यन्तपुरुषार्थः। अन्तेर्बन्धनकर्मणो भावे घञि, अन्तशब्दोऽयं बन्धनार्थस्तमतिक्रान्तोऽत्यन्तः त्रैकालिकबन्धसंसर्गाभावः। स एव नृजन्मनः फलम्। बन्धपूर्वको मोक्षोऽपि ब्राह्मचास्तनोर्न रोचते। एतेन जीवन्मुक्तिरपि संगृहीता भवति। अत्र दुःखशब्देन सदोषं सुखमपि गृह्यते तद्वत्।

इदानीं बन्धः परीक्ष्यते। तत्रादौ स्वभावमात्मनो विशेषं मत्वा तेनैवायं बद्धो भवेदित्याशङ्क्य समाधत्ते; न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः। स्वभावः स्वरूपमेव। नहि स्वेनैव स्वस्य बन्धनं भवितुमर्हति। शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः। सममेव तयोर्गुणशक्त्योरभावस्तद्द्रव्यसत्त्वे न संभवति, किन्त्वाविर्भावतिरोभावौ भवतः। यथा शुक्लो गुणः कृष्णेन गुणेनाव्रियते, बीजस्य प्ररोहशक्तिश्च भर्जनेन तिरोहिता भवति। द्रव्ये जलांश एव वर्णविपर्ययाद् बीजमित्युच्यते, तस्य त्वचि भर्जनेन कठिनीकृतायां तदुद्भेत्तुं न शक्नोत्येतावदेव, न तु जलांशो नष्टो बीजस्वरूपस्य सत्त्वात्। न कालयोगतो बद्धस्येत्येवमुत्तरसूत्रेष्वप्यन्वयः। नित्ये कर्मणि कालोऽपि प्रतिबन्धको दृष्टस्तथात्र नेत्यर्थः। न देशयोगतोऽपि, अशुचिर्देशोऽपि नित्यस्य कर्मणः प्रतिबन्धको दृष्टः। नावस्थातः, यथा बाल्यं स्त्रीसुखप्रतिबन्धि नैवाग्रचम्। षट् नियतपदार्थवादिनो वैशेषिकादयः। उत्तरसूत्रेऽनियतग्रहणादत्र नियतार्थप्रतीतिः। आदिशब्देन पिशाचग्रस्तो गृह्यते। न गतिविशेषात्, तत्तच्छरीरे गमनमेवापरिच्छिन्नं परिच्छिनत्तीत्यपि न निष्क्रियस्य तदसंभवात्। क्रियावतो हृदयस्यैव गतिः संभवति। तथा च ब्राह्मणे हृदयशब्दस्य निर्वचनम्—"हृ इत्येकमक्षरं यद्धरति प्रज्ञाम्, द इत्येकमक्षरं यद्दाति सुखं दुःखं वा, य इत्येकमक्षरं यद्याति स्वर्गं नरकं वा, तस्माद्धृदयमुच्यते" ( बृ० उ० ५।४।१ ) इति।

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात्पञ्चतन्मात्राण्युभयमिन्द्रियम्, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः। अथ कस्मात् सत्त्वरजस्तमांसि प्रभवन्ति? सतः सत्त्वं प्रभवति, चितो रजः, आनन्दाच्च तम इति। एषां साम्यावस्था प्रकृतिरुच्यते। अव्यक्तावस्थेश्वरो गुणमात्रः पुरुष इति। तथा सौरं रहस्यम्—"अथ विदेहो याज्ञवल्क्यं पप्रच्छ भगवो ब्रूहि कोऽयमादित्यः किमस्य रूपं किमीहते का निशेयं महात्मन्निति, स होवाच विदेहम्—

निशा चेयं भगवती सर्वलोकसुखावहा।
एकादशमुहूर्तिनी त्रियामाथो निशीथिनी॥
दिवा भुवनानि पश्यंस्तद्गर्भं विशति रविः।
ततः सप्तमे मुहूर्ते दिव्यं ज्ञानं समश्नुते॥

प्रज्ञाप्रसादनः सोऽयं ब्रह्मगः काल ईरितः।
जगदात्मनि शान्ते तु प्रभवत्यरुणच्छविः॥

ईश्वरः सर्वभूतानां सर्वकर्मप्रवर्तकः।
स एवोदयकाले तु त्रिगुणात्मा भवत्यसौ॥

नानाधर्मानुपदिशन् दर्शयन् प्रलयोद्भवौ।
पुनर्याति स्वां प्रकृतिमिति नित्यं स ईहते॥

नोपरागः प्रभवति यत्र नास्तं न चोदयः।
सदैव रोचमानं तद्रूपमस्य प्रचक्षते॥

विभाप्रभे मण्डले यस्य देव्यौ खद्योतनो यस्तमसः परस्तात्।
स्वयंप्रभः सर्वगतो य आत्मना नमोऽस्तु तस्मै परतः परस्मै॥

सौरं रहस्यं य इदमधीते सन्ध्ययोर्द्वयोः।
स सर्वविद्ब्रह्मविच्च परं श्रेयः समश्नुते। परं श्रेयः समश्नुते॥"

अथैतन्निरुच्यते कोऽयमादित्यः? आदौ भवो वा अदितेरपत्यं वा? किमस्य रूपं तेजोमयं वा? किमीहते अनीहो वा? का निशेयमादित्यरश्मिः स्वतन्त्रा चेति चतस्रः पृच्छाः भवन्ति। अथ प्रतिवचनानि—निशा चेयं समाधिरूपा यस्यां दिवा कर्मभिः श्रान्ताः सर्वे सुखिनोऽभिनवा इव भवन्ति। एकादशमुहूर्तिनी। त्रिंशन्मुहूर्तोऽहोरात्रः। दिवा पञ्चदश मुहूर्तानि, द्वे द्वे च सन्ध्ययोर्द्वयोः, त्रियामा यामिनी चेयमेकादशमुहूर्तिनी संपद्यते। तेषु षष्ठे मुहूर्ते निशीथो भवत्यानन्दघनः। त्रियामाया द्वितीये मुहूर्ते जगदात्मा गर्भं विशति स सप्तममुहूर्तस्यान्ते दिव्यं ज्ञानं लभते। यत्र सर्वेषां प्रज्ञा वैशारद्यमापद्यन्ते स ज्ञानात्मनो ब्रह्मणः कालः। तत एकादशे मुहूर्तेऽतीते स दशमास्यो गर्भो नानावर्णोऽव्यक्तरागो भवति। स ऐश्वरः कालस्तमारभ्य कर्माणि प्रवर्तन्ते। ततोऽर्द्धोदिते रवौ त्रयो गुणाः समा भवन्ति। मण्डलस्योपरिष्टादल्पः श्वेतो वर्णस्तत्सत्त्वम्, अर्द्धोदितं मण्डलं चेषद्रक्तं तद्रजः, अनुदितमर्द्धं मण्डलं चेषच्छ्यामं तत्तमः। यदत्र त्रयोऽपि गुणाः समाना दृश्यन्ते तदयं प्राकृतः कालः। ततः पूर्वाह्णे ब्रह्मचारिणो धर्ममुपदिशन्, मध्याह्ने गृहस्थस्य, अपराह्णे वानप्रस्थस्य, सायाह्ने च ब्रह्माश्रमिणः। यदुदयमारभ्या मध्यन्दिनाद्रक्तपीतेषत्पीतश्वेतकृष्णान् वर्णानुत्पादयति ततः परमासायं विलोमेन ग्रसते च। तावेतौ प्रलयोद्भवौ च प्रदर्शयन् प्राकृतं रूपमेति, तत ऐश्वरम्, पुनस्तद् गर्भं प्रविशति। नित्यमेषादित्यस्येहा भूतानां गतिमुपदिशति। यन्न तमसाभिभूतम्, यस्य च नास्तोदयौ भवतः।

स्वयंप्रभं सततं रोचमानं तदस्य रूपं वदन्ति ज्योतिर्मयम्।
यन्मण्डलं मध्ये कृष्णरजोभिश्च राद्धं तस्मा आदित्याय ब्रह्मणे नम इति॥

तदर्धोदितसूर्यमण्डलसमा प्रकृतिः, ततः पूर्णं रविमण्डलं यत्स्फुरज्ज्योतिस्तन्महत्तत्त्वं प्रकृतेः कार्यं विवृद्धसत्त्वम्। श्रूयते च—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥ इति।
( क० उ० १।३।९-१० )

तन्मात्राणि। अवधारणे मात्रशब्दः। भूतान्तरासंपृक्तानि शुद्धानि भूतानि अन्ते च पुरुष इति वदता "पुरुषान्न परं किञ्चित्" इति श्रुत्यर्थो दर्शितोऽस्ति। महादाख्यमाद्यं कार्यं तन्मनः, चरमोऽहङ्कारः। मध्यमं बुद्धिरित्यर्थतः सिद्धम्। "ईश्वरासिद्धेः" (सां० सू० १।९२ ) इदं बुद्धिवैचित्र्यमात्रम्। प्रकृतिपुरुषयोर्मध्ये मुक्त इव सर्वकर्मफलसंयोक्ता सिद्ध एव न साध्यः। अत एव "यस्य निःश्वसितं वेदाः" ( ऋ० भा० भू० १ ) इति सिध्यति, अबाधात्। आत्मधर्मस्य सर्वत्र सत्त्वाद् वस्तुत्वम्। उपरागात् कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात्। एतदुपरागे कारणं स च कर्तृत्वे।

इति सांख्यप्रवचनपरिशिष्टे प्रथमोऽध्यायः।

किमर्थं प्रधानस्य कर्तृत्वं विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ? विमुक्तो बद्धः स्वार्थो विहारः। रागविरागयोर्योगः सृष्टिः। रागयोगेन प्रवृत्तिः, विरागस्य च योगेनोपसंहारः। अध्यवसायो बुद्धिः। महत्तत्त्वं तु प्रकृतेः कार्यम्। समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत्। लोको हि प्रथमं जानाति तत इच्छति ततः करोतीत्येवं बुद्धेः प्राधान्यम्, श्रेष्ठत्वाद्वा बुद्धिश्रियः।

इति सांख्यप्रवचनपरिशिष्टे द्वितीयोऽध्यायः॥ २॥

अथ वैराग्याध्याय उच्यते। व्यक्तिभेदः कर्मविशेषात्। एकस्यां योनौ नानाव्यक्तयः कर्मविशेषात्। योनिविशेषा अपि तदङ्गकर्मविशेषाद् वेदितव्याः। ज्ञानान्मुक्तिः "असङ्गोऽयं पुरुष" (सां० सू० १।१५) इति। साक्षाज्ज्ञानादेव मुक्तिः बन्धो विपर्ययात्। प्रकृतिगुणैः सक्तोऽयं पुरुष इत्यज्ञानाद् बन्धः। नियतकारणत्वान्न समुच्चयविकल्पौ। अज्ञाननाशे ज्ञानमेव कारणं नियतं तमो विनाशने तेज इव। तस्मान्न ज्ञानकर्मणोः समुच्चयो नापि विकल्पः। अत्र यद्यपि ज्ञानस्यैव कारणता दृश्यते छेदने खड्गधाराया इव, तथाप्युपरितनभागं सा यथा सहायमपेक्षते तथैवेदं ज्ञानमप्यनुक्षणं कर्मणोद्दीपितं प्रबलं सदेव तम उन्मूलयितुं समर्थं भवति, तस्मात्परम्परया कर्मापि मुक्तेः साधनम्। अत एव पराशरादयोऽप्याहुः—"सिद्ध्यति ज्ञानकर्मभ्याम्" इति। जातेऽपि ज्ञाने प्रारब्धस्य सत्त्वेनानर्थसंभावनयापि कर्म न त्यजेत्। तथा चाहुः—

मात्रा स्वस्रा दुहित्रा वा न विविसक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥

( भाग० ९।१९।१७ )

व्यासवाक्यं च—

ज्ञानिनामपि चेतांसि देवी भगवती हि सा।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ इति।

( भा० पु० दे० मा० १।४० )

ज्ञानिनामणुरप्यपराधो नित्यकर्मत्यागजनितः सद्य एव परिपच्येत, ततोऽनिष्टप्रसक्तिर्भवेत्। इतरकर्माणीव नित्यं कर्मापि यदीन्द्रियैः संपद्येत तर्हि किमेतावता ज्ञानिता हता, लोकानुग्रहश्चापि सिद्ध्यति। तस्माल्लोकोपघातकोऽयं पन्था नोपदेश्यः, महर्षिणा तु केवलं शास्त्र एव श्रद्धाविवृद्धयेऽयं वाद उक्तः। एवमेव सर्वेष्वनुशासनेषु वादा भवन्ति, तीर्थेषु तीर्थान्तरवत्। यथैकं तीर्थं प्रधानं भवति तदा तीर्थान्तराणि तदङ्गानि वर्ण्यन्ते। यद्यपि सर्वाणि समानानि तथापि श्रद्धाभिवृद्धये प्रधानाङ्गभावो भवति, तद्वत्। अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य। क्षीरं जलं स्वयमेव प्रवहति तद्वत्। विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता, नेतरात्। अवधारणार्थापि वीप्सात्र। उपसर्जनवन्निर्देशादितरेषामुपसर्जनत्वं द्योतयति।

इति सांख्यप्रवचनपरिशिष्टे तृतीयोऽध्यायः ॥ ३ ॥
अथाख्यायिकाभिश्चतुर्थो धर्माध्यायः ॥ ४ ॥

पञ्चमेऽध्याये इतरमतानि दूषयित्वा स्वयशः स्थाप्यते। मङ्गलाचरणं शिष्टाचारात्। यदोङ्कृत्यैव श्रुतयः प्रवृत्ताः। नेश्वराधिष्ठिते फलनिष्पत्तिः, कर्मणा तत्सिद्धेः। जडं हि कर्म प्रकृतिवच्चेतनसहायमपेक्षते। यथेह यजतां घ्नतां वाऽदृष्टानि दृष्ट्वा धर्मराजस्तथाफलैर्जीवान् योजयति, न तु स्वत एव कर्माणि फलदानि, इत्ययौक्तिकी कल्पनात्र भवितुमर्हति। यत्र तु कर्मणां ज्ञाता चेतनो नास्ति गर्भस्थस्य सत्त्वस्य जननीव। यथा सा सत्त्वादृष्टानुरूपानाहारविहारान् करोति यैः प्रचालितोऽन्तर्मारुतोऽदृष्टानुरूपं कायव्यूहं रचयति। तत्र सर्वज्ञमीश्वरमृते जनन्या बुद्धिं तादृशेष्वेवाहारविहारेषु कः प्रेरयति, तस्मादीश्वरोऽस्त्येव। तथा च श्रुतिः—

प्रजापतिश्चरति गर्भेऽन्तर्जायमानो बहुधा व्यजायत।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वाः ॥ इति।

( शु० यजुः सं० ३१।१९ )

एतस्या निर्वचनम्—प्रजानां सन्ततीनां पाता प्रजापतिः। प्रजापतेर्ब्रह्मणः स्थानं नाभिस्तत उद्भूतत्वान्मारुतोऽपि प्रजापतिरित्युच्यते। गर्भस्थाने मत्स्ये चरति, अन्तर्जायमानो गर्भेण सहाप्रसवस्थायी बहुधा तत्तदङ्गरचनानुरूपाकारैर्व्यजायत, तस्य

मारुतस्य योनिं धीराः परितः पश्यन्ति। मातृबुद्धिप्रेरकमेव कारणं पश्यन्ति, तस्मिन्न् विश्वानि भुवनानि तस्थुः। कस्मादिदं ज्ञायते? चतुर्दशभुवनमण्डितो जायमानोऽयं देह एवात्र प्रमाणम्। स्वोपकारात् यद्यधिष्ठाता न स्यात् तर्हि फलयोगाभावेन कोऽपि कर्मणि न प्रवर्त्तेत, क्रीडैवोच्छिद्येत। न रागादृते तत्सिद्धिः। स्वस्वरूपमाहात्म्यदर्शनेच्छा तु न दोषाय, प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः। अर्थानुकृतयः शब्दाः सादृश्याद्भवन्ति। अनुकरणेनानुकार्यं स्फुटति नानुपूर्वीमात्रेणेति स्फोटोऽङ्गीकृतः। न भूतचैतन्यं प्रत्येकादृष्टेः। सांहत्येऽपि च ताम्बूलवच्चेत्, यथा खपुरं नागवल्लीदलानि सुधा कदर एला चैतेषां सङ्घाते जातेऽद्भुतः शोणिमोत्पद्यते तथा भूतसङ्घाते चैतन्यमिति चेत्, न; तत्र तेजसः प्राबल्यात्। तत्रापि खपुरादयः क्रमेणाकाशादीनि भूतानि सुधा तेजसेतरेभ्यो बलवत्यस्तीति कृत्वा तस्या रङ्ग इतररङ्गोपमर्दनो रोचते न त्वतिरिक्तस्तदभावे तदभावात्।

इति सांख्यप्रवचनपरिशिष्टे पञ्चमोऽध्यायः॥ ५॥

अथ षष्ठो ज्ञानाध्यायः। अस्त्यात्मा नास्तित्वसाधनाभावात्। नास्तित्वस्यापि ज्ञातास्त्येव। यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः। सच्चिदानन्दमित्यात्मनो रूपं तत्रास्त्यात्मेति सर्वे जानन्ति न कस्याप्यत्र संशयः। एवं चिदंशेऽपि, आनन्दांशे तु सर्वेषां संशयः विस्मृतानन्दा जडेन योगात्। अत एव ब्राह्मणं कुशलं पृच्छेदिति स्मार्तधर्मे न सच्चितोः पृच्छास्ति। अतः परानन्दलब्धये इदं शास्त्रं प्रवृत्तं सैव दुःखात्यन्तनिवृत्तिरित्यनेनाभिहिता भवतीति। योऽथशब्दमादौ प्रयुङ्क्ते तस्येश्वरो नित्यसिद्धः।

इति सांख्यप्रवचनपरिशिष्टे षष्ठोध्यायः॥ ६॥

॥ समाप्तः सांख्यतरङ्गः॥

# तत्त्वसमासः

## सर्वोपकारिणीवृत्तिसहितः

यद्वाग्विभूतिरमलाखिलतत्त्वजाता-
ज्ज्ञानाद्यतत्त्वममलं परिबोधयन्ति।
श्रेयः करोति जगतां भगवन्तमाद्यं
तं श्रीमहर्षिकपिलं प्रभुमानतोऽस्मि ॥ १ ॥

उद्दिधीर्षुस्तदुन्नीतसूत्रतत्त्वार्थबुद्धये।
सर्वोपकारिणीं कुर्वे टीकां गुणवशंवदः ॥ २ ॥

अथात्रानादिक्लेशकर्मवासनासमुद्रनिपतितानाथदीनानुद्दिधीर्षुः परमकृपालुः स्वतःसिद्धतत्त्वज्ञानो महर्षिर्भगवान् कपिलो द्वाविंशतिसूत्राण्युपादिक्षत्। 'सूचनात् सूत्रम्' इति हि व्युत्पत्तिः। तत एतैस्समस्ततत्त्वानां सकलषष्टितन्त्रार्थानां च सूचनं भवति। इतश्चेदं सकलसांख्यतीर्थमूलभूतं तीर्थान्तराणि चैतत्प्रपञ्चभूतान्येव। सूत्रषडध्यायी तु वैश्वानरावतारमहर्षिभगवत्कपिलप्रणीता, इयं तु द्वाविंशतिसूत्री तस्या अपि बीजभूता नारायणावतारमहर्षिभगवत्कपिलप्रणीतेति वृद्धाः।

तत्रादौ प्रथमसूत्रत्रयेण सकलप्रपञ्चमूलभूतानि पञ्चविंशतितत्त्वानीति सूचयति—

### अष्टौ प्रकृतयः ॥ १ ॥

अयमर्थः—सांख्यराद्धान्ते पञ्चविंशतिस्तत्त्वानि। तत्र १. मूलप्रकृतिः, २. महत्तत्त्वम्, ३. अहङ्कारः, ४. शब्दतन्मात्रा, ५. स्पर्शतन्मात्रा, ६. रूपतन्मात्रा, ७. रसतन्मात्रा, ८. गन्धतन्मात्रा चेत्यष्टौ प्रकृतयः सन्ति। अत्र तत्त्वान्तरारम्भकत्वं प्रकृतित्वम्। अतश्च महदादीनां सप्तानां पूर्वपूर्वविकृतित्वेऽपि न क्षतिः, लक्षणसमन्वयात् ॥ १ ॥

### षोडश विकाराः ॥ २ ॥

पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनः, गगनपवनज्वलनसलिलधारगाख्यानि पञ्चभूतानि चैतानि षोडश विकाराः। विकृतय एव न तत्त्वान्तरारम्भकाणि। सर्वं वाक्यं सावधारणमिति न्यायात् ॥ २ ॥

## पुरुषः ॥ ३ ॥

पुरुषः पञ्चविंशतितमं तत्त्वम् । अयं च न प्रकृतिर्न विकृतिः, ताभ्यः पृथक्कृत्य निरूपणात् । अनेन जडत्वपरिणामित्वकर्तृत्वादिधर्मवद्भ्यः प्रकृत्यादिभ्यः पुरुषस्य वैलक्ष्यण्यमपि सूचितं भवति । तथा च कारिका—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

( सां० का० ३ ) इति ॥ ३ ॥

नन्वेतेभ्योऽतिरिक्ता अन्येऽपि बहवो घटपटादयः पदार्था दृश्यन्ते, तत्कथमेषामुपपत्तिरत आह—

## त्रैगुण्यसञ्चारः ॥ १४ ॥

त्रिगुणा एव त्रैगुण्यं सत्त्वरजस्तमांसि तेषां सञ्चारः । मत्तकपोतकण्ठन्यायेन प्रतिक्षणं विलक्षणपरिणामो वर्तते इति शेषः । अनेन मूलप्रकृतिस्त्रिगुणात्मिका । त्रित्वेन च भेदबोधकेन गुणाः परस्परविरुद्धस्वभावाः प्रीत्यप्रीतिविषादात्मकाः सञ्चारेण सङ्गतसम्यक्चरणार्थेन तेषां नित्यसहभावः । पुरुषार्थे जननीये कार्यानुसारेण परस्परसहायता च । ततश्च प्रकृतेर्महदादीनां भूतेभ्यश्च घटपटादीनां सकलपदार्थानां त्रिगुणलक्षणपरिणामादेव संसिद्धिः । कार्योत्पादश्च नापूर्वः, किन्त्वाविर्भावमात्रं सूक्ष्मकारणरूपेण स्थितस्य स्थूलकार्यक्षमरूपेण विपरिणाम इति सद्व्याप्तिवादश्च इत्येते सिद्धान्तास्संसूचिता भवन्तीति बोध्यम् ॥ ४ ॥

ननु गुणानामनवरतपरिणतिस्वभावत्वात् कदाचिदपि दृश्यजातादर्शनं न स्यात्, ततश्च प्रलयोच्छेदः स्यात्, अत आह—

## प्रतिसञ्चारः ॥ ५ ॥

यदर्थं सृष्टिप्रक्रियानिर्वाहकस्त्रिगुणपरिणामस्तथा प्रतिसञ्चारः प्रतिकूलोऽपि विपरिणामोऽस्त्वि । तथा च प्रतिलोमपरिणामेन तत्तत्कार्याणां स्वस्वकारणे लये जाते त्रिगुणायाः प्रकृतेः साम्यस्थितिरेव प्रलय इति सूचितम् । तदा च समानपरिणामत्वेन वैलक्षण्यानाविर्भाव इति भावः ॥ ५ ॥

अथ जायमानस्य सुखदुःखादेर्विवेकार्थं त्रैविध्यं वक्तुमेकेनादाववान्तरमाह—

## अध्यात्मम् ॥ ६ ॥

आत्मानमधिकृत्येत्यध्यात्मम् । तद् द्विविधं शारीरं मानसञ्चेति । शारीरं वातपित्तश्लेष्मवैषम्यनिमित्तम् । मानसं कामक्रोधलोभमोहेर्ष्याविषयविशेषदर्शननिमित्तम् । एतदुभयमप्यान्तरोपायासाध्यत्वादध्यात्ममित्युच्यते ॥ ६ ॥

बाह्यभेदद्वयमाह द्वाभ्याम्—

अधिभूतम् ॥ ७ ॥

मानुषपक्षिसरीसृपस्थावरादिभूतान्यधिकृत्य तदधिभूतमित्यर्थः ॥ ७ ॥

अधिदैवम् ॥ ८ ॥

यक्षराक्षसविनायकग्रहाद्यावेशनिमित्तमेतत्। इदं द्वयमपि बाह्योपायसाध्यत्वाद् बाह्यमित्युक्तम् ॥ ८ ॥

ननु सत्स्वपि विलक्षणेषु बहुषु पदार्थेषु पुरुषस्य तत्सम्बन्धाभावात् कथं ततो दुःखमतस्तत्सामग्रीं निरूपयिषुरादौ बुद्धीन्द्रियाण्याह—

पञ्चाभिबुद्धयः ॥ ९ ॥

अभितो बुद्ध्यन्ते ज्ञायन्ते वस्तून्याभिरित्यभिबुद्धयः बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि रूपशब्दगन्धरसस्पर्शबोधकानि ॥ ९ ॥

अनेन च ज्ञानद्वारा योगं दर्शयितुं कर्मेन्द्रियाण्याह—

पञ्च कर्मयोनयः ॥ १० ॥

पञ्च इन्द्रियाणि कर्मयोनयः कर्मणां वचनादानविहरणोत्सर्गानन्दानां योनयः करणानि। तानि च वाक्पाणिपादपायूपस्थाख्यानि। अनेन कर्मणा तद्विषयसान्निध्येन तत्सम्बन्धः सूचितः ॥ १० ॥

अथ महदहङ्कारमनसामध्यवसायाभिमानसङ्कल्पा असाधारण्यो वृत्तयस्ताभिर्विनेन्द्रियद्वारा विषयग्रहासम्भवात्तैस्तद्ग्रहोक्त्या तासां निरूपितप्रायत्वेन तत्साधारणी वृत्तिराह—

पञ्च वायवः ॥ ११ ॥

पञ्चसंख्याकाः प्राणापानसमानोदानव्यानाख्या वायवः महदहङ्कारमनसां सत्साधारणवृत्तयो जीवनसाधनानि। तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः। अपानः कृकाटिकापृष्ठपायुपार्श्वोपस्थवृत्तिः। समानो हृन्नाभिसर्वसन्धिवृत्तिः। उदानो हृत्कण्ठतालुमूर्द्धभ्रूमध्यवृत्तिः, व्यानस्त्वग्वृत्तिरिति ॥ ११ ॥

पञ्चानामुपयोगमाह—

पञ्च कर्मात्मानः ॥ १२ ॥

भुक्तपीताहारजलादे रसरुधिरादेश्च यथायथं प्रापणमेषां कर्म, तदेकानुमेयत्वेन तत्स्वरूपपाठ इत्यर्थः ॥ १३ ॥

नन्वस्तु ज्ञानक्रियाद्वारा महदभिमानसर्वसङ्कल्पानां विषययोगित्वं पुरुषस्य स्वपरिणामितया तन्न घटते इत्याशङ्कां निवर्तयिषुराह—

पञ्चपर्वाविद्या ।। १३ ।।

अनात्मस्वात्मख्यातिरविद्या, सा च विद्याविरोधिनी पञ्चपर्वा भवति। तानि च पर्वाणि अविद्यास्मितारागद्वेषाभिनिवेशाख्यानि। तथा च यदविद्यया विपर्ययेणावधार्यते वस्तु, अस्मितादयस्तत्स्वभावास्तदभिनिविशते ततश्चात्मनो विवेकेन तत्सम्बन्ध इति भावः ।। १३ ।।

पञ्चाशद्भेदेषु प्रत्ययसर्गेषु पञ्चविपर्यया निरूपिताः, अधुना विशिष्टेष्वष्टाविंशतिमशक्तिमाह—

अष्टाविंशतिधाऽशक्तिः ।। १४ ।।

इन्द्रियवधा एकादश, बुद्धिवधाश्च सप्तदश, इत्येता अशक्तय उच्यन्ते। इन्द्रियवधा यथा वाधिर्यं, कुष्ठता, अन्धत्वं, जड़ता, अजिघ्रता तथा मूकता, कौण्यं, पङ्गुत्वं, क्लैब्यम्, उदावर्तः, मन्दता च इति। बुद्धिवधास्तु नव तुष्टीनामष्टसिद्धीनां च विपर्ययाद् भवन्ति। तदित्थं जाता अशक्तयोऽष्टाविंशतिः ।। १४ ।।

प्रसक्ते तुष्टिसिद्धी एवाह द्वाभ्याम्—

नवधा तुष्टिः ।। १५ ।।

यथोक्तम्—आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिहिताः ।।
( सा० का० ५० ) इति।

अस्यार्थः—विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः, तं च सैव करोतीति कृतं तद्ध्यानाभ्यासेनेति केनचिदुपदिष्टे तत्र तुष्टिः प्रकृत्याख्या। १। अथ प्रकृतेः सर्वान्प्रत्यविशेषान्न केवलं तत एव विवेकसाक्षात्कारः, किन्तु प्रव्रज्ययेत्युपदिष्टे तुष्टिरुपादानाख्या। २। प्रव्रज्यापि कालविशेषादरेणैव विवेकं जनयति, अलमुपतप्ततपात् इत्युपदिष्टे तुष्टिः कालाख्या। ३। भाग्येनैव विवेकख्यातिरिति तुष्टिर्भाग्याख्या। ४। इत्येताश्चतस्रः प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य जायन्त इत्याध्यात्मिका उच्यन्ते। विषयाः शब्दस्पर्शरूपरसगन्धाख्याः। ५। तेषु अर्जनरक्षणक्षयभोगहिंसादोषदर्शनं तत उपरमाविरतयोऽपि ५, ते च महदहङ्कारादीननात्मन आत्मनोऽभिमन्यमानस्य वैराग्ये सत्युत्पद्यन्तेऽतो बाह्या उच्यन्ते। इमाश्च नव, उक्तविपर्ययाः ५, अशक्तिभिः २८ सह द्विचत्वारिंशत्। ४२। सिद्धौ परिपन्थित्वाद् हेयाः ।। १५ ।।

## अष्टधा सिद्धिः ॥ १६ ॥

तद्यथा—"ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ७।
दानञ्च ८ सिद्धयोऽष्टौ" (सां० का० ५१) इति।

तत्रोपदेशमन्तरेण तत्त्वज्ञानस्य स्वयमूहाद्या असिद्धिः सा प्रथमा १। अन्यदीयशास्त्रपाठमाकर्ण्य ज्ञानोत्पत्तौ शब्दाख्या द्वितीया २। अध्ययनतस्तत्त्वज्ञाने तृतीया ३। आध्यात्मिकाधिदैविकाधिभौतिकदुःखत्रयविघातेन तत्त्वज्ञाने जाते सिद्धित्रयम् ६। ज्ञानवत्सुहृदो लाभेन तत्त्वज्ञाने सुहृत्प्राप्त्याख्या सप्तमी ७। धनादिनाऽऽराधिते ज्ञानिनि तत्त्वज्ञाने अष्टमी ८। अत्र दुःखविघातरूपाणां तिसृणां सिद्धीनां मुख्यत्वमितरासां तु तदुपायत्वाद् गौणत्वं बोध्यम्। पञ्चविपर्ययादारभ्याष्टसिद्धिपर्यन्तमेते प्रत्ययसर्गाः। तेषु प्रकृतिप्रत्ययान्यताख्यातिप्रेप्सुभिर्द्विचत्वारिंशदादितो हेयाः। सिद्धयस्तु उपादेया इति तत्स्वरूपव्याक्रिययैव सूचितं भवति ॥१६॥

प्रत्ययसर्गमभिधाय प्रकृतिसर्गमाह—

## दश मूलिकार्थाः ॥ १७ ॥

दश अर्थाः पदार्था मूलिकाः सन्ति। मूलं प्रकृतिः पुरुषश्च तावाश्रयत्वेन विद्येते येषामथवा मूलं स्वभावः स प्रयोजकत्वेनास्ति येषामिति मूलिकाः, मूलप्रकृतौ पुरुषे च विद्यमाना इति यावत्। तथा च राजवार्तिकम्—

प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यताः ४।
पारार्थ्यं च तथा नैक्यं वियोगो योग एव च ८।
शेषवृत्तिरकर्तृत्वं १० मौलिकार्थाः स्मृता दश ॥

अत्रैकत्वमर्थवत्त्वं पारार्थ्यं ३ प्रधाने, अन्यत्वं प्रकृत्यपेक्षया अकर्तृत्वं बहुत्वं ३ पुरुषे, अस्तित्वं योगो वियोगश्च ९ उभयोः, शेषवृत्तिः १०। अङ्गाङ्गिभावेन गुणानां वृत्तिः स्थूलसूक्ष्मशरीरयोरिति। अत्र प्रकृतिपुरुषयोः साधर्म्यवैधर्म्यनिरूपणेन द्वयोः पार्थक्येन ज्ञानं प्रकृतिपुरुषान्यताख्यातिबीजमिति सूचितं भवति। तथा चैतेषां धर्माणां तत्तत्स्वभावभूतत्वेन प्रकृतिसर्गताव्यवहार इति ॥ १७ ॥

ननु बुद्ध्यादिभिरेव त्रिगुणात्मकैः सकलकार्यसिद्धौ किमधिकप्रकृत्यङ्गीकारेण, अत आह—

## अनुग्रहः सर्गः ॥ १८ ॥

बुद्ध्यादिभिः स्वकार्येऽहङ्कारादौ जनयितव्ये प्रकृतिरनुग्रहसहायोपेक्ष्यते। अन्यथा बुद्धिः क्षीणा सती नालमहङ्कारं जनयितुमिति सकलोऽपि सर्गस्तदनुग्रहमूलक एवेत्यर्थः। अयमेव प्रकृत्यापूर इत्युच्यते। तथा च प्रकृत्यैवायं सर्गो नेश्वरेण नापि ब्रह्मोपादानोऽप्यकारणो नेश्वराधिष्ठितप्रकृतित इति सूच्यते ॥ १८ ॥

तन्मात्रसर्गमाह—

**चतुर्दशविधो भूतसर्गः ॥ १९ ॥**

दैवतैर्यग्योनमानुष्यभेदेन भूतसर्गश्चतुर्दशप्रकारको भवति। तच्चेत्थम्—ब्राह्म १ प्राजापत्य २ ऐन्द्र ३ पैत्र ४ गान्धर्व ५ यक्ष ६ राक्षस ७ पैशाच ८ भेदेनाष्टविधो दैवः। पशुमृगपक्षिसरीसृपस्थावरभेदेन पञ्चविधस्तैर्यग्योनः १३ एकविधो मानुष्यः १४ इति ॥ १९॥

ननु पुरुषार्थशिरोमणीभूतमोक्षतत्त्वाकाङ्क्षा सति बन्धस्वरूपज्ञान एवोपपद्यतेऽतो बन्धानेवाह—

**त्रिविधो बन्धः ॥ २० ॥**

विपर्ययादतत्त्वज्ञानाज्जायमानो बन्धस्त्रिविधः प्राकृतो वैकृतो दाक्षिणश्चेति ३। तत्र पुरुषधिया प्रकृत्युपासनं प्राकृतो बन्धः १। तथा भूतेन्द्रियाहङ्कारबुद्ध्युपासनं वैकृतः २। पुरुषतत्त्वमजानतः केवलमिष्टापूर्तकारिणो दक्षिण ३ इति त्रयाणामपि पुरुषस्वरूपवेदकत्वाभावे बन्धकत्वम् ॥ २० ॥

नन्वेतदज्ञानत्रयनिवृत्तौ कीदृशो मोक्षो जायत इत्याह—

**त्रिविधो मोक्षः ॥ २१ ॥**

इष्टापूर्तादिकर्मस्वसारतां पुरुषस्वरूपोपलब्धेरेव सारतां बुध्यमानस्य प्रथमः, ततो भूतेन्द्रियादिष्वविकारतां पश्यतो द्वितीयः, ततः पृथगात्मानं जानतः प्रकृतिरूपस्तृतीयः। यद्यपि प्रथमद्वितीयौ न तात्त्विकमोक्षौ, वथाप्येकदेशिकान्यताख्यात्या तावद्बन्धापगमेन मोक्षत्वव्यहार इति द्रष्टव्यम्। अत्र बन्धमोक्षसंसाराः प्रकृतावेव न पुरुषे, सवासनक्लेशकर्माशयानामपरिणामिनि पुरुषेऽसंभवात्। भृत्यजयपराजययोः स्वामिन्युपचारवत् प्रकृतिगतानां बन्धादीनां पुरुषे उपचार एव। भोगापवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात् पुरुषः संबन्धसुधासाधितो भवति। एवञ्च धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यैस्सप्तभी रूपैः प्रकृतिर्भोगापवर्गरूपपुरुषार्थं प्रत्यात्मानं बध्नाति। तत्त्वज्ञानेन विवेकख्यात्या एकेन रूपेण च विमोचयति। इतीदृशस्य तत्त्वज्ञानस्याभ्यासादादरनैरन्तर्यदीर्घकालसेवितात् सर्वपुरुषान्यतासाक्षात्कारि केवलं ज्ञानमुत्पद्यते। ततश्चाध्यवसायाभिमानसंकल्पालोचनान्यान्तराणि बाह्याश्च सर्वे व्यापारा आत्मनि प्रतिषिद्धा भवन्ति। अयमेव मोक्ष इति राद्धान्तः ॥ २१ ॥

ननु पुरुषप्रकृत्यादीनामलक्ष्यालक्ष्याणां च घटपटादीनामखिलप्रमेयाणां लौकिकैः कथमनुभवो विधेयोऽत आह—

त्रिविधं प्रमाणम् ।। २२ ।।

*[ त्रिविधं दुःखम् ।। २३ ।।

एतत् परम्परया याथातथ्यम् ।। २४ ।।

एतज्ज्ञात्वा कृतकृत्यः स्यात् ।। २५ ।।

न पुनस्त्रिविधेन दुःखेनाभिभूयते ।। २६ ।। ]

असन्दिग्धा विपरीतानधिगतविषया चित्तवृत्तिर्बोधश्च पौरुषेयः, फलं प्रमा, तस्याः कारणं प्रमाणम्, तत् त्रिविधं प्रत्यक्षानुमानशब्दभेदात् । एतेनाधिकान्युपमानादीनि नैयायिकाद्यभ्युपगतानि प्रमाणान्येष्वेवान्तर्भवन्तीति नातिरिक्तान्युपयुज्यन्ते । तत्रार्थसंनिकृष्टमिन्द्रियं प्रत्यक्षम्, व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानम्, आत्मवचनाद्वेदादिरूपाच्छाब्दमिति विशेषत एषां लक्षणोदाहरणान्याकरादवसेयानि । इति शिवम् ।

एकस्मिंस्त्रिगुणात्मतत्त्वयुतितो जाता द्विता साप्यतो
द्वित्वं प्राप्य प्रकाशयत्यविरतं भोगापवर्गौ स्वतः ।
इत्येवं परिसूचयन्मतिमते मोहापहं कापिलं
सूत्राणाममलं द्विकद्वयमिदं जीयाच्चिरं चेतसि ।।

इति सर्वोपकारिणी संक्षिप्तकापिलसूत्रवृत्तिः
समाप्ता ।।

—:०:—

*एतत्सूत्रचतुष्टयं तत्त्वसमाससूत्राणां व्याख्यानान्तरेषु समुपलभ्यते । अत्र च सूत्राणां संख्याविषये परं वैषम्यं दृश्यते । कैश्चित् "त्रैगुण्यम्" "सञ्चरः" इति पृथक् सूत्रे परिगणिते । "अध्यात्ममधिदैवमधिभूतञ्च" इत्येकं सूत्रम् केषाञ्चित्, अन्येषां च सूत्रत्रयमिदम् । एवमेव 'एतत् परम्परया" इत्यतः "दुःखेनाभिभूयते" इति यावदेकमेव कैश्चित् स्वीकृतमन्यैश्च त्रीणि सूत्राणीमानि परिगणितानि । इत्थं २२, २३, २४, २५, २६ इति यावदेतेषां संख्या व्याख्याकाराणां मतेनेति विभावनीयम् ।

# * पञ्चशिखाचार्यस्य

## सांख्यसूत्राणि

१. आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच । ( यो० सू० भा० १।२५ )

२. तन्त्रमिति व्याख्यायते, तम एव खल्विदमग्र आसीत्, तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत, तम इत्युच्यते प्रकृतिः, पुरुषः क्षेत्रज्ञः ।
( सां० का० ७१ माठरवृत्तिः )

३. पुरुषाधिष्ठितं प्रधानं प्रवर्तते । ( सां० का० १७ मा० वृ० )

४. प्रधानं स्थित्यैव वर्तमानं विकाराकरणादप्रधानं स्यात्, तथा गत्यैव वर्तमानं विकारनित्यत्वादप्रधानं स्यात्, उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते नान्यथा । कारणान्तरेष्वपि कल्पितेष्वेषु समानश्चर्चः ।
( यो० सू० भा० २।२३ )

५. सत्त्वं नाम प्रसादलाघवानभिष्वंगप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम् । ( सां० सू० १।१२७ भिक्षुभाष्ये )

६. एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम् । पूर्ववत् )

७. एवं तमोऽपि निद्रादिनानाभेदं समासतो मोहात्मकम् । ( पूर्ववत् )

८. सत्त्वारामः सत्त्वमिथुनश्च सदा स्यात् । ( यु० दी०, पृ० १२९ )

९. चलञ्च गुणवृत्तम् । ( यो० सू० भा० २।१५ )

१०. सत्तामात्रो महान् । ( यु० दी०, पृ० १७० )

---

* पञ्चशिखाचार्यः कापिलपरम्परायां चतुर्थः सांख्याचार्यः ( एतद्विषये भूमिकायां द्रष्टव्यम् ) । एतत्प्रणीतः कोऽपि ग्रन्थो नाद्ययावदुपलब्धः । कानिचन तदुक्तवचनानि योगसूत्रस्य व्यासभाष्ये, सांख्यकारिकाया युक्तिदीपिकाख्यायां टीकायां, माठरवृत्तौ, गौडपादभाष्ये च उपलभ्यन्ते । तेषां सङ्ग्रहः श्री उदयवीरशास्त्रिणा स्वकीये 'सांख्यशास्त्र का इतिहास' नामके ग्रन्थे ( पृष्ठे ) कृतः । सांख्याध्येतॄणामतीवोपकारकाणीति मत्वेमान्यत्र प्रदर्श्यन्ते । एतत्कृते श्रीशास्त्रिमहोदयानामाभारं प्रदर्शये । अत्र युक्तिदीपिकायाः कलकत्ता-संस्करणस्य पृष्ठसंख्या दत्ता । एषु केषांचित्सूत्राणां स्वामिहरिहरानन्द-आरण्यमहाभागेन भाष्यमपि विरचितम्, तच्च 'The Samkhya–Sutras of Pañcasikha' नाम्ना मोतीलाल बनारसीदास–दिल्लीतः प्रकाशितं वर्तते ।—

११. एतस्माद्धि महत आत्मन इमे त्रय आत्मानः सृज्यन्ते वैकारिक-तैजस-भूतादयोऽहङ्कारलक्षणाः, अहमित्येवैषां सामान्यं लक्षणं भवति, गुणप्रवृत्तौ च पुनर्विशेषलक्षणम्। ( यु० दी०, पृ० १४४ )

१२. तदेतस्मिन् वैकारिके स्रक्ष्यमाण एष भूतादिस्तैजसेनोपष्टब्ध एतं वैकारिकमभिधावति। तथैव तस्मिन् भूतादौ स्रक्ष्यमाण एष वैकारिकस्तैजसेनोपष्टब्ध एतं भूतादिमभिधावति, इत्यनेन न्यायेन तैजसादुभयनिष्पत्तिः।
( यु० दी०, पृ० ११७ )

१३. आहङ्कारिकाणीन्द्रियाण्यर्थं साधयितुमर्हन्ति नान्यथा। ( यु० दी०, पृ० १२३ )

१४. महदादिविशेषान्तः सर्गो बुद्धिपूर्वकत्वात्। उत्पन्नकार्यकरणस्तु माहात्म्यशरीर एकाकिनमात्मानमवेक्ष्याभिदध्यौ। हन्ताहं पुत्रान् स्रक्ष्ये, ये मे कर्म करिष्यन्ति, ये मां परं चापरं च ज्ञास्यन्ति। तस्याभिध्यायतः पञ्च मुख्यस्रोतसो देवाः प्रादुर्बभूवुः। तेषूत्पन्नेषु न तुष्टिं लेभे। ततोऽन्ये तिर्यक्स्रोतसोऽष्टाविंशतिः प्रजज्ञिरे। तेष्वप्यस्य मतिर्नैव तस्थे। अथापरे नवोर्ध्वस्रोतसो देवाः प्रादुर्बभूवुः। तेष्वप्युत्पन्नेषु नैव कृतार्थमात्मानं मेने। ततोऽन्येऽष्टावर्वाक् स्रोतस उत्पेदुः। एवं तस्माद् ब्रह्मणोऽभिध्यानादुत्पन्नस्तस्मात् प्रत्ययसर्गः। स विपर्ययाख्यः, अशक्त्याख्यः, तुष्ट्याख्यः सिद्ध्याख्यश्च। ( यु० दी०, पृ० १५२ )

१५. जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टं तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेषु। ( यो० सू० भा० ३।१४ )

१६. एकजातिसमन्वितानामेषां धर्ममात्रं व्यावृत्तिः। ( यो० सू० भा० ३।४४ )

१७. तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति। ( यो० सू० भा० ३ ४१ )

१८. अयं तु खलु त्रिषु गुणेषु कर्तृषु अकर्तरि च पुरुषे तुल्यातुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान् सर्वभावानुपपन्नाननुपश्यन् न दर्शनमन्यच्छङ्कते।
( यो० सू० भा० २।१८ )

१९. अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते। ( यो० सू० भा० २।२० )

२०. एकमेव दर्शनं ख्यातिरेव दर्शनम्। ( यो० सू० भा० १।४ )

२१. रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्तन्ते। एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति, गुणप्रधानभावकृतस्त्वेषां विशेषः। ( यो० सू० भा० ३।१३ )

२२. धर्मिणामनादिसंयोगात् धर्ममात्राणामप्यनादिः संयोगः। ( यो०सू०भा० २।२२ )

२३. व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेनाभिप्रतीत्य तस्य सम्पदमनुनन्दत्यात्मसम्पदं मन्वानः, तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्यमानः, स सर्वोऽपि बुद्धः।
( यो० सू० भा० २।५ )

२४. बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्यात् तत्रात्मबुद्धिं मोहेन। ( यो० सू० भा० २।६ )

२५. अम्भ इति गुणलिङ्गसन्निचयमेवाधिकुरुते। गुणाश्च सत्त्वरजस्तमांसि लिङ्गञ्च महदादि, अत्र सन्निहितं भवति। तदिदं प्रधानममितं भाति, अमितमुपलभ्यत इत्यम्भः। ( यु० दी०, पृ० १५६ )

२६. सलिलं सलिलमिति वैकारिकोपनिपातमेवाधिकुरुते, सति तस्मिन् लीयते जगत्। ( यु० दी०, पृ० १५६ )

२७. वृष्टिर्वृष्टिरिति श्रिय एवोपनिपातमधिकुरुते, सा हि वृष्टिवत् सर्वमाप्याययति। ( यु० दी०, पृ० १५८ )

२८. महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये नियुङ्क्ते। ( यो० सू० भा० २।५२ )

२९. स्वभावं मुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवति, अरुचिश्च निर्णये भवति। ( यो० सू० भा० ४।२५ )

३०. स्यात् स्वल्पः संकरः सपरिहारः सप्रत्यवमर्शः कुशलस्य नापकर्षायालं, कस्मात् कुशलं हि मे बह्वन्यदस्ति, यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति। ( यो० सू० भा० २।१३ )

३१. स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्तमानस्तामेवावदातरूपामहिंसां करोति। ( यो० सू० भा० २।३० )

३२. ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्ममभिनिर्वर्तयन्ति। ( यो० सू० भा० ४।१० )

३३. तपो न परं प्राणायामात्, ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य। ( यो० सू० भा० २।५२ )

३४. तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत् संप्रजानीते। ( यो० सू० भा० २।१७ )

३५. तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः। कस्मात्। दुःखहेतोः परिहार्यस्य प्रतीकारदर्शनात्। तद्यथा—पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वं, परिहारः कण्टकस्य पादानधिष्ठानं पादत्राणव्यवहितेन वाधिष्ठानम्। एतत्त्रयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाप्नोति। कस्मात्। त्रित्वोपलब्धिसामर्थ्यात्। [ इति ] ( यो० सू० भा० २।१७ )

३६. कुम्भवद् प्रधानं पुरुषार्थं कृत्वा निवर्तते। ( सां० का० ५६ गौ० भा० )

●

# परिशिष्टानि

## ( क )

### सूत्रानुक्रमणी

( ख )

## व्याख्यासु नामग्राहं गृहीतानां

### ग्रन्थ-ग्रन्थकार-मत-मतान्तराणां सूची

## ( ग )

## सङ्केतविवरणम्

| | | | |
|---|---|---|---|
| अ० को० | अमरकोषः | ऐ० उ० | ऐतरेयोपनिषद् |
| अन्न० उ० | अन्नपूर्णोपनिषद् | क० उ० | कठोपनिषद् |
| आ० स० | आत्मसप्ततिः | का० द० | काव्यादर्शः |
| ई० उ० | ईशोपनिषद् | कु० सं० | कुमारसम्भवम् |
| ई० गी० | ईश्वरगीता | कू० पु० | कूर्मपुराणम् |
| ऋ० सं० | ऋक्संहिता | के० उ० | केनोपनिषद् |

| | | | |
|---|---|---|---|
| ग० उ० | गर्भोपनिषद् | म० पु० | मत्स्यपुराणम् |
| ग० पु० | गरुडपुराणम् | म० भा० टी० | महाभारतटीका |
| गीता | भगवद्गीता | म० भा० वन० | महाभारत वनपर्व |
| चू० उ० | चूलिकोपनिषद् | म० भा० शा० | महाभारतशान्तिपर्व |
| छा० उ० | छान्दोग्योपनिषद् | मा० का० | माण्डूक्यकारिका |
| जाबा० उ० | जाबालोपनिषद् | मा० पु० | मार्कण्डेयपुराणम् |
| ता० ब्रा० | ताण्ड्यब्राह्मणम् | मु० उ० | मुण्डकोपनिषद् |
| तै० आ० | तैत्तिरीयारण्यकम् | मै० आ० | मैत्रायण्यारण्यकम् |
| तै० उ० | तैत्तिरीयोपनिषद् | यो० भा० | योगभाष्यम् |
| दे० भा० | देवीभागवतम् | यो० वा० | योगवार्तिकम् |
| ना० पु० | नारदपुराणम् | यो० वासि० | योगवासिष्ठम् |
| ना० स्मृ० | नारदस्मृतिः | यो० सू० | योगसूत्रम् |
| नृ० ता० उ० | नृसिंहतापिन्युपनिषद् | लि० पु० | लिङ्गपुराणम् |
| प० पु० | पद्मपुराणम् | लौ० सा० | लौकिकन्यायसाहस्री |
| प० शि० | पञ्चशिखः | वा० पु० | वायुपुराणम् |
| पा० उप० | पाराशरोपपुराणम् | वि० पु० | विष्णुपुराणम् |
| पा० परि० | पाणिनीया परिभाषा | वै० सू० | वैशेषिकसूत्रम् |
| पा० सू० | पाणिनीयसूत्रम् | श० प० ब्रा० | शतपथब्राह्मणम् |
| प्र० उ० | प्रश्नोपनिषद् | शा० को० | शाश्वतकोषः |
| प्र० वा० | प्रमाणवार्तिकम् | शि० पु० | शिवपुराणम् |
| बृ० उ० | बृहदारण्यकोपनिषद् | श्लो० वा० | श्लोकवार्तिकम् |
| ब्र० उ० | ब्रह्मोपनिषद् | श्वे० उ० | श्वेताश्वतरोपनिषद् |
| ब्र० बि० उ० | ब्रह्मबिन्दूपनिषद् | सां० का० | सांख्यकारिका |
| ब्र० वै० पु० | ब्रह्मवैवर्तपुराणम् | सां० त० कौ० | सांख्यतत्त्वकौमुदी |
| ब्र० सू० | ब्रह्मसूत्रम् | सां० सू० | सांख्यसूत्राणि |
| भाग० | भागवतम् | सौ० पु० | सौरपुराणम् |
| मनु० | मनुस्मृतिः | | |

## व्याख्यासूद्धृतवचनानुक्रमणी

## ( ङ )

## सांख्यसूत्रेषु पाठभेदाः

अन्यग्रन्थेष्विव सांख्यसूत्रेष्वपि यत्र तत्र पाठभेदा दृश्यन्ते । क्वचित्तु व्याख्याकाराः स्वमुखेनैव पाठभेदं निर्दिशन्ति, व्याख्याकाले तत्पुरःस्थासु मातृकासु तादृशपाठस्यापि वर्तमानत्वात् । क्वचिच्च, व्याख्यानस्य सूत्रानुरूपत्वात् व्याख्यादर्शनेन सूत्रेषु पाठभेदः स्पष्टं प्रतीयते । लिपिकरप्रमादात् सम्पादकवैदुष्याच्चापि पाठभेदाः सञ्जायन्ते, मया त्वत्र व्याख्यातृभिः यानाधृत्य व्याख्या कृता त एव पाठभेदाः प्रदर्श्यन्ते, ये व्याख्याकारैर्निर्दिष्टा, ते च व्या० सू०=व्याख्यायां सूचितः पाठः, इति संकेतेन अत्र प्रदर्शिताः । केन व्याख्यात्रा कः पाठो गृहीत इति तन्नाम्नोऽधः स निर्दिष्टः । नागेशस्तु भिक्षुमेवानुसरति, तेन न कोऽप्यन्यः पाठो गृहीतः ।

| सूत्र सं० | अनिरुद्धः | वेदान्ती | भिक्षुः |
|---|---|---|---|
| १।२ | निवृत्तेरप्यनु | निवृत्तरेप्यनु | निवृत्तेऽप्यनु |
| १।४ | सत्त्वासम्भवात् | सत्तासम्भवात् | सत्त्वा० |
| १।१८ | | निबन्धना चेत् (व्या० सू०) | निबन्धना चेत् (व्या० सू०) |
| १।२७ | | निमित्ततोऽप्यस्य (व्या० सू०) | निमित्ततोऽप्यस्य (व्या० सू०) |
| १।२८ | देशभेदात् | देशव्यवधानात् | देशव्यवधानात् |
| १।३४ | गर्भाधानादिना | ०धानादिकर्मणा | धानादिना |
| १।४० | चारादपि न | चारादपि न | चारादपि |

| सूत्र सं० | अनिरुद्धः | वेदान्ती | भिक्षुः |
|---|---|---|---|
| ११४१ | पूर्वभावित्वमात्रे | पूर्वभावमात्रे | पूर्वभावमात्रे |
| ११५३–५४ | ( सूत्रयोः क्रमव्यत्ययः ) | | |
| ११५५ | तद्योगेऽप्य | तद्योगोऽप्य | तद्योगोऽप्य |
| ११५८ | तु न | न तु | न तु |
| ११७६ | परिच्छिन्नत्वान्न | परिच्छिन्नं न | परिच्छिन्नं न |
| ११८० | कुतस्तरां | कुतस्तत् | कुतस्तत् |
| ११८४ | जाड्यविमोक्षः | ०विमोकः | ०विमोकः |
| ११८५ | काम्याकाम्ये | काम्येऽकाम्ये | काम्येऽकाम्ये |
| ११८७ | यत् तत् । | तत् त्रिविधं प्रमाणम् | तत् त्रिविधं प्रमाणम् |
| ११८८ | त्रिविधं प्रमाणम्, तत्सिद्धौ | तत्सिद्धौ | तत्सिद्धौ |
| ११८९ | यत्सम्बन्ध | यत्संबद्ध | यत्संबद्ध |
| ११९० | द्वाऽदोषः | द्वा न दोषः | द्वा न दोषः |
| ११०९ | सौक्ष्म्यादनुपलब्धिः | सौक्ष्म्यात्तदनुप० | सौक्ष्म्यात्तदनुप० |
| ११२४ | दनित्यं सक्रियं | दनित्यमव्यापि सक्रियं | दनित्यमव्यापि० |
| ११३८ | धर्मवन्नतत्साधनम् | | न्न साधनम् |
| ११४४ | | | कैवल्यार्थं प्रकृतेः (व्या०सू०) |
| ११५५ | दृष्ट्या तद्रूपम् | तद्रूपम् | दृष्ट्याऽतद्रूपम् |
| २।१ | विमुक्तविमोक्षार्थं | विमुक्तमोक्षार्थं | विमुक्तमोक्षार्थं |
| २।३ | वासनापटुत्वात् | वासनायाबलवत्वात् | वासनायाबलवत्वात् |
| २।६ | तत्सिद्धिः | तत्सिद्धिः | तत्सिद्धेः |
| २।२१ | लयश्रुतेः | लयश्रुतिः | लयश्रुतिः |
| २।२२ | उत्पत्तिः श्रूयते | ०त्तिश्रुतेः | ०त्तिश्रुतेः |
| ३।६ | परिष्वक्तो | परिमुक्तो | परिमुक्तो |
| ३।२१ | प्रपञ्चत्वाद्यभावश्च | प्रपञ्चमरणा० | प्रपञ्चमरणा० |
| ३।२२ | | | ‘सौक्ष्म्यात्’ नास्ति इति |
| ३।३८ | अष्टाविंशतिधा | अष्टाविंशतिधा | अष्टाविंशतिधा तु |
| ३।४३ | आध्यात्मिकयादि | आध्यात्मिकादि | आध्यात्मिकयादि |
| ३।४६ | प्रभेदाः | प्रभेदा | प्रभेदा |
| ३।६२ | वाप्यनादितः | वानादित | वाऽनादित |
| ३।६४ | इतर इतरज्जहाति तद्दो० | इतर इतरवत् तद्दो० | इतरवत् तद्दो० |
| ३।७३ | त्येकेन रूपेण | त्येकेन रूपेण | त्येकरूपेण |

| सूत्र सं० | अनिरुद्धः | वेदान्ती | भिक्षुः |
|---|---|---|---|
| ३।७४ | विवेकस्येति न | विवेकस्येति न | विवेकस्य न |
| ४।१५ | व्रतनियम | कृतनियम | कृतनियम |
| ४।१७ | कृतकृत्यः | कृतकृत्यता | कृतकृत्यता |
| ४।२६ | योगाद् बन्धः | योगाद् बन्धः | योगाद्बद्धः |
| ४।३२ | मूर्तियोगे | मूर्तियोगे | मूर्तियोगेऽपि |
| ५।२ | फलसंपत्तिः | फलसंपत्तिः | फलनिष्पत्तिः |
| ५।१६ | बाधप्रसङ्गः | बाधप्रसङ्गः | बाधप्रसक्तेः |
| ५।२६ | गुणादीनां | गुणादीनां | गुणादीनां च |
| ५।३५ | दिष्वनुपपत्तेः | दिष्वनुपपत्तेः | ष्वनुपपत्तेश्च |
| ५।३७ | वाचकसंबन्धः | वाचकसंबन्धः | वाचकभावः संबन्धः |
| ५।३८ | संबन्धसिद्धेः | संबन्धसिद्धेः | संबन्धसिद्धिः |
| ५।४० | लोक''''प्रतीते | लोके''''प्रतीते | लोके''''प्रतीतिः |
| ५।८१ | न भागयोगो | न भागयोगो | न भागियोगो |
| ५।८२ | इतरवियोगवत् | इतरवियोगवत् | इतरयोगवद् |
| ५।८८ | न तन्निर्भागत्वं | न तन्निर्भागत्वं | न निर्भागत्वं |
| ५।८९ | प्रत्यक्षत्व | प्रत्यक्षत्व | प्रत्यक्षता |
| ५।९६ | नाजः संबन्धो | नाजः संबन्धो | नातः संबन्धो |
| ५।१०८ | न द्रव्ये नियमः | न द्रव्ये नियमः | न द्रव्यनियमः |
| ५।११४ | पूतिभावप्रसक्तेः | ०प्रसक्तेः | पूतिभावप्रसङ्गात् |
| ६।४ | शिलापुत्रवद् | शिलापुत्रकवद् | शिलापुत्रवद् |
| ६।६ | दुःखात् क्लेशः | दुःखाद् द्वेषः | दुःखाद् द्वेषः |
| ६।७ | कुत्रापि | न कुत्रापि | कुत्रापि |
| ६।१० | असङ्गादिश्रुतेः | असङ्गादि० | असङ्गत्वश्रुतेः |
| ६।५० | | | जडव्यावृत्तौ (व्या० सू०) |

**सांख्यदर्शनम्**
**व्याख्याचतुष्टयोपेतम्**
**सम्पादक :**
**जनार्दनशास्त्री पाण्डेय**

भारतीय दर्शनों में सांख्यदर्शन सबसे प्राचीन दर्शन है। इसके प्रणेता महर्षि कपिल को आदिविद्वान् कहा जाता है। इस भारतीय प्रवादपरम्परा की पुष्टि समस्त भारतीय वाङ्मय करता है। कपिल ने जिस षष्टितन्त्र की रचना की वह यही षडध्यायात्मक सूत्र ग्रन्थ है। वेद, पुराण, रामायण, महाभारत आदि में जो सांख्यसिद्धान्त उपलब्ध होते हैं उन सबका आदिस्रोत यही ग्रन्थ है। इसकी अभी तक चार व्याख्यायें उपलब्ध हैं, जिनमें अनिरुद्ध वृत्ति सबसे प्राचीन है। यह यद्यपि संक्षिप्त वृत्ति है किन्तु मूल-ग्रन्थ का विवेचन करने में सक्षम है और आगे के व्याख्याकारों ने इसी को उपजीव्य माना है। दूसरी व्याख्या महादेव वेदान्ती का वृत्तिसार है। इसे व्याख्याकार ने उपर्युक्त वृत्ति का सार कहा है, परन्तु अपना स्वतंत्र विवेचन करने में वे चूके नहीं हैं। तीसरा विज्ञानभिक्षु का सांख्यप्रवचन भाष्य है। इन्होंने सांख्यदर्शन के सारे रहस्यों को इस भाष्य में स्पष्ट किया है और अनिरुद्ध तथा वेदान्ती के मतों की कई स्थान पर खुलकर आलोचना भी की है। चौथी व्याख्या नागेश भट्ट का भाष्यसार या लघु सांख्यवृत्ति है। यह भिक्षु के भाष्य का संक्षेप मात्र है। ये व्याख्याएँ यद्यपि भिन्न भिन्न रूप में पृथक् पृथक प्रकाशित रही हैं किन्तु चारों का एक साथ रहना सांख्यदर्शन के पिपठिषुओं के लिए अत्यन्त महत्त्व-पूर्ण है। इसके विविध परिशिष्टों में श्री स्वामी देवतीर्थ (काष्ठजिह्व स्वामी) कृत षडध्यायी संक्षेप-रूप सांख्यतरङ्ग, सर्वोपकारिणी टीका सहित तत्त्वसमाससूत्र, पंचशिख के उपलब्ध सांख्यसूत्र आदि अत्यन्त उपयोगी सामग्री प्रस्तुत है।

---

**मो ती ला ल ब ना र सी दा स**

मूल्य : रु० ९५ (अजिल्द)
१२५ (सजिल्द)